॥ श्रीः ॥

चौखम्बा सुरभारती ग्रन्थमाला
२२२

श्रीवाचस्पतिमिश्रकृता

# साङ्ख्यतत्त्वकौमुदी

'कृष्णा'-संस्कृत-हिन्दीव्याख्याद्वयोपेता



व्याख्याकार
पं० श्रीज्वालाप्रसाद गौड़
भूतपूर्व प्रधानाचार्य
सन्यासि संस्कृत महाविद्यालय, वाराणसी



भूमिका लेखक
पं० श्रीवसन्तत्र्यम्बक शेवडे



चौखम्बा सुरभारती प्रकाशन
वाराणसी

प्रकाशक

**चौखम्बा सुरभारती प्रकाशन**

( भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक )

के० ३७/११७, गोपालमन्दिर लेन

पो० बा० नं० ११२९, वाराणसी २२१००१

दूरभाष : ३३३४३१



प्रथम संस्करण १९९२

मूल्य ७५–००

अन्य प्राप्तिस्थान

**चौखम्बा संस्कृत प्रतिष्ठान**

३८ यू. ए., बंगलो रोड, जवाहरनगर

पो० बा० नं० २११३

दिल्ली ११०००७

दूरभाष : २३६३९१





प्रमुख वितरक

**चौखम्बा विद्याभवन**

चौक ( बनारस स्टेट बैंक भवन के पीछे )

पो० बा० नं० १०६९, वाराणसी २२१००१

दूरभाष : ३२०४०४

मुद्रक

**श्रीजी मुद्रणालय**

**वाराणसी**

# समर्पणम्

या साङ्ख्यतत्त्वमहितोत्तमकौमुदीयं,
व्याख्या नवा प्रविहिता महताश्रमेण।
तस्याः समर्पणमिदं क्रियते प्रकाशा-
नन्दश्रियां मतिमतां च सतां कराब्जे ॥
गुर्वर्थं सार्थकीकृत्याज्ञानवृत्तिविनाशनात्।
श्रीप्रकाशानन्दनाम्नाऽयं काशते मण्डलेश्वरः ॥

**ज्वालाप्रसादगौडः**

अर्थात् 'महामण्डलेश्वर'पदजन्यबोधविषयतात्वावच्छिन्नप्रकारता-निरूपितविशेष्यतावन्तः खलु वर्तमानकालावच्छेदेन मनु-याज्ञवल्क्य-प्रभृतीनां महर्षीणां साम्यं धृतवन्तः संस्कृतसंस्कृत्योः संरक्षणपरायणतां गतवन्तः संस्कृताभिज्ञत्वप्राणपावनतां नयन्तो भवन्तो 'जगद्गुरु-आश्रम'घटकीभूतस्य 'गुरु' इत्यस्यैकदेशस्य 'ग्र' इत्यस्य 'अज्ञानम्' 'रु' इत्यस्य च निवृत्तिरिति चार्थ यौगिकव्युत्पत्त्या लब्धाऽज्ञाननिवर्तकत्वधर्मावच्छिन्ना रामजन्मभूमिप्रभृतिपवित्रकार्यस्थलीयोन्नयन-विधानसामर्थ्ययोगसम्पन्ना खलु दार्शनिकमूर्धन्याः पदपदार्थोभयविध-शास्त्रीयां दक्षतां दधाना हरिद्वारकनखलयोर्मध्ये स्वस्थितिं लभमानत्वे सति परेभ्योऽप्याश्रयप्रदानपरायणाः सन्ति ये महामण्डलेश्वरपादाः स्वामि १०८ श्रीप्रकाशानन्दमहोदयास्तेषां करकमलयोः समर्प्यतेऽयं ग्रन्थः श्रीज्वालाप्रसादगौडेन भूतपूर्ववाराणसेय श्रीसंन्यासिसंस्कृत-महाविद्यालयस्य प्रधानाचार्येण इति।

# प्राक्कथन

'ज्ञानं महद्यद्धि महत्सु राजन् ! वेदेषु साङ्ख्येषु तथैव योगे ।
यच्चापि दृष्टं विविधं पुराणे साङ्ख्यागतं तन्निखिलं नरेन्द्र ! ॥'
( महाभारते शान्तिपर्वणि ३०१।१७८ )

महाभारतस्थशान्तिपर्वगतेन अनेन पद्येन स्पष्टमिदं प्रतीयते यद् वेदेषु एवम् अन्यत्र शास्त्रेषु पुराणेषु च यज्ज्ञानं विस्तरेण प्रकाशितं तत् सर्वं साङ्ख्यशास्त्रमूलकमेव । अत एव परमर्षिणा आदिविदुषा महामुनिना कपिलेन पुरस्कृतः पद्मपत्रवन्निर्लेपः पुरुषः उपनिषत्स्वपि प्रतिपादितो दृश्यते, तथाहि—

'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥
महतः परमव्यक्तमव्यक्तात् पुरुषः परः' । (कठ० १।३।१०-११)

इति कठोपनिषदि साङ्ख्यशास्त्रगतं पुरुषस्य निर्गुणत्वं स्पष्टतया प्रतिपादितं समुपलभ्यते । अस्य साङ्ख्यदर्शनस्य आदिप्रवक्ता महामुनिः 'कपिलः' इति सर्वैः स्वीक्रियते । देवहूतिसुतो महामुनिः कपिलः प्रसिद्धः । येन स्वमात्रे उपदेशरूपेण प्रकाशितं तत्त्वज्ञानं श्रीमद्भागवतमहापुराणे कपिलगीतारूपेण सन्निविष्टं लोचनपथं समायाति । कपिलमुनेः प्राचीनतमत्वस्य सर्वसम्मतत्वात् । देवहूतिसुतो महामुनिः कपिल एव साङ्ख्यशास्त्रस्य प्रवक्तेति स्वीकारे न कोऽपि प्रत्यवायः प्रतिभाति । अत एव महाभारते शान्तिपर्वणि प्रोक्तम्—

'यमाहुः कपिलं साङ्ख्याः परमर्षिं प्रजापतिम् ।' ( २१८।९ )

तथा—'विद्यासहायवन्तं च आदित्यस्थं समाहितम् ।
कपिलं प्राहुराचार्याः साङ्ख्यनिश्चितनिश्चयाः ॥
हिरण्यगर्भो भगवानेष छन्दसि सुष्टुतः ॥' ( ३३९।६९-७० ) ।

महर्षिः पञ्चशिखाचार्यो महर्षेः कपिलस्योपदेशमवलम्ब्य साङ्ख्यसूत्राणि प्रणिनाय । तथा चोक्तम्—'आदिविद्वान् निर्माणचित्तमधिष्ठाय कारुण्याद् भगवान् परमर्षिरासुरये जिज्ञासमानाय तन्त्रं प्रोवाच' । (भाष्य० १।२५) इदानीमुपलभ्यमानं षडध्यायात्मकं साङ्ख्यदर्शनं प्राचीनं न वा, इत्यत्र विदुषां वैमत्यं दृश्यते किन्तु अस्यां षडध्याय्यां कानिचित् सूत्राणि प्राचीनतराण्येव, इत्यत्र नास्ति कापि विप्रतिपत्तिः । अस्यां पञ्चशिखाचार्य-वार्षगण्यप्रभृतीनां बहूनां साङ्ख्याचार्याणां वचनानि सङ्गृहीतानि वर्तन्ते । एवं कालक्रमानुसारेण बहूनामभिनववचनानामपि समावेशः प्राप्यते, एतेषां साङ्ख्यसूत्राणां चत्वारो व्याख्याग्रन्था दृष्टिपथमायान्ति, ते च—१. अनिरुद्धकृता वृत्तिः, २. महादेववेदान्तिकृतः साङ्ख्यवृत्तिसारः, ३. विज्ञानभिक्षुकृतं साङ्ख्यप्रवचनभाष्यम् एवं ४. नागेशभट्ट-

विरचिता लघुसाङ्ख्यसारवृत्तिः। एतेषु अनिरुद्धकृता वृत्तिः प्राचीनतमा वर्तते। विज्ञानभिक्षुकृतं साङ्ख्यप्रवचनभाष्यं विषयवैशद्येन महन्माहात्म्यमावहति।

साङ्ख्यदर्शनस्य व्यवस्थापूर्वं स्वरूपप्रदर्शनम् ईश्वरकृष्णविरचितायां साङ्ख्यकारिकायामुपलभ्यते। अयं ग्रन्थः साङ्ख्यदर्शने प्रमाणत्वेन स्वीक्रियते। साङ्ख्यकारिकाणां विविधा व्याख्याः प्रथन्ते, तासु अज्ञातलेखकविरचिता युक्तिदीपिका, गौडपादाचार्यप्रणीतं भाष्यं, माठरवृत्तिः, जयमङ्गला, नारायणस्वामिकृता साङ्ख्यचन्द्रिका एवं सुप्रसिद्धवाचस्पतिमिश्रप्रणीता साङ्ख्यतत्त्वकौमुदी च वर्तन्ते। तासु वाचस्पतिमिश्रविरचिता साङ्ख्यतत्त्वकौमुदी विद्वत्समाजे महतीं प्रतिष्ठां भजते।

साङ्ख्यशास्त्रस्य स्वरूपं सङ्क्षेपेण प्रदर्श्यते—साङ्ख्यमते चतस्रो विधाः सम्भाव्यन्ते—कश्चिदर्थः प्रकृतिरेव, कश्चिदर्थो विकृतिरेव, कश्चिदर्थो विकृतिः प्रकृतिश्च, कश्चिदर्थोऽनुभय इति। तत्र केवला प्रकृतिः प्रधानपदेनाभिधीयमाना मूलप्रकृतिः, नासावन्यस्य कस्यचिद् विकृतिः, प्रकरोतीति प्रकृतिरिति व्युत्पत्त्या सत्त्वरजस्तमोगुणानां साम्यावस्थाया अभिधानात्, प्रकृतिश्चाचेतना (जडा), परिणामिनी नित्या एका च। तदुक्तम्—'मूलप्रकृतिरविकृतिः' इति, मूलं चासौ प्रकृतिश्च मूलप्रकृतिः महदादेः कार्यकलापस्य मूलम्, न त्वस्य प्रधानस्य मूलान्तरमस्ति। विकृतयः प्रकृतयश्च महदहङ्कार-तन्मात्राणि, तदुक्तम्—'महदाद्याः प्रकृतिविकृतयः सप्त' इति। अस्यार्थः—प्रकृतेश्च ता विकृतयश्चेति प्रकृतिविकृतयः सप्त महदादि तत्त्वानि। तत्र अन्तःकरणपदवेदनीयं महत्तत्त्वमहङ्कारस्य प्रकृतिः, मूलप्रकृतेस्तु विकृतिः, तदेव बुद्धिरित्युच्यते, ज्ञानसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मा महत्तत्त्वस्य बुद्धेरेव, भावनायाः साङ्ख्यैरनङ्गीकारात्, तन्मतेऽनुभवस्यैव स्मृतिकाले सूक्ष्मतयावस्थानात्। एवमहङ्कारतत्त्वमभिमानापरनामधेयं महतो विकृतिः, प्रकृतिश्च, तदेवाहङ्कारतत्त्वं तामसं सत् पञ्चतन्मात्राणां सूक्ष्माभिधानां शब्दस्पर्शरूपरसगन्धानां प्रकृतिः, सात्त्विकं सत् चक्षुःश्रोत्रघ्राणरसनात्वगाख्यानां पञ्चानां ज्ञानेन्द्रियाणां, वाक्पाणिपादपायूपस्थानां पञ्चानां कर्मेन्द्रियाणां, ज्ञानकर्मोभयेन्द्रियस्य मनसश्च प्रकृतिः। उभयात्मकमत्र मनः, सङ्कल्पविकल्पात्मकमिन्द्रियञ्च साधर्म्यात्। रूपरसगन्धस्पर्शशब्दाः पञ्चतन्मात्राणि। तत्र गन्धात् पृथिवी उत्पद्यते, रसाज्जलं, रूपात्तेजः, स्पर्शाद् वायुः, शब्दादाकाशमिति क्रमः। केवला विकृतिस्तु आकाशादीनि पञ्चभूतानि, एकादशेन्द्रियाणि च, तदुक्तम्—'षोडशकस्तु विकारः' इति, अनुभयात्मकः पुरुषः। तदुक्तम्—'न प्रकृतिर्न विकृतिः पुरुषः', इति, पुरुषश्चैतन्याश्रयः, अकारणमकार्यः, जन्यधर्मानाश्रयः, नित्यः। अचेतनायाः प्रकृतिकार्याया बुद्धेश्चैतन्याभिमानान्यथानुपपत्त्या स्वाभाविकचैतन्यस्वरूपः पुरुषः सिद्धः। स च पुष्करपलाशवन्निर्लेपः। लेपः अपूर्वं तत्फलञ्च, तच्छून्य इत्यर्थः। एवञ्च साङ्ख्यमते पञ्चविंशतितत्त्वानि, प्रकृतिरेका, पुरुषा अनन्ता, न्यायमतसिद्धजीवात्मस्थानीयाः। दुःखसम्बन्ध-तद्ध्वंसरूपौ

संसारमोक्षौ न पुरुषस्य किन्तु बुद्धेरेव, बुद्धितत्त्वनाशे तु तत्परिणामस्य 'अयं घटः' इत्यादिज्ञानरूपस्याभावात्, विषयसम्बन्धाभावात्, पुरुषस्य कैवल्यावस्थानरूपो मोक्षः सम्भवति ।

कार्यकारणभावविषये साङ्ख्यमतं सत्कार्यवादसंज्ञया प्रथते । सत्कार्यवाद एव परिणामवाद इति संज्ञान्तरं लभते । एतत्स्वरूपं यथा—

'असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात् ।
शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम्' ॥

दर्शनशास्त्रेषु कार्यकारणभावविषये वर्तमानोऽभिप्रायभेद इत्थं सङ्गृहीतो दृश्यते—

'आरम्भवादः कणभक्षपक्षः सङ्घातवादस्तु भदन्तपक्षः ।
साङ्ख्यादिपक्षः परिणामवादो वेदान्तिपक्षस्तु विवर्तवादः' ॥ इति ।

अस्मत्प्रियसुहृद्भिर्नैयायिकसार्वभौमैः पण्डितमल्लतल्लजैः षड्दर्शनशास्त्रपारावारपारीणैः श्रीमद्भिर्ज्वालाप्रसादगौडमहोदयैरत्रसाटोपं विरचितं व्याख्याद्वयं साङ्ख्यतत्त्वकौमुद्या भावार्थं निःसन्दिग्धरूपेण प्रकटय्य न केवलं छात्राणामपितु विदुषामपि महान्तमुपकारं जनयेदित्यत्र नास्ति सन्देहलेशः, उच्चकोटिकानां न्यायादिशास्त्रीयग्रन्थानां व्याख्यानिर्माणालङ्कर्मीणाः पण्डितप्रवर-गौडमहाशया वाराणसेयविद्वत्समाजे चिराय महतीं प्रतिष्ठां भजन्ते । एतद्व्याख्याद्वयप्रकाशनार्थं चौखम्बासुरभारतीप्रकाशनाधिकारिणो विद्वत्समाजस्य शतशो धन्यवादानर्हन्तीति निवेदयते ।

विदुषां वशंवदः
**वसन्तत्र्यम्बकशेवडे**

# भूमिका

## सांख्यदर्शन : शब्दार्थ-विचार

'सांख्यदर्शन' में दो शब्दों का संयोग है—१. सांख्य एवं २. दर्शन। **सांख्य** शब्द सम् उपसर्ग 'ख्या' प्रकथने धातु से निष्पन्न होता है, जिसका अर्थ सम्यग् रूप से कथन करना अथवा सम्यग् रूप से विचार करना अथवा सम्यग् रूप से ज्ञान प्राप्त करना होता है। सांख्य शब्द का दूसरा अर्थ प्रकृति और पुरुष का विवेकज्ञान भी होता है, जो कि पुरुष को सांसारिक बन्धन से मुक्ति दिलाकर मोक्ष का कारण बनता है।

**दर्शन** शब्द का अर्थ है—ज्ञान, आत्मज्ञान, परमात्मदर्शन ज्ञान, सम्यक् ज्ञान अथवा सम्यग् विचार जो कि दर्शनार्थक अर्थात् प्रत्यक्षात्मक ज्ञानार्थक 'दृश' धातु के करण अर्थ में ल्युट् प्रत्यय होकर सम्पन्न होता है। जिसके द्वारा विचार किया जाय अथवा जिसके द्वारा सम्यक् रूप से देखा जाय या यथार्थ रूप से देखा जाय, कुछ सात्त्विक ज्ञान प्राप्त किया जाय तथा जिससे सांसारिक बन्धन से आबद्ध व्यक्ति को छुटकारा मिले।

'ज्ञानादृते न मुक्तिः'। (श्रुति)
'सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि।'

और भी—'ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति'। (गीता)

उपर्युक्त श्रुति-स्मृति वाक्यों के आधार पर यह स्पष्ट है कि ज्ञान से अज्ञान तथा मिथ्याज्ञान की निवृत्ति होना स्वाभाविक है।

सांख्यशास्त्र एक व्यावहारिक शास्त्र है, जो कि व्यावहारिक दृष्टि से न्यायवैशेषिक के समान है। यह चराचर विश्व सुख-दुःख एवं मोह से समन्वित होने के कारण त्रिगुणात्मक है। अतः 'कारणगुणाः कार्यगुणानारभन्ते' इस न्याय से त्रिगुण जगदात्मक कार्य का कारण भी त्रिगुणात्मक ही होना चाहिए। इसी दृष्टिकोण के आधार पर महामुनि कपिल ने प्रधानापरपर्यायभूतप्रकृति को ही इस स्थावर-जङ्गम जगत् का एकमात्र कारण माना है और वह प्रकृति सत्त्वगुण, रजोगुण और तमोगुणस्वरूप त्रिगुणात्मिका मानी गयी है। और सांख्य ने पुरुष को अर्थात् जीवात्मा को निर्गुण माना है, जो कि पुष्करपलाश के समान सर्वथा निर्लेप है।

ऐसी परिस्थिति में यह शङ्का उपस्थित होती है कि जब पुरुष निर्गुण और पुष्करपलाशवत् निर्लेप है, तो ऐसे अन्यथासिद्ध सांख्यपुरुष के अङ्गीकार में क्या मतलब? क्योंकि वह तो कर्तुम्, अकर्तुम् एवं अन्यथाकर्तुम्—इन तीनों से पृथक् है।

इसका समाधान सांख्य ने इस प्रकार किया है कि जैसे 'पुरोहितोऽयं राजा संवृत्तः' यह पुरोहित राजा हो गया है। अर्थात् जैसे पुरोहित राजा के सन्निधान में रहता हुआ राजा से धन-दौलत आदि प्राप्त कर राजा के समान राजा कहलाने लगता है, उसी प्रकार चेतन पुरुष की छाया पड़ जाने के कारण प्रकृति भी अपने को चेतन समझने लग जाती है। इसीलिए पुरुषनिष्ठ चैतन्य के आधार पर 'चेतनोऽहं करोमि' यह प्रतीति प्रकृति को ही होती है। इसी कारण से सांख्य पुरुष का अङ्गीकार करता है। कहा भी है—'चैतन्याभिमानान्यथानुपपत्त्या तत्कल्पनम्' अर्थात् प्रकृति को चैतन्याभिमान की अनुपपत्ति हो जायेगी, यदि पुरुष का अङ्गीकार नहीं करेंगे। अतः पुरुष का अभ्युपगम नितान्त आवश्यक है। इसीलिए सांख्य का लक्षण है—सम्यग् दर्शन। 'सङ्ख्यायते इति सङ्ख्या = पराविद्या = सम्यक्ज्ञानम् = सम्यग्दर्शनम्, तत्प्रतिपादकं शास्त्रं साङ्ख्यशास्त्रम् इति'। और सांख्यशास्त्र के जन्म देनेवाले देवहूति के पुत्र भगवान् के अवतारस्वरूप महामुनि कपिल हैं। कहा भी है—

'कपिलस्तत्वसङ्ख्याता भगवानात्ममायया।
जातः स्वयमजः साक्षादात्मप्रज्ञप्तये नृणाम्'।

भाग० स्कन्ध ३, अध्याय २५, श्लोक १

और भी—'पञ्चमः कपिलो नाम सिद्धेशः कालविप्लुतम्।
प्रोवाचासुरये साङ्ख्यतत्त्वग्रामविनिर्णयम्'॥ भाग० १-२

इस प्रकार सदसद्विवेचनात्मक निर्विशेष ज्ञान ही सम्यक्ज्ञान = सम्यग्दर्शन और वही सांख्यदर्शन भी है। और उससे सम्बन्धित शास्त्र सांख्यशास्त्र है। जिसके प्रवर्तक साक्षात् महामुनि कपिल हैं। कपिलमुनि के सांख्य का उल्लेख भगवान् कृष्ण ने भी गीता में किया है—

'एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु'। ( २।३९ )

## सांख्यमतानुसार पञ्चविंशति तत्त्वों का अङ्गीकार

सांख्यशास्त्र में पञ्चविंशति तत्त्वों का अङ्गीकार किया गया है। संक्षिप्त रूप में चार भागों में ही इन पञ्चविंशति तत्त्वों का समावेश किया गया है। ये है—१. प्रकृति, २. विकृति, ३. प्रकृतिविकृति उभयात्मक और ४. प्रकृतिविकृति अनुभयात्मक। इस प्रकार सांख्यशास्त्र में संक्षेप में इन पूर्वोक्त चार प्रकार के पदार्थों का अङ्गीकार किया गया है। इन चार पदार्थों का विशद् रूप पञ्चविंशति तत्त्व है। जिनका अवान्तर रूप कारण, कार्य तथा कार्यकारण उभयात्मक होता है तथा जो न कारण हो और न कार्य हो, ऐसा अनुभयात्मक रूपवाला होता है।

सांख्य ने प्रकृति को इस चराचर विश्व के कारण के रूप में स्वीकार

किया है। इसीलिए 'प्रकरोति=स्वयति विश्वं या सा प्रकृतिः' इस यौगिक व्युत्पत्ति के आधार पर प्रकृति को जगत् की कर्त्री माना है और महत्तत्त्व तथा अहंकारतत्त्व आदि प्रकृति के ही परिणामभूत कार्य माने गये हैं। इसीलिए सम्पूर्ण चराचर विश्व को प्रकृति का विकृत स्वरूप माना गया है और षोडश (सोलह) गणों को ही एकमात्र विकृति का स्वरूप दिया गया है। अर्थात् आकाशादि पञ्चमहाभूत; श्रोत्र, त्वक्, चक्षु, जिह्वा और घ्राण—ये पाँच ज्ञानेन्द्रियाँ और वाक्, पाणि, पाद, पायु और उपस्थ—ये पाँच कर्मेन्द्रियाँ और एक मन—ये सोलह पदार्थ केवल विकृति हैं, अर्थात् केवल कार्य ही होते हैं। उनमें आकाशादि पञ्चमहाभूत पञ्चतन्मात्राओं से उत्पन्न होने के कारण पञ्चतन्मात्राओं के कार्य हैं। इसीलिए इन पञ्चमहाभूतों को पञ्चतन्मात्राओं का विकृत स्वरूप माना गया है और श्रोत्रादि, वागादि और मन—इन एकादश इन्द्रियों को अहंकार से उत्पन्न होने के कारण अहंकार का विकार माना गया है।

इसी प्रकार महत्तत्त्व, अहंकारतत्त्व और शब्द-स्पर्श-रूप-रस और गन्ध—ये सात पदार्थ प्रकृति-विकृति उभयरूप माने गये हैं।

उनमें महत्तत्त्व से अहंकारतत्त्व उत्पन्न होता है। इसलिए महत्तत्त्व अहंकार का प्रकृति=कारण है; और मूलप्रकृति का कार्य होने के कारण वह विकृतिरूप है। इसी प्रकार अहंकार से शब्दादि पञ्चतन्मात्राएँ, पञ्चज्ञानेन्द्रियाँ और मन उत्पन्न होते हैं; इसलिए अहंकार इनका प्रकृति=कारण है और महत्तत्त्व का यह अहंकार विकृति अर्थात् कार्य है। इसी प्रकार शब्दादि पञ्चतन्मात्राओं से क्रमशः आकाशादि पञ्चमहाभूत उत्पन्न होते है। अतः आकाशादि पञ्चमहाभूतों का कारण पञ्चतन्मात्राएँ हैं; और वे अहंकार की विकृति अर्थात् कार्य होती हैं। इस दृष्टिकोण से सांख्य ने महत्तत्त्व, अहंकारतत्त्व तथा पञ्चतन्मात्राओं—इन सात पदार्थों को प्रकृति-विकृति उभयरूप माना है।

आकाशादि पञ्चमहाभूत और श्रोत्र, त्वक्, चक्षु, जिह्वा तथा घ्राण—पञ्चज्ञानेन्द्रियाँ तथा वाक्, पाणि, पाद पायु और उपस्थ—ये पञ्चकर्मेन्द्रियाँ; और एक मन; ये सोलह पदार्थ केवल विकृतिरूप है। उनमे आकाशादि पञ्चमहाभूत पञ्चतन्मात्राओं से उत्पन्न होने से कारण वे पञ्चतन्मात्राओं के विकृतिस्वरूप हैं। और मन सहित पञ्चज्ञानेन्द्रियाँ और पञ्चकर्मेन्द्रियाँ ये एकादश इन्द्रियाँ अहंकार से उत्पन्न होने के कारण अहंकार की विकृतिस्वरूपा हैं और पुरुष न किसी का कारण होने के नाते प्रकृति है और न कार्य होने के नाते विकृति है। इसलिए पुरुष को अनुभयरूप माना गया है। जैसा कि कहा भी है—

> 'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
> षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः'॥ (सांख्य ३)

इस प्रकार पुरुष, मूलप्रकृति, महदादि सात और पूर्वोक्त पञ्चमहाभूत, पञ्चज्ञानेन्द्रियाँ, पञ्चकर्मेन्द्रियाँ और मन इन सबको मिलाकर सांख्यदर्शन में पञ्चविंशतितत्त्व सम्पन्न होते हैं।

जीवात्मस्थानीय पुरुष की वन्धन और मोक्ष की व्यवस्था के आधार पर अर्थात् कोई पुरुष वन्धनग्रस्त है तो कोई वन्धन से विनिर्मुक्त है। इसलिए जीवात्मस्वरूप पुरुष प्रत्येक शरीर में भिन्न-भिन्न है, अतः उसका नानात्व स्पष्ट है। जैसे १८वीं कारिका में 'पुरुषवहुत्वं सिद्धम्' इस प्रकार से पुरुष के नानात्व का उल्लेख प्राप्त है। उसमें सांख्यसूत्र का भी प्रामाण्य उपलब्ध है। जैसे कि—

'जन्मादिव्यवस्थातः पुरुषवहुत्वम्' इति।

इस सूत्र से पुरुष का नानात्व स्पष्ट है। इसी नानात्व को वाचस्पति मिश्र ने भी वतलाया है। जैसे कि—'एकस्मिन् जायमाने सर्वे जायेरन्। एकस्मिन् म्रियमाणे सर्वे म्रियेरन्'। इसी प्रकार सुख-दुःख आदि की व्यवस्था भी अव्यवस्थित हो जायेगी; अर्थात् वह व्यवस्था भी उपपन्न नहीं हो पायेगी। इसलिए पुरुष का वहुत्व नितान्त मान्य है और वह पुरुष किसी का भी कर्त्ता नहीं है। प्रकृति ही एकमात्र इस चराचर विश्व की कर्त्री है।

तव यह प्रश्न उठता है कि ऐसी परिस्थिति में पुरुष को मानने की क्या आवश्यकता है? क्योंकि पुरुष न प्रकृति = कारण है और न विकृति = कार्य ही है। इसका उत्तर सांख्य ने इस प्रकार दिया है—

'चैतन्याभिमानान्यथानुपपत्त्या पुरुषकल्पनम्'। (न्या० सि० मु० )

अर्थात् 'चेतनोऽहं करोमि' इस न्याय के आधार पर प्रकृति में चैतन्याभिमान की उपपत्ति नहीं हो सकेगी, यदि पुरुष को नहीं माना जायेगा।

## पुरुष के अस्तित्व में प्रमाण

यहाँ यह प्रश्न उपस्थित होता है कि जो पुरुष न किसी का कारण है और न कार्य है तो ऐसे पुरुष के अस्तित्व में क्या प्रमाण है? इसका पूर्व में भी उल्लेख हो चुका है।

इसके उत्तर में सांख्य का कथन है—'चेतनोऽहं करोमि'। इस प्रतीति से अचेतन वुद्धि में चैतन्य धर्म की प्रतीति होती है और वह चैतन्यविषयिणी प्रतीति वुद्धि में वास्तविक नहीं है; उसे आरोपित ही कहना होगा। क्योंकि जो धर्म जिसमें नहीं रहता है, कालान्तर में उसकी उसमें प्रतीति होने पर उसे आरोपित कहा जायेगा।

जैसे 'पीतः शङ्खः' इस प्रतीति के आधार पर शंख में पीतत्व आरोपित ही कहा जायेगा। क्योंकि शंख के श्वेत होने के कारण उसमें पीत रूप नहीं है। पाण्डुरोग (पीलिया) होने के कारण ही शंख में पीतत्व या पीत का आरोप होता है। वह आरोप भी किसी प्रसिद्ध धर्म का ही होता है न कि

किसी अप्रसिद्ध धर्म का। 'दोषोऽप्रमायाः जनकः' यह न्याय ही आरोप का कारण होता है। प्रधान एवं बुद्धितत्त्व आदि सभी पदार्थ जड़ होने के कारण चैतन्यधर्म के आश्रय कदापि कथमपि नही हो सकते हैं। इसीलिए उन्हें चैतन्य का आश्रय न कहकर अन्ततोगत्वा पुरुष को ही चैतन्यधर्म का आश्रय कहना होगा। अतः वहाँ पर 'पारिशेष्यात्' यह व्यतिरेकी अनुमान-प्रयोग ही करना सफल होगा, जैसे कि—पुरुष चैतन्यधर्म का आश्रय है, क्योंकि इतर प्रकृति महत्तत्व आदि के जड़ होने से वे चैतन्य का आश्रय नही हो सकते। इसीलिए प्रकृति, महत्तत्व आदि पदार्थ को चैतन्य का आश्रय न मानकर पुरुष को ही चैतन्य का आश्रय मानना होगा।

## संक्षिप्त जगद् विचार

'भुवनज्ञानं सूर्यसंयमात्' इस सूत्र के आधार पर चतुर्दश भुवनों का उल्लेख किया गया है। संक्षेप में ऊर्ध्व और अधोरूप से वे चतुर्दश भुवन दो रूपों में विभाजित किये जा सकते हैं। उनमें ऊपर के सात भुवन हैं, जो भू, भुवः, स्वः, मह, जन, तप और सत्यलोक के रूप में विभाजित किये गये हैं। इसी प्रकार अधोलोकों को अतल, वितल, सुतल, रसातल, तलातल, महातल और पाताललोक नाम से वर्णित किया गया है। मध्य में जम्बूद्वीप है, उसके मध्य में सुमेरु पर्वत है और उसके पूर्व-पश्चिम आदि चारों दिशाओं में मन्दर, गन्धमादन, विपुल और सुपार्श्व नामवाले विष्टम्भ पर्वत हैं। सुमेरु पर्वत के दक्षिण भाग में भारतवर्ष, हिमालय पर्वत, हेमकूट पर्वत, किम्पुरुष, हरिवर्ष और निषध पर्वत विराजमान हैं। सुमेरु पर्वत के उत्तर भाग में नील पर्वत, श्वेत पर्वत, शृङ्गि पर्वत, कुरुवर्ष, हिरण्यवर्ष और रम्यकवर्ष अपनी शोभा से सबको शोभायमान बनाये हुए हैं। सुमेरु पर्वत के पूर्वभाग में गन्धमादन पर्वत, माल्यवत् पर्वत, भद्राश्व पर्वत और केतुमालवर्ष शोभाधायक के रूप में विद्यमान हैं। सुमेरु पर्वत के अधोभाग में लक्ष्ययोजन-परिमित जम्बूद्वीप है। उसके वेष्टन के आधार पर उसी के सदृश लवणसमुद्र है; फिर उससे द्विगुण शाकद्वीप है; फिर उसके सदृश इक्षुरस समुद्र है; फिर उससे द्विगुण कुशद्वीप है; फिर उसके तुल्य सुरासमुद्र है; फिर उससे द्विगुण क्रौञ्चद्वीप है; फिर उसके समान घृतसमुद्र है; फिर उससे द्विगुण शाल्मलिद्वीप है; फिर उसके समान ही दधि-समुद्र है; फिर उसके द्विगुण प्लक्षद्वीप है; फिर उसके सदृश दुग्ध-समुद्र है; फिर उससे द्विगुण पुष्करद्वीप है; फिर उसके तुल्य स्वादूदक समुद्र है। इस प्रकार लोकालोक पर्वत के वेष्टन के द्वारा ब्रह्माण्ड-रूपी कड़ाहे से चारों तरफ से घिरा हुआ यह चराचर विश्व है। यह विश्व सत्य है कि मिथ्या है; यह शास्त्रों के पर्यालोचन से जानने योग्य विषय है।

—ज्वालाप्रसाद गौड़

॥ श्रीः ॥

श्रीवाचस्पतिमिश्रकृता

# सांख्यतत्त्वकौमुदी

## 'कृष्णा'-संस्कृत-हिन्दीव्याख्याद्वयोपेता

अजामेकां लोहितशुक्लकृष्णां
वह्वीः प्रजाः सृजमानां नमामः।
अजा ये तां जुषमाणां भजन्ते
जहत्येनां भुक्तभोगां नुमस्तान् ॥ १ ॥

---

### ❋ कृष्णा-टीका ❋

यत्कारुण्यकणस्पर्शान्मूको वाचस्पतीं यति।
ब्रह्मोपेन्द्रशिवैर्वन्द्यां नौमि तां वागधीश्वरीम् ॥
जननीजनकौ नत्वा ध्यायं ध्यायं गुरोः पदम्।
ज्वालाप्रसादगौडेन 'कृष्णा' टीका वितन्यते ॥

**प्रकृतिपुरुषयोः कृते नमस्कारात्मकं मङ्गलम्**

इह खलु निखिलदर्शनाऽसाधारणशेमुषीकः श्रीवाचस्पतिमिश्र आचार्यप्रवरः सांख्यसिद्धान्तमाविष्कुर्वन् प्रारीप्सितग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थं शिष्यशिक्षायै प्रकृतिं पुरुषांश्च प्रणमति—**'अजामेकाम्'** इत्यादिना। एकाम्=सजातीयद्वितीयरहिताम्। लोहितशुक्लकृष्णाम्=रजःसत्त्वतमोगुणात्मिकाम्। वह्वीः=महदहङ्कारमनो-ज्ञानेन्द्रिय-कर्मेन्द्रिय-तन्मात्र-स्थूलभूत-चराऽचरादिस्वरूपाः। प्रजाः=सुख-दुःख-मोहात्मक-महदादयो विकाराः। सृजमानाम्=समुत्पादयन्तीम्, महदादिनानाविधविकारस्वरूपेण परिणामशीलामित्यर्थः। अजाम्=न जायते इत्यजा तां मूलप्रकृतिम्, उत्पत्त्यादिविकार-रहितामित्यर्थः। नमामः, वयमिति शेषः। इत्येवं रूपेण प्रकृतिं प्रणम्य, अनन्तरं लौकिकाऽलौकिकभेदभिन्नान् पुरुषानपि नमस्कुर्मः—**अजा ये तामिति**। ये=

---

हम इस चराचर विश्वरूप बहुत-सी प्रजाओं की सृष्टि ( रचना ) करने वाली, नित्य, एक, रजोगुण, सत्त्वगुण, तमोगुणात्मिका अर्थात् त्रिगुणात्मिका प्रकृति को नमस्कार करते हैं, और उन पुरुषों को भी हम नमस्कार करते हैं, जो पुरुष भी नित्य तथा अनादि हैं; एवं शब्दादि विषय सम्बन्धी उपभोगों को प्रदान करने वाली उस प्रकृति को भजते हैं तथा अन्त में भुक्तभोग इस प्रकृति को अनात्म वस्तु समझकर छोड़ देते हैं ॥ १ ॥

कपिलाय महामुनये मुनये शिष्याय तस्य चासुरये ।
पञ्चशिखाय तथेश्वरकृष्णायैते नमस्यामः ॥ २ ॥

---

अहम्प्रत्ययविषयतया प्रसिद्धिं गताः । अजाः—न जायन्ते=नोत्पद्यन्ते, इत्यजाः= अनादिनो जीवात्मानः, संसारिपुरुषा इत्यर्थः । यद्यपि पारमार्थिकदृष्ट्या पुरुषाः पुष्कर-पलाशवन्निर्लेपोऽसङ्गश्च, भोगादयश्च विकाराः सन्ति चित्तधर्माः । तथापि चिति-चित्तयोः शक्तिशक्तिमतोरिवाऽभेदग्रहात् पुरुषश्चित्तवृत्तीः स्वस्मिन् आरोप्य 'अहं सुखी' 'अहं दुःखी' 'अहं मूढः' 'अहं कर्ता' 'अहं भोक्ते'त्यादिरूपेणाऽध्यवस्यति पुरुषः, यथा कश्चित् पुरुषो मलिने दर्पणे स्वयं मुखं विलोक्य तदीयं मालिन्यं दर्पणप्रतिबिम्बिते मुखे आरोप्य मदीयं मुखं मलीनं जातमित्यादिरूपेण शोचति । एतेन पुरुषस्य भोग औपाधिक एव न तु वास्तविक इत्येव निश्चीयते । तथा चोक्तमपि—

'गृहीतानिन्द्रियैरर्थानात्मने यः प्रयच्छति ।
अन्तःकरणरूपाय तस्मै विश्वात्मने नमः' ॥ ( वि० पु० )

जुषमाणाम्=सुखादिप्रदानकर्तृत्वेन सेवमानाम् । ताम्=प्रकृतिम्, सुखादिस्वरूप-शब्दादिलक्षणपरिणामेन पौरुषेयभोगं साधयन्तीमित्यर्थः । भजन्ते=अविवेकेन भुञ्जते । भुक्तभोगाम्—भुक्तः=निष्पादितः, भोगः=अनित्यं कृत्यं यया ताम्, समाप्तकृत्या-मित्यर्थः । अत्र भोग इति च मोक्षस्यापि सङ्ग्राहकम् । शब्दादिविषयजन्यसुख-दुःखान्य-तरसाक्षात्कारो भोगः, प्रकृतिपुरुषान्यताख्यातिश्चापवर्गः । एवञ्च निष्पादितपौरुषेय-भोगापवर्गत्वेन समाप्ताधिकारामिति यावत् । एनाम्=प्रकृतिम् । जहति=परित्यजन्ति । तान्=विवेकिनो पुरुषान् । ( अपि ) नुमः=नमस्कुर्मः । वयमिति शेषः ।

अत्रेदं बोध्यम्—तावत्कालपर्यन्तमेव पुरुषः प्रकृतिस्वरूपं परिचयार्थं चेष्टते याव-त्कालं भोगं वाऽपवर्गं वा न निष्पादयति, निष्पादितभोगापवर्गो हि पुरुषः कृतकृत्यः सन् स्वयमेव निवर्तते, तत्रापि पुरुषाणामनन्तत्वाद् यं पुरुषं प्रति कृतकार्या सा भवति तं प्रत्येव निवर्तते नान्यान् प्रति इति तु परमार्थः । सांख्यशास्त्रप्रवर्त्तकानाचार्यानपि प्रण-मति, तत्र च प्रणामसंविधाने पूर्वं श्रुत्युक्तिं दर्शयति—

'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः' ॥ ( सुबालोपनिषत् )

इति श्रुतिमाश्रित्य गुरुवन्दनं करोति—'कपिलाय' इत्यादिना । 'नमस्याम' इत्यत्र 'वयम्' इति कर्तृपदमध्याहार्यम् । एते ( वयम् ) महामुनये कपिलाय, तस्य शिष्याय आसुरये च मुनये, ( एवम् ) पञ्चशिखाय तथा ईश्वरकृष्णाय नमस्यामः ।

एते=अहं वाचस्पतिमिश्रः, मदीयाश्चान्तेवासिन एते सर्वे वयमित्यर्थः । महामुनये= अप्रतिहताऽनौपदेशिकज्ञानावच्छिन्नाय । 'महामुनये' इत्यत्र महत्त्वम् अप्रतिहताऽनौप-देशिकत्वम्, मुनित्वञ्च ज्ञानवत्त्वम्, परस्परमन्वयबलात् प्रागुक्तविशिष्टार्थलाभः । कपि-

---

इसके पश्चात् हम महामुनि कपिल एवं उनके शिष्य मुनि आसुरि तथा आसुरि के शिष्य पञ्चशिख और ईश्वरकृष्ण इनको भी हम नमस्कार करते हैं ॥ २ ॥

(१) इह खलु प्रतिपित्सितमर्थं प्रतिपादयन् प्रतिपादयिताऽवधेयवचनो भवति प्रेक्षावताम्। अप्रतिपित्सितमर्थं तु प्रतिपादयन् नाऽयं लौकिको नापि परीक्षक इति प्रेक्षावद्भिरुन्मत्तवदुपेक्ष्येत।

---

लाय=महर्षये कपिलाचार्याय, 'महर्षिः कपिलाचार्यः', कपिलस्य महर्षित्वञ्च 'ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्विभर्ति' इत्यादिना सुस्पष्टमेव। तस्य=कपिलमुनेः। शिष्याय। मुनये। आसुरये=आसुरिनामकाय। नमस्याम इत्यनेनान्वयः। (एवम्) पञ्चशिखसंज्ञकाय[1]।

'आसुरेः प्रथमं शिष्यं यमाहुश्चिरजीविनम्।
पञ्चस्रोतसि निष्णातः पञ्चरात्रविशारदः।
पञ्चज्ञः पञ्चकृत् पञ्चगुणः पञ्चशिखः स्मृतः'॥

इत्युक्तलक्षणाय पञ्चशिखायेत्यर्थः। अथवा—

'जटा वह्निशिखारूपा पञ्च सन्ति च मस्तके।
तपस्तेजोभवा यस्य स च पञ्चशिखः स्मृतः'॥

इत्युक्तलक्षणलक्षिताय पञ्चशिखायेति यावत्। 'नमस्यामः' इत्यनेनान्वयः। तथा,[2] ईश्वरकृष्णाय=पञ्चशिखशिष्याय, परम्परागतायेत्यर्थः, अस्यापि 'नमस्यामः' इत्यनेनान्वयः।

(१) प्रागुक्ताचार्यनमनेन प्रकृतसांख्यशास्त्रस्योपादेयत्वं शिष्टाचारानुसरणञ्च प्रदर्श्य जिज्ञासितार्थप्रतिपादनेनैव शास्त्रीयोपादेयता भवतीत्यतः प्रकृतशास्त्रस्य कारिकामवतारयन् भूमिकामारचयति—इह खल्विति। इह=संसारे, व्यवहारभूमौ, उपदेशकाले, परीक्षकाणां संसदि वा। प्रतिपित्सितम्—प्रतिपत्तुम्=ज्ञातुम्, इष्टम्=अभिलषितम्। अर्थम्=विषयम्। प्रतिपादयन्=उपदिशन्, वाग्व्यवहारेण लेखनव्यवहारेण वा, स्वकीयमनोगतविचारान् प्रकटयन्नित्यर्थः। प्रतिपादयिता=उपदेष्टा, लेखको वा वोधयिता पुरुषः। अवधेयवचनः=समादरपुरस्सरश्रवणीयवचनः। प्रेक्षावताम्=हेयोपादेयविचारचातुरीसमन्वितशेमुषीकाणाम्।

एतद्विपरीतमर्थं प्रतिपादयन् प्रतिपादयिता नावधेयवचनो भवति, अपि तु सर्वथोपेक्षणीयो भवतीत्यत आह—अप्रतिपित्सितमिति। अप्रतिपित्सितम्=ज्ञातुमनभीष्टम्।

---

(१) यहाँ यह निश्चित है कि अभिलपित अर्थ (विषय) का प्रतिपादन करने वाले उपदेष्टा व्यक्ति का वचन (वाक्य) प्रेक्षावानों (बुद्धिमानों) के लिए श्रद्धेय एवं आदरणीय होता है। और अप्रतिपित्सित (अजिज्ञासित) विषय का प्रतिपादन करने वाले अथवा उपदेश करने वाले व्यक्ति की प्रेक्षावान् लोग—यह न तो लोक-व्यवहार का *अभिज्ञ (जानने वाला)* है और न परीक्षक (*प्रमाण* द्वारा किसी विषय का विवेचन करने वाला) ही है—इस प्रकार से उन्मत्त (पागल=वेवकूफ) की तरह उसकी उपेक्षा कर देते हैं।

---

१. आसुरिशिष्यायेत्यर्थः। २. अत्र तथाशब्दः समुच्चयार्थः।

( २ ) स चैषां प्रतिपित्सितोऽर्थो ज्ञातः सन् परमपुरुषार्थाय कल्पते, इति प्रारिप्सितशास्त्रविषयज्ञानस्य परमपुरुषार्थसाधनहेतुत्वात् तद्विषयजिज्ञासामवतारयति—

**दुःखत्रयाभिघाताज्जिज्ञासा तदपघातके हेतौ ।**
**दृष्टे साऽपार्था चेन्नैकान्तात्यन्ततोऽभावात् ॥ १ ॥**

---

प्रेक्षावद्भिः=सुन्दरविचारशालिभिः । नायं लौकिको नापि परीक्षकः=[1]लौकिकपरीक्षकपुरुषविलक्षणोऽयं मतिविभ्रमशील इति विज्ञायेत्यर्थः । उन्मत्तवत्=उन्मादग्रस्तवत्, मतिविभ्रमशीलवदित्यर्थः, पागलवदिति यावत् । उपेक्ष्येत=त्यज्येत । अर्थात् उन्मत्तपुरुषवाक्यात्तस्यापि वाक्यं न ग्राह्यं भवतीत्यतस्तदग्राह्यत्वमेवोपेक्षाबीजम् ।

( २ ) ननु कोऽसौ अभीष्टोऽर्थः यदर्थप्रतिपादनेनाऽवधेयवचनो भवति ? प्रेक्षावज्जिज्ञासाविषयीभूतश्च भवतीत्याकाङ्क्षायामाह—स चैषामिति । चोऽवधारणे, योऽर्थो ज्ञातः सन् परमपुरुषार्थाय=दुःखाऽत्यन्तोच्छेदाय=मोक्षाय । पुरुषस्याऽर्थः=प्रयोजनं, पुरुषार्थं इति यौगिकव्युत्पत्त्या भोगापवर्गाविव पुरुषार्थौ, तत्राऽपवर्गश्च परमपुरुषार्थः । कल्पते=समर्थो भवति । स एवार्थः, एषां=प्रेक्षावताम् । प्रतिपित्सितः=जिज्ञासाविषयीभूतः । तथा च यस्यार्थस्य ज्ञानं परमपुरुषार्थमोक्षहेतुर्भवति स एवार्थो जिज्ञास्यो भवतीत्यर्थः ।

तदेव स्पष्टयति—प्रारिप्सितशास्त्रेति । प्रारिप्सितं=प्रारब्धुमभिलषितं, यत् शास्त्रं=सांख्यशास्त्रम्, तस्य यो विषयः=महदादिपञ्चविंशतितत्त्वात्मकः, तज्ज्ञानस्य परमपुरुषार्थसाधनहेतुत्वात्=दुःखाऽत्यन्तोच्छेदरूपमोक्षात्मकपरमपुरुषार्थस्य साधनं यद् विवेकज्ञानं तस्य हेतुत्वादिति भावः । अतस्तद्विषयजिज्ञासाम्=शास्त्रविषयज्ञानेच्छाम् । अवतारयति=व्यवस्थापयति । ईश्वरकृष्ण इति शेषः । तदेवोक्तम्—दुःखत्रयाभिघातादिति ।

---

( २ ) और इन प्रेक्षावान् लोगों का जिज्ञास्य जो विषय है, जिसका ज्ञान परमपुरुषार्थ ( मोक्ष ) की प्राप्ति का साधन है, और प्रारम्भ किये जाने वाले सांख्यशास्त्र में प्रतिपाद्य पच्चीस तत्त्वात्मक विषयों का यथार्थ ज्ञान ही मोक्ष का साधन है, और वह ज्ञान सांख्यशास्त्र से होता है; अतः कारिकाकार ईश्वरकृष्ण उसी सांख्यशास्त्र विषय सम्बन्धी जिज्ञासा का अवतरण देते हैं—'दुःखत्रयाभिघातात्' इत्यादि कारिका से—

**कारिकार्थ**—आध्यात्मिक, आधिभौतिक, आधिदैविक—इन तीन प्रकार के दुःखों

---

१. अप्राप्तशास्त्रपरिशीलनजन्यबुद्धिप्रकर्षा लौकिकाः, तद्विपरीतास्तु अर्थात् शास्त्रपरिशीलनजन्यप्राप्तबुद्धिप्रकर्षास्तु परीक्षकाः । उक्तञ्च न्यायभाष्ये—लोकसाम्यमनतीता लौकिकाः, नैसर्गिकं वैनयिकं बुद्धयतिशयमप्राप्ताः । तद्विपरीताः परीक्षकास्तर्केण प्रमाणैरर्थं परीक्षितुमर्हन्ति । ( न्याय० १।१।२५ )

( ३ ) एवं हि शास्त्रविषयो न जिज्ञास्येत यदि दुःखं नाम जगति न स्यात्, सद्वा न जिहासितं, जिहासितं वाऽशक्यसमुच्छेदम्। अशक्यसमुच्छेदता च

---

अन्वयः—दुःखत्रयाभिघातात् तदपघातके हेतौ जिज्ञासा ( भवति )। सा दृष्टे अपार्था चेत् न एकान्तात्यन्ततोऽभावात्।

अयमर्थः—आध्यात्मिक-आधिदैविक-आधिभौतिकदुःखत्रयस्य ( आत्मना सह ) योऽभिघातस्तस्मात्, अभिघातपदार्थश्च सांख्यनये वन्धकारणीभूतसंयोगरूपः। ये सन्ति न्यायनये आत्मनो धर्मास्ते सर्वेऽपि सांख्यनये वुद्धितत्त्वधर्मा भवन्ति। आत्माऽपि तत्रैव वुद्धितत्त्वे प्रतिविम्वितत्वसम्बन्धेन विद्यते, अत एव सामानाधिकरण्यसम्बन्धेन दुःखस्याऽऽत्मनि विद्यमानत्वात्तदभिघातो जायते, तच्च दुःखमात्मनः सर्वेषामेव मते प्रतिकूलवेदनीयं भवति, प्रतिकूलवेदनीयत्वमेव च वन्धजनकसंयोगः, एतदभिप्रायेणैवोक्तं—दुःखत्रयाभिघातादिति। दुःखत्रयाऽभिघातात्=आत्मना सह दुःखत्रयसम्बन्धादित्यर्थः। तदपघातके=दुःखत्रयस्याऽऽत्यन्तिकोच्छेदात्मकमोक्षकारणीभूते। हेतौ=विवेकज्ञानात्मके। जिज्ञासा=ज्ञानेच्छा। सा=अत्यन्तकष्टसाध्ये विवेके जिज्ञासा। दृष्टे=दृष्टोपाये सति, अर्थात् औषधसेवनात्मके कामिन्या उपभोगात्मके च दृष्टकारणे सति। अपार्था=सर्वथा व्यर्था। इमामाशङ्कां निराकर्तुमाह—नेति। कुतः? एकान्ताऽत्यन्ततोऽभावात्=एकान्तत्वम्, अत्यन्तत्वञ्च दुःखनिवृत्तिविशेषणम्, तत्रैकान्तत्वम् उपायानुष्ठानानन्तरमवश्यं जायमानत्वम्। अत्यन्तत्वञ्च पुनर्दुःखानुत्पत्तिकत्वम्, भविष्यत्कालीनदुःखासहवर्तित्वम्, तादृशदुःखसहानवस्थानरूपत्वं वा, अथवा भविष्यत्कालीनदुःखान्तराऽसमानाधिकरणत्वमेव दुःखनिवृत्तौ अत्यन्तत्वम्। तथा च दुःखनिवृत्तावेतादृशैकान्तत्वाऽत्यन्तत्वयोश्च निर्वाहार्थमेव, अथवा ऐकान्तिक-आत्यन्तिकरूपेण दुःखनिवृत्त्यर्थमेव शास्त्रविषये दुःखत्रयस्यैकान्तिकाऽऽत्यन्तिकरूपेण विनाशकारणं किमिति जिज्ञासा जायते इति भावः।

( ३ ) इमामेव जिज्ञासां मनसि निधाय प्रवृत्तां कारिकां व्याचिख्यासुः शास्त्र-

---

का आत्मा के साथ अभिघात ( सम्बन्ध ) होने से उनके विनाशकारणीभूत हेतु को जानने की इच्छा होती है कि दुःख-सामान्य के विनाश का कारण कौन है? यदि लौकिक दृष्ट उपाय से ही वह जिज्ञासा निवृत्त हो जाती है तो फिर क्या आवश्यकता है इतने गहन शास्त्राध्ययन की?

इसका उत्तर दिया कि दृष्ट लौकिक उपाय औषधि-सेवन आदि से दुःख-निवृत्ति होती है, किन्तु एकान्त=ऐकान्तिक रूप से तथा अत्यन्त=आत्यन्तिक रूप से नहीं होती है। ( एकान्तम्=दुःखनिवृत्तेरवश्यं भावः, अत्यन्तम्=निवृत्तस्य दुःखस्य पुनरनुत्पत्तिः, तयोरभावात् ) अर्थात् दृष्टोपाय से दुःख की निवृत्ति ऐकान्तिक तथा आत्यन्तिक रूप से कदापि नहीं होती है, इसीलिए दुःख की ऐकान्तिक तथा आत्यन्तिक रूप से निवृत्ति के लिए सांख्यशास्त्रोक्त उपाय ही ठीक है।

( ३ ) हाँ; इस प्रकार से सांख्यशास्त्र के विषय को जानने की इच्छा नहीं हो

द्वेधा—दुःखस्य नित्यत्वात् वा, तदुच्छेदोपायाऽपरिज्ञानाद्वा । शक्यसमुच्छेदत्वेऽपि च शास्त्रविषयस्य ज्ञानस्याऽनुपायत्वाद्वा, सुकरस्योपायान्तरस्य सद्भावाद्वा ।

---

विषयस्याऽजिज्ञास्यत्वकारणं निराकर्तुं प्रथमं तत्रत्यान् सम्भाव्यमानान् विकल्पान् प्रदर्शयति—**एवं हीत्यादिना** । अत्र 'ही'ति पदं तर्हीत्यर्थकम् । प्रेक्षावतां दुःखनिवृत्त्यर्थमेव शास्त्रीयं विषयं ज्ञातुं प्रवृत्तिर्भवति । इत्थञ्च शास्त्रविषयज्ञानस्य दुःखनिवृत्तिरूपमोक्षफलकत्वात् संसारे दुःखरूपप्रतियोग्यप्रसिद्धत्वे तन्निवृत्तौ कथं मानवानां प्रवृत्तिः स्यात् ? नहि वन्ध्यापुत्रादेरसतो विषयस्य हानोपायार्थं कस्यापि पुरुषस्य केनापि साधनेन प्रवृत्तिर्दृश्यते । तथा च शास्त्रविषयस्याऽजिज्ञास्यत्वे सन्ति पञ्च कारणानि । तथाहि—**शास्त्रविषय इति** । शास्त्रविषयः=ऐकान्तिकाऽत्यन्तिकरूपेण दुःखत्रयाऽपघातकप्रकृतिपुरुषभेदज्ञानस्वरूपविवेकज्ञानकारणीभूतसांख्यशास्त्रप्रतिपाद्यतत्त्वज्ञानरूपः । **न जिज्ञास्येत** ।

तत्राऽजिज्ञास्यत्वे कारणसहितं प्रथमं विकल्पमाह—**यदि दुःखं नाम जगति न स्यात्**, अर्थात् पीडापरपर्यायं दुःखं नाम प्रत्यात्मप्रतिकूलवेदनीयं यदि जगति न स्यात्तर्हि शास्त्रविषयो न जिज्ञास्येत ।

द्वितीयं विकल्पमाह—**सद् वा इति** । वर्तमानमपि दुःखं यदि परित्यक्तुमभिलषितं न भवेत्तर्ह्यपि शास्त्रविषयो न जिज्ञास्येत ।

दुःखनिवृत्तिकामनावतामेव भवति शास्त्रविषयं ज्ञातुं प्रवृत्तिः । येषाञ्च दुःखनिवृत्तिविषयिणी कामनैव नास्ति, ते कथं शास्त्रविषयं जिज्ञासितुं यतमाना भविष्यन्ति ? इच्छायाः प्रवृत्तिं प्रति कारणत्वात्; जानाति, इच्छति, यतते इत्यनुक्रमदर्शनात् । उक्तञ्च—

'आत्मजन्या भवेदिच्छा इच्छाजन्या भवेत्कृतिः ।
कृतिजन्या भवेच्चेष्टा चेष्टाजन्या भवेत् क्रिया' ॥

आत्मजन्येत्यस्य ज्ञानजन्येत्यर्थः । यतः 'सत्यं ज्ञानमनन्तं ब्रह्म' ( तैत्तिरीयोप० २।१ ); 'नित्यं विज्ञानमानन्दं ब्रह्म' ( छा० उ० ); 'केवलाऽखण्डबोधोऽहं स्वानन्दोऽहं निरन्तरः' ( कुण्डिकोपनि० २६ ) इत्यादिश्रुतिभिरात्मनो ज्ञानरूपताप्रतिपादनात् आत्मा ज्ञानरूपः ।

---

सकती है, यदि 'दुःख' नाम की कोई वस्तु ही जगत् में न हो ? होने पर भी उसे छोड़ने की इच्छा न होती हो, छोड़ने की इच्छा होते हुए भी दुःख का समुच्छेद ( निवृत्ति ) अशक्य हो अर्थात् शक्तिसाध्य न हो ।

और वह दुःख की अशक्य समुच्छेदता दो प्रकार से हो सकती है, या तो दुःख नित्य हो, अथवा दुःख के उच्छेद ( निवृत्ति ) के उपाय का ज्ञान न हो, अर्थात् दुःख निवृत्त्युपाय अज्ञात हो ।

अथवा दुःख की निवृत्ति संभव होने पर भी सांख्यशास्त्र के विषय का ज्ञान दुःखनिवृत्ति ( दुःखोच्छेद ) का उपाय न हो । अथवा उपाय होने पर भी सांख्यशास्त्रप्रतिपाद्य तत्त्वज्ञान की अपेक्षा कोई और दूसरा सरल उपाय हो तब भी सांख्यशास्त्रप्रतिपाद्य तत्त्वज्ञान की जिज्ञासा करना व्यर्थ है ।

( ४ ) तत्र न तावद् दुःखं नास्ति, नाप्यजिहासितमित्युक्तम्–'दुःखत्रयाभिघातात्' इति। दुःखानां त्रयं दुःखत्रयम्। तत् खलु आध्यात्मिकमाधिभौतिकमाधिदैविकञ्च। तत्राध्यात्मिकं द्विविधम्—शारीरं मानसं च। शारीरं वात-

---

तृतीयं विकल्पमाह—'जिहासितं वा' इति। जिहासितम्=हातुम् इप्सितम्। तद् दुःखं यदि मानवीयेन प्रयत्नेन कथमपि दूरीकरणीयं न भविष्यति तावतापि शास्त्रविपयो न जिज्ञास्येत।

मानवीयेन प्रयत्नेन दुःखस्य दूरीकरणीयत्वाभावे एकं काल्पनिकं साधकं ब्रूते मिश्रः—'दुःखस्य नित्यत्वात्' इति। नित्यस्य वस्तुनो नाशाऽप्रतियोगित्वेन न कदापि केनापि यत्नेन दूरीकरणीयत्वं स्यात्। साधकान्तरमप्याह मिश्रः—'तदुच्छेदोपायाऽपरिज्ञानाद्वा' इति। तस्य=दुःखस्य, उच्छेदोपायः=निराकरणसाधनम्, तस्य अपरिज्ञानादपि तद् दुःखमशक्यसमुच्छेदमस्ति।

चतुर्थं विकल्पमाह—'शक्यसमुच्छेदत्वेऽपि' इति। दूरीकरणोपायपरिज्ञानाद् अवश्यं दुःखं दूरीकर्तुं शक्यते, किन्तु शास्त्रप्रतिपादितविपयज्ञानस्य दुःखनिवृत्तेरसाधनत्वात् अर्थात् शास्त्रप्रतिपादितं विवेकज्ञानं यदि दुःखदूरीकरणस्य साधनं न स्यात्तर्हि अपि शास्त्रविपयो न जिज्ञास्येत।

पञ्चमं विकल्पमाह—'सुकरस्य' इति। शास्त्रप्रतिपादितविवेकज्ञानापेक्षया सुकरस्य=सुलभस्य, विशेपाऽनायाससाध्यस्य। उपायान्तरस्य=विवेकोपायभिन्नसाधनान्तरस्य। सद्भावात्=विद्यमानत्वात्। शास्त्रप्रतिपादितविवेकज्ञानस्य दुःखसमुच्छेदोपायरूपत्वेऽपि एवं तदुपायत्वनिश्चयेऽपि, तस्मादपि सुलभोपायसत्त्वे शास्त्रविपये नैव जिज्ञासोदेति। इत्थञ्चाऽनायाससाध्यः सरलः सुलभ एव कश्चिदनिर्वचनीयः साधनान्तरसद्भाव एव शास्त्रविपयस्याऽजिज्ञास्यत्वे पञ्चमो हेतुरित्यलं पल्लवितेन।

( ४ ) इदानीं पूर्वोक्तान् पञ्च विकल्पान् निराकर्तुं प्रथमौ द्वौ विकल्पौ पूर्वं खण्डयति—*तत्र न तावद् दुःखमिति*। *अर्थाद् दुःखं नास्ति इति न, अपि तु अस्त्येव*। तच्च 'अजिहासितम्' इत्यपि न, किन्तु जिहासितमेवास्तीति भावः। एतदेव कारिकया सुस्पष्टयति—दुःखत्रयाभिघातादिति। एतेन पदेन आध्यात्मिक-आधिभौतिक-आधिदैविकदुःखत्रयेण सह पुरुपस्य ( आत्मनः ) असह्यसम्बन्धः प्रतिपादितः। इत्थञ्च आत्मना दुःखस्याऽसह्यसम्बन्धसत्त्वेन तस्य परिहारोऽप्यावश्यकः। एतेन दुःखस्यास्तित्वं, जिहासितत्वञ्च सिद्ध्यति। आध्यात्मिकमिति। आत्मानं, शरीरं, मनश्च, अधिकृत्य=निमित्तीकृत्य प्रवर्तमानमाध्यात्मिकम्। भूतानि=मनुष्यपश्वादीनि, अधि-

---

( ४ ) परन्तु संसार में दुःख नहीं है, ऐसा भी नहीं है; दुःख अनुभव-सिद्ध है, अतः अवश्य है। अथवा दुःख अजिहासित है अर्थात् छोड़ने की इच्छा का विषय नहीं है, यह भी नहीं कहते; इसी अभिप्राय से कारिकाकार कहते हैं—'दुःखत्रयाभिघातादिति'। तीन प्रकार के दुःख हैं—( १ ) आध्यात्मिक, ( २ ) आधिभौतिक, ( ३ ) आधिदैविक। इनमें 'आध्यात्मिक' दुःख दो प्रकार का है—'शारीरिक' और 'मान-

पित्तश्लेष्मणां वैषम्यनिमित्तम् । मानसं काम-क्रोध-लोभ-मोह-भयेर्ष्या-विषाद-विषयविशेषादर्शननिबन्धनम् । सर्वञ्चैतदान्तरोपायसाध्यत्वादाध्यात्मिकं दुःखम् ।

( ५ ) बाह्योपायसाध्यं दुःखं द्वेधा—आधिभौतिकम् आधिदैविकञ्च । तत्राधिभौतिकम्—मानुष-पशु-मृग-पक्षि-सरीसृप-स्थावर-निमित्तम् । आधिदैविकं तु —यक्ष-राक्षस-विनायक-ग्रहाद्यावेशनिबन्धनम् ।

---

कृत्य प्रवर्तमानमाधिभौतिकम् । अग्निप्रभृतिदेवानधिकृत्य प्रवर्तमानमाधिदैविकम् । आध्यात्मिकस्य द्वैविध्यं प्रतिपादयति—**तत्रेति** । दुःखत्रये । प्रकारद्वयमाह—**शारीरमिति** । आत्मानं=शरीरम् अधिकृत्य जायमानं क्षुधापिपासादिकम्, यच्च आत्मानम् =अन्तःकरणमधिकृत्य प्रवर्तमानं कामादिनिबन्धनं दुःखं तत् सकलमेवाध्यात्मिकम् ।

तत्र शारीरं दर्शयति—**वातपित्तेत्यादि** । वातश्च पित्तश्च श्लेष्मा ( कफश्च ) चेति वातपित्तश्लेष्माणि, तेषां वैषम्यनिमित्तम्=न्यूनाधिक्यनिबन्धनम् । मानसं दर्शयति—**कामक्रोधेति** । कामः=इच्छा, क्रोधः=द्वेषः, लोभः=अधिकपरवस्तुप्राप्तीच्छा, मोहः =अज्ञानविशेषः, भयम्=त्रासः, ईर्ष्या=परोत्कर्षासहिष्णुत्वम् । विषादः=प्रियवस्तुविनाशे व्याकुलता । विषयविशेषादर्शनम्=शब्दस्पर्शादिश्रेष्ठविषयाणामलाभः । एतन्निबन्धनम्=एतत्प्रयुक्तं सर्वं मानसं दुःखम् । सर्वम्=शारीरं मानसञ्च । दुःखम् । आन्तरोपायसाध्यत्वात्=शरीराभ्यन्तरेऽन्तःकरणे वा भवाः ये उपायाः=वातपित्तादयः कामादयो वा, तत्साध्यत्वात्=तज्जन्यत्वात् ।

( ५ ) यथा आध्यात्मिकं प्रागुक्तं दुःख द्विविधं तथैव बाह्यमपि द्विविधमिति दर्शयति—**बाह्योपायसाध्यमिति** । बाह्योपायैः=लगुडादिसाधनविशेषैः, साध्यं=जन्यं दुःखमित्यर्थः । तच्च–आधिभौतिकम्, आधिदैविकञ्चेति । आधिभौतिकं दर्शयति—**मानुषेति** । आधिदैविकं दर्शयति—**यक्ष-राक्षसेति** ।

---

'सिक' । वात, पित्त, कफ ( श्लेष्मा )—इनकी विषमता से उत्पन्न दुःख शारीरिक दुःख कहलाता है; और काम, क्रोध, लोभ, मोह, भय, ईर्ष्या तथा विषाद—इन सात कारणों से उत्पन्न एवं स्वाभीष्ट विषय ( गुलाबजामुन ) आदि की प्राप्ति न होने पर जो दुःख होता है वह मानस दुःख है । यह सब दुःख आन्तरोपायसाध्य होने के नाते आध्यात्मिक दुःख कहलाते है ।

( ५ ) और बाह्योपाय साध्य दुःख दो प्रकार का होता है—आधिभौतिक तथा आधिदैविक । उनमें आधिभौतिक दुःख—मनुष्य, पशु, पक्षी, सरीसृप ( सर्प ) तथा स्थावर ( स्थितिशील भूमि वृक्षादि ) के आधार पर उत्पन्न होने वाला दुःख आधिभौतिक दुःख कहलाता है तथा यक्ष, राक्षस, विनायक ( विघ्नोत्पादक देवजातिविशेष ) एवं शनि आदि ग्रहों के आवेश ( नाराजगी ) से होने वाला दुःख आधिदैविक दुःख कहलाता है ।

( ६ ) तदेतत् प्रत्यात्मवेदनीयं दुःखं रजःपरिणामभेदो न शक्यते प्रत्याख्यातुम्। तदनेन दुःखत्रयेणान्तःकरणवर्त्तिना चेतनाशक्तेः प्रतिकूलवेदनीयतयाऽभिसम्बन्धोऽभिघात इति। एतावता प्रतिकूलवेदनीयत्वं जिहासाहेतुरुक्तः। यद्यपि न सन्निरुध्यते दुःखम्, तथाऽपि तदभिभवः शक्यः कर्त्तुमित्युपरिष्टादुपपादयिष्यते।

( ७ ) तस्मादुपपन्नम् – 'तदपघातके हेतौ' इति। तस्य दुःखत्रयस्य अपघातकस्तदपघातकः।

---

( ६ ) 'न तावद् दुःखं नास्ती'ति प्रागुक्तं दुःखास्तित्वं स्थिरीकरोति— **तदेतदिति**। तत्=प्रागुक्तम्। एतत्=त्रिविधं दुःखम्। प्रत्यात्मवेदनीयम्=प्रत्येकव्यक्त्यनुभूयमानम्। रजःपरिणामभेदः=बुद्धिगतरजोगुणपरिणामस्वरूपः। प्रत्याख्यातुम्=दुःखं नास्तीत्येवंरूपेण निराकर्तुम्। कारिकोक्ताऽभिघातपदार्थमाह— **तदनेन दुःखत्रयेणेति**। दुःखत्रयेण=आध्यात्मिकादित्रयेण। चेतनाशक्तेः=चेतनस्य पुरुषस्य। प्रतिकूलतया=आत्मनः प्रतिकूलतया। तथा च प्रतिकूलवेदनीयत्वात्मको बन्धनकारणीभूतसंयोगरूपोऽभिसम्बन्धोऽभिघातपदार्थः। पुरुषः, चेतनः, चेतनाशक्तिः, आत्मा, दृक्शक्तिः, चितिः, एते च सर्वेऽपि सन्ति पर्यायवाचकीभूताः शब्दाः। नैयायिकाभिमतं 'दुःखस्यात्मधर्मत्वमि'ति पक्षं निराकर्तुमुक्तम्—'अन्तःकरणवर्तिना' इति।

दुःखं न जिहासितमिति द्वितीयस्यापि विकल्पस्य निराकरणं दर्शयति—**एतावतेति**। अभिघातशब्देनाऽऽत्मना सह दुःखसम्बन्धस्याऽसह्यत्वकथनेन। जिहासाहेतुः=दुःखत्यागेच्छायां हेतुः।

सतो दुःखस्य विनाशासम्भवात् तदभिभवो भवितुमर्हतीति दर्शयति—**यद्यपि नेति**। यद्यपि दुःखं न सन्निरुद्धयते=समूलमुच्छेत्तुं न शक्यते, तस्य नित्यत्वात्। तथापि तदभिभवः=तस्य दुःखस्य अभिभवः=विघटनानुकूलसामग्रीसम्पादितः प्रतिरोधः, शक्यते कर्तुम्। अयं विषयः 'एवं तत्त्वाभ्यासात्' इत्यादि चतुःषष्टि ( ६४ ) कारिकायां द्रष्टव्यः।

---

( ६ ) अतः प्रत्यक आत्मा को वेदनीय अर्थात् अनुभूत होने वाले तथा रजोगुण के परिणामभूत इस दुःख का कदापि प्रत्याख्यान=निराकरण नहीं किया जा सकता है कि दुःख नाम की कोई वस्तु=पदार्थ संसार में है ही नहीं, इत्यादि रूप से। इसीलिए अन्तःकरणवर्ती इन तीन दुःखों के साथ चेतनाशक्ति ( पुरुष ) का प्रतिकूलवेदनीय होने वाले अभिसम्बन्ध को ही अभिघात कहा है।

दुःख के प्रतिकूलवेदनीय होने से ही उसके प्रतिकूलवेदनीयत्व को दुःख के परिहार की इच्छा का कारण बतलाया है। यद्यपि सांख्य के सत्कार्यवाद को स्वीकार करने के नाते दुःख भी सत् है, अतः उसका निरोध=विनाश नहीं हो सकता है। तथापि उसका अभिभव=अनुभूति न होना, किया जा सकता है। यह आगे ६४-६५-६८ का० से स्पष्ट हो जायेगा।

( ८ ) उपसर्जनस्यापि बुद्धया सन्निकृष्टस्य 'तदा' परामर्शः । अपघातकश्च हेतुः शास्त्रप्रतिपाद्यो नान्य इत्याशयः ।

अत्राशङ्कते—'दृष्टे साऽपार्था चेत्' इति ।

---

( ७ ) उपसंहरति—तस्मादिति । यस्माद् हेतोर्दुःखाभिभवः कर्तुं शक्यते अतः तदपघातके हेतौ=दुःखापघातके हेतौ । जिज्ञासा जायते इति भावः ।

( ८ ) ननु 'तदपघातके' इत्यत्र तच्छब्देन दुःखत्रयस्य परामर्शो न सम्भवति, तस्य 'दुःखत्रयाभिघातात्' इत्यत्र समासे गौणत्वात् कथं तच्छब्देन दुःखत्रयस्य परामर्शः स्यात्, इत्याशङ्कां निराकर्तुमाह—उपसर्जनस्यापीति । समासे गौणत्वप्राप्तस्यापि दुःखत्रयस्य, बुद्धया=मानस्या, सन्निकृष्टस्य=समाकृष्टस्य । तदा=तच्छब्देन । परामर्शः=अध्याहारः ।

दुःखोपघातकं हेतुं दर्शयति—शास्त्रप्रतिपाद्य इति । 'यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते' ( गीता ६।२२ ) तथा च सांख्यशास्त्रप्रतिपाद्यतत्त्वज्ञानमेव पूर्वोक्तविवेकज्ञानद्वारा दुःखोन्मूलने हेतुरित्यर्थः ।

सुकरस्योपायान्तरस्य सद्भावाद्वा इति विकल्पं निराकरोति— 'नान्य' इति । दुःखत्रयसमूलोन्मूलने सांख्याभिमततत्त्वभिन्नो नास्ति कश्चिदपि साधनभूत उपायः ।

'नान्य' इत्येव द्रढयति—अत्राशङ्कते इति । कारिकांशमवतारयन् शङ्कास्वरूपमाह—दृष्टे साऽपार्था चेदिति । अर्थात् औषधादिरूपे दुःखोच्छेदके सरले दृष्टोपाये सति कठिनतमे सांख्यप्रतिपाद्यतत्त्वज्ञाने सा जिज्ञासा, अपार्था=व्यर्था । तादृशाभिप्रायमेव पूरयति—'अस्तु' इति । स्पष्टमन्यत् सर्वम् । तथाप्यत्रेति । अत्र=सांख्य-

---

( ७ ) इस प्रकार की वाचस्पति की उक्ति से यह उपपन्न हो गया कि 'तदपघातके' दुःखत्रय के अपघातक=विनाशक हेतु में जिज्ञासा होती है, अर्थात् दुःखत्रय के विनाशकारणीभूत हेतु को जानने की इच्छा होती है कि—'दुःखत्रयविनाशकारणं किम्' इति । 'तदपघातक' यहाँ पर 'तत्' पद 'दुःखत्रय' रूप अर्थ का परामर्शक है—तस्य=दुःखत्रयस्य, अपघातकस्तदपघातकः' इति ।

( ८ ) यद्यपि सर्वनाम शब्द प्रधान के परामर्शक होते हैं और दुःखत्रयाभिघातात्' इस कारिकास्थ समस्त पद में दुःखत्रय पद पूर्वप्रयुक्त होने के नाते गौण है तथा 'अभिघात' प्रधान है । अतएव 'तदपघातके' यहाँ पर प्रयुक्त 'तत्' इस सर्वनाम को 'अभिघात' रूप प्रधान का ही परामर्शक होना चाहिए था । तथापि यह नियम है कि 'सर्वनाम न केवल प्रधान के ही परामर्शक होते हैं, अपितु बुद्धिस्थ के भी'; अतः 'तत्' पद बुद्धया समाकृष्ट=बुद्धिस्थ तथा उपसर्जन=गौण हुए 'दुःखत्रय' का भी नियमानुसार परामर्शक होगा ।

इसलिए अब निष्कर्ष यही निकला कि दुःखत्रय के ऐकान्तिक तथा आत्यन्तिक रूप से अपघात=विनाश का कारण तत्त्वज्ञान शास्त्रप्रतिपाद्य है; 'नान्यः' अन्य से नहीं ।

अब यहाँ शङ्का करते हैं कि 'दृष्टे साऽपार्था चेत्' इसका तात्पर्य 'अयमर्थः

अयमर्थः—अस्तु तर्हि दुःखत्रयम्, जिहासितं च तद्भवतु, भवतु च तच्छक्यहानम्, सहतां च शास्त्रगम्य उपायस्तदुच्छेत्तुम्। तथाऽप्यत्र प्रेक्षावतां जिज्ञासा न युक्ता, दृष्टस्यैवोपायस्य तदुच्छेदकस्य सुकरस्य विद्यमानत्वात्। तत्त्वज्ञानस्य तु अनेकजन्माभ्यासपरम्पराऽऽयाससाध्यतयाऽतिदुष्करत्वात्।

तथा च लौकिकानामाभाणकः—

अक्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्।
इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत्॥ इति।

( ९ ) सन्ति चोपायाः शतशः शारीरदुःखप्रतीकारायेषत्करा भिषजां वरैरुपदिष्टाः। मानसस्यापि सन्तापस्य प्रतीकाराय मनोज्ञ-स्त्री-पान-भोजन-

---

प्रतिपाद्यविवेके। प्रेक्षावताम्=विदुषां बुद्धिमतां वा। न युक्ता=न समीचीना। कथमित्यत आह—दृष्टस्यैवेति। दृष्टस्यैव=लोकविदितस्यैव। तदुच्छेदकस्य=दुःखविनाशकस्य। उपायस्य=साधनभूतस्यौषधादेः। नहि सरलमुपायमुपेक्ष्य कठिनमुपायं कश्चिद् आश्रयितुं प्रवर्तते इति भावः।

सरलमुपायमुपेक्ष्य कठिनोपायाऽवलम्बनं न समीचीनमित्यत्र लोकसंवादमप्याह—तथा चेति। लौकिकानां=लोकव्यवहारज्ञातॄणाम्। आभाणकः=लोकप्रसिद्धसंवादः। तदाह—अक्के चेदिति। यथा मधुकामः कश्चित् पुरुषस्तल्लाभाय पर्वतं प्रस्थितः सन् मध्यमार्गे एव अर्कवृक्षे समीपे एव यदि मधु। विन्देत=लभेत। तर्हि पर्वतं किं प्रयोजनमादाय गच्छेत्? एवमेव इष्टस्य=अभिलषितस्य। अर्थस्य=वस्तुनः। संसिद्धौ=सरलया प्राप्तौ सत्याम्। को विद्वान्। तत्प्राप्त्यर्थम्। यत्नम्=प्रयासं दूरादिगमनात्मकम्। आचरेत्? न कोऽपीत्यर्थः।

( ९ ) सांख्यप्रतिपाद्यविवेकज्ञानापेक्षया सरलानुपायान् दर्शयति—सन्ति चेति। ईषत्कराः=सरलाः। भिषजां वरैः=वैद्यवर्यैः। उपदिष्टाः=कथिताः।

---

इत्यादि ग्रन्थ से बतलाते हैं—यह हम मानते हैं कि दुःखत्रय संसार में हैं और वे तीनों दुःख जिहासित भी हैं अर्थात् उनकी निवृत्ति सर्वथा अभीष्ट है और निवृत्ति सम्भव भी है और शास्त्रप्रतिपाद्य उपाय ( तत्त्वज्ञान ) दुःखत्रय के विनाश में समर्थ भी हैं, तथापि शास्त्रप्रतिपाद्य इस 'तत्त्वज्ञान' स्वरूप उपाय में प्रेक्षावान् लोगों को जिज्ञासा इसलिए नहीं होगी कि उससे भी सरल दुःख के विनाश का उपाय औषधसेवन आदि दृष्ट उपाय विद्यमान है।

लोक में कहावत भी है—'अक्के' इत्यादि। अर्थात् अक्क=गृहकोण में यदि शहद मिल जाय तो पर्वत में उसके लिए क्यों जायें? क्योंकि अभीष्ट अर्थ=मतलब की सिद्धि यदि सरलोपाय से हो जाती है तो कौन विद्वान्=विचारशील यत्न=कठिन प्रयास करेगा?

( ९ ) इसलिए शारीरिक दुःखों के प्रतीकार के लिए वैद्यों ने सैकड़ों उपाय बतला दिये हैं। मानसिक दुःखों के प्रतीकार के लिए भी मनोज्ञ=मन को अच्छी

विलेपन-वस्त्रालङ्कारादिविषयसम्प्राप्तिरुपायः सुकरः। एवमाधिभौतिकस्यापि दुःखस्य नीतिशास्त्राभ्यास-कुशलता-निरत्ययस्थानाध्यासनादिः प्रतीकारहेतुरीषत्करः। तथाऽऽधिदैविकस्यापि दुःखस्य मणि-मन्त्रौषधाद्युपयोगः सुकरः प्रतीकारोपाय इति।

( १० ) निराकरोति—'न' इति। कुतः ? 'एकान्तात्यन्ततोऽभावात्'। एकान्तो—दुःखनिवृत्तेरवश्यम्भावः, अत्यन्तो—निवृत्तस्य दुःखस्य पुनरनुत्पादः, तयोरेकान्तात्यन्तयोरभावः एकान्तात्यन्ततोऽभावः। षष्ठीस्थाने सार्वविभक्तिकस्तसिः।

---

ननु मास्तु शारीरिकदुःखविनाशाय तत्त्वज्ञानापेक्षा मानसस्य तु भवतु इत्यत आह—**मानसस्यापीति**। मनोगतकामक्रोधादिजन्यस्य सन्तापस्य=दुःखस्य। प्रतीकाराय। सुकरः=तत्त्वज्ञानापेक्षया स्वल्पायाससाध्यः। मनोज्ञा स्त्री=स्वप्रिययुवतीसम्भोगः। पानं=मद्यपानम्, भोजनं=मिष्टान्नादिभोजनम्। विलेपनं=चन्दन-सुन्दरतैलादिविलेपनम्, वस्त्राणि=मनोऽनुकूलानि वासांसि, अलङ्काराश्चेत्यादिविषयाणां प्राप्तिस्वरूप उपाय इत्यर्थः।

**एवमाधिभौतिकस्येति**। नीतिशास्त्राभ्यासः='दंष्ट्रिणः शृङ्गिणो दूरतः परिवर्ज्याः', 'नाऽदण्डो बहिर्गच्छेत्' इत्यादिबोधक-बार्हस्पत्यौशनस-कामन्दकीयादिः। कुशलता=सांसारिकसमस्तव्यवहारचातुर्यम्। निरत्ययस्थानाध्यसनादिः=निर्बाधोपद्रवशून्यस्थाननिवासादिः। ईषत्करः=सुलभः। **तथाऽऽधिदैविकस्यापीति**। मणिमन्त्रौषधाद्युपयोगः—उपयोगः=व्यवहारः, तत्र यथा मण्यादेर्धारणम्, मन्त्रादेः पाठः उपयोगो वा, औषधादेः सेवनादिः।

( १० ) प्रागुक्तलौकिकोपायैर्नाभिलषितदुःखनिवृत्तिर्भवितुमर्हतीति प्रदर्शयितुं कारिकांशमवतारयति—**निराकरोति—'न' इति**। 'न' इत्यनेन पदेन 'दृष्टे साऽपार्था चेत्' इत्याशङ्का निराक्रियते। लौकिकोपायनिरसने कारणं पृच्छति—**कुत इति**।

---

लगने वाली स्त्री, जलपान, भोजन, विलेपन=सुन्दर द्रव्य ( इत्र ) आदि का लगाना, इत्यादि विषय सरल उपाय है, तब क्यों शास्त्रजिज्ञासारूप कठिन उपाय की ओर दौड़ा जाय ? इसी प्रकार आधिभौतिक दुःख की निवृत्ति के लिए नीतिशास्त्राऽभ्यास में कुशल होना तथा निर्बाध=सुरक्षित स्थान में रहना आदि सरल उपाय बतलाये हैं तथा आधिदैविक दुःखनिवृत्ति के लिए भी मणि अर्थात् मणिधारण करना, मन्त्रानुष्ठान करना एवं औषध-सेवन करना आदि सरल उपाय बतलाये है।

( १० ) खण्डन करते है—**निराकरोति—नेति**। कुतः ? 'एकान्ताऽत्यन्तोऽभावात्'। अर्थात् लौकिक दृष्टोपाय औषध-सेवन आदि से दुःख-निवृत्ति ऐकान्तिक तथा आत्यन्तिक रूप से कदापि नहीं हो सकेगी। क्योंकि 'एकान्त' शब्द का अर्थ है—दुःखनिवृत्ति का अवश्य हो जाना तथा 'अत्यन्त' शब्द का अर्थ है—निवृत्त दुःख की पुनः उत्पत्ति न होना। लौकिकदृष्टोपाय से दुःख की निवृत्ति अवश्य ही हो जाये, ऐसा भी

( ११ ) एतदुक्तं भवति—यथाविधि रसायनादिकामिनीनीतिशास्त्राभ्यासमन्त्राद्युपयोगेऽपि तस्य तस्याध्यात्मिकादेर्दुःखस्य निवृत्तेरदर्शनात् अनैकान्तिकत्वम्, निवृत्तस्यापि पुनरुत्पत्तिदर्शनात् अनात्यन्तिकत्वम्, इति सुकरोऽपि ऐकान्तिकात्यन्तिकदुःखनिवृत्तेर्न दृष्ट उपाय इति नापार्था जिज्ञासेत्यर्थः ।

---

अर्थात् कस्मात् कारणात् लौकिकोपायेन सा जिज्ञासा न दूरीभवति । **एकान्ताऽत्यन्ततोऽभावादिति** । लौकिकोपायजन्यायां दुःखनिवृत्तौ नैकान्तत्वं नाप्यत्यन्तत्वञ्चास्तीत्यर्थः । अत एकान्ताऽत्यन्ततोऽभावात् लौकिकोपायजन्यदुःखनिवृत्तिविषयिणी जिज्ञासा न युक्ता । एकान्ताऽत्यन्तपदार्थश्च स्वयमेव कौमुदीकारः स्फुटीकरिष्यति । इत्यञ्च दृष्टोपायेन ओषधादिना प्रागुक्तेन ऐकान्तिकात्यन्तिकदुःखनिवृत्तेरदर्शनान्न तत्र जिज्ञासा प्रशाम्यति, अतोऽवश्यं शास्त्रे जिज्ञासा कर्तव्येति भावः ।

( ११ ) फलितार्थमाह—**एतदुक्तं भवतीति** । ग्रन्थोऽयं सुस्पष्टः । **निवृत्तेरदर्शनादिति** । असाध्यरोगादेरोपधादिना दृष्टोपायेन शान्तिर्न भवतीति भावः । **उत्पत्तिदर्शनादिति** । कालान्तरे इति शेषः । उक्तञ्च—

'सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
सुखदुःखे मनुष्याणां चक्रवत् परिवर्ततः ॥'
( शान्तिपर्वणि २५।२३ )

'सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
पर्यायेणोपसर्पन्ति नरं नेमिमरा इव ॥' (वनपर्वणि २६।४९)

अपि च—

'कस्यैकान्तं सुखमुपनतं दुःखमेकान्ततो वा
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥' ( उत्तरमेघदूते ४६ )

---

देखने में नहीं आता है और निवृत्त दुःख फिर से उत्पन्न न होता हो, ऐसी भी बात नहीं है, अर्थात् जो 'ज्वर' आदि दुःख शान्त हो गये, वे पुनः उत्पन्न हो जाते हैं। 'तयोरेकान्ताऽत्यन्तयोरभावः' इस षष्ठ्यन्त पद के स्थान में 'एकान्ताऽत्यन्ततः' इस 'तसि' प्रत्ययान्त का प्रयोग हुआ है, अतः वह 'तसि' प्रत्यय सार्वविभक्तिक है अर्थात् सभी विभक्तियों के स्थान में होने वाला है ।

( ११ ) उपर्युक्त दृष्टिकोण का निष्कर्ष यह है कि—विधिपूर्वक रोगनाशक 'रसायन' आदि औषध का उपयोग करने पर भी; तथा 'कामिनी' के साथ प्रसंग होने पर भी; नीतिशास्त्राभ्यास एवं मन्त्र आदि का उपयोग करने पर भी उन-उन आध्यात्मिक दुःखों की निवृत्ति ऐकान्तिक=आवश्यक रूप से नहीं देखते हैं, अतः वह दुःख-निवृत्ति अनैकान्तिक है । निवृत्त दुःख की फिर से उत्पत्ति देखते हैं, अतएव वह निवृत्ति आत्यन्तिक न होकर अनात्यन्तिक है, अतः दृष्ट उपाय सरल होने पर भी ऐकान्तिक तथा आत्यन्तिक रूप से दुःख निवर्तक नहीं है, इसलिए सांख्यशास्त्रीय तत्त्वज्ञानविषयिणी जिज्ञासा का होना नितान्त आवश्यक है ।

यद्यपि दुःखममङ्गलम्, तथाऽपि तत्परिहारार्थत्वेन तदपघातो मङ्गलमेवेति युक्तं शास्त्रादौ तत्कीर्तनमिति ॥ १ ॥

( १ ) स्यादेतत् । मा भूद् दृष्ट उपायः, वैदिकस्तु ज्योतिष्टोमादिः सहस्रसंवत्सरपर्यन्तः कर्मकलापस्तापत्रयमेकान्तमत्यन्तश्चापनेष्यति । श्रुतिश्च—'स्वर्गकामो यजेत' इति । स्वर्गश्च—

यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं च तत्सुखं स्वः पदास्पदम् ॥ १ ॥ इति ।
( तन्त्रवा० )

---

इदानीमुपसंहरति—**सुकरोऽपीति** । तथा च सुकरोऽपि दृष्टोपायः परन्तु तेन ऐकान्तिकाऽऽत्यन्तिकदुःखनिवृत्तेरदर्शनात् सांख्यप्रतिपादिततत्त्वज्ञाने जिज्ञासा युक्तैवेत्यर्थः ।

'मङ्गलाचरणं शिष्टाचारात् फलदर्शनाच्छ्रुतितश्च ।' ( सांख्यसूत्रम् ५।१ )

इति सांख्यसूत्रात् मङ्गलाचरणं नितान्तमावश्यकम् । दुःखमवश्यमस्ति अमङ्गलम् । तथापि दुःखापघातबोधकः शब्दो मङ्गलमेवेति भावः । मम्=अशुभं, मालयतीति मङ्गलम् । मङ्गं=शुभं, लाति=गृह्णातीति मङ्गलम् ।। १ ॥

( १ ) मीमांसकमतेन शङ्कते—**स्यादेतदिति** । एतत्=दृष्ट उपायः, दुःखनिवृत्तेः कारणं, माभूत्, किन्तु वैदिकोपायभूतो ज्योतिष्टोमादिः कर्मकलापः । तापत्रयम्=आध्यात्मिकादिदुःखत्रयम्, एकान्तमत्यन्तञ्च । अपनेष्यति=दूरीकरिष्यति । अत्र श्रुतेः प्रामाण्यमाह—**'स्वर्गकाम' इति** ।

ननु 'स्वर्गकामो यजेत' इति श्रुतिरपि स्वर्गकामो यागेनेष्टं=स्वर्गं भावयेदित्येव प्रतिपादयति, न तु यागेनाऽऽत्यन्तिकीं दुःखनिवृत्तिं सम्पादयेदित्यपि कथयति । इत्थञ्च यागस्य स्वर्गफलकत्वे सिद्धेऽपि आत्यन्तिकदुःखनिवृत्तिजनकत्वं यागस्य नैव सिद्धयतीति नास्याः श्रुतेः प्रागुक्तार्थे प्रामाण्यं भवितुमर्हतीत्याशङ्क्य पूर्वोक्तदुःखनिवृत्तेरेव पर्यायभूतो नामान्तर वा स्वर्ग इत्यभिप्रायेण स्वर्गं लक्षयति—**स्वर्गश्चेति** । भाट्टवार्तिकश्लोकमाह—**यन्नेति** । यत्—सुखं दुःखेन । न । सम्भिन्नं=मिलितं, मिश्रितम् ।

---

यद्यपि ग्रन्थ के प्रारम्भ में दुःख का विवेचन सर्वथा अमङ्गल है, तथापि दुःख का परिहारार्थक 'तदपघात' यह पद सर्वथा मङ्गल ही है, अतः शास्त्र के आरम्भ में उसका कीर्तन सर्वथा उचित ही है ॥ १ ॥

( १ ) स्यादेतत्=अस्तु तावत्, अर्थात् पूर्वकथनानुसार दृष्ट उपाय ऐकान्तिक तथा आत्यन्तिक रूप से दुःख-निवृत्ति का कारण न हो, परन्तु वैदिक=वेदोक्त कर्मकलाप, ज्योतिष्टोम आदि याग जो संवत्सरादि स्वल्पकाल में ही साध्य है तथा सांख्यशास्त्र-प्रतिपाद्य तत्त्वज्ञान की अपेक्षा सरल भी है, वही तापत्रय=दुःखत्रय की ऐकान्तिक तथा आत्यन्तिक रूप से निवृत्ति कर देगें । इस विषय में 'स्वर्गकामो यजेत' यह श्रुति स्वयं प्रमाण है । और स्वर्ग वह है—

दुःखविरोधी सुखविशेषश्च स्वर्गः। स च स्वशक्तया समूलघातमपहन्ति दुःखम्। न चैष क्षयी। तथा हि श्रूयते—'अपाम सोमममृता अभूम' इति (ऋ० ८।४८।३)। तत्क्षये कुतोऽस्यामृतत्वसम्भवः ?

(२) तस्माद्वैदिकस्योपायस्य तापत्रयप्रतीकारहेतोर्मुहूर्त-यामाहोरात्र-मास-संवत्सरादिनिर्वर्त्तनीयस्यानेकजन्मपरम्पराऽऽयाससम्पादनीयात् विवेक-ज्ञानात् ईषत्करत्वात् पुनरपि व्ययो जिज्ञासा इत्याशङ्क्याह—

---

अस्माकं सुखं सर्वदा दुःखमिश्रितं भवति, नेदं स्वर्गात्मकं सुखं तथाविधं भवति। न चेदं सुखमनन्तरं=मध्ये मध्ये विच्छेदभावं प्राप्य ग्रस्तं भवति, अत इदमक्षयीत्यर्थः। **अभिलाषोपनीतमिति**। अभिलाषया=सङ्कल्पमात्रेण, उपनीतं=प्राप्तम्। न त्वस्माक-मिव प्रयासलभ्यम्। एतादृशं यत्=पूर्वोक्तम्। सुखम्। तत् सुखम्। स्वःपदास्पदम्—स्वः-पदस्य=स्वर्गपदस्य, आस्पदम्=अभिधेयस्थानम्। फलितार्थमाह—**दुःखविरोधीति**। **स चेति**। पूर्वोक्तसुखविशेषस्वरूपः स्वर्ग इत्यर्थः। स च स्वर्गः, स्वसत्तया। समूल-घातम्=मूलेन दुःखस्य मूलं यत् पापाख्यकारणं तेन सहैव दुःखमपहन्ति येन पुन-र्दुःखोत्पत्तिसम्भावनापि नैव कर्तुं शक्यते।

ननु 'यद्यत् कार्यं तत्तदनित्यं दृष्टम्' इति सामान्यतो दृष्टानुमानसंवलितया 'तद् यथेह कर्मचितो लोकः क्षीयते एवमेवाऽमुत्र पुण्यचितो लोकः क्षीयते' (छा० ८।१।६) इति श्रुत्या स्वर्गस्य कर्मजन्यत्वश्रवणात् अनित्यत्वान्न तेन शास्त्रजिज्ञासा व्यर्था इत्या-शङ्कां निराकरोति—**न चैष क्षयीति**। तस्याऽक्षयित्वे प्रमाणमाह—**'अपाम सोमम्' इति**। तथा च स्वर्गस्य क्षयित्वे कुतस्तस्याऽमृतत्वं सम्भवतीति भावः।

(२) मीमांसकशङ्कामुपसंहरति—**तस्मादिति**। वैदिकोपायस्य=ज्योतिष्टो-मादेः। तादृशसंवत्सरादिनिवर्तनीयस्य। अनेकजन्मपरम्परायाससम्पादनीयात्=अनेक-

---

जो दुःख से कदापि सम्भिन्न=मिश्रित न हो तथा भविष्य में भी दुःख से मिश्रित न हो सके, या बाद में जो ग्रस्त=नष्ट न हो सके; तथा अभिलाषा=इच्छामात्र से प्राप्त होने वाला सुख-विशेष ही स्वर्ग है।

और वह सुखविशेष दुःख-विरोधी है और वह स्वर्ग अपनी सत्ता=शक्ति से दुःख को समूल नष्ट कर देता है और यह स्वर्ग क्षय=विनाशशाली भी नहीं है। इसमें श्रुति प्रमाण है—हमने यज्ञ में सोमरस का पान किया, अतः हम अमर हो गये; यदि स्वर्ग क्षयशाली होता तो उसका अमृतत्व ही संभव न हो पाता।

(२) इसलिए दुःखत्रय की निवृत्ति का कारण वैदिक=वेदोक्त यागादि उपाय ही ठीक है। क्योंकि यह उपाय तो मुहूर्त, याम, अहोरात्र, मास, अधिक से अधिक संवत्सर आदि कालों में साध्य है। यह अनेक जन्मपरम्परा के प्रयास से साध्य जो तत्त्वज्ञान उसकी अपेक्षा सरल भी है, अतः फिर भी सांख्यशास्त्र-प्रतिपाद्य तत्त्वज्ञान स्वरूप उपाय की जिज्ञासा व्यर्थ है। इस शङ्का का उत्तर ईश्वरकृष्ण द्वितीय कारिका में देते हैं—

**दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः ।**
**तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात् ॥ २ ॥**

( ३ ) 'दृष्ट' इति । गुरुपाठादनुश्रूयते इत्यनुश्रवो वेदः । एतदुक्तं भवति—श्रूयत एव परं न केनापि क्रियत इति । तत्र भव आनुश्रविकः, तत्र प्राप्तो

---

जन्मपरम्परायां यो ज्ञानसाधनाऽनुष्ठानाऽभ्यासरूप आयासस्तेन सम्पादनीयात् । विवेकज्ञानात्=सांख्याभिमततत्त्वज्ञानात् । अर्थात् तत्त्वज्ञानापेक्षया, ईषत्करत्वात्=सुलभत्वात्, सरलत्वाच्च ।

**अन्वयः**—आनुश्रविकः ( अपि ) दृष्टवत् ( अस्ति ) हि सः अविशुद्धिक्षय अतिशययुक्तः ( अस्ति ), ( अतः ) तद्विपरीतः ( उपायः ) श्रेयान् ( वर्तते ) ( स च उपायः ) व्यक्ताव्यक्तज्ञविज्ञानात् ( भवति ) ।

**अयमर्थः**—इत्थञ्च वैदिकोपायेनैव जिज्ञासायाः शान्तिसम्भवात् पुनरपि शास्त्रविषये जिज्ञासा व्यर्थैवेत्याशङ्कानिरासार्थमाह—**दृष्टवदानुश्रविक** इति । आनुश्रविकः =वैदिको यागादिक्रियाकलापात्मकोऽप्युपायः । दृष्टवत्=दृष्टोपायतुल्यः, औषधादिलौकिकोपायतुल्य इत्यर्थः । तस्मादपि आत्यन्तिकदुःखनिवृत्तिर्न भवितुमर्हतीति भावः । तत्र हेतुमाह—**स ह्यविशुद्धीति** । इदं सर्वमग्रे स्फुटीभविष्यति । अतस्तद्विपरीतः श्रेयान् =तादृशयागादिविपरीतस्वरूपस्तत्त्वज्ञानरूपः उपायः, प्रशस्यतरः । तस्य ऐकान्तिकाऽऽत्यन्तिकदुःखविनाशक्षमत्वात् । स कस्माज्जायते ? तत्राह—**व्यक्ताव्यक्तज्ञविज्ञानादिति** । व्यक्तश्च, अव्यक्तश्च, ज्ञश्च, तेषां विज्ञानात् ।

( ३ ) आनुश्रविकशब्दस्य व्याख्यामाह—**गुरुपाठादिति** । गुरुकर्तृकोच्चारणानन्तरमित्यर्थः । तदेव स्पष्टीक्रियते—'**एतदुक्तम्**' इत्यादिना । विद्यासम्प्रदायप्रवर्तकब्रह्मादिगुरुपरम्परया श्रूयते एव यः स वेद इत्यर्थः । अत्र श्रुतेः प्रामाण्यमाह—

'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।
तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥' (श्वेता० ६।१८)

---

कारिकार्थ—अनुश्रव ( वेद ) में विहित यागादिरूप आनुश्रविक उपाय भी पूर्वोक्त दृष्ट उपाय के समान है, क्योंकि यह आनुश्रविक उपाय भी अविशुद्धि दोष, क्षयदोष तथा अतिशय दोष इन तीन दोषों से युक्त है । अतः इस आनुश्रविक उपाय से विपरीत उपाय ही अर्थात् सांख्यशास्त्र-प्रतिपाद्य तत्त्वज्ञान ही दुःखत्रय की निवृत्ति के लिए श्रेयस्कर होगा और वह व्यक्त, अव्यक्त ( प्रकृति ) तथा ज्ञ ( पुरुष= आत्मा=चेतन ) के विवेक-ज्ञान से होता है तथा वह विवेकज्ञानरूप तत्त्वज्ञान सांख्यशास्त्र से होता है, फिर सांख्यशास्त्र-प्रतिपाद्य उस तत्त्वज्ञान से मोक्ष होता है । अतः दृष्ट या अदृष्ट उपाय से 'दुःखत्रयविनाशकारणं किम्' यह जिज्ञासा शान्त नहीं हो सकती है ।

( ३ ) गुरुपाठ=गुरुपाठपरम्परा से जो सुनने में आ रहा हो अर्थात् उसकी रचना किसी ने न की हो, वह अनुश्रव=वेद है और उस अनुश्रव=वेद द्वारा ज्ञात

ज्ञात इति यावत्। आनुश्रविकोऽपि कर्मकलापो दृष्टेन तुल्यो वर्त्तते, ऐकान्तिकात्यन्तिकदुःखत्रयप्रतीकारानुपायत्वस्योभयत्रापि तुल्यत्वात्।

यद्यपि च 'आनुश्रविकः' इति सामान्याभिधानम्, तथाऽपि कर्मकलापाभिप्रायं द्रष्टव्यम्, विवेकज्ञानस्याप्यानुश्रविकत्वात्। तथा च श्रूयते—'आत्मा

---

एवकारव्यावर्त्यमाह—**न केनापि क्रियते इति**। न केनापि व्यक्तिविशेषेण रचितः, यथा भारतादिः। अत्र स्मृतिप्रमाणमाह—

'स्वयम्भूरेष भगवान् वेदो गीतस्त्वया पुरा।
शिवाद्या ऋषिपर्यन्ताः स्मर्तारोऽस्य न कारकाः॥'

'तत्र भव' इत्यत्र भवपदस्य जन्यार्थकत्वं निरसितुमाह—**तत्र प्राप्त इति**। वेदे समुपलब्ध इत्यर्थः। तत्र जातः=वेदबोधित इत्यर्थः।

किं सकल एव वैदिकोपाय आनुश्रविकशब्देन गृह्यते? नेत्याह—**'कर्मकलाप' इति**। अर्थात् वेदेन तत्त्वज्ञानमपि बोध्यते कर्मकलापोऽपि च, परन्तु तत्र कर्मकलापस्यैव आनुश्रविकशब्देन ग्रहणम्, स एव च दृष्टेन तुल्यो वर्णितः, न तु तत्त्वज्ञानमपि।

दृष्टोपाय-आनुश्रविककर्मकलापयोः समानतां प्रतिपादयति—**ऐकान्तिकेति**। समूलदुःखोच्छेदसाधनत्वाभाव उभयत्र=लौकिके (ओषधसेवनादिरूपदृष्टोपाये), वैदिके कर्मकलापे च समान एव। यथा ओषधसेवनादिरूपदृष्टोपायस्य नास्ति समूलदुःखोपरमसाधनत्वं तथैवाऽदृष्टोपायस्यापि केवलयज्ञादेरिति।

ननु 'दृष्टवदानुश्रविक' इत्यनेन साधारणतया वैदिकोपायमात्रस्य दृष्टोपायसाम्यं प्रतिपादितम्, पुनः कथं तद् विहाय तदेकदेशकर्मकलापोपाय एव गृहीतः? इत्याशङ्क्य समाधत्ते—**यद्यपीति**। तथा चात्र आनुश्रविकशब्देन वक्तुस्तात्पर्यं कर्मकलापग्रहणे एवास्ति, न तु वैदिकोपायमात्रग्रहणेऽपीति भावः।

वैदिकोपायमात्रग्रहणे दोषमाह—**विवेकज्ञानस्यापीति**। इत्यञ्च साधारणतया आनुश्रविकपदेन वैदिकोपायमात्रग्रहणे तत्त्वज्ञानस्यापि (विवेकज्ञानस्यापि) वैदिकोपायत्वात्तस्यापि दृष्टोपायेन साम्यं प्रसज्येत तच्च नेष्टमिति।

---

जो दुःखत्रय के विनाश का हेतुभूत उपाय, उसे आनुश्रविक उपाय कहते हैं; और वह आनुश्रविक उपाय भी दृष्टोपाय के तुल्य ही है, क्योंकि जैसे ओषध-सेवन आदि दृष्ट उपाय दुःख का ऐकान्तिक तथा आत्यन्तिक रूप से निवर्तक नहीं, उसी प्रकार आनुश्रविक भी। दुःखप्रतीकारानुपायत्व उभयत्र तुल्य है। यद्यपि 'आनुश्रविक' यह पद वेदसामान्यार्थक है, तथापि प्रकृत में 'आनुश्रविक' पद कर्मकलाप=कर्मकाण्ड के अभिप्राय से कहा गया है। अन्यथा 'आनुश्रविक' पद का वाच्यार्थ जो वेदसामान्य अर्थ है, यदि उसी को प्रकृत में लेते हैं तो वेदसामान्यान्तर्गत आ जाने के कारण 'आनुश्रविक' शब्द का अर्थ विवेकज्ञान=तत्त्वज्ञान हो जायेगा, तब फिर 'दृष्टवदानुश्रविकः' इस ईश्वरकृष्णोक्ति के अनुसार विवेकज्ञान भी दृष्टोपाय के तुल्य हो जायेगा और ऐकान्तिक तथा आत्यन्तिक रूप से दुःख का निवर्तक न हो सकेगा। विवेकज्ञान

वाऽरे ज्ञातव्यः' ( बृहदा० २।४।५ )—प्रकृतितो विवेक्तव्यः, 'न स पुनरावर्त्तते' ( छा० ८।१५।१ ) इति ॥

( ४ ) अस्यां प्रतिज्ञायां हेतुमाह—'स ह्यविशुद्धिक्षयातिशययुक्तः' इति। 'अविशुद्धिः' सोमादियागस्य पशुबीजादिवधसाधनता। यथाऽऽह स्म भगवान् पञ्चशिखाचार्यः—'स्वल्पः सङ्करः सपरिहारः सप्रत्यवमर्षः' इति।

---

विवेकज्ञानस्य वैदिकत्वे वैदिकोपायत्वे वा श्रुतिरपि प्रमाणमस्तीत्याह—'**तथा च श्रूयते**' इति। याज्ञवल्क्यः स्वस्त्रीं गार्गीमाह—'**आत्मा वाऽरे**' इति। 'द्रष्टव्य' इति पदस्य साङ्ख्याभिमतमर्थमाह—'**प्रकृतितो विवेक्तव्यः**' इति। प्रकृतिरचेतना जडा, पुरुषस्तु चेतनोऽजडः, प्रकृतिर्जगत्कर्त्री, पुरुषश्च पुष्करपलाशवन्निर्लेपत्वेनाऽकर्ता उदासीनश्च, पुनश्च पुरुषो निर्गुणः प्रकृतिश्च सगुणा त्रिगुणात्मिका, प्रकृतिश्चाऽन्धा, पुरुषस्तु चैतन्यरूपप्रकाशगुणयुक्तः, इत्येवमनयोर्भेदो विज्ञेयः।

ननु विवेकज्ञानस्य वैदिकत्वमप्यस्तु, तस्य दृष्टोपायतुल्यत्वमपि चास्तु तावतापि का क्षतिरिति शङ्कां निराकरोति—'**न स पुनरावर्तते**' इति। सः=ब्रह्मलोकं गत उपासकः पुरुषः, न पुनरावर्तते=न पुनर्जन्मान्तरमनुभवति। किन्तु तल्लोकाधिष्ठातृब्रह्मणा सह परं पदं प्रविशतीत्यर्थः।

( ४ ) ननु कथम् आनुश्रविक उपायो दृष्टोपायेन तुल्योऽस्ति ? इत्याकाङ्क्षायां दृष्टोपायसाम्यसाधकं कारिकोक्तं हेतुं दर्शयति—**अस्यामिति**। अस्याम्=वैदिकोऽप्युपायो दृष्टवत् इत्येवंरूपायाम्, एवमानुश्रविको हि कर्मकलापो नहि ऐकान्तिकात्यन्तिकदुःखनिमित्तेरुपायभूतः साधनविशेप इत्याकारिकायां प्रतिज्ञायामित्यतमेव साधकं हेतुमाह—**स ह्यविशुद्धिक्षयातिशययुक्त इति**। स आनुश्रविककर्मकलाप अविशुद्धि-क्षय-अतिशयदोषत्रययुक्तः अत ऐकान्तिकाऽत्यन्तिकदुःखनिवृत्तिजनकत्वाभावेन दृष्टोपायतुल्य इति भावः।

अविशुद्धिपदार्थमाह—**सोमादियागस्येति**। कार्यभूतसोमादियागनिरूपिता या पशुबीजादिवधनिष्ठा कारणता सैव प्रकृतेऽविशुद्धिरिति। अर्थात् होम-देवपूजन-दक्षिणा-

---

वेदसामान्यान्तर्गत है; इसमें श्रुतिप्रमाण है—अरे आत्मा का ज्ञान करना चाहिए और आत्मा=पुरुष को प्रकृति से भिन्न समझना चाहिए। और भी—वह ज्ञानसम्पन्न आत्मा सत्यलोक में जाकर फिर नही लौटता है, द्विरुक्ति से उसके=आत्मा के फिर न लौटने की दृढ़ता को स्पष्ट किया है।

( ४ ) आनुश्रविक उपाय को जो 'दृष्टवदानुश्रविकः' इस प्रतिज्ञा के अनुसार दृष्ट उपाय के तुल्य बतलाया है, उसमें कारण बतलाते हैं कि वह ( आनुश्रविक उपाय ) अविशुद्धि, क्षय, अतिशय, इन तीन दोषों से युक्त है। उनमें अविशुद्धि शब्दार्थ है—'सोमादियागस्य' अर्थात् जैसे सोमयाग में हवनादिकृत्य से लेकर यज्ञपुरुष एवं अन्य जो यज्ञ में आहूत देवता है, उनके पूजनान्त पुण्यकर्म यज्ञ मे होते हैं, उसी प्रकार उस यज्ञ में पशु का वध एवं बीजवध भी शामिल है, अर्थात् बीज जो

'स्वल्पः सङ्करो' ज्योतिष्टोमादिजन्मनः प्रधानापूर्वस्य पशुहिंसादिजन्मनाऽनर्थहेतुनाऽपूर्वेण सङ्करः। 'सपरिहारः' कियताऽपि प्रायश्चित्तेन परिहर्तुं शक्यः।

( ५ ) अथ च प्रमादतः प्रायश्चितमपि नाचरितम्, प्रधानकर्मविपाक-

---

दानादिलक्षणपवित्रकर्मसाध्यसोमयागादेः पशुहिंसा, वीजवधादिरूपपापजनकीभूतकर्मसाध्यत्वमेवाऽशुद्धिपदार्थत्वमित्यर्थः। इत्थश्च दुःखमिलितसुखजनकीभूतो दृष्टोपायो यथा न जिज्ञास्यः सर्वथा हेय एव तथा वैदिकोपायोऽपि कर्मकलापो न जिज्ञास्यः। वचनं प्रमाणयति—'**यथाऽऽह स्म इति**। तथा च वैदिकोऽप्युपायो दृष्टवत्। अत्र पञ्चशिखग्रन्थं प्रमाणयति—'**स्वल्पः सङ्करः सपरिहारः सप्रत्यवमर्शः**' इत्यादिः।

स्वल्पसङ्करस्योदाहरणमाह—'**ज्योतिष्टोमादिजन्मन**' इति। ज्योतिष्टोमादिना जन्म=उत्पत्तिर्यस्य तस्य ज्योतिष्टोमादिजन्यस्य स्वर्गादिफलकस्य प्रधानापूर्वस्य धर्मस्य यः, पशुहिंसादिजन्मना=पशुहिंसादिजन्येन, अनर्थहेतुनेति=नरकादिरूपाऽनर्थकारिणा। अपूर्वेण=अधर्मेण ( पापेन ) सह यः संसर्गः स सङ्करः। यथा दक्षिणादानादिपुण्यकर्मसम्वन्धाद् ज्योतिष्टोमादियागेन धर्मो जायते, एवं तत्रैव यागे पशुवधजन्यपापकर्मसम्वन्धादधर्मोऽपि समुत्पद्यते, इत्थश्च धर्माधर्मयोर्यत् सहावस्थानं स एव सङ्कर इति तु निष्कर्षः। तत्र यागे धर्मस्त्वधिकः, अधर्मो हि स्वल्पः तथा च यागे हिंसाजन्यः स्वल्पः सङ्कराऽभिधानः प्रत्यवायो वर्तते।

अल्पः प्रत्यवायोऽल्पेनैव प्रायश्चित्तेन परिहर्तुं शक्यते, इत्यतः सपरिहारशब्दार्थमाह—**कियतापीति**। अत्र 'अपि' शब्दः सावधारणः—अल्पेनैवेत्यर्थः। परिहारेण सह वर्तते इति सपरिहारः। प्रायश्चित्तपरिहरणीय इत्यर्थः। अत्रास्ति मन्त्रः—

'यत्पशुर्मायुमकृतोरो वा पद्भिराहते।
अग्निर्मा तस्मादेनसो विश्वान् मुञ्चत्वं हसः॥'

अर्थाद् हन्यमानो हि पशुर्यत् मायुम्=आर्तनादं कृतवान्, यच्च पीडया पादाभ्यां वक्षःस्थलं ताडितवान् तत्पशु पीडाजन्यादधर्मात् अग्निर्मा मोचयतु इति मन्त्रार्थो वर्णितः शिवनारायणकृतटिप्पण्याम्।

( ५ ) प्रायश्चिताऽकरणे तत्फलमाह—**अथ चेति**। अथ=यदि, प्रमादतः=आलस्यवशात्, अहङ्काराद्वा। प्रधानकर्मविपाकसमये—प्रधानकर्मणः=ज्योतिष्टोमस्य,

---

व्रीहि उसके अवहनन के द्वारा बीजों=व्रीहियों की अंकुरोत्पादन शक्ति नष्ट कर दी जाती है, यही पापकर्म अविशुद्धि है। जैसा कि पञ्चशिखाचार्य ने कहा भी है—'स्वल्पः सङ्करः, सपरिहारः, सप्रत्यवमर्षः' इति। 'सङ्कर' शब्द की व्याख्या करते हैं कि—ज्योतिष्टोमादि यागजन्य प्रधानापूर्व धर्म ( पुण्य ) का हिंसादि जन्य अनर्थ हेतुभूत अपूर्व अधर्म ( पाप ) के साथ रहना ही 'सङ्कर' है। अर्थात् अत्यल्प मिश्रण ही स्वल्पसङ्कर शब्दार्थ है, और वह सपरिहार=परिहार योग्य है, अर्थात् कुछ ही प्रायश्चित्त से यज्ञ में होने वाले पशुवध जन्य पाप का परिहार हो सकता है।

( ५ ) और यदि प्रमादवश प्रायश्चित्त नहीं किया तो प्रधानकर्म जो ज्योति-

समये स पच्यते। तथाऽपि यावदसावनर्थं सूते तावत् प्रत्यवमर्षेण सहिष्णुतया सह वर्तत इति सप्रत्यवमर्षः। मृष्यन्ते हि पुण्यसम्भारोपनीतस्वर्गसुधामहाह्रदावगाहिनः कुशलाः पापमात्रोपपादितां दुःखवह्निकणिकाम्।

( ६ ) न च—'मा हिंस्यात् सर्वा भूतानि' इति सामान्यशास्त्रं विशेषशास्त्रेण 'अग्नीषोमीयं पशुमालभेत' इत्यनेन बाध्यते इति युक्तम्।

---

विपाकसमये=स्वर्गात्मकफलभोगकाले। सः=सङ्कराभिधानप्रत्यवायः। पच्यते=फलोन्मुखीभवति। तथापि। यावत्=यावत्कालपर्यन्तम्। असौ=हिंसाजन्योऽधर्मः। अनर्थम्=स्वफलम् अधर्मजन्यं फलम्, वृत्रासुरादिभयरूपम्। सूते=जनयति। तावत्=तावत्कालपर्यन्तम्। सप्रत्यवमर्षः=अवश्यमेव सहनीयः, सङ्करजन्यं दुःखमवश्यमेव भोक्तव्यम् इति भावः। तदेव स्पष्टयति—**मृष्यन्ते इति**। मृष्यन्ते=सहन्ते। हि=निश्चयेन। पुण्यानां सम्भारेण=पुण्यपुञ्जेन, उपनीतः=प्राप्तः, यः स्वर्गात्मकः, सुधाया.=अमृतस्य, सुखस्य। महाह्रदः। तस्मिन् महाह्रदेऽवगाहिनः=स्नानशीलाः। कुशलाः=इन्द्रादयः। पापमात्रेण=पापलेशेन, हिंसाजन्यस्वल्पपापेन। उपपादिताम्=प्राप्ताम्। दुःखवह्निकणिकाम्=दुःखमेव वह्निस्तत्कणिकाम्।

( ६ ) यागादेरविशुद्धिदोषमनङ्गीकुर्वतो मीमांसकस्य शङ्कामुत्थाप्य निरस्यति—**न चेति**। न चेत्यस्य युक्तमित्यनेनान्वयः। ननु सामान्यशास्त्रं हि विधेयसामान्यद्वारा विशेषमुपसर्पतीति विलम्बेन प्रवृत्तिहेतुत्वात् सामान्यशास्त्रं दुर्बलं, विशेषशास्त्रन्तु साक्षादेव विशेषमुपसर्पतीति तस्य झटिति प्रवृत्तिशीलत्वात्तत् प्रबलम्। इत्थञ्च 'अग्नीषोमीयं पशुमालभेत' इति विशेषशास्त्रबोधितेनाऽग्नीषोमीयपशुहिंसाविषयविशेषेण हिंसासामान्यनिषेधपरस्य 'मा हिंस्यात् सर्वा भूतानी'ति सामान्यशास्त्रस्य बाधादतस्तस्य सामान्यशास्त्रस्य 'यागीयहिंसातिरिक्ता हिंसा न कार्या' इत्ययमेव सङ्कोचं गतो विषयः स्वीकार्यः। तस्माद् वैदिकी हिंसा न हिंसा, अत एव सा न पापजनिका। उक्तञ्च—

'अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः'। ( छा० ८।१५।१ )

---

ष्टोमयाग, उसके विपाकसमय=फलभूत स्वर्ग के भोगकाल में पशुवधजन्य पाप को भोगना पड़ता है। तथापि जब तक यह पशुवधजन्य पाप अनर्थ उत्पन्न करने जाता है तब तक यागजन्य अत्यधिक पुण्य ( धर्म ) के फलस्वरूप वह पापजन्य अनर्थ सह्य हो जाता है। उसी को स्पष्ट करते है कि—पुण्य के संभार=आधिक्य से प्राप्त जो स्वर्गरूपी सुधामहाह्रद=अमृत का तालाब स्नान करने वाले यज्ञादि कुशल कर्मकारी इन्द्र-प्रभृति पशुवधजन्य किञ्चिन्मात्र पाप से प्राप्त होने वाली दुःखरूपी अग्नि की कणिका=चिनगारी को सहन कर लेते हैं।

( ६ ) अब ऐसी परिस्थिति में यह शङ्का होती है कि यदि यज्ञ के लिए पशुवध आवश्यक है तो 'मा हिंस्यात् सर्वाभूतानि' इस सामान्य शास्त्र का 'अग्नीषोमीयं पशुपालभेत' इस विशेष शास्त्र से बाध हो जायेगा। क्योंकि 'मा हिंस्यात्०' यह

( ७ ) विरोधाभावात् । विरोधे हि बलीयसा दुर्बलं वाध्यते । न चेहास्ति कश्चिद्विरोधः, भिन्नविषयत्वात् । तथा हि—'न हिंस्यात्' इति निषेधेन हिंसाया

---

इति श्रुत्यापि शास्त्रीयहिंसायाः पापजनकत्वाभाव एव आपादितः । अत्र मनुनाप्युक्तम्—

'यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयम्भुवा ।
यज्ञस्य भूत्यै सर्वस्य तस्माद् यज्ञे वधोऽवधः ॥
ओपध्यः पशवो वृक्षास्तिर्यञ्चः पक्षिणस्तथा ।
यज्ञार्थं निधनं प्राप्ताः प्राप्नुवन्त्युत्सृतीः पुनः ॥
मधुपर्के च यज्ञे च पितृदैवतकर्मणि ।
अत्रैव पशवो हिंस्या नान्यत्रेत्यब्रवीन् मनुः ॥
एष्वर्थेषु पशून् हिंसन् वेदतत्त्वार्थविद् द्विजः ।
आत्मानं च पशुञ्चैव गमयत्युत्तमां गतिम् ॥
गृहे गुरावरण्ये वा निवसन्नात्मवान् द्विजः ।
नावेदविहितां हिंसामापद्यपि समाचरेत् ॥
या वेदविहिता हिंसा नियतास्मिश्चराचरे ।
अहिंसामेव तां विद्याद्वेदाद्धर्मो हि निर्बभौ' ॥ ( मनु० ५।३९-४४ )

अपि च—'हिंसा त्ववैदिकी या तु तयानर्थो ध्रुवो भवेत् ।
वेदोक्तया हिंसया तु नैवाऽनर्थः कथञ्चन' ॥ ( वाराहपुराणे )

एतन्मूलकत्वेनैव खलु वैदिक्या हिंसाया हिंसात्वं नैव स्वीक्रियते । द्वेषपूर्वकं प्राणिवध एव हिंसा इत्यशिष्टानां समुद्घोष इति ।

तथा च यागीयायाः कस्या अपि हिंसाया निषेधानुपपत्त्या यागादिकर्मणो दुःखनिवृत्तेर्हेतुत्वमक्षतमिति मीमांसकाभिमतं निराकरोति—न च 'मा हिंस्यादि'ति । 'वाध्यते इति युक्तम्' इति । अत्र पूर्वोक्तस्य न चेत्यस्य 'युक्तमि'त्यनेन सम्बन्धात् 'न युक्तमि'त्यर्थो लभ्यते ।

( ७ ) 'न च युक्तम्' इत्यत्र हेतुमाह—**विरोधाभावादिति** । न चेहास्ति द्वयोः श्रुत्योः कश्चिद् विरोधः । **भिन्नविषयत्वादिति** । भिन्नविषयत्वमेव दर्शयति—**तथा हीति** । । 'मा हिंस्यात्' इति निषेधश्रुतिर्हिंसाया अनर्थहेतुभावः=अनर्थहेतुत्वं ज्ञाप-

---

सामान्य शास्त्र सामान्यतः प्राणिमात्र की हिंसा का निषेध करता है और 'अग्नीषोमीयं पशुमा०' यह विशेष शास्त्र विशेष रूप से यज्ञपूर्त्यर्थ अग्नि और सोम देवता के लिए पशुवध का विधान करता है । फिर विशेष सामान्य से बलवान् होता है, अतएव 'अग्नीषोमीयं पशुमा०' इस विशेष शास्त्र से 'मा हिंस्यात्०' इस सामान्य शास्त्र का बाध हो जाना स्वाभाविक है ।

( ७ ) इसका उत्तर देते हैं—'न च युक्तम् । विरोधाभावात्' । अर्थात् उपर्युक्त बाध्य-बाधकभाव प्रमाणसिद्ध नहीं है और दोनों मे किसी प्रकार का विरोध भी

अनर्थहेतुभावो ज्ञाप्यते, न त्वक्रत्वर्थत्वमपि, 'अग्नीषोमीयं पशुमालभेत' इत्यनेन तु पशुहिंसायाः क्रत्वर्थमुच्यते, नानर्थहेतुत्वाभावः, तथा सति वाक्यभेदप्रसङ्गात्। न चानर्थहेतुत्वक्रतूपकारकत्वयोः कश्चिद्विरोधोऽस्ति। हिंसा हि पुरुषस्य दोषमावक्ष्यति, क्रतोश्चोपकरिष्यतीति।

( ८ ) क्षयातिशयौ च फलगतावप्युपाये उपचरितौ। क्षयित्वं च स्वर्गादेः सत्त्वे सति कार्यत्वादनुमितम्।

---

यति। 'अग्नीषोमीयम्' इति च पशुहिंसाया क्रत्वर्थत्वं=यागाङ्गत्वं प्रतिपादयति। एवञ्च प्रत्येकश्रुतेरर्थद्वयपरत्वाद् वाक्यभेदापत्तिर्दोषः स्यान्मीमांसकनये। यतः 'मा हिंस्यादि'ति श्रुतिर्हिंसाया अनर्थहेतुत्वम्, अक्रत्वर्थत्वञ्च बोधयति, 'अग्नीषोमीयम्' इति च पशुहिंसायाः क्रत्वर्थत्वं ( यागाङ्गत्वम् ) अनर्थहेतुत्वाभावञ्च प्रतिपादयति। तथा चानयोर्विरोधः स्पष्ट एवेत्याशङ्क्याह—**तथा सति वाक्यभेदप्रसङ्गादिति**। तथा सति =अर्थद्वयस्वीकारे सति। 'अन्याय्यश्चानेकार्थः' इत्यनेन न्यायेन वाक्यभेदस्य मीमांसकैर्भवद्भिरेव दुष्टत्वव्यवस्थित्याऽर्थद्वयस्य विधातुमशक्यत्वात्। अन्यथा—'सम्भवत्येकवाक्यत्वे वाक्यभेदो हि नेष्यते' इत्युक्तिविरोधः स्यादिति तु परमार्थः।

यथाश्रुतैकार्थत्वस्वीकारे तु न कश्चिद् विरोध इत्याशयेनाह—**न चाऽनर्थहेतुत्वेति**। तथा चाऽनर्थहेतुत्व-क्रतूपकारकत्वयोर्नास्ति कश्चन विरोध, इत्येवोपपादयितुं द्वयोः समावेशमाह—**हिंसा हीति**। आवक्ष्यति=कथयिष्यति। **क्रतोश्चेति**। 'द्वेषपूर्वकं प्राणिवध एव हिंसा'। ( मी० सू० १।१।२ )

( ८ ) यागात्मकपक्षे क्षयातिशययोरस्तित्वं दर्शयितुमाह—**क्षयातिशयौ चेति**। क्षयः=नाशः, अतिशयः=तारतम्यं, न्यूनाधिक्यमिति भावः। तौ च यद्यपि

---

नहीं है। विरोध होने पर ही बलवान् से दुर्बल का बाध होता है; और यहाँ पर इन दोनों का कोई विरोध ही नहीं है, कारण कि दोनों भिन्न-भिन्न विषय वाले है।

तथाहि—'मा हिंस्यात्०' इस निषेधशास्त्र से हिंसा अनर्थ का कारण है, यह ज्ञापित होता है, ऋतु=यज्ञ का अङ्ग=उपकारक हिंसा नही है, यह ज्ञापित नही होता। और 'अग्नीषोमीयं पशुमा०' इस वाक्य से पशु-हिंसा को यज्ञ का अङ्ग=उपकारक बतलाया है, अनर्थहेतुत्वाभाव नहीं कहा है, अर्थात् यज्ञीय पशु-हिंसा अनर्थ का कारण नही है ऐसी बात नही, अर्थात् अनर्थ=पाप का कारण अवश्य है। तथा सति=एक वाक्य के दो-दो अर्थ स्वीकार करने पर 'अन्याय्यश्चाऽनेकार्थः' इस नियमानुसार वाक्यभेद रूप दोषप्रसङ्ग लग जायेगा, यह मीमांसकों का कहना है। और अनर्थहेतुत्व तथा क्रतूपकारकत्व इन दोनों का कोई विरोध भी नही है। क्योंकि हिंसा याज्ञिक व्यक्ति के पाप का कारण भी होगी तथा यज्ञ का आवश्यक अङ्ग के रूप में उपकार भी करेगी।

( ८ ) आनुश्रविक उपाय में तीन दोष—अविशुद्धि, क्षय तथा अतिशय बतलाये थे—'**सह्यविशुद्धिक्षयातिशययुक्तः**' इत्यादिना। उनमें से 'अविशुद्धि' शब्दार्थ का

( ९ ) ज्योतिष्टोमादयः स्वर्गमात्रस्य साधनम्, वाजपेयादयस्तु स्वाराज्यस्येत्यतिशययुक्तत्वम् । परसम्पदुत्कर्षो हि हीनसम्पदं पुरुषं दुःखाकरोति ।

( १० ) 'अपाम सोमममृता अभूम' इति चामृतत्वाभिधानं चिरस्थेमानमुपलक्षयति । यदाहुः—

---

फलगतौ=यागफले स्वर्गे एव विद्यमानौ स्तः, तथापि उपाये=यागे । **उपचरितौ** इति । स्वर्गादिस्थले क्षयित्वमस्ति, तदप्यनुमेयमस्ति । स्वर्गादिकं क्षयि भावत्वे सति कार्यत्वात् पटादिवत् । यद् यद् भावकार्यं तत्तद् विनाशि यथा घटः, एनां व्याप्तिमाश्रित्य प्रवर्तमानेनाऽनुमानेन स्वर्गादेः क्षयित्वमनुमितं भवतीति ।

( ९ ) स्वर्गादेः सातिशयित्वं दर्शयति—**ज्योतिष्टोमादय इति** । स्पष्टोऽयं ग्रन्थः । अतिशयवत्त्वञ्च स्वापेक्षोत्कृष्टफलान्तरसत्ताकत्वम् ।

नन्वस्तु यागादेः सातिशयत्वं तथापि तेषां दुःखसम्भिन्नसुखकारणता नागता भवतीति कथं लौकिकोपायतुल्यत्वं वैदिकोपायस्येत्यत आह—**परसम्पदुत्कर्षो हीति** । हि =यतः । परसम्पदुत्कर्षः—परेषाम्=इन्द्रादीनां, सम्पदामुत्कर्षः=ऐश्वर्याधिक्यम्, अर्थात् अधिकैश्वर्यशाली पुरुषो न्यूनैश्वर्यशालिनं पुरुषं दुःखाकरोति । स्वाराज्यसमन्वितं जीवं विलोक्याऽपरः स्वर्गी जीवः 'अहो दौर्भाग्यं नाहमस्मि राजा' इति दुःखमनुभवत्येवेति सुनिश्चितम् । तथा च स्वर्गादेरपि क्षयातिशययुक्तत्वेन दुःखसम्भिन्नत्वं प्राप्तमतस्तदुपायभूतस्य यागादेर्नात्यन्तिकसुखजनकत्वमिति दृष्टोपायतुल्यत्वं वैदिकोपायस्याक्षतमेवेति भावः ।

( १० ) ननु स्वर्गस्य क्षयित्वे पूर्वोक्ताया अमृतत्वसूचिकायाः श्रुतेः कीदृशी गतिः स्यादित्यत आह—**'अपाम सोमममृताः'** इति च श्रुतिर्जीवस्य चिरकालस्थायित्वं सूचयति । अयमेव विषयो विष्णुपुराणवाक्येनापि सुस्पष्टयति—

---

विवेचन हो चुका है । अब 'क्षय' और 'अतिशय' को बतलाते हैं—क्षय और अतिशय ये दोनों दोष स्वर्गरूप फलगत हैं, स्वर्गरूप फल के उपायभूत याग में उपचरित हैं, अर्थात् स्वाश्रयजनकत्वसम्बन्ध से याग में रहते हैं । स्वं=क्षयातिशयौ, उनका आश्रय स्वर्ग, उसका जनक याग—इस प्रकार स्वाश्रयजनकत्वसम्बन्ध से क्षयातिशय ये दोनों दोष स्वर्गोपायभूत याग में उपचार से कहे गये हैं ।

( ९ ) स्वर्गादि का क्षयित्व अनुमानगम्य है—'स्वर्गादिः क्षयी सत्त्वे सति=भावत्वे सति, कार्यत्वाद् घट-पटादिवत्' । अब क्षयदोष के बाद अतिशयदोष को बतलाते हैं—ज्योतिष्टोम आदि याग स्वर्ग मात्र के साधन हैं और वाजपेयादि याग स्वर्ग का आधिपत्य प्रदान कराने वाले हैं, अतः यागस्वरूप आनुश्रविक उपाय न्यूनाधिक्यरूप अतिशयदोष युक्त हैं; और यह सर्वानुभवसिद्ध है कि सम्पत्ति का परमत्व=आधिक्य हीन सम्पत्ति वाले अथक न्यून सम्पत्ति वाले पुरुष को दुःखी करता है ।

( १० ) और यह जो पहिले कहा गया था कि हमने 'सोमरस' पी लिया, इसलिए हम अमृत=अमर हो गये; यह अमृतत्वाभिधान=अमरत्व कथन उन

'आभूतसम्प्लवं स्थानममृतत्वं हि भाष्यते'। ( विष्णु० २।८।९० ) इति।
अत एव च श्रुतिः—

'न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः।
परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति'॥ इति।
( तै० आ० १०।१० )

---

'आभूतसम्प्लवं स्थानममृतत्व हि भाष्यते।
त्रैलोक्यस्थितिकालोऽयमपुनर्मार उच्यते'॥ ( विष्णुपु० २।५।९६ )

देवयानमार्गेण जनादिलोकं गता अमृतत्वं भजन्ते। कीदृशं तदमृतत्वमित्यपेक्षायामाह—**आभूतसम्प्लवमिति**। आभूतसम्प्लवम्=ब्रह्मणो दिनपर्यन्तं यत् स्थानं तदेवाऽमृतत्वं भाष्यते उपचारात्।

अपि च यागादयो न वस्तुतोऽमृतत्वप्रापकाः सन्तीत्यत्र श्रुतेः प्रामाण्यमाह—**अत एव चेति**। का सा श्रुतिरिति जिज्ञासायामाह—**'न कर्मणा न प्रजया'** इत्यादिः। कर्मणा=श्रौतेन, स्मार्तेन वा कर्मणा। न अमृतत्वमानशुः=नाऽमृतत्वं प्राप्तवन्तः। 'पूर्वेऽपि महात्मानः' इति शेषः। तथा न प्रजया=न पुत्रेणापि। न धनेन। किन्तु एके=विवेकज्ञानसम्पन्नाः पुरुषाः। त्यागेन=त्यागसाध्येन विवेकज्ञानेन, ऐकान्तिकाऽऽत्यन्तिकदुःखनिवृत्तिरूपमोक्षात्मकममृतत्वमानशुरित्यत्रास्ति सम्बन्धः। किमेतादृशममृतत्वमित्याकाङ्क्षायामाह—**परेणेति**। नाकम्=नाकपदवाच्यस्वर्गात्। परेण—परम्=उत्कृष्टं भिन्नमित्यर्थः। स्वर्गाद् भिन्नत्वेऽपि न ब्रह्मलोकवद् दूरमस्ति अपि तु सन्निहितमेवेत्याह—**निहितमिति**। गुहायाम्=बुद्धौ। निहितम्=ब्रह्मरूपेण सन्तिष्ठमानम्। विभ्राजते=स्वयं प्रकाशमानत्वेन देदीप्यमानं तिष्ठति। नेदं सर्वैरेव प्राप्यते इत्याह—**यद् यतयो विशन्तीति**। यतयः=तत्त्वज्ञानार्थं यत्नशीलाः संन्यासिनः। यत्=स्वरूपभूतं तत्त्वम्। विशन्ति=स्वात्मतया साक्षात्कुर्वन्ति। तच्च तत्त्वं विवेकिनां सर्वदा सन्निहितं, हृदिस्थितम्, अविवेकिनाञ्च दूरभूतमिति तु निष्कर्षः।

---

सोमरस का पान करने वालों के चिरस्थ=चिरकालपर्यन्त रहने में प्रमाण है, अर्थात् अमृतत्व चिरकालस्थायित्व का उपलक्षण है। जैसा कि कहा भी है—भूतसंप्लव=प्रलयकाल-पर्यन्त अवस्थित रहना ही सोमरस पान करने वालों का अमृतत्व है।

दूसरी बात यह है कि वास्तविक अमृतत्व के प्रापक यागादि है भी नहीं; इसमें श्रुति-प्रमाण है कि—कुछ महात्मा लोगों=ऋषि-महर्षियों ने न तो श्रौत-स्मार्त आदि कर्मों से और न प्रजा=सन्तानोत्पत्ति से, या अर्थोपार्जन से ही अमृतत्व=मोक्ष प्राप्त किया है, अपितु त्याग से अर्थात् अभिमान त्याग ( अभिमान-त्यागसाध्य संन्यास, वैराग्य तत्त्वज्ञान ) से अमृतत्व=ऐकान्तिक-आत्यन्तिक दुःखनिवृत्तिरूप मोक्ष को प्राप्त किया, ऐसा किसी एक विवेकी महात्मा का कथन है। स्वर्ग से भी ऊपर तथा गुहारूपी बुद्धि में स्थित यह अमृतत्व स्वयं प्रकाश में आ जाता है, जिस बुद्धिरूपी गुहा में जितेन्द्रिय यति लोग ही प्रवेश कर पाते है। इस विषय में और भी

तथा—'कर्मणा मृत्युमृषयो निषेदुः प्रजावन्तो द्रविणमहीमानाः ।
तथा परे ऋषयो ये मनीषिणः परं कर्मभ्योऽमृतत्वमानशुः ॥'
इति च ।

( ११ ) तदेतत् सर्वमभिप्रेत्याह—'तद्विपरीतः श्रेयान्' इति । तस्मात् आनुश्रविकाद् दुःखापघातकोपायात् सोमपानादेरविशुद्धात् अनित्यसातिशयफलात्, विपरीतः विशुद्धो हिंसादिसङ्कराभावात्, नित्यनिरतिशयफलः, असकृत् अपुनरावृत्तिश्रुतेः ।

( १२ ) न च कार्यत्वेनानित्यता फलस्य युक्ता, भावकार्यस्य तथात्वात्,

---

श्रुत्यन्तरप्रामाण्यमप्याह—तथा कर्मणा मृत्युमिति । ये प्रजावन्तः=पुत्रवन्तो गृहस्थाः । द्रविणम्=सुवर्णपश्वादिद्रव्यम् । ईहमानाः=इच्छन्तः सकामाः (सन्ति) । एवं ये कामनावन्तः ऋषयः=वानप्रस्थाः सन्ति, ते सर्वेऽपि कर्मणा मृत्युमेव=प्रेत्यभावापरपर्यायभूतं पुनर्जन्मैव । निषेदुः=प्राप्तवन्तः । ये च तेभ्योऽतिरिक्ता निष्कामाः सन्ति मनीषिणस्ते सांसारिकविषयेभ्यो विरज्य सर्वोत्कृष्टममृतत्वं प्रापुः ।

( ११ ) अतः सिद्धं—तद्विपरीतः श्रेयान् इति । वैदिकोपायविपरीतः । श्रेयान्=सत्त्वपुरुषान्यताप्रत्ययो मोक्षसाधनमित्यर्थः । 'न स पुनरावर्तते न स पुनरावर्तते' इति पौनःपुन्येन दाढर्यात् पुनर्मुक्तस्यानावृत्तिश्रवणादिति भावः । अन्यस्तु ग्रन्थः सुस्पष्ट एव ।

( १२ ) ननु स्वर्गादेर्यथा यागादिकार्यत्वेनाऽनित्यत्वं निश्चीयते तथैव विवेकज्ञान-

---

विभिन्न आचार्यों का कथन है कि सन्तान की इच्छा तथा धन की इच्छा करने वाले कुछ ऋषियों ने कर्म से मृत्यु को ही प्राप्त किया है और कुछ ज्ञानी अन्य ऋषियों ने जो सर्वथा निष्काम थे, उन्होंने पुत्रधन आदि से विरक्त होकर तथा मन आदि अन्तःकरण पर विजय पाकर मोक्षरूपी अमृतत्व को प्राप्त किया ।

( ११ ) इसी अभिप्राय को दृष्टिकोण में रखते हुए ईश्वरकृष्ण ने कहा है—'तद्विपरीतः श्रेयान्' अर्थात् दुःखत्रय का उपघातक=विनाशक तथा सोमपान करने से हिंसा आदि के करने से अशुद्ध एवं क्षय=अनित्य और अतिशय फल वाले आनुश्रविक=यागस्वरूप उपाय से विपरीत=तत्त्वज्ञान=विवेकज्ञान स्वरूप उपाय ही श्रेयस्कर है, जो कि हिंसा आदि के संसर्ग से सर्वथा शून्य होने के फलस्वरूप विशुद्ध फल वाला तथा नित्य और निरतिशय मोक्षरूप फल वाला है । श्रुति भी इसी पक्ष का समर्थन करती है—'असकृत् अपुनरावृत्तेः' अर्थात् मुक्त आत्मा की बार-बार पुनरावृत्ति नहीं होती है । अतः तत्त्वज्ञान=विवेकज्ञान, रूप उपाय से होने वाला फल ( मोक्ष ) प्राप्त करके 'पुनरपि जननं पुनरपि मरणं पुनरपि जननीजठरे शयनम्' इन महादुःखों से हमेशा के लिए छुटकारा हो जाता है; और वह तत्त्वज्ञान प्रकृत में सांख्यशास्त्र से ही होता है ।

( १२ ) अब शङ्का करते हैं कि सत्त्वपुरुषान्यताविवेक रूप तत्त्वज्ञान का कार्य होने से मोक्षरूप फल को अनित्य मानना होगा ?

दुःखप्रध्वंसस्य तु कार्यस्यापि तद्वैपरीत्यात्। न च दुःखान्तरोत्पादः, कारणाप्रवृत्तौ कार्यस्यानुत्पादात्, विवेकज्ञानोपजननपर्यन्तत्वाच्च कारणप्रवृत्तेः। एतच्चोपरिष्टादुपपादयिष्यते।

( १३ ) अक्षरार्थस्तु—तस्मात् आनुश्रविकाद् दुःखापघातकात् हेतोः,

---

कार्यत्वेन मोक्षस्यापि अनित्यत्वं स्वीक्रियताम्। इत्थञ्च विवेकस्य नित्यफलत्वेन कथं तद्वैपरीत्यमित्याशङ्क्य समाधत्ते—**न च कार्यत्वेनेति**। कार्यत्वहेतुना। फलस्य=मोक्षस्य। निषेधति—**'भावकार्यस्य तथात्वात्'** इति। प्रागुक्तदिशाऽनित्यत्वबोधनादित्यर्थः। एवञ्चाऽऽत्यन्तिकदुःखोपरमस्वरूपस्य मोक्षस्य विवेकज्ञानसाध्यत्वेन कार्यत्वेऽपि अभावरूपत्वान्न कार्यत्वमात्रेण अनित्यत्वं स्वीक्रियते। तदेव स्पष्टयति—**दुःखप्रध्वंसस्येति**। तद्वैपरीत्यात्=अनित्यत्वविरुद्धनित्यत्वधर्मवत्त्वात्।

ननु मोक्षे दुःखान्तरोत्पादसत्त्वमाशङ्क्य निषेधति—**न च दुःखान्तरोत्पाद** इति। दुःखान्तरानुत्पत्तौ हेतुमाह—**कारणाप्रवृत्तौ** इति। कारणस्य=दुःखकारणस्य, प्रकृतिपुरुषयोरविवेकस्य। **अप्रवृत्ताविति**। विवेकेन तस्य विनाशितत्वादप्रवृत्तौ सत्याम्। कार्यस्य=दुःखात्मककार्यस्य। अनुत्पादात्।

**विवेकज्ञानोपजननेति**। कारणप्रवृत्तेः=मूलकारणभूतायाः प्रकृतेः प्रवृत्तेः। विवेकज्ञानोत्पत्तिपर्यन्तपर्यवसायित्वान्न विवेकज्ञानोत्तरं प्रकृतेः प्रवृत्तिरित्यर्थः। कथन्न प्रवृत्तिरित्याशङ्कायामाह—**एतच्चेति**। उपरिष्टात्='दृष्टा मयेत्युपेक्षकः' इत्यादि ६६ कारिकायाम्।

( १३ ) अक्षरार्थस्तु—विपरीतः=अतिरिक्तः, सत्त्वपुरुषान्यताप्रत्ययः—सत्त्वम्

---

समाधान—भावरूप कार्य के विषय में ही वह शङ्का सङ्गत हो सकती है, किन्तु दुःखध्वंस रूप मोक्ष भावकार्य नहीं है, अतः वहाँ इस शङ्का का वैपरीत्य है, अर्थात् वहाँ ( मोक्ष में ) कार्यत्व हेतु से अनित्यत्व के विपरीत नित्यत्व ही मानना होगा।

शङ्का—मोक्ष रहने पर भी अर्थात् संचित दुःख का विवेक-ज्ञान से ध्वंस हो जाने पर भी दुःखान्तर की उत्पत्ति हो जायेगी ?

समाधान—ऐसा नही; प्रकृति और पुरुष का अविवेक ही दुःख का कारण माना गया है और तत्त्वज्ञानरूप विवेक से दुःखसामान्य का कारण जो अविवेक है, उसके नष्ट हो जाने से कोई भी दुःख नही हो सकता।

शङ्का—अविवेक के नष्ट हो जाने पर भी मूलकारण प्रकृति की नित्य होने से कार्योत्पादन से निवृत्ति नही होगी, वह हमेशा कार्य करने में जब प्रवृत्तिशील बनी रहेगी, तब दु.खान्तर रूप कार्य को भी अवश्य ही उत्पन्न करेगी।

समाधान—प्रकृति की प्रवृत्ति को विवेक-ज्ञानोत्पत्तिपर्यन्त माना गया है। विवेकज्ञानोत्पत्ति के पश्चात् उसका समस्त कार्य-कारित्व समाप्त हो जाता है, फिर उसकी किसी भी कार्य को उत्पन्न करने में प्रवृत्ति नही होती, इस बात को ऊपर ६६वी कारिका से कहेंगे।

( १३ ) अब कारिका के अक्षरार्थ को बतलाते है—

विपरीतः—सत्त्वपुरुषान्यताप्रत्ययः साक्षात्कारो दुःखापघातको हेतुः, अत एव श्रेयान्। आनुश्रविको हि वेदविहितत्वात् मात्रया दुःखापघातकत्वाच्च प्रशस्यः। सत्त्वपुरुषान्यताप्रत्ययोऽपि प्रशस्यः। तदनयोः प्रशस्ययोर्मध्ये सत्त्व-पुरुषान्यताप्रत्ययः श्रेयान्।

कुतः पुनरस्योत्पत्तिः? इत्यत आह—'व्यक्ताव्यक्तज्ञविज्ञानात्' इति। व्यक्तं च अव्यक्तं च ज्ञश्च व्यक्ताव्यक्तज्ञाः, तेषां विज्ञानं विवेकेन ज्ञानम्। व्यक्तज्ञानपूर्वकमव्यक्तस्य तत्कारणस्य ज्ञानम्। तयोश्च पारार्थ्येनात्मा परो ज्ञायते, इति ज्ञानक्रमेणाभिधानम्।

---

=बुद्धितत्त्वं=प्रकृतिर्वा, पुरुषः=चेतन आत्मा, तयोरन्यताप्रत्ययः=प्रकृतिर्जडा परिणामशालिनी च। पुरुषस्तु पुष्करपलासवन्निर्लेपश्चेतनोऽपरिणामी ज्ञानरूपश्चेत्येवं परस्परं भेदनिश्चयः। **साक्षात्कार इति**। सत्त्वपुरुषान्यताप्रत्ययरूपसाक्षात्कारः। अयञ्च सर्वथाऽऽनुश्रविकादुपायाद् विपरीत इति भावः। **अत एवेति**। ऐकान्तिकात्यन्तिक-दुःखापघातकहेतुत्वादेवेत्यर्थः। श्रेयान्=सर्वतोभावेन प्रशस्यः। आनुश्रविकः=यागादिः। वेदविहितत्वात्। मात्रयेति=किञ्चिदंशेन (प्रशस्यः)। अनयोर्द्वयोः प्रशस्ययोर्मध्ये ऐकान्तिकाऽऽत्यन्तिकदुःखोन्मूलकत्वात् सत्त्व-पुरुषान्यतासाक्षात्कारः श्रेयानित्यर्थः।

तत्त्वज्ञानस्योत्पत्तेः कारणं पृच्छति—**कुतः पुनरस्योत्पत्तिरिति**। अस्य=विवेक-साक्षात्कारस्य। उत्पत्तिः=अभिव्यक्तिः। **व्यक्ताऽव्यक्तविज्ञानादिति**। व्यक्तञ्चाऽव्यक्तं च ज्ञश्च तेषां=प्रकृति-विकृतिपुरुषाणां पञ्चविंशतितत्त्वानाम्, विज्ञानं=यथार्थज्ञानं, तस्मात्, व्यक्तम्—विविच्यते=प्रकृतितः कार्यरूपेण भिद्यते, इति व्यक्तं, बुद्ध्यादि स्थूलभूतपर्यन्तम्। अव्यक्तम्=मूलकारणं प्रकृतिः। ज्ञः=चेतनः पुरुषस्तेषां विज्ञानं तस्मादित्यर्थः। **व्यक्तज्ञानपूर्वकमिति**। व्यक्तम्=बुद्धिरहङ्कारः, पञ्चतन्मात्राणि, एकादशेन्द्रियाणि, पञ्चमहाभूतानि च, तज्ज्ञानपूर्वकम्। तत्पदेन व्यक्तं परामृश्यते, व्यक्तज्ञानपूर्वकमित्यर्थः। **तत्कारणस्येति**। व्यक्तकारणस्य=अव्यक्तस्य प्रधानस्य प्रकृतेः।

---

दुःखापघातक पूर्वोक्त आनुश्रविक उपाय से विपरीत जो सत्त्व=बुद्धि तथा पुरुष का जो भेदज्ञान अर्थात् भेदसाक्षात्कार, जो कि ऐकान्तिक तथा आत्यन्तिक रूप से दुःख के विनाश का कारणीभूत उपाय है। इसीलिए यह उपाय उस आनुश्रविक उपाय से श्रेयस्कर है। यद्यपि आनुश्रविक उपाय भी वेदविहित होने से कुछ मात्रा में दुःख का अपघातक होने से प्रशस्य है और सत्त्वपुरुषान्यताप्रत्यय भी प्रशस्य है। तथापि इन दोनों प्रशस्य उपायों के मध्य में सत्त्वपुरुषान्यताप्रत्यय अर्थात् प्रकृति-पुरुष का भेद-ज्ञान अधिक प्रशस्य है।

इस भेदज्ञानरूप तत्त्वज्ञान की उत्पत्ति कैसे होती है? इसका उत्तर देते हैं कि—यह व्यक्त, अव्यक्त और ज्ञ (पुरुष) इन तीनों के विवेकज्ञान से होता है।

प्रथम व्यक्त का ज्ञान होता है, इसके बाद व्यक्त के कारणीभूत अव्यक्त का ज्ञान होता है और इन दोनों के परार्थ होने के फलस्वरूप अर्थात् पर=पुरुष=चेतन के

एतदुक्तं भवति—श्रुतिस्मृतीतिहासपुराणेभ्यो व्यक्तादीन् विवेकेन श्रुत्वा, शास्त्रयुक्त्या च व्यवस्थाप्य दीर्घकालादरनैरन्तर्यसत्कारासेवितात् भावनामयात् विज्ञानमिति। तथा च वक्ष्यति—

'एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम्।
अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम्॥'

(का० ६४) इति ॥ २ ॥

---

ज्ञानम्=अनुमानम्। तयोश्चेति। व्यक्ताव्यक्तयोश्चेत्यर्थः। पारार्थ्येनेति। पुरुषभोगापवर्गहेतुत्वेन। परः। आत्मा। ज्ञायते=अनुमीयते। तथा च यतो व्यक्तपदार्थानां ज्ञानमव्यक्त( प्रधान )ज्ञानं विना नास्ति सम्भवः। व्यक्ताऽव्यक्तयोर्ज्ञानञ्च पुरुषज्ञानं विना न सम्भवति, यतस्तयोः पुरुषोपभोग्यत्वात्, इत्येवास्ति ज्ञानक्रमः।

'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रुत्याऽऽत्मदर्शनं विधेयमित्युक्तं भवति, तच्च श्रवण-मनन-निदिध्यासनमन्तरा न भवितुमर्हति। ततश्च तत्त्वज्ञानम्। तदेवाऽऽत्मदर्शनम्। तच्च सत्त्व-पुरुषान्यतासाक्षात्काररूपम्। ततो मोक्ष—इत्येव ज्ञानक्रमेणाभिधानम्—एतदुक्तं भवतीत्यादिना। निदिध्यासनस्वरूपमाह—दीर्घकालादरेति। दीर्घकालम्=लम्बायमानकालपर्यन्तम्। नैरन्तर्येण=आसुषुप्तेर्विच्छेदराहित्येन। आदरेण=श्रद्धातिशयेन। सत्कारेण च। आसेवितात्=सम्पादितात्। भावनामयात्=चिन्तनरूपात्, 'विषयान्तरपरिहारपूर्वकं कस्मिन्नपि ध्येयपदार्थे वारंवारं चित्तनिवेशो भावना'। एतच्च सर्वमपि विषयजातं मूलकारः स्वयमेवाग्रे स्फुटीकरिष्यति। तथा च वक्ष्यति—'एवं तत्त्वाभ्यासान्नास्मीत्यादिग्रन्थेन। अयञ्च विषयः ६४ कारिकायां द्रष्टव्यः ॥ २ ॥

---

भोगापवर्ग रूप प्रयोजन के लिए होने से इन-इन दोनों से भिन्न आत्मा=पुरुष जाना जाता है। यह ज्ञानक्रम के अनुसार इन तीनों का उपस्थापन किया गया है।

ऐसा कहा जाता है कि—श्रुति, स्मृति, इतिहास तथा पुराणों से व्यक्त आदि पूर्वोक्त तीनों तत्त्वों को परस्पर में पृथक्=भिन्न समझकर और शास्त्रयुक्ति से अर्थात् शास्त्रानुमोदित तर्कों के द्वारा और अच्छी प्रकार निश्चय करके दीर्घकालपर्यन्त निरन्तर सत्कार=श्रद्धा तथा शुश्रूषा से सेव्यमान भावना मय पूर्वोक्त तीनों के भेदपूर्वक विज्ञान=तत्त्वज्ञान से मोक्ष होता है, क्योंकि वही तत्त्वज्ञान मोक्ष का कारण है। जैसे आगे कहेंगे—'एवं तत्त्वाभ्यासात्०' अर्थात् इस प्रकार से २५ पदार्थतत्त्वों के ज्ञान का चिरकालपर्यन्त श्रद्धापूर्वक निरन्तर अभ्यास करने से मैं (पुरुष=आत्मा) व्यापार वाला नहीं हूँ और न मैं कर्तृत्वादि धर्म वाला ही हूँ; मेरा कुछ नहीं है; मैं स्वामित्वविषयिणी भावना से सर्वथा दूर हूँ। इस प्रकार कैवल्यप्रयोजकीभूत तथा संशय-विपर्यय आदि ज्ञानों से शून्य होने के कारण जिस ज्ञान के हो जाने के पश्चात् और कुछ ज्ञातव्य अवशिष्ट नहीं रह जाता है, वही सर्वथा विशुद्ध तत्त्वज्ञान है ॥ २ ॥

( १ ) तदेवं प्रेक्षावदपेक्षितार्थत्वेन शास्त्रारम्भं समाधाय शास्त्रमारभमाणः श्रोतृबुद्धिसमवधानाय तदर्थं सङ्क्षेपतः प्रतिजानीते—

**मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।**
**षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ।। ३ ।।**

( २ ) सङ्क्षेपतो हि शास्त्रार्थस्य चतस्रो विधाः । कश्चिदर्थः प्रकृतिरेव, कश्चिदर्थो विकृतिरेव, कश्चित्प्रकृतिविकृतिः कश्चिदनुभयरूपः ।

---

( १ ) तृतीयां कारिकामवतारयितुमाह—**तदेवमिति** । **प्रेक्षावदपेक्षितार्थत्वेनेति** । प्रेक्षावताम्=बुद्धिमताम् । अपेक्षितः=ईप्सितः । योऽर्थः=ऐकान्तिकाऽऽत्यन्तिक-दुःखोच्छेदरूपो मोक्षः । शास्त्रम्=साङ्ख्यशास्त्रम् । **श्रोतृबुद्धिसमवधानायेति** । श्रोतॄणाम्=साङ्ख्यशास्त्रश्रवणकर्तॄणाम्, बुद्धेः=मनसः, समवधानाय=एकाग्रतासम्पादनाय । तदर्थम्—तस्य=साङ्ख्यशास्त्रस्य, अर्थम्=पञ्चविंशतितत्त्वम् । सङ्क्षेपतः=प्रकृतिः, विकृतिः, प्रकृतिविकृतिः, पुरुषश्चेति पदार्थचतुष्टयरूपेण । प्रतिजानीते=प्रतिज्ञां करोति ।

**मूलप्रकृतिरिति** । **अर्थः**—मूलप्रकृतिः=जगतो मूलकारणीभूता प्रकृतिः । अविकृतिः=न कस्यापि कार्यमित्यर्थः । महदाद्याः सप्त=महदहङ्कारपञ्चतन्मात्राणि । प्रकृतिविकृतयः=कस्यचित्कारणानि, कस्यचित्कार्याणि च ( भवन्ति ) । षोडशको गणः=पञ्चभूतानि एकादशेन्द्रियाणि च । विकारः=कार्यमेव ( भवति ) । पुरुषः=जीवात्मा कूटस्थो नित्यः । न प्रकृतिः=न कस्यचित्कारणम् । न विकृतिः=न कस्यापि कार्यम् ।

( २ ) शास्त्रार्थस्य=साङ्ख्यशास्त्रार्थस्य । सङ्क्षेपतः । चतस्रः । विधाः=प्रकाराः ( अर्था भवन्तीति ) । कश्चिदर्थः प्रकृतिः । कश्चिद् विकृतिः । कश्चिदुभयात्मकः । कश्चिदनुभयात्मकः, यथा पुरुषः ।

---

( १ ) सो इस प्रकार पूर्वोक्त दोनों कारिकाओं द्वारा प्रेक्षावान् लोगों को अपेक्षित जो ऐकान्तिक तथा आत्यन्तिक दुःखोच्छेद रूप अर्थ ( मोक्ष ), उसे प्राप्त कराने में कारणतावच्छेदकीभूत इस सांख्यशास्त्र को प्रारंभ करने का निश्चय कर उसे प्रारंभ करते हुए श्रोता लोगों की वुद्धि को एकाग्र करने की दृष्टि से सांख्यशास्त्राभिमत पच्चीस पदार्थतत्त्वों को संक्षेप में वतला रहे हैं—'मूलप्रकृति' इत्यादि कारिका से—

अर्थात् संसार की रचना करने वाली जो मूलभूत प्रकृति है, वह किसी की भी विकृति ( कार्य ) नहीं है । और महत्तत्त्व=वुद्धि, आदि सात पदार्थ प्रकृति=कारण, विकृति=कार्य दोनों हैं । सोलह गण विकार=कार्य ही होते हैं । और पुरुष न किसी का प्रकृति है=कारण है तथा न किसी का विकृति=कार्य है ।

( २ ) संक्षेप में सांख्यशास्त्र में चार पदार्थ माने गये हैं प्रकृति=कारण अर्थात् पच्चीस पदार्थों में एक पदार्थ प्रकृति है, जो किसी का भी कार्य नहीं है, वल्कि वह प्रकृति=कारण ही होती है । कोई पदार्थ विकृति=कार्य ही होता है; जैसे सोलह

( ३ ) तत्र का प्रकृतिरेवेत्युक्तम्—'मूलप्रकृतिरविकृतिः' इति । प्रकरोतीति प्रकृतिः प्रधानम्, सत्त्वरजस्तमसां साम्यावस्था, सा अविकृतिः, प्रकृतिरेवेत्यर्थः। कुतः ? इत्युक्तम्—'मूलेति' । मूलञ्चासौ प्रकृतिश्चेति मूलप्रकृतिः । विश्वस्य कार्यसङ्घातस्य सा मूलम् । न त्वस्य मूलान्तरमस्ति, अनवस्थाप्रसङ्गात् । न चानवस्थायां प्रमाणमस्तीति भावः ।

( ४ ) कतमाः पुनः प्रकृतिविकृतयः, कियत्यश्च ? इत्यत उक्तम्—'महदाद्याः प्रकृतिविकृतयः सप्त' इति ।

---

( ३ ) विश्वस्य=कार्यसङ्घातस्य प्रकृतिः मूलकारणमस्ति, न त्वस्या मूलान्तरं किमपि, इत्येव सूचनाय मूलपदमुपात्तमिति भावः । प्रकृतेः सकारणत्वे दोषमाह—**अनवस्थाप्रसङ्गादिति**=क्वचिदपि विश्रामाभावात्, अर्थात् प्रकृतेः कार्यत्वे, तस्या अपि किमपि प्रकृत्यन्तरं=कारणान्तरं स्वीकृतं भविष्यति, एवं तस्य प्रकृत्यन्तरस्यापि पुनः प्रकृत्यन्तरम्, तस्यापि प्रकृत्यन्तरमित्येवमुत्तरोत्तरमनवस्थितपरम्परात्मिका धारा प्रसज्येत, अतः प्रकृतिः कारणमेव न कार्यम् ।

ननु प्रामाणिकीयमनवस्था न दोषावहा इत्यत्राह—**न चानवस्थायामिति** । तथा च व्यवस्थायां सत्यामनवस्थास्वीकारोऽनुचितः । 'अजामेकाम्' इत्यादिश्रुत्या 'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि' इति स्मृत्या च प्रकृतेरनादित्व-अजन्यत्वबोधनात् तत्रैव कारणपरम्परायाः समाप्तेर्दर्शनाद् व्यवस्थायाः सम्भवात् । बीजाङ्कुरस्थले च नास्ति व्यवस्था, अतोऽगत्या साऽनवस्था प्रामाणिकी मन्यते ।

( ४ ) जिज्ञासते—**कतमा इति** । चतुर्विंशतितत्त्वानां मध्ये कास्तावत् सन्ति प्रकृतिविकृतय इति चास्ति धर्मिस्वरूपविषयको नाम प्रश्नः, 'कियत्यः' इति चास्ति सङ्ख्याविषयक इयत्ता प्रश्नः । तत्र स्वरूपमाह–**महदाद्या इति** । सङ्ख्यामाह–**सप्तेति** ।

---

गण तथा कोई पदार्थ प्रकृति=कारण, विकृति=कार्य उभयरूप होते हैं; जैसे—महत् आदि सात पदार्थ । और कोई पदार्थ अनुभयरूप है; जैसे पुरुष न प्रकृति है और न किसी का विकृति=कार्य ही है ।

( ३ ) इनमें प्रकृति कौन है ? उत्तर—जगत् का मूलकारण अर्थात् जो चराचर इस विश्व की रचना करती है, वही प्रकृति=प्रधान=सत्त्व, रज, तम इन तीनों गुणों की साम्यावस्था स्वरूप मूलकारण प्रकृति है ।

प्रश्न—यह क्यों ? उत्तर—यही प्रकृति सांख्यमत में कार्यसङ्घातस्वरूप विश्व की मूल=उपादान कारण मानी गई है । इस प्रकृति का और कोई दूसरा मूल भी नहीं है, अन्यथा उसका भी कोई मूलान्तर एवं फिर उसका भी कोई और मूलान्तर इस रूप से अनवस्था दोष का प्रसङ्ग आ जाता है । यद्यपि उस अनवस्था में कोई प्रमाण नहीं है ।

( ४ ) प्रश्न—प्रकृति, विकृति अर्थात् कारण और कार्य उभयात्मक कौन-कौन पदार्थ हैं और वे कितने है ?

तथा हि—महत्तत्वमहङ्कारस्य प्रकृतिः, विकृतिश्च मूलप्रकृतेः। एवमहङ्कारतत्त्वं तन्मात्राणामिन्द्रियाणां च प्रकृतिः, विकृतिश्च महतः। एवं पञ्चतन्मात्राणि तत्त्वानि भूतानामाकाशादीनां प्रकृतयो विकृतयश्चाहङ्कारस्य।

अथ का विकृतिरेव, कियती च ? इत्यत उक्तम्—'षोडशकस्तु विकारः' इति। षोडशसङ्ख्यापरिमितो गणः षोडशकः। 'तु'शब्दोऽवधारणे भिन्नक्रमश्च। पञ्च महाभूतानि एकादश इन्द्रियाणि चेति षोडशको गणो विकार एव, न प्रकृतिरिति।

( ५ ) यद्यपि च पृथिव्यादीनां गोघटवृक्षादयो विकाराः, एवं तद्विकारभेदानां पयोवीजादीनां दध्यङ्कुरादयः, तथाऽपि गवादयो वीजादयो वा न पृथिव्यादिभ्यस्तत्त्वान्तरम्।

---

तच्च प्रकृतिविकृतित्वं तत्त्वान्तरोपादानत्वे सति तत्त्वान्तरोपादेयत्वम्। कस्य का प्रकृतिरित्यस्ता दर्शयति—**तथाहीति**। [1]महत्तत्वम्=बुद्धितत्त्वम्। तस्मादहङ्कारतत्त्वं जायते। एवमन्यत्रापि वोध्यम्। विकृतिं जिज्ञासते—**अथ का विकृतिरिति**। 'का' इति नामविपयिणी जिज्ञासा। कियतीति च इयत्ता जिज्ञासा।

**षोडशकस्तु विकार इति**। पोडशसङ्ख्याको गणो विकार एव। विकारत्वञ्च तत्त्वान्तराऽजनकत्वे सति जन्यत्वम्।

( ५ ) ननु 'पोडशको गणो विकार एव' इति सावधारणकथनं सर्वथाऽनुचितं, यत एकादशेन्द्रियाणां प्रकृतित्वाभावेऽपि पोडशान्तर्गतपञ्चस्थूलभूतानां घट-पट-मठा-

---

उत्तर—महत् आदि सात पदार्थ प्रकृति=कारण, विकृति=कार्य उभयरूप माने गये हैं, अर्थात् महत्तत्त्व, अहङ्कारतत्त्व और पञ्चतन्मात्रा—ये सात पदार्थ प्रकृति-विकृति उभयात्मक हैं, जैसे महत्तत्त्व अहङ्कार की प्रकृति=कारण है और मूलप्रकृति की विकृति है। एवम् अहङ्कार शब्दादि पञ्चतन्मात्राओं की प्रकृति=उपादानकारण- है, और महत्तत्त्व की विकृति है। इसी प्रकार पञ्चतन्मात्राएँ आकाशादि पञ्चमहाभूतों की प्रकृति हैं तथा अहङ्कार की विकृति है।

प्रश्न—केवल विकार=विकृति=कार्य कौन-कौन पदार्थ हैं और वे कितने हैं ?

उत्तर—विकार केवल सोलह हैं, अर्थात् पोडश संख्या में परिमितगण ही पोडशगण कहे हैं। 'तु' शब्द निश्चयरूप अर्थ में भिन्नक्रम वाला है, अर्थात् 'पोडशकस्तु विकारः' यहाँ पर 'पोडशक' के उत्तर-पठित 'तु' शब्द को 'विकार' के उत्तर में होना चाहिए था, अर्थात् 'पोडशको विकारस्तु'=पोडशको गणो विकार एव। वे पोडश गण हैं—पञ्चमहाभूत, एकादश इन्द्रियाँ अर्थात् पांच ज्ञानेन्द्रियाँ और पांच कर्मेन्द्रियाँ तथा एक मन, ये पोडश गण विकार ( कार्य ) ही होते हैं, न कि कारण भी।

( ५ ) यद्यपि पृथिवी आदि के गो, घट, वृक्ष आदि विकार=कार्य हो सकते हैं, एवं इनके विकार दुग्ध, वीज आदि हो सकते हैं, ऐसे ही इनके विकार दही तथा अंकुर

---

१. सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः। तत्त्वान्तरोपादानत्वं वा प्रकृतित्वम्।

तत्त्वान्तरोपादानत्वं च प्रकृतित्वम्, इहाभिप्रेतमिति न दोषः। सर्वेषां गोघटादीनां स्थूलतेन्द्रियग्राह्यता च समेति न तत्त्वान्तरत्वम्।

अनुभयरूपमुक्तं, तदाह—'न प्रकृतिर्न विकृतिः पुरुषः' इति। एतच्च सर्वमुपरिष्टादुपपादयिष्यते ॥ ३ ॥

---

दीन् प्रति, गो-वृक्षादीन् प्रति च प्रकृतित्वमस्त्येवेत्याशयेन शङ्कते—**यद्यपीति**। समाधत्ते—**तथापीति**। तथा च तत्त्वान्तरोपादानत्वं प्रकृतित्वमिह सर्वथाऽभीष्टमस्ति। अथवा अकार्यावस्थोपलक्षितं गुणसामान्यं प्रकृतिरेव अभिप्रायविषयीभूता भवतीति न कश्चिद् दोषः। तत्त्वान्तरम्=पदार्थान्तरम्, अतिरिक्तपदार्थ इति यावत्।

ननु गोघटादीनां, घटपटादीनां वा मा भवतु पृथिव्यादिभूतेभ्यस्तत्त्वान्तरत्वम्। तथापि गोघटादिजनकत्वेन, घटपटादिजनकत्वेन वा कथं न पृथिव्यादीनां प्रकृतित्वं स्वीकरणीयमित्याशङ्क्य प्रकृतेर्लक्षणान्तरमाह—**तत्त्वान्तरोपादानत्वमिति**। तत्त्वान्तरं =विजातीयतत्त्वात्मकं पदार्थान्तरमित्यर्थः। समुदीरितं प्रकृतिलक्षणमाह—

'प्रकृष्टवाचकः प्रश्च कृतिश्च सृष्टिवाचकः।
सृष्टौ प्रकृष्टा या देवी प्रकृतिः सा प्रकीर्तिता ॥
गुणे प्रकृष्टसत्त्वे च 'प्र'शब्दो वर्तते श्रुतौ।
मध्यमे रजसि 'कृ'श्च 'ति'शब्दस्तमसि स्मृतः ॥
त्रिगुणात्मस्वरूपा या सर्वशक्तिसमन्विता।
प्रधानं सृष्टिकरणे प्रकृतिस्तेन कथ्यते ॥
प्रथमे वर्तते 'प्र'श्च 'कृति'श्च सृष्टिवाचकः।
सृष्टेराद्या च या देवी प्रकृतिः सा प्रकीर्तिता' ॥

( देवीभाग० स्क० ९, अ० १, श्लो० ५-८ )

ननु इत्येवंरीत्या पुराणादिषु श्रूयमाणं प्रकृतिलक्षणं विहाय तद्विरुद्धलक्षणं कथमाचरितम्? इत्याक्षेपनिराकरणायाह—**इहाभिप्रेतमिति**। इह=अस्मिन्नवसरे, प्रकृतौ तल्लक्षणसमन्वयार्थमिदं तत्त्वान्तरोपादानत्वरूपं लक्षणं प्रकृतेः क्रियते।

ननु कथं घट-पटादीनां पृथिव्यादिभ्यो नास्ति तत्त्वान्तरत्वम्? इत्याकाङ्क्षां पूरयति मिश्रः—**सर्वेषामिति**। यस्मात्कारणात् घट-पटादीनामिन्द्रियग्राह्यता च पृथि-

---

आदि हो सकते है, तब इन सोलह को ही विकार क्यों कहा गया? इसका उत्तर यही दिया गया कि—तथापि गवादि-बीजादि पृथिवी आदि से भिन्न तत्त्व नहीं है।

किसी तत्त्वान्तर का उपादान कारण होना ही यहाँ प्रकृति शब्द से अभिप्रेत है। इसीलिए पृथिवी आदि को प्रकृति न कहकर उन्हें केवल विकृति कहने में कोई दोष नहीं मालूम देता है।

प्रश्न—गो, घट आदि को पृथिवी आदि से भिन्न तत्त्व क्यों नही माना गया है? इसका उत्तर यही दिया कि सब गो, घट आदि की स्थूलता और इन्द्रियग्राह्यता समान है, अतः वे तत्त्वान्तर नहीं है।

( १ ) तमिममर्थं प्रामाणिकं कर्त्तुमभिमताः प्रमाणभेदा लक्षणीयाः। न च सामान्यलक्षणमन्तरेण शक्यते विशेषलक्षणं कर्तुमिति प्रमाणसामान्यं तावल्लक्षयति—

**दृष्टमनुमानमाप्तवचनं च सर्वप्रमाणसिद्धत्वात्।**
**त्रिविधं प्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धि ॥ ४ ॥**

---

व्यादिभिः समानैवास्तीति विचार्यैव गोघटादीनां पृथिव्यादिभ्यस्तत्त्वान्तरत्वं नाभिहितमिति तु परमार्थः।

चतुर्थं प्रकारमाह—**अनुभयरूपमिति**। 'न प्रकृतिर्न विकृतिः पुरुषः' पुरि=शरीरे, शेते इति पुरुषः, स चेतनः, स न कस्यापि प्रकृतिः=कारणम्, नापि च विकृतिः=कार्यम्, अत एव अनुभयरूपं तत्। तत्त्वान्तराऽजनकत्वे सति तत्त्वान्तराऽजन्यत्वं पुरुषस्य लक्षणम्। **एतच्च सर्वमिति**। एतत्=प्रतिपादितं विषयजातम्। सर्वमपि। उपरिष्टात्=अग्रे। 'प्रकृतेर्महान्' इत्यादि २२ कारिकायां स्फुटीभविष्यति, तत्रावलोकनीयम् ॥ ३ ॥

( १ ) इदानीं प्रागुक्ततत्त्वानां प्रामाण्यं निरूपयितुं चतुर्थकारिकाया अवतरणमाह—**तमिमर्थं प्रामाणिकमिति**। तमिमम्=तृतीयकारिकायामुक्तम्। अर्थम्=पदार्थजातम्। प्रमाणम्। कर्तुम्। अभिमताः=सांख्यैरिति शेषः। प्रमाणभेदाः=प्रत्यक्षादित्रयप्रमाणप्रकाराः। लक्षणीयाः=तत्तल्लक्षणपुरःसरं स्वेतरानुमितिविषयीकर्तव्याः। तेषां प्रमाणानां लक्षणानि वक्तव्यानीत्यर्थः। 'लक्षणप्रमाणाभ्यां वस्तुविनिर्णयः' इत्यभियुक्तोक्तेः। अत एवोक्तं 'मानाधीना मेयसिद्धिर्मानसिद्धिश्च लक्षणात्'।

**अन्वयः**—दृष्टम् अनुमानं च आप्तवचनं त्रिविधं प्रमाणम् इष्टं सर्वप्रमाणसिद्धत्वात् हि प्रमेयसिद्धिः प्रमाणात् ( भवति )।

कुत्रापि सामान्यलक्षणं विना विशेषलक्षणं नैव भवितुमर्हति, अतः प्रमाणसामान्यलक्षणं पूर्वमावश्यकं; तदेवाह—**दृष्टमनुमानमिति**। दृष्टम्, अनुमानम्, आप्तवचनम्—आप्तो( प्रामाणिकपुरुषो )च्चरितशब्दः। इति त्रिविधं प्रमाणम्, इष्टं, सांख्यैरिति शेषः। सर्वप्रमाणसिद्धत्वात्=अन्यसकल( उपमानाऽर्थापत्त्यादीनाम् )-

---

पुरुष की अनुभयरूपता को बतलाते हैं कि पुरुष न तो किसी तत्त्व की प्रकृति=कारण है और न विकृति=कार्य ही है। यह सब विषय उपर बतलायेंगे ॥ ३ ॥

( १ ) अब हम पूर्वोक्त सांख्यशास्त्रीय विषय को प्रमाणित करने के लिए सांख्याभिमत प्रमाणों का लक्षण जो कि नितान्त आवश्यक है और सामान्य का लक्षण किये विना विशेष का लक्षण हो नहीं सकता है; अतः प्रथम प्रमाण सामान्य का लक्षण करते हैं—

कारिकार्थ—दृष्ट ( प्रत्यक्ष ), अनुमान, आप्तवचन=शब्द—ये तीन ही प्रमाण सांख्य को इष्ट=मान्य हैं, क्योंकि अन्य सभी प्रमाणों का इन्हीं तीन प्रमाणों में अन्तर्भाव होता है और प्रमेय पदार्थ घट, पट आदि की सिद्धि=निश्चय प्रमाणों से होती है; अतः प्रमाणों के लक्षण का निर्वचन आवश्यक है।

( २ ) अत्र च 'प्रमाणम्' इति समाख्या लक्ष्यपरम्। तन्निर्वचनं च लक्षणम्। प्रमीयतेऽनेनेति निर्वचनात्, प्रमां प्रति करणत्वं गम्यते। असन्दिग्धा-

---

प्रमाणानाम्, सिद्धत्वात् = एतेष्वेव प्रमाणेष्वन्तर्भावात्। प्रमाणस्वीकारस्याऽऽवश्यकतामाह—**प्रमेयसिद्धिरिति**। हि = यतः। घट-पटादिप्रमेयपदार्थानां महदादिपञ्चविंशतिपदार्थानामित्यर्थः। सिद्धिः = निश्चयः। प्रमाणादेव ( भवति )।

( २ ) *अत्र* = कौमुद्याम्। प्रमाणमिति *समाख्या* = यौगिकः शब्दः। लक्ष्यपदम् = तल्लक्षणस्य यल्लक्ष्यं तद्बोधकं यत् पदमित्यर्थः। **तन्निर्वचनञ्चेति**। प्रमाणपदस्य यन्निर्वचनं = यन्निरुक्तिस्तदेव लक्षणम्। तदेवाह—**प्रमीयतेऽनेनेति**। सा च प्रमा त्रिविधा—प्रत्यक्षात्मिका, अनुमित्यात्मिका, शाब्दबोधात्मिका च बुद्धिवृत्तिस्वरूपा। तस्याः करणत्वं प्रमाणत्वमिति प्रमाणसामान्यलक्षणम्। अत एव प्रातिस्विकरूपेण त्रिविधप्रमायाः करणं त्रिविधं प्रमाणमपि सिद्ध्यति।

अत्र योगभाष्यम्—'फलमविशिष्टः पौरुषेयश्चित्तवृत्तिर्बोधः। चैतन्यप्रतिबिम्बितबुद्धिवृत्तिर्वा बोधः प्रमा। इत्थञ्च सामान्यतः बुद्धिवृत्तिभेदेन, पौरुषेयबोधभेदेन च सा प्रमा द्विविधा भवति। अत एव प्रमाणमपि द्विविधम्—बुद्धिवृत्तिरिन्द्रियादयश्चेति। यदा पौरुषेयबोधः प्रमा तदा तस्याः प्रमायाः करणं बुद्धिवृत्तिः। यदा च बुद्धिवृत्तिः प्रमा तदा तस्याः प्रमायाः करणमिन्द्रियसन्निकर्षादयो जायन्ते। तच्च प्रमारूपं फलं केवलं पुरुषनिष्ठमस्ति, न तु प्रधाननिष्ठमिति। तत्रापि संशय-विपर्यय-स्मरणानां व्यावृत्त्यर्थमसन्दिग्ध-अविपरीत-अनधिगतविशेषणानि अवश्यं बुद्धिवृत्तिरूपप्रमायां प्रदेयानि। एवञ्चाऽसन्दिग्धाऽविपरीताऽनधिगतविषया चित्तवृत्तिः प्रमा—इति तस्याः करणं प्रमाणम्। एवञ्च असन्दिग्धः = किंस्विदिति वितर्कात्मकानवधारणज्ञानविषयः सन्दिग्धः पदार्थः यत्र चित्तवृत्तिरूपप्रमायां नास्ति, अपितु निश्चितो वर्तते, तेन संशयात्मकज्ञानस्य व्यावृत्तिर्बोध्या। 'अविपरीतः' इत्यनेन विपर्ययात्मकं ज्ञानं व्यावर्त्यते। 'अनधिगतः' इत्यनेन च स्मृतेर्व्यावृत्तिर्बोध्या। इत्थञ्च 'संशय-विपर्यय-विकल्प-स्मृतिरूपचित्तवृत्तिभिन्ना या चित्तवृत्तिः सा प्रमा, तस्याः करणं प्रमाणमिति भावः। तथा च असन्दिग्धविषया = स्थाणुर्वा पुरुषो वेति संशयात्मकचित्तवृत्तिभिन्ना या चित्तवृत्तिः सेत्यर्थः। अविपरीतविषया = रज्जौ 'अयं सर्पः' इति मिथ्याज्ञानलक्षणविपर्ययज्ञानात्मकचित्तवृत्तिभिन्ना या चित्तवृत्तिः सेत्यर्थः। अनधिगतविषया = 'इदमेवे'ति निश्चयात्मकचित्तवृत्तिभिन्ना या चित्तवृत्तिः सेत्यर्थः। स्मृत्यात्मकचित्तवृत्तिभिन्ना चित्तवृत्तिरिति यावत्।

---

( २ ) यहाँ कारिका में 'प्रमाणम्' यह समाख्या अर्थात् यौगिक शब्द अवयवार्थ के द्वारा लक्षण का बोध कराता है और उस यौगिक शब्द का निर्वचन ही लक्षण है। प्रमा = यथार्थ निश्चय होता है घट-पटादि रूप विषयों का जिससे या जिसके द्वारा इस निर्वचन से = व्युत्पत्ति से, प्रमाज्ञान का वह करण = प्रमाण सिद्ध होता है। और असंदिग्ध विषय वाली, अविपरीत विषयवाली, अनधिगत विषयवाली जो

विपरीतानधिगतविषया चित्तवृत्तिः, वोधश्च पौरुषेयः फलं प्रमा तत्साधनं प्रमाणमिति। एतेन संशयविपर्ययस्मृतिसाधनेष्वप्रसङ्गः।

---

इदानीमिन्द्रियसन्निकर्पजन्यां मुख्यप्रमाभिन्नां वौद्धप्रमां निरुच्य तदुत्तरं चित्तवृत्ति-फलस्वरूपां मुख्यां पौरुपेयप्रमां निरूपयति—**वोधश्चेति**। तथा च चित्तवृत्तेः फलात्मको यो वोधः पुरुपस्वरूपे जीवात्मनि वर्तते स एव पौरुपेयः वोधः मुख्या प्रमा चास्तीति भावः। इत्थं च प्रमा लक्षिता, इदानीं प्रमाणन्तावल्लक्षयति—**तत्साधनमिति**। तथा च तस्याः प्रागुक्तायाश्चित्तवृत्तेर्यत् साधनं=संयोगसन्निकर्षादिरूपव्यापार-विशिष्टमिन्द्रियं चक्षुरादिरूपं प्रमाणम्। यच्च पौरुषेयवोधकरणरूपं साधनं प्रमाणं तदुभयमपि प्रागुक्तप्रमाकरणत्वात् प्रमाणं भवति। 'अयं घटः' इति अमुख्यायाः (गौण्याः) वौद्धप्रमायाश्चक्षुरादेः करणत्वात् चक्षुरादीन्द्रियमेव प्रमाणं भवति।

इदमत्रावधेयम्—घटमहं जानामि, पटमहं जानामीत्याद्यनुव्यवसायात्मिकायां वुद्धिवृत्तौ चैतन्यं प्रतिविम्वते, अत एव चैतन्यप्रतिविम्वविशिष्टत्वाच्चैतन्यधर्मवती वुद्धिवृत्तिर्जायते। न तु सा पुरुपे प्रतिविम्वते। तथा च वुद्धिवृत्तौ प्रतिविम्वितमेव चैतन्यं पौरुपेयो वोधः कथ्यते। **एतेनेति**। एतेन=असन्दिग्धाविपरीताऽनधिगतविशेपणत्रयोपादानेन। **संशयेति**। तथा च संशयसाधनादिपु नातिव्याप्तिरित्यर्थः। अर्थात् संशय-साधने, विपर्ययसाधने स्मृतिसाधने च नातिप्रसङ्ग इत्यर्थः।

तत्र 'असन्दिग्ध'पदानुपादाने 'अविपरीताऽनधिगतविपयचित्तवृत्तिकरणत्वं प्रमाण-त्वमिति लक्षणस्वरूपमवशिष्टं भवति, तथा सति 'स्थाणुर्वा पुरुषो वे'ति संशयात्मक-चित्तवृत्तेरपि तथात्वात् संशयसाधने उच्चैस्तरत्वादिसाधारणधर्मवद्धर्मिज्ञानेऽतिव्याप्तिर-तस्तदुपादानम्, संशयात्मिकायाश्चित्तवृत्तेरसन्दिग्धत्वाभावान्न दोपः। रजते 'इदं रजतम्' इत्याकारिकायाः प्रमाचित्तवृत्तेरेव ग्रहणात्तत्करणत्वस्य चक्षुरादिरूपप्रमाणेषु सत्त्वाद् भवति तत्र तत्र सर्वत्र लक्षणसमन्वयः।

अविपरीतपदानुपादाने 'असन्दिग्धाऽनधिगतविपयचित्तवृत्तिकरणत्वं प्रमाणत्वं पर्यव-सन्न भवति। रज्जावयं सर्प इति विपरीतचित्तवृत्तेरपि तथात्वाद् विपर्ययसाधने दोपा-वच्छिन्नेन्द्रियादौ तत्सन्निकर्पादौ चातिव्याप्तिः। तदुपादाने च तस्या वृत्तेरविपरीतत्वा-भावान्न दोपः।

'अनधिगत'पदानुपादाने स्मरणात्मकचित्तवृत्तिमादाय तादृशचित्तवृत्तिसाधनी-भूते संस्कारे अनुभवे चातिव्याप्तिः। तदुपादाने च तद्विपयस्यानुभवेऽधिगतत्वान्न दोपः।

---

चित्तवृत्ति है वही प्रमा है, और वही पौरुपेयवोध तथा प्रमाण का फल है। और उस पौरुपेयवोध स्वरूप प्रमा का साधन प्रमाण है। इस लक्षण में 'असंदिग्ध' से संशयात्मक ज्ञान की; 'अविपरीत' से विपरीत=भ्रमात्मक ज्ञान की तथा 'अनधिगत' से स्मृतिरूप ज्ञान की व्यावृत्ति की गई है। इसीलिए संशय के साधन में, विपर्यय ज्ञान के साधन में तथा स्मृतिरूप ज्ञान के साधन में इस लक्षण की अतिव्याप्ति नहीं हुई।

( ३ ) सङ्ख्याविप्रतिपत्तिं निराकरोति—त्रिविधमिति। तिस्रो विधा अस्य प्रमाणसामान्यस्य तत् त्रिविधम्, न न्यूनं नाप्यधिकमित्यर्थः। विशेषलक्षणानन्तरञ्चैतदुपपादयिष्यामः।

कतमाः पुनस्तिस्रो विधाः ? इत्यत आह—'दृष्टमनुमानमाप्तवचनं च' इति। एतच्च लौकिकप्रमाणाभिप्रायम्, लोकव्युत्पादनार्थत्वाच्छास्त्रस्य,

---

स्मृतिरूपं ज्ञानं नास्ति, यथार्थज्ञानं=प्रमाज्ञानम्। नास्त्ययं नियमो यत् स्मृत्या यादृशोऽर्थो विपयीक्रियते तादृश एवाऽनुभवेऽपि। 'अयं घटः' इत्यनुभवेन वर्तमानकालीनो घट एव केवलं विपयीक्रियते। स्मृत्या च न तथा, तत्र 'स घटः' इति पूर्वावस्थाविशिष्ट एव। पूर्वावस्था वर्तमानावस्थयोरत्यन्तं भेदात्। तादृशावस्थाविशिष्टयोर्घट-पटादिविषययोरपि च भेदात्। वर्तमानध्वंसप्रतियोगित्वं हि पूर्वत्वम्, एतादृशावस्थाविशिष्टो घटः स्मृतेर्विषयः। वर्तमानावस्थाविशिष्टश्च घटोऽनुभवविषयः। तथा च स्मृतेरलक्ष्यत्वप्रदर्शनायैव—'अनधिगत'पदमुपात्तमिति भावः।

अन्यच्च 'घटमहं जानामि' इति मुख्यायाः फलीभूतायाः प्रमायाश्च चित्तवृत्तेः साधनत्वात् 'व्यापारवदसाधारणकारणस्यैव च करणत्वरूपत्वात्तस्य च तत्र सङ्कुटितत्वाद्' इति भावः।

विज्ञानभिक्षवस्तु व्यापारवत्कारणस्य करणत्वं नाङ्गीकुर्वन्ति, किन्तु फलयोगव्यवच्छिन्नस्य कारणस्यैव तथात्वं स्वीकुर्वन्ति। फलायोगव्यवच्छिन्नत्वञ्च स्वाव्यवहितोत्तरक्षणावच्छेदेन फलोपहितत्वम्। स्वं कारणम्। अर्थात् यस्य कारणस्याऽव्यवहितोत्तरकाले कार्यमवश्यं भवेत्तदेव करणमित्यर्थः। फलायोगेन=फलाभावेन, व्यवच्छिन्नं=शून्यं यत् कारणमिति तु परमार्थः।

( ३ ) **तिस्रो विधा इति**। विधाः=प्रकाराः। न्यूनाधिकसङ्ख्यां व्यवच्छेत्तुमाह—**न न्यूनं नाप्यधिकमिति**। नहि चार्वाकाभिमतं प्रत्यक्षप्रमाणमेवाऽङ्गीकृतं केवलं साङ्ख्यैः, नापि बौद्धवैशेषिकाभिमतप्रत्यक्षाऽनुमानद्वयमिति। नापि च नैयायिक-वेदान्ति-मीमांसकप्रभृतिदार्शनिकवदधिकानीति। **विशेषलक्षणानन्तरमिति**। पञ्चमाध्यायकथितप्रमाणविशेषलक्षणानन्तरमित्यर्थः। कतमाः=कियत्यः। एतच्च=प्रमाणत्रैविध्याभिधानञ्च। **लौकिकप्रमाणेति**। लोकसिद्धसाधारणजनोपयोगिप्रमाणानि त्रीण्येव सन्तीति भावः। **लोकेति**। लोकानाम्=साधारणजनानाम्, व्युत्पादनार्थत्वात्=बोधजननोपयोगित्वात्। **शास्त्रस्येति**। साङ्ख्यशास्त्रस्येत्यर्थः। **तस्यैवेति**। लौकिकप्रमाणत्रयस्यैवेत्यर्थः। अत्र=साङ्ख्यशास्त्रे।

---

( ३ ) कितनी संख्या वाले प्रमाण है; इस विप्रतिपत्ति=वितर्क का निराकरण करते हैं कि प्रमाण तीन प्रकार के है; न न्यून=कम हैं और न अधिक है। प्रमाणों के विशेष लक्षण के बाद हम इसका उपपादन करेंगे।

प्रश्न—प्रमाणो के वे तीन प्रकार कौन है ?

उत्तर—दृष्ट=प्रत्यक्ष, अनुमान तथा आप्तवचन=शब्द—ये तीन प्रमाण हैं। यह

तस्यैवात्राधिकारात् । आर्षं तु विज्ञानं योगिनामूर्ध्वस्रोतसां न लोकव्युत्पादनायालमिति सदपि नाभिहितम्, अनधिकारात् ।

( ४ ) स्यादेतत्—मा भून्न्यूनम्, अधिकं तु कस्मान्न भवति ? सङ्गिरन्ते हि प्रतिवादिन उपमानादीन्यपि प्रमाणानि, इत्यत आह—'सर्वप्रमाणसिद्धत्वात्'

---

के तावदार्षविज्ञानाधिकारिणः सन्तीत्यत्राह—**आर्षन्त्विति** । एतस्यार्षविज्ञानस्य विवेचनं प्रशस्तपादभाष्यान्तर्गतगुणग्रन्थान्तर्गतबुद्धिप्रकरणे 'आम्नायविधातॄणामृषीणामतीताऽनागतवर्तमानेष्वतीन्द्रियेष्वर्थेषु' इत्यादिना कृतम् । **ऊर्ध्वस्रोतसामिति** । ऊर्ध्वम् =सांसारिकविषयेभ्यो व्यतिरिक्तं ( स्वप्रकाशचिदात्मके ब्रह्मणि ), स्रोतः=वृत्तिप्रवाहो येषान्तेषां देवानामित्यर्थः । लोकव्युत्पादनाय=सर्वसाधारणजनवोधकरणाय । नाऽलम्=न समर्थम् । इति=एतस्माद्धेतोः । सदपि=वर्तमानमपि ( तदार्षं विज्ञानम् ) । नाभिहितम्=न कथितम् । अनधिकारात्=अनुपयोगात् । तच्चार्षविज्ञानं देवर्षीणामेव वाहुल्येन जायते, लौकिकानाञ्च पुरुषाणां कदाचिदेव क्वचिदेवेति, अतस्तस्यानुपयोगो दर्शितः, अत एव न तन्निरूपितमिति तु परमार्थः ।

अन्तर्भावपदार्थश्च स्वकुक्षौ निक्षिप्तकरणम् । तथा च साङ्ख्यप्रमाणत्रये एव तेषामितरप्रमाणानामन्तर्भावादिति ।

( ४ ) अत्रेदं विचारणीयमस्ति—यद्यपि वुद्धितत्त्वस्य प्रकाशरूपत्वात् सकलविषयग्रहणसामर्थ्यसम्पन्नत्वमस्ति । तथापि तमोगुणरूपाऽऽवरणकाले नास्ति वुद्धितत्त्वे तादृशसामर्थ्यसम्पत्तिः । यस्मिंश्च कालेऽभ्यास-वैराग्याभ्यां निरस्तसमस्तरजस्तमोगुणमलस्य योगजधर्मलक्षणसामर्थ्यसम्पन्नस्यास्य वुद्धितत्त्वस्य पूर्णसामर्थ्यं प्रकाशमानं भवति, तस्मिन्नेव च काले तस्याऽतीताऽनागतसूक्ष्मव्यवहितविप्रकृष्टपदार्थप्रकाशसामर्थ्यमपि प्रत्यक्षविषयीक्रियते, प्रकाशवाहुल्यान्नास्ति किमप्येतादृशं वस्तु यच्चाऽस्य वुद्धितत्त्वस्य गोचरीभूतं न भवेत्, अपि तु सर्वमेव चास्य विषयीभूतं भवति, इत्येतादृशमेव ज्ञानं ( विज्ञानं ) योगिनां जायते । अयञ्च विज्ञानविषयः सुस्पष्टीकृतः पातञ्जले योगदर्शने 'प्रातिभाद्वा सर्वम्' ( ३।३३ ) इत्यादिना । अस्य च आर्षविज्ञानस्य प्रत्यक्षरूपत्वात् प्रत्यक्षान्तर्गतत्वमेव स्वीक्रियते नातिरिक्तत्वमिति न प्रमाणान्तरत्वम् ।

---

प्रमाणों का त्रिविधत्व कथन लौकिक प्रमाणों के अभिप्राय से है । क्योंकि यह सांख्यशास्त्र लौकिक साधारणजनों की व्युत्पत्ति=ज्ञान के लिए ही वनाया गया है, अतः यहाँ सांख्यशास्त्र में लौकिक प्रमाणों का अधिकार है ।

योगियों का तथा ऊर्ध्वस्रोता लोगों का आर्षविज्ञानस्वरूप प्रमाण साधारण लोगों को ज्ञान कराने के लिए समर्थ नहीं है, अतः आर्षविज्ञानरूप प्रमाण के रहते हुए यहाँ अधिकार न होने के कारण उस प्रमाण का यहाँ उल्लेख नहीं किया गया है ।

( ४ ) लोक में उपयोगी जो उपमान आदि प्रमाण हैं, उनका निरूपण न करने से ग्रन्थकार की न्यूनता तो अवश्य होगी—यही शङ्का वाचस्पति मिश्र उपस्थापित करते हैं कि तीन प्रमाणों से कम न हों, किन्तु तीन से अधिक प्रमाण क्यों न हों ? क्योंकि

इति । एष्वेव दृष्टानुमानाप्तवचनेषु सर्वेषां प्रमाणानां सिद्धत्वात् अन्तर्भावादित्यर्थः । एतच्चोपपादयिष्यत इत्युक्तम् ।

अथ प्रमेयव्युत्पादनाय प्रवृत्तं शास्त्रं कस्मात् प्रमाणं सामान्यतो विशेषतश्च लक्षयति ? इत्यत आह—'प्रमेयसिद्धिः प्रमाणाद्धि' इति । सिद्धिः—प्रतीतिः ।

सेयमार्याऽर्थक्रमानुरोधेन पाठक्रममनादृत्यैव व्याख्याता ॥ ४ ॥

---

यद्यपि ज्ञानविद्ययोरभेदात्तस्य चातुर्विध्यं प्रतिपादितं 'विद्या च चतुर्विधा प्रत्यक्षलैङ्गिकस्मृति-आर्षलक्षणा' इत्यादिना प्रशस्तपादाचार्येण स्वीये भाष्ये । तथा च तेन प्रत्यक्षातिरिक्तमेव तद् विज्ञानं मन्तव्यं न प्रत्यक्षान्तर्गतमित्युच्यते चेत्तथापि तस्य लोकोपयोगित्वाभावान्नाऽत्र तदभिहितं मिश्रेण ।

एवं 'सिद्धदर्शनं न ज्ञानान्तरम् ? कस्मात् ? प्रयत्नपूर्वकम् । अञ्जनपादलेपखड्गगुलिकादिसिद्धानाम्' ( वै० द० ९।२।१३ ) इत्यादिना प्रतिपादितं सिद्धज्ञानमपि प्रत्यक्षाद्यन्तर्गतत्वान्न तदतिरिक्तं ज्ञानान्तरमिति । विस्तरस्तु प्रशस्तपादभाष्ये कन्दल्याञ्चाऽवलोकनीयः ।

**सङ्गिरन्ते इति ।** कथयन्तीत्यर्थः । प्रतिवादिनः=तन्त्रान्तराचार्या नैयायिकवेदान्ति-मीमांसकप्रभृतयो विद्वांसः । अन्तर्भावादित्यर्थं इति । उपमानस्य शब्दप्रमाणेऽन्तर्भावादित्यर्थः । अर्थापत्तेरनुमाने, अनुपलब्धेश्च प्रत्यक्षप्रमाणे, ऐतिह्यप्रमाणस्य शब्दे, सम्भवस्याऽनुमाने, चेष्टायाश्चाप्यनुमानेऽऽन्तर्भावादित्यर्थः । अन्तर्भावपदार्थश्च स्वकुक्षौ निक्षिप्तकरणम् । तथा च साङ्ख्यप्रमाणत्रय एव तेषामितरप्रमाणानामन्तर्भावादिति भावः । **एतच्चेति ।** अन्यप्रमाणानामत्रैवान्तर्भावित्वञ्चेत्यर्थः ।

ननु प्रमेयप्रतिपादनपरस्य साङ्ख्यशास्त्रस्य प्रमाणप्रतिपादनं सर्वथा व्यर्थं, न्यायशास्त्रस्यैव प्रमाणशास्त्रत्वादित्याशयेन शङ्कते—**अथ प्रमेयव्युत्पादनायेति ।** प्रमेयपदार्थनिरूपणाय । प्रधानतया प्रमेयपदार्थनिरूपणपरमप्येतच्छास्त्रं परन्तु प्रमेयपदार्थोपयोगितयाऽऽपाततः प्रमाणमपि प्रतिपादयति । 'प्रमेयसिद्धिः प्रमाणाद्धि'

---

विभिन्न मतावलम्बी नैयायिक प्रभृति प्रतिवादी लोग उपमान आदि प्रमाणों का भी अङ्गीकार करते हैं। इसका समाधान सांख्य ने इस प्रकार किया है—'सर्वप्रमाणसिद्धत्वात्' अर्थात् उपमान आदि सभी प्रमाणों का अन्तर्भाव=समावेश इन्हीं तीन प्रमाणों में होता है। इसका उपपादन आगे किया जायेगा जैसा कि हम पहिले कह चुके है।

प्रश्न—प्रमेय पदार्थों का ज्ञान कराने के लिए इस सांख्यशास्त्र का आरम्भ किया गया है; फिर प्रमाणसामान्य या प्रमाणविशेष का लक्षण क्यों करने लगे ?

उत्तर—यह ठीक है; परन्तु उन प्रमेयपदार्थों की सिद्धि प्रमाण से ही होती है, अतः सामान्य तथा विशेष दोनों रूप से प्रमाण-लक्षण नितान्त आवश्यक है।

आर्या छन्द मे निबद्ध इस चतुर्थ कारिका की व्याख्या पाठक्रम के अनुसार न करके अर्थक्रम के अनुसार इसलिए की गई है कि पाठक्रम से अर्थक्रम बलवान् होता है ॥ ४ ॥

(१) सम्प्रति प्रमाणविशेषलक्षणावसरे प्रत्यक्षस्य सर्वप्रमाणेषु ज्येष्ठत्वात् तदधीनत्वाच्चानुमानादीनां सर्ववादिनामविप्रतिपत्तेश्च, तदेव तावल्लक्षयति—प्रतिविषयाध्यवसायो दृष्टमिति ।

**प्रतिविषयाध्यवसायो दृष्टं त्रिविधमनुमानमाख्यातम् ।**
**तल्लिङ्गलिङ्गिपूर्वकमाप्तश्रुतिराप्तवचनं तु ॥ ५ ॥**

इति न्यायेनेति निष्कर्षः । **सेयमार्येति** । सा इयं=प्रचलिता चतुर्थकारिका । आर्या=आर्याछन्दोबद्धा । अर्थक्रमानुसारेण=प्रयोजनानुसारिप्रबलार्थक्रमानुसारेण । **पाठक्रममनादृत्येति** । अननुसृत्य, 'पाठक्रमादर्थक्रमो बलीयान्' इति न्यायेन ॥ ४ ॥

(१) प्रमाणविशेषं लक्षयितुं भूमिकां रचयति—**सम्प्रतीति** । इदानीमित्यर्थः । **प्रमाणविशेषेति** । प्रमाणानां ये सन्ति विशेषाः=प्रत्यक्षादिभेदास्तेषां, लक्षणाऽवसरे लक्षणनिरूपणावसरे । प्रमाणेषु=सर्वप्रमाणेषु । ज्येष्ठत्वात्=पूर्ववर्त्तित्वात्, पूर्ववर्तित्वेन प्रबलत्वाद्वा, सकलप्रमाणोपजीव्यत्वादित्यर्थः । तदधीनत्वात्=प्रत्यक्षसापेक्षत्वात् । सर्ववादिनामविप्रतिपत्तेश्च=सर्वेषां वादिनां चार्वाकप्रभृतीनां प्रत्यक्षप्रमाणे विवादाभावेन सर्वसम्मतत्वाच्च । अविप्रतिपत्तेरित्यस्य नास्ति विरुद्धा प्रतिपत्तिः=निश्चयस्तस्मात् इत्यर्थः, तथा च प्रत्यक्षप्रमाणाङ्गीकारे विरोधिनिश्चयाभावादित्यर्थः ।

**अन्वयः**—प्रतिविषयाध्यवसायः दृष्टम् अनुमानं त्रिविधम् आख्यातं तत् लिङ्गलिङ्गिपूर्वकम् आप्तश्रुतिः आप्तवचनं तु ॥ ५ ॥

**प्रतिविषयाध्यवसाय इति** । दृष्टम्=प्रत्यक्षम् । प्रतिविषयाध्यवसायः=इन्द्रियजन्यज्ञानत्वम् । अनुमानम् । तल्लिङ्गलिङ्गिपूर्वकम्=व्याप्यव्यापकभावपूर्वकत्वे सति पक्षधर्मताज्ञानपूर्वकम् । (तच्च) त्रिविधम् । आख्यातम्=कथितम् । आप्तवचनम्=शब्दप्रमाणम् । आप्तश्रुतिः=आप्तपुरुषोच्चरितशब्दजन्यशाब्दीप्रमाजनकम् । अयञ्च कारिकार्थः ।

(१) अब हम प्रत्यक्ष आदि प्रमाणविशेष के लक्षण के अवसर पर प्रत्यक्ष प्रमाण सभी प्रमाणों में ज्येष्ठ है तथा उसी के अधीन अन्य सब अनुमानादि प्रमाण हैं, और इस प्रत्यक्षप्रमाण में किसी भी वादी को विप्रतिपत्ति=विरोध भी नहीं है, अतः सर्वप्रथम प्रत्यक्षप्रमाण का ही लक्षण करते हैं—'**प्रतिविषयाध्यवसायः**' इत्यादि कारिका से ।

**कारिकार्थ**—सांख्य ने प्रतिविषय=घट-पटादि रूप अर्थसन्निकृष्ट चक्षु आदि इन्द्रिय से होने वाले अध्यवसाय (वृत्तिरूप ज्ञान) को ही प्रत्यक्षप्रमाण माना है। और अनुमान तीन प्रकार का है—पूर्ववत्, शेषवत्, सामान्यतोदृष्ट भेद से । उसका लक्षण है—'लिङ्गलिङ्गिपूर्वकम्' व्याप्यव्यापकभावपक्षधर्मताज्ञानपूर्वकमनुमानम् । और आप्तवचन=शब्दप्रमाण का लक्षण है—'आप्तश्रुतिः' अर्थात् आप्तपुरुष से उच्चरित वाक्य से उत्पन्न यथार्थज्ञान को शब्दप्रमाण माना है ।

( २ ) 'प्रतिविषयाध्यवसायो दृष्टम्' इति। अत्र 'दृष्टम्' इति लक्ष्य-निर्देशः, परिशिष्टं तु लक्षणम्। समानासमानजातीयव्यवच्छेदो लक्षणार्थः।

अवयवार्थस्तु—विसिन्वन्ति विषयिणमनुवध्नन्ति, स्वेन रूपेण निरूपणीयं कुर्वन्तीति यावत्। 'विषयाः' पृथिव्यादयः सुखादयश्च। अस्मदादीनामविषयास्तन्मात्रलक्षणा योगिनामूर्ध्वस्रोतसां च विषयाः। विषयं विषयं प्रति वर्तते इति प्रतिविषयम्। वृत्तिश्च सन्निकर्षः। अर्थसन्निकृष्टमिन्द्रियमित्यर्थः।

---

( २ ) अत्र=कारिकायाम्। दृष्टमिति लक्ष्यस्य=प्रत्यक्षप्रमाणस्य। निर्देशः=उद्देशः। परिशिष्टन्तु=प्रतिविषयाध्यवसायस्तु। **समानासमानेति**। समानजातीयाः=सजातीयाः, असमानजातीयाः=विजातीयाश्च, ये सन्ति पदार्थास्तेभ्यो ( लक्ष्यस्य ) यो व्यवच्छेदो=भेदः=पृथक्करणम्। लक्षणार्थः=लक्षणविधानस्य प्रयोजनम्। इत्थञ्च समानाऽसमानजातीयव्यवच्छेदकत्वमेव लक्षणस्य लक्षणं सम्पन्नं भवतीति भावः। यथा पृथिव्या गन्धवत्त्वमिदं लक्षणं स्वलक्ष्यीभूतां पृथिवीं द्रव्यत्वेन पृथिवीसमानजातीयेभ्यो जलादिभ्यो व्यवच्छिनत्ति। गुणत्वेन चाऽसमानजातीयेभ्यो रूपादिगुणेभ्यो व्यवच्छिनत्ति, इत्यतो गन्धवत्त्वमिति पृथिव्या लक्षणं सम्पन्नं भवति। इदञ्च 'गन्धवत्त्वमि'ति पृथिव्यास्तटस्थलक्षणम्। यतो महाप्रलये परमाणुरूपपृथिव्याम्, उत्पत्तिकाले च घटादिरूपपृथिव्यां गन्धाभावात्। पृथिवीत्वजातिमत्त्वन्तु तस्याः स्वरूपलक्षणम्।

**अवयवार्थस्त्विति**। प्रतिपदार्थस्तु। विसिन्वन्ति=विषयिणं=चित्तवृत्तिरूपं ज्ञानम्, अनुवध्नन्ति=स्वेन रूपेण निरूपणयोग्यं कुर्वन्ति, अर्थात् घटपटादयो विषया इन्द्रियसंयोगादिना चित्तं स्वाकारेण उपरञ्जयन्ति, अर्थाद्=विषयाः स्वाकारं चित्ते समर्पयन्तीति भावः। **विषया इति**। विषयशब्दबोध्यं ब्रूते—**पृथिव्यादय इति**। विषयाश्च द्विविधाः—स्थूलाः, सूक्ष्माश्च। स्थूला अपि द्विविधाः—बाह्याः, आन्तराश्च। तत्र बाह्याः पृथिव्यादयः। आन्तराश्च सुखादयः। सूक्ष्मविषयानाह—**अस्मदादीनामिति**। चर्मचक्षुषाम्। अविषयाः=अगोचराः। तन्मात्रलक्षणाः=शब्द-स्पर्श-रूप-रस-गन्धात्मकाः

---

( २ ) **'प्रतिविषयाध्यवसायो दृष्टम्'**। यहाँ पर 'दृष्टम्' यह 'लक्ष्य' है और परिशिष्ट=प्रतिविषयाध्यवसाय' यह लक्षण है। लक्षण का अर्थ=प्रयोजन होता है—समानजातीय तथा असमानजातीय पदार्थों से लक्ष्यार्थ का व्यवच्छेद=भेद कराना। 'प्रतिविषयाध्यवसाय' इस प्रत्यक्षलक्षण वाक्य मे पठित अवयवभूत शब्दों का अर्थ यह है कि जो विषयी=चित्तवृत्तिरूप ज्ञान को बाँधते है अर्थात् घट-पटादि रूप विषय अपने रूप से=आकार से=अवयवसंस्थानाऽनुरूप से निरूपण योग्य करते है, वे पृथिवी आदि, सुखादि, घट-पटादि स्थूल विषय कहलाते है और सूक्ष्म विषय जो तन्मात्राएँ है, वे यद्यपि हम लोगों के प्रत्यक्ष के विषय नही है, फिर भी सर्वथा वे अविषय भी नही हैं; वे भी योगियों के ऊर्ध्वस्रोता ( ज्ञानी ) लोगों के विषय हैं।

( ३ ) तस्मिन् अध्यवसायः, तदाश्रित इत्यर्थः। अध्यवसायश्च बुद्धि-व्यापारो ज्ञानम्, उपात्तविषयाणामिन्द्रियाणां वृत्तौ सत्यां बुद्धेस्तमोऽभिभवे सति यः सत्त्वसमुद्रेकः सोऽध्यवसाय इति वृत्तिरिति ज्ञानमिति चाख्यायते। इदं तावत् प्रमाणम्। अनेन यश्चेतनाशक्तेरनुग्रहस्तत्फलं प्रमाबोधः।

---

सूक्ष्मभूतस्वरूपाः, तेऽपि योगिनामूर्ध्वस्रोतसाञ्च विषयाः सन्ति। प्रतिविषयाध्यवसाया-न्तर्गतविषयपदार्थं निरुच्य सम्प्रति 'प्रतिविषय'पदार्थं निर्वक्ति—**विषयं विषयं प्रति वर्तते इति**। 'वर्तते' इति पदान्तर्गत-'वृत्'धातोः वृत्तिरूपोऽर्थः, स चाऽत्र इन्द्रियसन्नि-कर्षरूपः। इत्थञ्च 'प्रतिविषय'शब्दस्य 'अर्थसन्निकृष्टमिन्द्रियम्' इति निष्कृष्टोऽर्थः।

( ३ ) निर्गलितार्थमाह—**तदाश्रित इति**। विषयसन्निकृष्टेन्द्रियाधीन इत्यर्थः। अयमेव विषयेन्द्रिययोः सन्निकर्षो व्यापारः कथ्यते, यः कारकैः फले समुत्पादनीये फलाऽव्यवहितपूर्वक्षणे फलजननाऽनुकूलत्वेनाऽपेक्ष्यते। यथा—स्वर्गे जननीये यागेनात्म-निष्ठोऽपूर्वरूपो व्यापारो जन्यते। एवं घटे जननीये कपालादितत्तदवयवैर्घटाऽव्यवहित-पूर्वकालपर्यन्तस्थायिनः पारस्परिकाः संयोगविशेषा जन्यन्ते। तथैवाऽत्रापि इन्द्रियादि-रूपप्रमाणेन प्रमारूपफले जनयितव्ये तादृशफलोत्पादनानुकूलः सन्निकर्षो ज्ञानं वाऽपेक्ष्यते इति भवति स एव तादृशफलाव्यवहितप्राक्क्षणस्थायित्वेन व्यापारपदाभिधेयः, स एव वृत्तिरित्युच्यते, स एवाऽध्यवसायः, बुद्धिव्यापारश्च। तदेव सुस्पष्टयति—**उपात्तविषयाणामिति**। उपात्तः=गृहीतः=प्रतिविम्बरूपेण स्वायत्तीकृत्य बुद्धिवृत्तौ समर्पितो घट-पटादिरूपो विषयो यैस्तेषामित्यर्थः। **इन्द्रियाणामिति**। चक्षुरादीन्द्रियाणामित्यर्थः। साहाय्येनेति शेषः। वृत्तौ=बुद्धिवृत्तौ, विषयप्रतिविम्बोपरक्तायां बुद्धिवृत्तावित्यर्थः। सत्याम्=विषयाकाराकारितत्वे सति=चित्तवृत्तेर्विषयाकारतासम्पादने सतीत्यर्थः। बुद्धेः=त्रिगुणात्मकस्य बुद्धिसत्त्वस्य। **तमोऽभिभवे सतीति**। तमोरूपाऽऽवरणात्मक-

---

और जो भिन्न-भिन्न विषयों ( घट-पट आदि ) के ग्रहण में प्रवृत्त होती है, वे प्रतिविषय स्वरूप इन्द्रियाँ हैं और वृत्ति नाम है विषय और इन्द्रिय का सन्निकर्ष ( सम्बन्ध ); अब प्रतिविषय का फलित अर्थ हुआ—अर्थ( घट-पटादि )सन्निकृष्ट इन्द्रिय।

( ३ ) प्रतिविषयरूप इन्द्रिय में होने वाला अर्थात् इन्द्रियाश्रित=इन्द्रियाधीन जो अध्यवसाय=बुद्धि का व्यापार=धर्मरूप ज्ञान=बुद्धिवृत्ति, यह प्रतिविषयाध्य-वसाय का अर्थ हुआ, अर्थात् प्रतिविम्बरूप से उपात्त=गृहीत घट-पटादि रूप विषयों को अपने अधीन कर फिर बुद्धिवृत्ति में उन घट-पटादि रूप विषयों को अर्पित करने वाली इन्द्रियों की सहायता से बुद्धिवृत्ति के ठीक विषय ( घट-पटादि ) के आकार से आकारित हो जाने पर बुद्धि के अथवा बुद्धिगत तम ( अज्ञान ) के, या तमोगुण के, अथवा तमोरूप आवरणात्मक वृत्ति के अभिभूत हो जाने पर जो सत्त्वसमुद्रेक= सत्त्वात्मकप्रकाशबाहुल्यरूपा वृत्ति है, उसी को अध्यवसाय=ज्ञान आदि शब्दों से कहते हैं; और यही वह प्रमाण है अर्थात् प्रत्यक्षप्रमाण है।

वृत्तेरभिभवे सति। सत्त्वसमुद्रेकः = सत्त्वात्मकप्रकाशबाहुल्यरूपवृत्तिस्वरूपधर्मविशेष इत्यर्थः। तथा च तमोऽभिभवसमानकाले जायमानो यो बुद्धेः सत्त्वप्रकाशबाहुल्यरूपः समुद्रेकः स एव वृत्तिपदार्थः। सत्त्वसमुद्रेकरूपवृत्तिपदार्थे तमोऽभिभवः कारणम्, तत्र च तमोऽभिभवे इन्द्रियसन्निकर्षव्याप्तिज्ञानादिकं कारणम्।

अत्रेदं विचारणीयमस्ति यत्—स्वभावतश्चलनात्मकक्रियासम्पन्नमपि जलाशयस्थं जलं निर्गमनमार्गप्रतिबन्धे सति स्वयं क्षेत्रमनुपसर्पदपि प्रतिबन्धापगमे छिद्रद्वारा बहिर्निर्गत्य क्षेत्रमुपसृत्य कुल्यात्मना केदारान् प्रविश्य तद्वदेव हि चतुष्कोणाद्याकारं भवति। तथैव स्वभावतः विषयग्रहणसामर्थ्यसम्पन्नमपि बुद्धितत्त्वं तमसा प्रतिबद्धं स्वयं घटादिविषयदेशगमनेऽसमर्थमिन्द्रियार्थसन्निकर्षादिना तमोनिरासे इन्द्रियप्रणालिकया घटादिविषयदेशं गत्वा तादृशविषयाकारेण परिणमते। योऽयं बुद्धितत्त्वस्य विषयाकारपरिणामः स एवाऽध्यवसायः इति वृत्तिरिति ज्ञानमिति प्रमाणमिति च व्यवह्रियते। एतावांस्तु विशेषः—इन्द्रियार्थसन्निकर्षद्वारा तमोऽभिभवसमानकालीनसत्त्वसमुद्रेकप्रयुक्तो यो बुद्धेर्विषयाकारपरिणामः स 'प्रत्यक्षप्रमाणम्' इत्यभिधीयते।

व्याप्तिज्ञानजन्यश्च यस्तथाविधः विषयप्रकाशकरः सत्त्वोद्रेकरूपो यस्तादृशः परिणामः सोऽनुमानप्रमाणं कथ्यते।

वाक्यजन्यश्च यस्तथाविधः परिणामविशेषः स आगमप्रमाणमिति व्यपदिश्यते। तदेवाह—**इदं तावत् प्रमाणमिति**। 'तावत्' इति वाक्यालङ्कारे। **इदमिति**। इन्द्रियार्थसन्निकर्षादिना जायमानं यद् बुद्धितत्त्वगतसत्त्वाधिक्यप्रयुक्तं बुद्धेर्विषयाकारपरिणामशालित्वं तदिदं प्रमाणं कथ्यते।

ननु अन्तःकरणरूपस्य चित्तस्य निरवयवत्वेन पुरुषवद् परिणामित्वात् विषयाकारपरिणामशालित्वं कथं तस्य सङ्गच्छते इति चेत् ? न। अपरिणामितायां नहि निरवयवत्वं प्रयोजकम्, तथा सति प्रधानस्यापि निरवयवत्वेन परिणामित्वं न स्यात्, अपि तु चेतनत्वमेवाऽपरिणामित्वे प्रयोजकम्, चित्तस्य चेतनत्वाऽभावेन विषयाकारपरिणामशालित्वमुपपादयितुं शक्यते।

---

[ इस इतने ग्रन्थ का हार्दिक अभिप्राय यह है कि जिस प्रकार तालाब का बहता हुआ जल किसी प्रतिबन्धकवश अवरुद्ध हो जाने से खेत या खेत की क्यारियों तक नहीं पहुँच पाता है और न खेत के अथवा क्यारियों के आकार वाला ही हो पाता है; परन्तु प्रतिबन्धक के हटते ही वह तालाब का जल नाली के द्वारा खेत या क्यारियों में जाकर ठीक उसके आकार वाला हो जाता है। वैसे ही यह बुद्धि विषयमात्र का प्रकाश करने में स्वाभाविक सामर्थ्य रखते हुए भी तमःस्वरूप प्रतिबन्धक के उपस्थित हो जाने से अपना विषयप्रकाशरूप कार्य नहीं कर पाती है, परन्तु चक्षु आदि इन्द्रिय का सन्निकर्ष हो जाता है, तब सन्निकर्ष द्वारा तमोरूप आवरण हटते ही सत्त्वात्मकप्रकाशबाहुल्यरूपा वृत्ति का जो विषय के आकार वाली है, उदय हो जाता है; यही वृत्ति = ज्ञान प्रत्यक्षप्रमाण है ], अतः इस प्रकार के सत्त्वात्मकप्रकाशस्वरूप बुद्धिवृत्ति-

( ४ ) बुद्धितत्त्वं हि प्राकृतत्वादचेतनमिति तदीयोऽध्यवसायोऽप्यचेतनः, घटादिवत् । एवं बुद्धितत्त्वस्य सुखादयोऽपि परिणामभेदा अचेतनाः । पुरुषस्तु

---

इदानीं प्रमाणसामान्यं लक्षयित्वा तत्फलस्वरूपां प्रमामाह—**अनेनेति** । अनेन = विषयाकारधारिणा बुद्धितत्त्वेन । चेतनाशक्तेः = चेतनाशक्तिस्वरूपस्य पुरुषस्य । योऽनुग्रहः = बुद्धौ प्रतिविम्बिते चेतने बुद्धिवृत्तिगृहीतविषयाकाराणां समर्पणम् । तत् = समर्पणम् ( एव ) । फलम् = प्रत्यक्षप्रमाणस्य फलमिति । प्रमा = प्रत्यक्षप्रमा, इति च कथ्यते ( साङ्ख्यैः ) । बोधः = पौरुषेयो बोधोऽपि कथ्यते ।

अन्तःकरणस्वरूपस्य चित्तस्यास्ति अयं स्वभावः यदेतत् इन्द्रियैर्गृहीतान् विषयान् स्वस्वामिने पुरुषस्वरूपाय आत्मने समर्पयतीति भावः । उक्तमपि—

'गृहीतानिन्द्रियैरर्थान् आत्मने यः प्रयच्छति ।
अन्तःकरणरूपाय तस्मै विश्वात्मने नमः' ॥　　( विष्णुपुराणे )

इन्द्रियार्थसन्निकर्षादिना 'अयं घटः' इत्याद्याकारको यो बौद्धो बोधो जायते स प्रमाणम् । तत्पश्चाच्च यो 'घटमहं जानामि' इत्यादिस्वरूपः पौरुषेयो बोधो जायते स प्रमेति भावः ।

( ४ ) अनुग्रहपदार्थं सुस्पष्टयति—**बुद्धितत्त्वमिति** । हि = यतः । प्राकृतत्वात् = जडप्रकृतिकार्यत्वात् । अचेतनम् = स्वयमपि जडः । अतस्तद्धर्मोऽध्यवसायोऽप्यचेतन इत्यर्थः । 'कारणगुणाः कार्यगुणानारभन्ते' इत्यभियुक्तोक्तेः । तत्र दृष्टान्तः—**घटादिवदिति** । यथा घटादयो जडमृत्तिकोपादानकाः साक्षात्परम्पराविकारभूता अचेतना एव दृष्टास्तद्वदेवेत्यर्थः । एवम् = प्रागुक्तयुक्तेः । **बुद्धितत्त्वस्येति** । इत्यस्य 'परिणामभेदाः' इत्यनेनान्वयः । तथा च बुद्धितत्त्वस्य परिणामभेदाः = विकारविशेषाः । सुखादयोऽपि सुख-दुःख-ज्ञानाऽज्ञान-धर्माऽधर्मादयोऽपि अचेतना एवेत्यर्थः ।

कस्तर्हि चेतन इत्यत्राह—**पुरुषस्त्विति** । 'तु'शब्दः पुरुषस्य वैलक्षण्यद्योतकः । सुखाद्यननुषङ्गी = सुख-दुःखादीनामनाधारभूतः, 'असङ्गो ह्ययं पुरुषः' इति श्रुतेः । एतेन नैयायिकाभिमतं सुख-दुःखादीनामात्मधर्मत्वं सर्वथा निराकृतं भवतीत्यपि बोध्यम् । उक्तञ्च—

'निर्वाणमय एवायमात्मा ज्ञानमयोऽमलः ।
दुःखाज्ञानमया धर्माः प्रकृतेस्ते तु नात्मनः' ॥

---

रूप प्रत्यक्षप्रमाण के द्वारा होने वाला जो चेतनाशक्ति = चेतनपुरुष के ऊपर होने वाला जो अनुग्रह अर्थात् बुद्धि में प्रतिविम्बित हुआ जो चेतनपुरुष, उसके लिए बुद्धि-वृत्ति द्वारा गृहीत विषयाकारों का समर्पण कर देना, वही प्रत्यक्षप्रमाण का फल = पौरुषेय बोध है, वही प्रमा है ।

( ४ ) बुद्धितत्त्व जडभूत प्रकृति का परिणाम = विकार होने के कारण स्वयं भी अचेतन ( जड ) है । अतएव उस बुद्धितत्त्व का अध्यवसाय = इदमित्थमेव यह वृत्ति-रूप ज्ञानविशेष भी अचेतन है घट आदि की तरह । इसी प्रकार बुद्धितत्त्व के धर्म

सुखाद्यननुषङ्गी चेतनः। सोऽयं बुद्धितत्त्ववर्त्तिना ज्ञानसुखादिना तत्प्रतिबिम्बितस्तच्छायापत्त्या ज्ञानसुखादिमानिव भवतीति चेतनोऽनुगृह्यते।

( ५ ) चितिच्छायापत्त्याऽचेतनाऽपि बुद्धिस्तदध्यवसायोऽप्यचेतनश्चेतनवद्भवतीति। तथा च वक्ष्यति—

तस्मात् तत्संयोगादचेतनं चेतनावदिव लिङ्गम्।
गुणकर्त्तृत्वेऽपि तथा कर्त्तेव भवत्युदासीनः॥ इति।

---

यदि सुख-दुःखादयः सन्ति चित्तधर्मास्तर्हि 'चेतनोऽहं करोमि, जानामि, सुखी' इति चैतन्यसामानाधिकरण्येन ज्ञान-सुख-दुःखादीनां बोधिकायाः प्रतीतेः सर्वथाऽपलापः स्यादित्यतस्तादृशप्रतीतेः परम्परयाऽऽत्मनि निर्वाहार्थमाह—**सोऽयमिति**। सः अयम्= सुखाद्यनाधारभूतश्चेतनः साङ्ख्यपुरुषः। ज्ञानसुखादिना इत्यस्य 'ज्ञानसुखादिमानिव भवति' इत्यनेनान्वयः। तत्प्रतिबिम्बितः=बुद्धितत्त्वप्रतिबिम्बितः। तच्छायापत्त्या= बुद्धितत्त्वस्य या छाया=अविवेकनिबन्धनस्वस्वरूपता, तस्या आपत्त्या=बुद्धिपुरुषयोरभेदग्रहात्। ज्ञानसुखादिमानिव=न तु वास्तविकज्ञानसुखादिमान्, अत एव 'इव'-शब्दप्रयोगः। इत्थञ्च 'चेतनोऽहं जानामि, सुखी' इति प्रतीतिरविवेकनिबन्धना चेतनांशे भ्रमात्मिकेति मन्तव्यम्।

अनुग्रहमाह—**चेतनोऽनुगृह्यते इति**। सुखदुःखादिस्वधर्मा आत्मने समर्प्य, चेतनः पुरुषः। अनुगृह्यते=अनुग्रहपात्रो विधीयते।

( ५ ) चेतनप्रतिबिम्बाधारतयाऽचेतनाया बुद्धेरपि चैतन्याभिमानमिति दर्शयति—**चितिच्छायापत्त्या इति**। चितिः=चेतनः पुरुषः, तस्य छाया=प्रतिबिम्बः, तस्य आपत्त्या=आश्रयतया। अचेतनापि बुद्धिः। तदध्यवसायोऽपि। चेतनवत्=चेतन इव। तथा च चेतनप्रतिबिम्बसम्बन्धात् स्वां चेतनां मन्यते इत्यर्थः। अत्र प्रमाणं दर्शयति—**तथा चेति**। वक्ष्यति=कथयति। ईश्वरकृष्णः—

**तस्मादिति**। यस्मात् चेतनत्वं पुरुषधर्मः, कर्तृत्वञ्च प्रकृति( बुद्धि )धर्मः, अस्मात् कारणात्। अचेतनम्। लिङ्गम्=जगत्कारणीभूतं बुद्धितत्त्वम्। तत्संयोगात्—

---

सुख-दुःख आदि परिणामविशेष भी अचेतन ही हैं और पुरुष सुख-दुःख आदि अन्तःकरण के धर्मों का अनाधार होने के कारण चेतन है। अतः यह पुरुष बुद्धितत्त्ववर्ती ज्ञानसुखादि द्वारा बुद्धि में प्रतिबिम्बित होता हुआ बुद्धितत्त्व की जो छाया=अविवेकनिबन्धनतादात्म्य है, उसकी आपत्ति से अर्थात् बुद्धि और पुरुष के भेदाग्रह से चेतन पुरुष भी ज्ञानसुखादि धर्म वाले की तरह हो जाता है, यही चेतन पुरुष के ऊपर बुद्धि का अनुग्रह है।

( ५ ) इसी प्रकार चिति=चेतनपुरुष की अविवेकनिबन्धनतादात्म्यरूपछाया-स्वरूपप्रतिबिम्ब की आपत्ति=आधार हो जाने से अचेतन बुद्धि तथा अचेतन उसका अध्यवसाय भी चेतन की तरह हो जाता है। कहेंगे भी—चेतनपुरुष के संयोग से

अत्राऽध्यवसायग्रहणेन संशयं व्यवच्छिनत्ति, संशयस्याऽनवस्थितग्रहणत्वेनानिश्चितरूपत्वात्। निश्चयोऽध्यवसाय इति चानर्थान्तरम्।

( ६ ) विषयग्रहणेन चाऽसद्विषयं विपर्ययमपाकरोति।

---

तस्य=पुरुषस्य, संयोगात्। चेतनावदिव=चेतनवदिव ( भवति )। तथा। गुणकर्तृत्वेऽपि—गुणानां=सत्त्वादित्रिगुणात्मिकाया बुद्धेः, कर्तृत्वेऽपि=जगत्कर्तृत्वेऽपि। तत्संयोगात्—तस्याः=बुद्धेः, संयोगात्। उदासीनः=कर्तृत्वादिरहितः पुरुषः। कर्ता इव। भवतीति शेषः। इति कारिकार्थः।

एवम्—'ज्ञानं नैवात्मनो धर्मो न गुणो वा कथञ्चन।
ज्ञानस्वरूप एवात्मा नित्यः सर्वगतः शिवः॥'

अत्र=प्रतिविषयाध्यवसायत्वमिति प्रत्यक्षलक्षणे। अध्यवसायग्रहणेन=अध्यवसायस्य निश्चयार्थकत्वादध्यवसायशब्देन अनवधारणात्मकाऽनेककोटिकसंशयस्य स्थाणुर्वा पुरुषो वेत्यस्य व्यवच्छेदो जायते। अनवस्थितग्रहणेन=एकधर्मिकनानाधर्मरूपनानाकोटिप्रकाशनेन। अनिश्चितरूपत्वात्=अनवधारणात्मकत्वादित्यर्थः। अनर्थान्तरम्=एकार्थकम्।

( ६ ) प्रतिविषयाध्यवसायत्वमिति प्रत्यक्षलक्षणे विषयपदानुपादाने दोषमाह—**विषयग्रहणेनेति**। असद्विषयम्=नास्ति सन् विषयो यस्य तादृशं मिथ्याज्ञानरूपं विपर्ययम्=विपर्ययात्मिकां वृत्तिम्। अपाकरोति=निराकरोति। तथासति 'प्रति वर्तते अध्यवसाय' एतावन्मात्रं प्रत्यक्षलक्षणमवशिष्यते, तदर्थश्च 'इन्द्रियजन्यज्ञानत्वम्' तस्य च शुक्तौ 'इदं रजतम्' इत्याकारकभ्रमात्मके विपर्ययात्मकवृत्तिरूपे ज्ञानेऽपि सत्त्वेन प्रत्यक्षप्रमालक्षणस्य तत्रातिव्याप्तिः। विषयपदोपादाने तु 'सद्विषयसन्निकृष्टेन्द्रियजन्यनिश्चयत्व'-रूपप्रत्यक्षलक्षणस्य तत्राऽसद्रजतविषयके=शुक्तौ 'इदं रजतमि'ति ज्ञाने नातिव्याप्तिः। रजतस्य तत्राऽसद्विषयत्वात्।

---

अचेतन=जड लिङ्ग=बुद्धि चेतन की तरह हो जाती है। और सत्त्वादि गुणों का कर्तृत्व यद्यपि बुद्धि को प्राप्त है, तथापि बुद्धि के साथ सम्बन्ध हो जाने से उदासीन पुरुष कर्ता की तरह हो जाता है। देखें २०वीं कारिका—

'प्रतिविषयाध्यवसाय' इस प्रत्यक्षप्रमाण लक्षण में 'अध्यवसाय' पद के देने से संशय ज्ञान का व्यवच्छेद=निराकरण किया है, क्योंकि संशयज्ञान अनवधारणात्मक ज्ञान होने के कारण अनिश्चयरूप है और अध्यवसाय निश्चयात्मक ज्ञान है।

( ६ ) और विषयग्रहण से असद्विषय=विषयशून्य मिथ्याज्ञान=विपर्यय=विपर्ययज्ञानरूप वृत्ति का निराकरण किया गया है। क्योंकि शुक्ति में भासमान असत् रजतविषयक 'इदं रजतम्' इस मिथ्याज्ञान में अर्थ( विषय )सन्निकृष्ट इन्द्रियजन्यत्व अथवा अर्थसन्निकृष्ट इन्द्रियजन्यनिश्चयत्व नहीं है, अतः विपर्ययज्ञान की व्यावृत्ति हो गई, उसमें अतिव्याप्ति नहीं हुई।

( ७ ) प्रतिग्रहणेन चेन्द्रियार्थसन्निकर्षसूचनादनुमानस्मृत्यादयश्च पराकृता भवन्ति।

तदेवं समानासमानजातीयव्यवच्छेदकत्वात् 'प्रतिविषयाध्यवसायः' इति दृष्टस्य सम्पूर्णं लक्षणम्। तन्त्रान्तरेषु तैर्थिकानां लक्षणान्तराणि न दूषितानि, विस्तरभयादिति।

( ८ ) नाऽनुमानं प्रमाणम्, इति वदता लौकायतिकेनाऽप्रतिपन्नः सन्दिग्धो विपर्यस्तो वा पुरुषः कथं प्रतिपद्येत ? न च पुरुषान्तरगता अज्ञानसन्देहविप-

---

( ७ ) तत्रैव प्रत्यक्षलक्षणे 'प्रति'पदानुपादाने 'विषयाध्यवसाय'मात्रं लक्षणमवशिष्यते। तस्य चाऽनुमितौ, स्मृतौ शाब्दबोधे च सत्त्वेन भवति तत्र तत्रातिव्याप्तिः। 'प्रति'पदोपादाने च विषयं विषयं प्रति वर्तते इत्यनेन इन्द्रियस्य विषयवृत्तित्वाभिधानात् इन्द्रियार्थयोः सन्निकर्षः सूच्यते। तथा चाऽनुमितौ स्मृतौ शाब्दबोधे च याश्चित्तवृत्तयस्ताः सर्वा अपि, पराकृताः=निराकृताः, भवन्ति, तत्रेन्द्रियार्थयोः सन्निकर्षाभावात्। तदेवोक्तं—'प्रतिग्रहणेन चेन्द्रियार्थसन्निकर्षसूचनादनुमानस्मृत्यादयश्च पराकृता भवन्ति'।

उपसंहरति—**तदेवमिति**। यस्मात् प्रत्यक्षलक्षणघटक-'प्रति' इत्यादिविशेषणपदैरलक्ष्यनिरासो जातस्तस्मादित्यर्थः। समानासमानजातीयव्यवच्छेदकत्वादिति। प्रत्यक्षत्वेन समानजातीयाः संशयादयः, अनुमानत्वादिनाऽसमानजातीया अनुमानस्मृत्यादयश्च, तेषां व्यवच्छेदकत्वात्। दृष्टस्य=प्रत्यक्षप्रमाणस्य। तन्त्रान्तरेषु=न्यायवेदान्तप्रभृतिशास्त्रान्तरेषु। तैर्थिकानाम्=दार्शनिकानाम्, तत्तद्दर्शनशास्त्रनिर्मातॄणां जैमिनि-गोतमप्रभृतिमुनीनां यानि अन्यानि सन्ति प्रत्यक्षलक्षणानि तानि विस्तरभयान्न दूषितानि।

( ८ ) अनुमानाप्रामाण्यवादिनं चार्वाकं शिक्षयति—**नानुमानं प्रमाणमिति**। लौकायतिकेन—लोके आयतं=विस्तीर्णम् अत एव प्रसिद्धं प्रत्यक्षप्रमाणं यत्तल्लोकायतं =प्रत्यक्षप्रमाणमात्रप्रतिपादकं चार्वाकशास्त्रं, तदधीते—वेद यः स लौकायतिकस्तेने-

---

( ७ ) और 'प्रतिपद' से इन्द्रिय और अर्थ का सन्निकर्ष सूचित है, अतः 'प्रति' इस पद के ग्रहण से अनुमान, स्मृति आदि ज्ञान निराकृत हो जाते है, क्योंकि अनुमान, स्मृति आदि ज्ञान के लिए इन्द्रिय और अर्थ ( विषय ) के सन्निकर्ष की आवश्यकता नही है। इस प्रकार समानजातीय ( अनुमान आदि ) असमानजातीय ( मिथ्याज्ञान आदि ) से व्यावर्तक होने के कारण 'प्रतिविषयाध्यवसायः' यह प्रत्यक्षप्रमाण का सम्पूर्ण लक्षण सम्पन्न हो जाता है। तन्त्रान्तरों=बौद्ध-जैन-न्यायप्रभृति दर्शनों में किये गये जो उन-उन आचार्य लोगों द्वारा और दूसरे-दूसरे प्रत्यक्षलक्षण हैं, उनको केवल विस्तार के भय से दूषित=खण्डित नही किया गया है।

( ८ ) अनुमान प्रमाण नही है, ऐसा कहने वाला लौकायतिक=चार्वाक, अप्रतिपन्न=अज्ञानी, संदिग्ध=संशयात्मा=संदेहयुक्त, एवं विपर्यस्त=मिथ्याज्ञानशील

र्येया: शक्या अर्वाग्दृशा प्रत्यक्षेण प्रतिपत्तुम् । नाऽपि प्रमाणान्तरेण, अनभ्युपगमात् । अनवधृताज्ञानसंशयविपर्ययस्तु यं कञ्चन पुरुषं प्रति प्रवर्त्तमानोऽनवधेयवचनतया प्रेक्षावद्भिरुन्मत्तवदुपेक्ष्येत । तदनेनाऽज्ञानादय: परपुरुषवर्त्तिनोऽभिप्रायभेदाद्वचनभेदाद्वा लिङ्गादनुमातव्या:, इत्यकामेनाऽप्यनुमानं प्रमाणमभ्युपेयम् ।

---

त्यर्थ: । अप्रतिपन्न:=अज्ञानयुक्त: । सन्दिग्ध:=संशययुक्त: । विपर्यस्त:—विपर्यय:=भ्रान्तियुक्त: । पुरुष: कथं प्रतिपद्येत=ज्ञायेत ? इत्याशङ्क्याह—**न चेति** । पुरुषान्तर्गता:=परपुरुषवर्तिन: । अर्वाग्दृशा=बाह्यदृष्टिशालिना, बाह्यस्थूलपदार्थविषयकज्ञानशालिना चार्वाकेणेत्यर्थ: । प्रतिपत्तुम्=ज्ञातुम् । पुरुषान्तरगतधर्माणां चक्षुरादीन्द्रियादिना सन्निकर्षासम्भवात् इति भाव: । योगिनोऽतिरिक्ता नहि केऽपि जना: परपुरुषवर्तिनोऽज्ञानादीन् ज्ञातुं शक्नुवन्ति शक्ष्यन्ति वेति भाव: ।

ननु माभूत् प्रत्यक्षेण परपुरुषवर्तिनामज्ञानादीनां ज्ञानं परपुरुषवचनात्तु भविष्यति, तदपि निषेधति—**नापि प्रमाणान्तरेणेति** । अनभ्युपगमात्=प्रत्यक्षातिरिक्तस्य प्रमाणादेश्चार्वाकेणाऽस्वीकारात् इति ।

परपुरुषवर्तिनोऽज्ञानादीनज्ञात्वा यदि चार्वाक: परपुरुषं बोधयितुं किमपि वचनं प्रयुङ्क्ते तदा स उन्मत्तवदुपहसनीय: स्यादित्याह—**अनवधृताज्ञानेति** । अनवधृता:=अज्ञाता:, परपुरुषवर्तिनोऽज्ञानसंशयविपर्यया येन एवम्भूतश्चार्वाक: । यं कञ्चन पुरुषं प्रति प्रवर्तमान:=वाक्यप्रयोगं प्रकुर्वाण: । अनवधेयवचनतया—अनवधेयम्=अग्राह्यं, वचनं यस्य स तस्य भावस्तया=अश्रद्धेयवाक्यतया=अग्राह्यवचनतयेत्यर्थ: । प्रेक्षावद्भि: । उन्मत्तवत् । उपेक्ष्येत=परित्यज्येत ।

नन्वेतावता प्रबन्धेनाऽनुमानप्रमाणस्वीकारे का वाचोयुक्तिलिङ्गमित्यत्राह—**तदनेनेति** । तत्=तस्माद्धेतो:, अर्थात् यस्मात्कारणान्न प्रत्यक्षप्रमाणग्राह्या: सन्ति परकीयाऽज्ञानादय इति हेतोरित्यर्थ: । अनेन=चार्वाकेण । अभिप्रायभेदात्=वक्तृतात्पर्यविशेषात् । वचनभेदात्=वाक्यविशेषात् । लिङ्गात्=हेतुना । अनुमातव्या: । अनुमानप्रयोगश्च—'अयम् ईदृशाऽभिप्रायवान् ईदृशवाक्यप्रयोक्तृत्वात् सम्प्रतिपन्नवत्'

---

पुरुष को कैसे जान पायेगा ? क्योंकि दूसरे पुरुषों के अन्दर रहने वाले अज्ञान, सन्देह तथा मिथ्याज्ञान आदि ज्ञान स्थूलदृष्टि वाले मनुष्यों के द्वारा केवल प्रत्यक्षप्रमाण से नहीं जाने जा सकते हैं और न किसी अन्य प्रमाण से ही; क्योंकि प्रत्यक्षप्रमाण से अतिरिक्त अन्य प्रमाण चार्वाक के यहाँ सर्वथा अमान्य है । इस प्रकार चार्वाक किसी दूसरे पुरुष के अज्ञान, सन्देह तथा मिथ्याज्ञान का निश्चय किये बिना यदि किसी भी पुरुष के प्रति प्रवृत्तिशील बनता है तो अनवधेय ( अग्राह्य ) वचन वाला होने के कारण उस चार्वाक की बुद्धिमान् लोग पागल की तरह उपेक्षा कर देते हैं । इसलिए चार्वाक को परपुरुषवर्ती अज्ञान, सन्देह आदि को परपुरुष के अभिप्राय-विशेष अथवा वचनविशेषरूप लिङ्ग के द्वारा अनुमानप्रमाण से ही जानना होगा । अत: चार्वाक को

( ९ ) तत्र प्रत्यक्षकार्यत्वादनुमानं प्रत्यक्षानन्तरं लक्षणीयम्। तत्राऽपि सामान्यलक्षणपूर्वकत्वाद्विशेषलक्षणस्येत्यनुमानसामान्यं तावल्लक्षयति—'तल्लिङ्गलिङ्गिपूर्वकम्' इति। लिङ्गम्—व्याप्यम्। लिङ्गि—व्यापकम्। शङ्कितसमारोपितोपाधिनिराकरणेन वस्तुस्वभावप्रतिबद्धं व्याप्यम्, येन च प्रतिबद्धं तद्व्यापकम्।

---

अनेनाऽनुमानेन परकीयपुरुषस्य तात्पर्यविशेषमनुमाय अयं पुरुषः एतद्विषयाऽज्ञानादिमान् एतादृशाऽभिप्रायवत्त्वात् यन्नैवं तन्नैवमित्येवमज्ञानादीनामनुमानं विधेयम्। एवमेवाग्रेऽपि।

( ९ ) इदानीमनुमानप्रामाण्यं व्यवस्थाप्य तस्य ( अनुमानस्य ) प्रत्यक्षानन्तरं निरूपणीयत्वे कारणं प्रदर्शयति—**तत्र प्रत्यक्षकार्यत्वादिति**। तत्र=युक्तियुक्तत्वेनाऽनुमानप्रमाणस्याऽवश्याऽभ्युपेयत्वे सतीत्यर्थः। प्रत्यक्षकार्यत्वात्=प्रत्यक्षोपजीवकत्वात्। तत्रापि=लक्षणद्वाराऽनुमाने निरूपणीये सत्यपीत्यर्थः। विशेषलक्षणस्य=विशेषलक्षणज्ञानस्य। सामान्यलक्षणपूर्वकत्वात्=सामान्यलक्षणज्ञानपूर्वकत्वात्। सामान्यज्ञानं विशेषज्ञाने हेतुरिति नियमात्। अनुमानसामान्यस्य लक्षणमाह—**तल्लिङ्गलिङ्गिपूर्वकमिति**। लिङ्ग्यते=गम्यते=ज्ञायतेऽप्रत्यक्षोऽर्थोऽनेनेति लिङ्गं हेतुः। तस्य पर्यायमाह—**व्याप्यमिति**। एतेन असल्लिङ्गस्य व्यावृत्तिर्विहिता। लिङ्गं साधकमस्ति यस्य तल्लिङ्गि=साध्यम्। व्याप्यं परिष्कृत्य तन्निर्वक्ति—**शङ्कितसमारोपितेति**। शङ्कितः=शङ्काविषयत्वेन सन्दिग्धः, समारोपितः=सम्यगारोपितत्वेन निश्चितः। अत्र 'शङ्कितसमारोपितोपाधिनिराकरणेन' इति पदेन व्याप्तौ अनौपाधिकत्वं सूचितं भवति। 'वस्तुस्वभावप्रतिबद्धम्' इत्यनेन च व्याप्तौ स्वाभाविकसम्बन्धत्वं दर्शितं भवति। एतावता प्रबन्धेन सन्दिग्धः, निश्चितश्चेति द्विविध उपाधिः सूचितो भवति। अयञ्चोपाधिर्हेतुदोष इति सर्वैः स्वीक्रियते। एतस्योपाधेर्निराकरणेनैव अर्थाद् द्विविधोपाधिराहित्येनैव हेतुः सद्धेतुर्भवति। यथा वह्निमान् धूमादित्यत्र धूमो हेतुः।

---

अनुमानप्रमाण की इच्छा न रहते हुए भी अनुमानप्रमाण मानना ही होगा। अतः अनुमान का अङ्गीकार नितान्त आवश्यक है।

( ९ ) और अनुमानप्रमाण प्रत्यक्ष का कार्य है, इसलिए प्रत्यक्षप्रमाण के अनन्तर ही अनुमानप्रमाण का लक्षण करना चाहिए, उसमें भी सामान्यलक्षणपूर्वक होता है विशेषलक्षण। अतः अनुमान-सामान्य का लक्षण करते है—'तल्लिङ्गलिङ्गिपूर्वकम्'। लिङ्ग व्याप्य होता है और लिङ्गी व्यापक को कहते है। शङ्कितोपाधि ( संदिग्धोपाधि ) तथा समारोपितोपाधि ( निश्चितोपाधि ) दोनों उपाधियों के निराकरणपूर्वक जो वस्तु के स्वभाव से प्रतिबद्ध होता है, वह व्याप्य कहलाता है—जैसे धूमात्मक वस्तु का वह्नि के साथ अविनाभावनियमरूप जो स्वभाव है अर्थात् वह्नि के बिना धूम का न रहना, अथवा धूम के साथ वह्नि का नियम से रहना यह 'साहचर्य-नियम' रूप जो स्वभाव है, उस स्वभाव से विशिष्ट 'व्याप्य' कहलाता है और जिसके

( १० ) लिङ्गलिङ्गिग्रहणेन च विषयवाचिना विषयिणं प्रत्ययमुपलक्षयति । 'धूमादिर्व्याप्यो वह्न्यादिर्व्यापकः' इति यः प्रत्ययस्तत्पूर्वकम् । लिङ्गिग्रहणं चाऽऽवर्तनीयम् । तेन लिङ्गमस्याऽस्तीति पक्षधर्मताज्ञानमपि दर्शितं

---

अत एव धूमो हेतुर्वह्नेर्व्याप्य इति गीयते । साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधिः । धूमहेतौ वह्निरूपसाध्यव्यापकत्वं नास्ति, अत एव स सद्धेतुः । व्याप्तिपक्षधर्मताविशिष्टो हेतुः सद्धेतुः ।

व्याप्यं निरूप्य व्यापकं निरूपयति—**येन चेति**। येन=वह्न्यादिना सह । प्रतिवद्धम्=अविनाभूतसम्वन्धावच्छिन्नं धूमादिकं भवति । तद्=वह्न्यादिकम् । व्यापकम् ।



( १० ) लिङ्गलिङ्गिनोरनुमित्यहेतुत्वात् लिङ्गलिङ्गिपदेनाऽनुमितिकारणीभूतं तज्ज्ञानं ग्राह्यमित्येव दर्शयति—**लिङ्गलिङ्गिग्रहणेन चेति** । विषयवाचिना=विपयो हेतुः साध्यञ्च, तद्वाचिना=तद्वोधकेन । लिङ्गलिङ्गिग्रहणेन—गृह्यते=ज्ञायतेऽनेनेति ग्रहणं शव्दस्तथा च लिङ्गलिङ्गिशव्देनेत्यर्थः फलितः । विषयिणम्=लिङ्गलिङ्गिविपयिणं, लिङ्गलिङ्गिविषयकमित्यर्थः । प्रत्ययम्=ज्ञानम् । उपलक्षयति=वोधयति । 'कारिकाकृत्' इति शेपः । तथा च फलितार्थमाह—**धूमादिर्व्याप्य इति** । अर्थात् धूमादिर्व्याप्यः वह्न्यादिश्च व्यापकः, एवंविधो यः प्रत्ययः=ज्ञानं=धूमवह्न्योर्व्याप्यव्यापकभावज्ञानम्, तयोर्व्याप्तिज्ञानमित्यर्थः । तत्पूर्वकम्=धूमवह्न्योर्व्याप्तिज्ञानपूर्वकम् । कारिकायां लिङ्गलिङ्गिनोर्ज्ञेयत्वेन निर्देशः केवलं ज्ञानज्ञेययोरविनाभावसम्वन्धप्रदर्शनप्रयुक्त एवेति विज्ञेयम् ।

ननु हेतोः पक्षवृत्तित्वज्ञानं विना कथमनुमितिः स्यादतस्तल्लाभायाह—**लिङ्गिग्रहणञ्चेति** । आवर्तनीयम्=द्विवारं पठनीयम् । लिङ्गि च लिङ्गि च ते लिङ्गिनी,

---

साथ ( वह्नि आदि के साथ ) धूमादि प्रतिवद्ध रहता है, वह 'यत्'-पदग्राह्य वह्नि आदि व्यापक है ।

( १० ) हेतु और साध्य के वोधक जो लिङ्गलिङ्गि शव्द हैं, उससे लिङ्गलिङ्गिविपयकज्ञानरूप अर्थ उपलक्षणविधि से कहा जाता है । अर्थात् धूमादि व्याप्य है और वह्न्यादि व्यापक है । यह जो धूम और वह्नि में व्याप्यव्यापकभाव ( व्याप्ति ) का ज्ञान होता है, तत्पूर्वक ही अर्थात् व्याप्यव्यापकभावरूप व्याप्तिज्ञानपूर्वक ही फिर उससे अनुमिति होती है ।

प्रश्न—केवल व्याप्तिज्ञान से तो अनुमिति होगी नहीं, जव तक कि पक्षधर्मता का ज्ञान न होगा ?

उत्तर—इसी दृष्टिकोण से वाचस्पतिमिश्र ने कहा है—'लिङ्गिग्रहणञ्चाऽऽवर्तनीयम्' । अर्थात् 'लिङ्गि' शव्द की दूसरी आवृत्ति और कर देनी चाहिए; द्विरावृत्त लिङ्गि शव्द से 'लिङ्गलिङ्गिलिङ्गिपूर्वकम्' यह अर्थ निकल जाता है । उसमें दूसरे लिङ्गि शव्द से 'लिङ्गमस्यास्तीति' यौगिक व्युत्पत्ति के आधार पर पक्षवृत्तित्व ज्ञानरूप

भवति। तद् 'व्याप्यव्यापकभावपक्षधर्मताज्ञानपूर्वकमनुमानम्' इत्यनुमानसामान्यं लक्षितम्।

( ११ ) अनुमानविशेषान् तन्त्रान्तरलक्षितान् अभिमतान् स्मारयति—'त्रिविधमनुमानमाख्यातम्' इति तत् सामान्यतो लक्षितमनुमानं विशेषतस्त्रिविधम्—पूर्ववत्, शेषवत्, सामान्यतोदृष्टञ्चेति।

---

लिङ्गञ्च लिङ्गिनी च तानि लिङ्गलिङ्गीनि, तत्पूर्वकम्। एवञ्च लिङ्गलिङ्गिलिङ्गिज्ञानपूर्वकत्वमित्यर्थो लभ्यते। आवृत्तद्वितीयलिङ्गिपदार्थमाह—लिङ्गमस्यास्तीति। लिङ्गं=हेतुः, सोऽस्ति धर्मः, अस्य=पक्षस्य, तथा च पक्षधर्मता इत्यर्थो लब्धो भवति। अत्रापि पक्षधर्मतेत्यस्य पक्षधर्मताज्ञानमित्यर्थो बोद्धव्यः। निर्गलितार्थमाह—व्याप्यव्यापकभावज्ञानपूर्वकत्वे सति अर्थात् व्याप्तिज्ञानपूर्वकत्वे सति पक्षधर्मता-( पक्षवृत्तिता )ज्ञानपूर्वकज्ञानत्वं ( चित्तवृत्तित्वम् ) अनुमानत्वम् इत्यनुमानसामान्यं लक्षितम्।

( ११ ) 'त्रिविधमनुमानमाख्यातमि'ति पद्याशयं पूरयति—**अनुमानविशेषानिति**। तन्त्रान्तरलक्षितान्—तन्त्रान्तरेषु=न्यायप्रभृतिदर्शनेषु—'अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववत् शेषवत् सामान्यतोदृष्टञ्च' ( न्या० भा० १।१।५ ) इत्येवं त्रैविध्यं लक्षितम्।

---

पक्षधर्मता-ज्ञानरूप अर्थ को भी ले लेना चाहिए। इससे यह फलित अर्थ सम्पन्न हुआ कि—व्याप्य-व्यापकभावज्ञानपुरःसर जो व्याप्य के पक्ष में रहने का ज्ञान=पक्षवृत्तित्वज्ञान, तत्पूर्वक अर्थात् तत्कारणक जो चित्तवृत्तिरूप ज्ञान, उसे सांख्य ने अनुमान माना है, यही अनुमानसामान्य का लक्षण है, अर्थात् 'लिङ्गलिङ्गिलिङ्गिज्ञानजन्यज्ञानत्वम्' यह अनुमानसामान्य का लक्षण है।

( ११ ) जो अनुमान विशेष तन्त्रान्तर=न्यायशास्त्र ( १।१।५ सूत्र ) में लक्षित हो चुके है, और वे सांख्य को भी अभिमत हैं, अतः सांख्य को उनका स्मरण दिलाना उचित समझते हुए उनका उन्हें स्मरण दिला रहे है—'त्रिविधमनुमानमाख्यातम्' से। अर्थात् जिस सामान्यानुमान का लक्षण अभी कहा है, वह विशेपरूप से तीन प्रकार का है—पूर्ववत्, शेपवत् और सामान्यतोदृष्ट। कार्य के पूर्व में कारण होता है, अतः कारण से जहाँ कार्य का अनुमान हो, वह कारणलिङ्गक अनुमान 'पूर्ववत्' अनुमान कहलाता है। और कार्य से जहाँ कारण का अनुमान हो, वह कार्यलिङ्गक अनुमान 'शेषवत्' अनुमान कहलाता है, क्योंकि कारण सामग्री जुट जाने के वाद शेप=अन्तिम में कार्य होता है, अतः 'शेप' नाम है कार्य का। 'सामान्यतोदृष्ट' वह अनुमान है जो सामान्यतः=कार्यकारण से भिन्न किसी भी लिङ्ग से दृष्ट=अन्यत्र कहीं भी दृष्ट किसी विपय का अन्यत्र कहीं अनुमान किया जाय। जैसे वैशेपिकमत में—'पटो द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वात् मठवत्'। यहाँ द्रव्यत्व और विशिष्ट सत्ता दोनों जाति होने के कारण नित्य हैं। यहाँ विशिष्ट सत्तारूप हेतु द्रव्यत्व का न तो कार्य है और न कारण ही, अतः कार्य-कारण से भिन्न विशिष्ट सत्तारूप लिङ्ग

तत्र प्रथमं तावद् द्विविधम्—वीतमवीतं च। अन्वयमुखेन प्रवर्त्तमानं विधायकं वीतम्। व्यतिरेकमुखेन प्रवर्तमानं निषेधकमवीतम्।

तत्राऽवीतं शेषवत्। शिष्यते परिशिष्यते इति शेषः, स एव विषयतया यस्याऽस्त्यनुमानज्ञानस्य तच्छेषवत्। यदाहुः—'प्रसक्तप्रतिषेधे अन्यत्राऽप्रसङ्गात्

---

अवान्तरभेदमाह—**तत्रेति**। तत्र = पूर्ववदादिभेदेनाऽनुमानस्य त्रैविध्ये सत्यपि। प्रथमं = पूर्वम्—आदौ खलु तदनुमानं द्विविधम्। ततश्च द्विविधमध्ये एकं वीतं पूर्ववत् सामान्यतोदृष्टभेदेन द्विविधम्। अपरञ्चैकम् एकविधमेव (शेषवदिति) त्रिविधं विज्ञेयम्। तदेव स्पष्टीक्रियते—'**वीतमवीतं च**' इत्यादिना।

वीतं—वि = विशेषेण, इतं = ज्ञातं = प्रसिद्धमन्वयव्याप्तिहेतुकमित्यर्थः। तदेव दर्शयति—'**अन्वयमुखेने**'ति। तत्सत्त्वे तत्सत्त्वमित्यन्वयमुखेनेत्यर्थः। तथा च साध्य-सामानाधिकरण्यरूपाऽन्वयव्याप्तिज्ञानप्रधानतया 'यो यो धूमवान् स स वह्निमान्' इत्येवंरूपेणेत्यर्थः। प्रवर्तमानम् = जायमानम्। विधायकम् = विधेयस्य साध्यस्य वह्न्यादे साधकम्। (अनुमानं) वीतम्।

अवीतं निरूपयति—**व्यतिरेकमुखेनेति**। 'तदसत्त्वे तदसत्त्वम्' इति व्यतिरेकसह-चारमुखेनेत्यर्थः। साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिज्ञानप्रधान-तया यत्र जलादौ इतरभेदाभावस्तत्र गन्धाभाव इत्येवंरूपेणेति यावत्। प्रवर्तमानम्। पृथिव्यां गन्धाभावरूपव्यापकस्य निवृत्त्या तद्व्याप्यपृथिवीभेदस्य निषेधकं यत् पृथिवी इतरभेदवती गन्धवत्त्वात् इत्याद्यनुमानं तदेव अवीताऽनुमानम् इति भावः।

वीताऽवीतप्रभेदेनाऽनुमानद्वैविध्यं प्रदर्श्य तदवान्तरभेदपुरःसरमनुमानस्य त्रैविध्यं निरूपयितुमिदानीं सूचीकटाहन्यायेनादाववीतानुमानं दर्शयति—'**तत्रावीतं शेषवत्**' इति। तत्र = वीताऽवीतयोर्मध्ये। अवीतम्। शेषवत् = शेषवत्संज्ञकम्। 'शेषवत्' इत्यस्य व्युत्पत्तिं दर्शयति—**शिष्यते इति**। शेषोऽस्त्यस्येति शेषवत्, शेषवत् इत्यस्यैव नामान्तरमस्ति परिशेष इति। इत्यत्र न्यायभाष्यसम्मतिमाह—'**यदाहुः—प्रसक्तप्रति-षेधे**' इति। विश्वनाथपञ्चाननेनेदमित्थमुदाहृतम्—'शब्दो द्रव्यसमवेतो गुणत्वात्

---

= हेतु से अन्यत्र मठ में दृष्ट द्रव्यत्वरूप वस्तु का पट में जो अनुमान करना है, यही 'सामान्यतोदृष्ट' अनुमान है।

और यह प्रथम = पूर्ववत् अनुमान संक्षेप से दो प्रकार का है—वीत और अवीत। उनमें अन्वयव्याप्तिज्ञानरूप कारण के आधार पर विधायक = विधेय = साध्य के साधन में प्रवर्तमान अनुमान 'वीत' अनुमान है। इसी 'वीत' अनुमान में पूर्ववत् तथा सामान्यतोदृष्ट इन दोनों का अन्तर्भाव है।

और व्यतिरेकव्याप्तिज्ञानरूप कारण के आधार पर साध्य के साधन में प्रवृत्ति-शील अनुमान 'अवीत' अनुमान कहलाता है। इनमें 'अवीत' अनुमान 'शेषवत्' अनु-मान कहलाता है। शेष वह है जो परिशेष = बाकी रह जाये। और वह शेष जिस अनुमान ज्ञान का विषय हो, वह 'शेषवत्' अनुमान कहलाता है। इसमें न्यायसूत्र

शिष्यमाणे सम्प्रत्ययः परिशेषः'। इति ( न्यायभाष्यम् १।१।५ )। अस्य चाऽवीतस्य व्यतिरेकिण उदाहरणमग्रेऽभिधास्यते।

( १२ ) वीतं द्वेधा—पूर्ववत्, सामान्यतोदृष्टं च। तत्रैकं दृष्टस्वलक्षणसामान्यविषयं यत् तत्पूर्ववत्, पूर्वं प्रसिद्धं दृष्टस्वलक्षणसामान्यमिति यावत्।

---

संयोगवत्' इत्यनुमानेन शब्दस्य द्रव्यसमवेतत्वं सिद्धयति, अर्थात् शब्दः कस्मिंश्चिद् द्रव्ये समवायसम्बन्धेन वर्तते। 'शब्दो न स्पर्शवद्विशेषगुणः' 'शब्दो न दिक्कालमनसां गुणः' 'शब्दो नात्मविशेषगुणः' इत्याद्यनुमानैरितरेषां द्रव्याणां शब्दाश्रयत्वं निराकुर्वन् पारिशेष्यात् शब्दाधिकरणं नवमं द्रव्यं गगनं सिद्धयति। तथा च शब्दाश्रयत्वेन प्रसक्तानां पृथिव्यादीनां दिक्कालादीनाञ्च तदाश्रयत्वप्रतिषेधे, अन्यत्र गुणादावप्रसङ्गाच्छिष्यमाणे आकाशे यः सम्प्रत्ययः शब्दोऽष्टद्रव्यातिरिक्तद्रव्याश्रितोऽष्टद्रव्यागुणत्वे सति गुणत्वाद्रूपवत् इति यत् केवलव्यतिरेक्यनुमानं स परिशेषः।

अस्य=शेषवदनुमानात्मकस्य। अवीतस्य=अवीतानुमानस्य। व्यतिरेकिणः=केवलव्यतिरेकिणः। उदाहरणम्। अग्रे=असदकरणादित्यादि नवमकारिकायां 'न पटस्तन्तुभ्यो भिद्यते तद्धर्मत्वात्; इह यद् यतो भिद्यते तत् तस्य धर्मो न भवति; यथा—गौरश्वस्य, धर्मश्च पटस्तन्तूनां, तस्मान्नार्थान्तरमि'त्यादिकम्। अभिधास्यते=वक्ष्यते।

( १२ ) इदानीमवीतं निरूप्य वीतं विभजते—'वीतं च द्वेधा' इति। तत्रापि 'पूर्ववत्' वीतानुमानं स्पष्टयति—तत्रैकमिति। तत्र=पूर्ववत्—सामान्यतोदृष्टयोर्वीतानुमानयोर्मध्ये। एकम्=पूर्ववन्नामकं वीतम्। यत्=वीतम्। दृष्टस्वलक्षणसामान्यविषयम्—दृष्टं=पूर्वं महानसादौ प्रत्यक्षीकृतं, स्वं=स्वात्मकं=वह्निस्वरूपं=तत्तदवयवसन्निवेशविशेषालिङ्गिततत्तद्व्यक्तिरूपं, लक्षणं=रूपं=स्वरूपं यस्य वह्नित्वसामान्यस्य, तद् वह्नित्वसामान्यं—दृष्टस्वलक्षणसामान्यम्, तादृशमेव च सामान्यं

---

स्वयं प्रमाण है—परिशेष=शेषवत् अनुमान उसे कहते है, जिस अनुमान में संशयविपयीभूतपदार्थ का प्रतिषेध हो जाये और अन्यत्र कहीं प्रसक्ति न हो; इसके बाद शिष्यमाण=बचे हुए पदार्थ में जो सम्प्रत्यय=अनुमानात्मक ज्ञान है, वही परिशेष=शेषवत्=अवीत अनुमान है। जैसे न्यायमत में—'शब्द अष्ट द्रव्यों से अतिरिक्त जो द्रव्य उसके आश्रित है, अष्ट द्रव्यों के अनाश्रित होते हुए गुण होने से, जहाँ हेतु नहीं वहाँ साध्य भी नहीं; जैसे गन्धादि में। इस 'अवीत' नामक व्यतिरेकी अनुमान का उदाहरण आगे कहा जायेगा।

( १२ ) वीत अनुमान दो प्रकार का है—पूर्ववत् और सामान्यतोदृष्ट। उनमें एक पूर्ववत्=वीत अनुमान वह है, जो दृष्ट-स्वलक्षणसामान्यविषय है। अर्थात् दृष्ट=प्रत्यक्ष किया जा चुका है, स्वलक्षण=स्व-स्वरूप=अवयवसंस्थान, आदि अपना स्वरूप जिस सामान्य का, और वह सामान्य ( स्वाश्रय सहित ) विषय है

तदस्य विषयत्वेनाऽस्त्यनुमानज्ञानस्येति पूर्ववत्। यथा धूमाद्वह्नित्वसामान्यविशेषः पर्वतेऽनुमीयते, तस्य च वह्नित्वसामान्यविशेषस्य स्वलक्षणं वह्निविशेषो दृष्टो रसवत्याम्।

अपरं च वीतं सामान्यतोदृष्टम् अदृष्टस्वलक्षणसामान्यविषयम्। यथेन्द्रियविषयकमनुमानम्। अत्र हि रूपादिविज्ञानानां क्रियात्वेन करणवत्त्वमनुमीयते।

---

विषयोऽस्ति यस्यानुमानस्य, तत्=अनुमानम्। पूर्ववत्=पूर्ववन्नामकं 'वीतं' कथ्यते। ननु 'पूर्ववत्' इत्यल्पीयसा पदेन 'दृष्टस्वलक्षणसामान्यविषयम्' इत्येतादृशस्य महतोऽर्थस्य कुतो लाभ इत्युच्यते चेत्तदाऽप्याह—व्युत्पत्त्या इति जानीहि—**पूर्वमित्यादिना**। पूर्वमित्यस्य पर्यायः 'प्रसिद्धम्', प्रसिद्धपदस्य चार्थो दृष्टस्वलक्षणसामान्यमिति। 'पूर्ववत्' इत्यत्र 'वत्' इति मतुबर्थः=विषयतया=विषयतासम्बन्धेन, तदधिकरणमिति दर्शयति—**तदस्येति**। तद्=दृष्टस्वलक्षणसामान्यम्। अस्ति, विषयत्वेन=विषयतासम्बन्धेन, अस्य=अनुमानज्ञानस्य, अधिकरणम् इति शेषः। अर्थाद् दृष्टस्वलक्षणसामान्यविषयकं यज्ज्ञानं तत् पूर्ववदनुमानम्।

तदिदमुदाहरणद्वारा दर्शयति—**यथा धूमादिति**। धूमात्=धूमेन हेतुना। वह्नित्वसामान्यविशेषः—वह्नित्वसामान्यस्य ( जातेः ), विशेषः=वह्निरूपोऽर्थः। पर्वते=पक्षे। अनुमीयते=अनुमितिप्रमाविषयीक्रियते। दृष्टस्वलक्षणसामान्यं समन्वयति—**तस्य चेति**। वह्नित्वसामान्यविशेषस्य=सामान्यविशेषात्मकवह्नित्वरूपजातेः। दृष्टः=प्रत्यक्षीकृतः। रसवत्याम्=पाकशालायाम्।

सामान्यतोदृष्टं वीतं निरूपयति—**अपरञ्चेति**। अदृष्टस्वलक्षणसामान्यविषयम्=न दृष्टं स्वलक्षणं यस्य सामान्यस्य तत् अदृष्टस्वलक्षणसामान्यं, तदेव विषयोऽस्ति यस्यानुमानस्य, तत्=अदृष्टस्वलक्षणसामान्यविषयम् इत्यर्थः। अप्रत्यक्षीकृतजातीयसाधकमनुमानं सामान्यतोदृष्टमनुमानमिति तु सुगमो मार्गः। उदाहरति—**यथेन्द्रियेति**। एतदेवोपपाद्यते—**अत्र हीति**। अत्र=इन्द्रियसाधकानुमाने। अनुमानप्रयोगमाह—**रूपादिविज्ञानानामिति**। 'रूपादिज्ञानानि करणवन्ति क्रियात्वात् छिदिक्रियावत्' इति करणात्मकेन्द्रियसाधकमनुमानं सामान्यतोदृष्टमनुमानम्।

---

जिस अनुमान का, वह अनुमान पूर्ववत् अनुमान कहलाता है। जैसे 'पर्वतो वह्निमान् धूमात्' यहाँ पर धूम से वह्नित्वरूप जो सामान्य=जाति उस जातिस्वरूप विशेषधर्मवह्नित्वावच्छिन्न वह्नि का जो पर्वत में अनुमान, वह पूर्ववत्=वीत अनुमान है। उस वह्नित्वसामान्यविशेष का स्वलक्षण वह्निविशेष का रसोईघर में प्रत्यक्ष हो चुका है।

और दूसरा वीत अनुमान है—सामान्यतोदृष्ट। उसका लक्षण है—'अदृष्टस्वलक्षण सामान्यविषय'; जैसे इन्द्रियविषयक अनुमान—रूप, रस आदि के होने वाले ज्ञान, करण वाले ज्ञान करण वाले हैं, क्रिया होने से ( क्योंकि ज्ञान क्रिया है ) और जो क्रिया होती है उसका अवश्य कोई करण होता है।

( १३ ) यद्यपि करणत्वसामान्यस्य छिदादौ वास्यादि स्वलक्षणमुपलब्धम्, तथाऽपि यज्जातीयस्य रूपादिज्ञाने करणत्वमनुमीयते तज्जातीयस्य करणस्य न दृष्टं स्वलक्षणं प्रत्यक्षेण, इन्द्रियजातीयं हि तत्करणम्। न चेन्द्रियत्व-सामान्यस्य स्वलक्षणमिन्द्रियविशेषः प्रत्यक्षगोचरोऽर्वाग्दृशाम्, यथा वह्नित्व-सामान्यस्य स्वलक्षणं वह्निः। सोऽयं पूर्ववतः सामान्यतोदृष्टात् सत्यपि

---

( १३ ) नन्वस्मिन्नप्यनुमाने छेदनक्रियाया स्वलक्षणं कुठारादिरूपं करणं दृष्टमेव तर्हि कथमस्यानुमानस्याऽदृष्टस्वलक्षणसामान्यविषयत्वमुच्यते ? इत्याशङ्कते—**यद्यपीति**। करणत्वसामान्यस्य = इन्द्रियकुठारादिसाधारणकरणत्वात्मकधर्मस्य। छिदादौ = छेदन-क्रियायाम्। वास्यादि = कुठारादि। स्वलक्षणम् = विशेषकरणम्। ( छेदनक्रियां प्रति ) उपलब्धम् = दृष्टमेव। तथा च सामान्यतोदृष्टस्याप्यनुमानस्य पूर्ववतोऽनुमाना-न्नास्ति कोऽपि विशेषः, द्वयोरेव दृष्टस्वलक्षणसामान्यविषयत्वात्। समाधत्ते—**तथा-पीति**। रूपादिज्ञाने = रूपादिविषयकप्रत्यक्षे। यज्जातीयस्य = यज्जात्यवच्छिन्नस्य = इन्द्रियत्वावच्छिन्नस्य। करणत्वम् = इन्द्रियत्वविशिष्टकरणत्वम्। अनुमीयते। तज्जातीयस्य = तज्जात्यवच्छिन्नस्य, करणस्य = इन्द्रियत्वावच्छिन्नस्य, इन्द्रियस्य। स्वलक्षणम् = स्वरूपम् = इन्द्रियविशेषः। प्रत्यक्षेण = प्रत्यक्षप्रमाणेन। न दृष्टमिति भावः।

किं जातीयं तत्करणं यन्न प्रत्यक्षम् ? इत्यत्राह—**इन्द्रियजातीयमिति**। इन्द्रिय-त्वजातिमत्। तत्करणम् = रूपादिज्ञाने करणम्। यथा रूपादिज्ञाने चक्षुरिन्द्रियं करणम्, रसज्ञाने रसना, गन्धज्ञाने घ्राणम्, स्पर्शज्ञाने त्वगिन्द्रियम्, एवं—शब्दज्ञाने श्रोत्रम्, इत्येवंरूपेण तत्तद्विषयेषु इन्द्रियत्वावच्छिन्नस्य करणत्वं बोध्यम्। अस्तु, इन्द्रियं करणं प्रकृते किमायातम् ? तेनेत्यत्राह—**न चेन्द्रियत्वसामान्यस्येति**। इन्द्रियत्वविशिष्टकरणत्व-सामान्यस्य। अर्वाग्दृशाम् = स्थूलबुद्धीनाम्। न च। प्रत्यक्षगोचरः = प्रत्यक्षप्रमाणजन्य-ज्ञानविषयः। तथा च सिद्धमिन्द्रियस्यादृष्टत्वम्। व्यतिरेकिदृष्टान्तमाह—**यथेति**। यथा

---

( १३ ) यद्यपि छेदन आदि क्रियास्थल में करणत्व सामान्य के स्वलक्षण = स्व-स्वरूप = कुठारादि का सहचार दर्शनकाल में प्रत्यक्ष ही होता है। तथापि रूपादि-विषयक प्रत्यक्षात्मक ज्ञान में यज्जातीयस्य = इन्द्रियत्वावच्छिन्न की करणवत्ता का अनुमान होता है, अर्थात् रूपादिविषयक प्रत्यक्षात्मक ज्ञान चक्षुरादि इन्द्रियरूप करण से उत्पन्न होता है, इसलिए रूपादि ज्ञान मे यज्जातीय = इन्द्रियत्वावच्छिन्न की करण-वत्ता का अनुमान हम करते है। तज्जातीय = उस इन्द्रियत्व जाति वाले इन्द्रियरूप करण का स्वलक्षण = अपना स्वरूप प्रत्यक्षप्रमाण से दृष्ट नही है, क्योंकि वह निरव-यव तथा अतीन्द्रिय है। इन्द्रियत्व जाति वाली इन्द्रिय ही रूपादि ज्ञान की करण है, और वह इन्द्रिय विशेष का स्वरूप कुठार आदि के समान स्थूल दृष्टि वाले लोगों को प्रत्यक्षगोचर नही है, जैसे वह्नित्वसामान्य का अपना स्वरूप वह्नि सभी लोगों को प्रत्यक्षगोचर होती रहती है। इस प्रकार इन पूर्ववत् और सामान्यतोदृष्ट इन दोनो

वीतत्वेन तुल्यत्वे विशेषः। अत्र च दृष्टं दर्शनम्, सामान्यत इति सामान्यस्य, सार्वविभक्तिकस्तसिः। अदृष्टस्वलक्षणस्य सामान्यविशेषस्य दर्शनं सामान्यतोदृष्टमनुमानमित्यर्थः। सर्वं चैतदस्माभिर्न्यायवार्तिकतात्पर्यटीकायां व्युत्पादितमिति नेहोक्तं विस्तरभयात्॥

( १४ ) प्रयोजकवृद्धशब्दश्रवणसमनन्तरं प्रयोज्यवृद्धप्रवृत्तिहेतुज्ञाना-

---

वह्नित्वसामान्यस्य स्वलक्षणं वह्निः प्रत्यक्षविषयो न तथा इन्द्रियत्वसामान्यस्य स्वलक्षणमिन्द्रियं प्रत्यक्षविषयम्। तस्मान्निश्चितः पूर्ववतोऽनुमानात् सामान्यतोदृष्टानुमानस्य भेदः। तदेव सुस्पष्टयति—**सोऽयमिति**। पूर्ववतः=पूर्ववदनुमानस्य। सामान्यतोदृष्टात्=सामान्यतोदृष्टानुमानात्। वीतत्वेन=वीतानुमानत्वेन। तुल्यत्वे=समानत्वे। सोऽयं, विशेषः=भेदः। अर्थाद् दृष्टस्वलक्षणसामान्यविषयत्व-अदृष्टस्वलक्षणसामान्यविषयत्वप्रयुक्तो भेदः।

सामान्यतोदृष्टानुमानस्य—'अदृष्टस्वलक्षणसामान्यविषयत्व'परत्वं शक्त्या दर्शयति—**अत्र चेति**। अत्र=सामान्यतोदृष्टमिति वाक्ये। दृष्टम्=दर्शनम्। सामान्यतः=सामान्यस्य। अदृष्टस्वलक्षणस्य=अदृष्टविशेषधर्मिकस्य। सामान्यविशेषस्य=अनुवृत्तिव्यावृत्तिकारणीभूतसामान्यविशेषोभयात्मकधर्मस्य, करणत्वादेः। दर्शनम्। इत्थञ्चोभयानुमानयोर्मध्ये विशेषदर्शनस्थले पूर्ववदनुमानं प्रवर्तते। सामान्यदर्शनस्थले च केवलं सामान्यतोदृष्टानुमानं प्रवर्तते इति तु फलितार्थः। एतद्विषयसम्बन्धी सर्वोऽपि विषयविस्तारो न्यायदर्शनस्य चतुर्थसूत्रे न्यायवार्तिकव्याख्याने तदीयतात्पर्यटीकायां द्रष्टव्यः।

( १४ ) इदानीमनुमानं निरूप्य शब्दं निरूपयितुकामोऽनुमानानन्तरं शब्दनिरूपणे उपजीवकत्वसङ्गतिं दर्शयति। तथाहि—शाब्दबोधकारणीभूतं शब्दनिष्ठशक्तिज्ञानमनुमानाधीनम्। तत्र कस्या व्यक्तेः कीदृशमनुमानं कथञ्च शक्तिज्ञानं जनयतीति प्रदर्शयि-

---

अनुमानों में वीतरूप से तुल्यत्व=समानता होने पर भी वही यह विशेष=भेद है कि 'पूर्ववत्' नामक 'वीत' अनुमान दृष्टस्वलक्षणसामान्यविषय है और 'सामान्यतोदृष्ट' नामक 'वीत' अनुमान अदृष्टस्वलक्षणसामान्यविषय है, इस प्रकार दृष्टाऽदृष्टत्व प्रयुक्तभेद इन दोनों में पाया जाता है।

यहाँ 'सामान्यतोदृष्ट' इस शब्द में 'दृष्ट' शब्द का अर्थ है—दर्शन=ज्ञान, 'सामान्यतः' इसका अर्थ है—सामान्यस्य=सामान्य का और 'तसि' प्रत्यय सार्वविभक्तिक=समस्त विभक्तियों के अर्थ में प्रयुक्त होता है। इस प्रकार अदृष्टस्वलक्षणसामान्यविशेष का जो दर्शनात्मक ज्ञान है, वही 'सामान्यतोदृष्ट' नामक 'वीत' अनुमान है। यह सभी विषय न्यायवार्तिक की तात्पर्य टीका में सुस्पष्ट है, यहाँ विस्तार के भय से नहीं कहा गया है।

( १४ ) व्यवहार से होने वाले शक्तिग्रह के विषय में तीन बातों का समझना नितान्त आवश्यक है—( १ ) प्रयोजकवृद्ध=बाबा, ( २ ) प्रयोज्यवृद्ध=बालक के

नुमानपूर्वकत्वाच्छब्दार्थसम्बन्धग्रहणस्य, स्वार्थसम्बन्धज्ञानसहकारिणश्च शब्दस्याऽर्थप्रत्यायकत्वादनुमानपूर्वकत्वमित्यनुमानानन्तरं शब्दं लक्षयति—

'आप्तश्रुतिराप्तवचनं तु' इति।

तत्राप्तवचनमिति लक्ष्यनिर्देशः, परिशिष्टं लक्षणम्। आप्ता प्राप्ता युक्तेति यावत्। आप्ता चाऽसौ श्रुतिश्चेति आप्तश्रुतिः। श्रुतिः—वाक्यजनितं वाक्यार्थज्ञानम्।

---

तुमाह—**प्रयोजकवृद्धेति**। प्रयोजकवृद्धेन गामानयेत्युक्तं, तच्छ्रुत्वैव प्रयोज्यवृद्धस्य गवानयने प्रवृत्तिर्जायते, पार्श्वस्थश्च व्युत्पित्सुर्बालः अनुमानं करोति—प्रयोज्यवृद्धस्य गवानयने प्रवृत्तिः—गवानयनविषयकज्ञानजन्यागवानयनविषयकप्रवृत्तित्वात् कस्यचिच्छब्दश्रवणानन्तरं जायमानघटपटाद्यानयनप्रवृत्तिवत्। इत्थञ्च एवंविधाऽऽवापोद्वापाभ्यां पार्श्वस्थो बालः—'गवानयनज्ञानम् गामानयेति वाक्यजन्यम्, तदन्वयव्यतिरेकानुविधायित्वात्' इत्यनुमानद्वारैव शब्दस्याऽर्थे शक्तिं गृह्णातीति भावः। तदेवोक्तम्—**अनुमानपूर्वकत्वाच्छब्दार्थसम्बन्धग्रहणस्येति**। अनुमानपूर्वकत्वात्=अनुमानाधीनत्वात्। शब्दार्थसम्बन्धग्रहणस्य='गाम्' इति शब्दः, 'गोकर्मके'त्यर्थः, तयोर्यः ईश्वरेच्छापराभिधानः, वाच्यवाचकभावरूपः शब्दनिष्ठशक्त्याख्यः=सम्बन्धः, तस्य ग्रहणं=ज्ञानं, तस्येत्यर्थः। स्वार्थसम्बन्धज्ञानसहकारिणश्च=स्वं—शब्दः, तदर्थश्च, तयोर्यः सम्बन्धः =शक्तिरूपस्तत्सहकारिणः। अर्थप्रत्यायकत्वात्=अर्थविषयको यः प्रत्ययः=शाब्दबोधस्तज्जनकत्वादित्यर्थः। अनुमानपूर्वकत्वम्=अनुमानं पूर्वं यस्य स तस्य भावस्तत्त्वम्। तथा च यतः शब्दस्याऽनुमानपूर्वकत्वमतस्तदनन्तरमेव शब्दं लक्षयति—**आप्तश्रुतिरिति**। तत्र=आप्तश्रुतिराप्तवचनन्तु इत्यत्र। लक्ष्यनिर्देशः—लक्ष्यस्य=शब्दप्रमाणस्य, निर्देशः=कथनम्। परिशिष्टम्=आप्तश्रुतिरित्येतच्च।

ननु सांख्यमते ज्ञानरूपाया बुद्धिवृत्तेरेव प्रामाण्यव्यवहारात् कथं श्रुतेः शब्दप्रमाणत्वमित्याशङ्कायामाह—**'श्रुतिः—वाक्यजनितं वाक्यार्थज्ञानम्'** इति। श्रूयते इति व्युत्पत्त्या श्रुतिः शब्दात्मिका, सा च वाक्यरूपेति वाच्योऽर्थः। तज्जन्यं ज्ञानञ्च

---

पिता, ( ३ ) तीसरा स्वयं बालक। शब्दप्रमाण की सत्ता का अभ्युपगम प्रकार यह है कि प्रयोजकवृद्ध ने प्रयोज्यवृद्ध से कहा—'घट ले आओ' और प्रयोज्यवृद्ध घट ले आया। पास में बैठा हुआ बालक प्रयोजक के शब्दश्रवण के पश्चात् प्रयोज्यवृद्ध को जब घटानयन में प्रवृत्तिशील देखता है तो प्रयोज्यवृद्ध की प्रवृत्ति का कारण जो शक्तिरूप सम्बन्धज्ञान है, उसका बालक ने अनुमान लगाया कि प्रयोजकवृद्ध की घटानयन मे प्रवृत्ति—घटानयनज्ञानजन्या है—घटानयन गोचरप्रवृत्ति होने से; जिस प्रकार हम लोगों की माता के स्तन्यपान में प्रवृत्ति होती है। इस अनुमान के अधीन ही शब्दनिष्ठ शक्तिज्ञान जो प्रयोजनवृद्ध की घटानयन में प्रवृत्ति का कारण है और शब्द तथा अर्थ का शक्तिरूप सम्बन्धज्ञान अनुमानपूर्वक है तथा उस शब्द और अर्थ के शक्तिरूप सम्बन्धज्ञान का सहकारी शब्द अर्थ का प्रत्यायक अर्थात्

( १५ ) तच्च स्वतःप्रमाणम् । अपौरुषेयवेदवाक्यजनितत्वेन सकलदोषाशङ्काविनिर्मुक्तेर्युक्तं भवति । एवं वेदमूलस्मृतीतिहासपुराणवाक्यजनितमपि ज्ञानं युक्तं भवति ।

आदिविदुषश्च कपिलस्य कल्पादौ कल्पान्तराधीतश्रुतिस्मरणसम्भवः, सुप्तप्रबुद्धस्येव पूर्वेद्युरवगतानामर्थानामपरेद्युः । तथा च आवटयजैगीषव्य-

---

लाक्षणिकोऽर्थः । प्रकृते च स एव लाक्षणिकोऽर्थ आदरणीयो वर्तते । तथैव आप्तवचनमित्यत्रापि आप्तवचनजन्यं ज्ञानमित्येव लाक्षणिकोऽर्थ आदरणीयोऽस्ति, तेन शङ्कागतदोषो निरस्तो भवति ।

( १५ ) इदानीं शब्दप्रमाणस्य स्वतःप्रामाण्यं दर्शयति—**तच्चेति** । वाक्यजन्यवाक्यार्थज्ञानञ्चेत्यर्थः । स्वतःप्रमाणम्=अन्यानधीनप्रामाण्याश्रयमित्यर्थः । तस्य च 'युक्तं भवती'त्यनेनाऽग्रेतनेनाऽन्वयः । स्वतःप्रामाण्यस्य युक्तत्वे कारणमुद्भावयति—**अपौरुषेयेति** । अपौरुषेयाणि यानि वेदवाक्यानि, तज्जनितत्वेन=तज्जनितज्ञानत्वात्, सकला ये भ्रम-प्रमादादयः पुरुषनिष्ठाः दोषाः सन्ति तेषामाशङ्कायाः, विनिर्मुक्तेः=अभावात्, स्वतःप्रामाण्यं सर्वथा युक्तमेवेति भावः ।

सम्प्रति आम्नायस्वरूपमूलप्रमाणाधीनस्मृतीतिहासादिजन्यं ज्ञानं परतःप्रमाणमपि तदपि युक्तं भवतीति दर्शयति—**एवं वेदमूलेति** । वेदो मूलं येषान्तानि एवम्भूतानि यानि—मन्वादिस्मृतय इतिहासा भारतादयः श्रीमद्भागवतादीनि पुराणानि चेति तेषां वाक्यजन्यं ज्ञानमपि युक्तं=दोषरहितं जायते ।

ननु 'ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति' इत्यादिश्रुत्या कपिलस्योत्पन्नमात्रस्यैव ज्ञानसम्पन्नत्वश्रवणाद् वेदाध्ययनं विनैव तेन विनिर्मितस्यास्य सांख्यशास्त्रस्य कथं प्रामाण्यं स्यादित्याशङ्कां निरसितुं सांख्यशास्त्रस्य तथा कपिलज्ञानस्यापि वेदमूलकत्वं प्रदर्शयति—**आदिविदुषश्चेति** । सृष्टेरादित एव वैदुष्यसम्पन्नस्य, अतीतकल्पसम्पादितप्रकृष्टधर्मबलेन सृष्टेरादावेव विज्ञानसम्पन्नः कपिलः समुत्पन्नः, अत एव स आदिविद्वान् इत्यर्थः । कल्पादौ—कल्पः=चत्वारिंशदर्बुदद्वात्रिंशत्कोटिवर्षपरिमित-

---

अर्थविषयक जो शाब्दबोधात्मक प्रत्यय=ज्ञान, उसका जनक है । इस कारण से अनुमान के पश्चात् ही शब्द का लक्षण करते हैं—'आप्तश्रुतिराप्तवचनन्तु' । आप्तवचन यह लक्ष्य निर्देश है और परिशिष्ट=आप्तश्रुति लक्षण है । वाक्य से उत्पन्न वाक्यार्थज्ञान को श्रुति कहते हैं ।

( १५ ) और वह श्रुतिरूप वाक्यार्थज्ञान स्वतःप्रमाण है और अपौरुषेय वेदवाक्यों से जनित होने से भ्रम-प्रमादादि सकल दोषों से शून्य है, अतएव युक्त=सर्वथा निर्दोष है । इसी प्रकार वेदमूलक स्मृति, इतिहास तथा पुराणों के वाक्यों से जनित ज्ञान भी युक्त है ।

और सांख्यशास्त्रप्रणेता तथा आदिविद्वान् कपिल को कल्पान्तर=पूर्वकल्प में अधीन वेद का कल्प के प्रारम्भ में स्मरण होना सर्वथा सम्भव है, जैसे शयन के पश्चात् जागृत पुरुष को पूर्व दिन में अनुभूत समस्त विषयों का दूसरे दिन स्मरण होता है ।

संवादे भगवान् जैगीषव्यो दशमहाकल्पवर्त्तिजातजन्मस्मरणमात्मन उवाच—'दशसु महाकल्पेषु विपरिवर्तमानेनानभिभूतबुद्धिसत्त्वेन मया' इत्यादिना ग्रन्थसन्दर्भेण।

( १६ ) आप्तग्रहणेनाऽयुक्ताः शाक्य-भिक्षु-निर्ग्रन्थक-संसारमोचकादीनामागमाभासाः परिहृता भवन्ति। अयुक्तत्वं चैतेषां विगानात्, विच्छिन्नमूलत्वात् प्रमाणविरुद्धार्थाभिधानाच्च कैश्चिदेव म्लेच्छादिभिः पुरुषापसदैः पशुप्रायैः परिग्रहो बोद्धव्यम्।

( १७ ) 'तु'शब्देनाऽनुमानाद् व्यवच्छिनत्ति। वाक्यार्थो हि प्रमेयः, न तु

---

कालात्मकः ब्रह्मणो दिवसः, तस्य, आदौ=प्रारम्भे=सृष्टयारम्भे, एतत्कल्पीयप्राथमिकसृष्टिसमये इत्यर्थः। **कल्पान्तराधीतेति**। कल्पान्तरे=पूर्वकल्पे=ब्रह्मणः पूर्वदिवसे इत्यर्थः। अधीता या श्रुतिः=वेदस्तस्य स्मरणस्य सम्भवः। अत्र दृष्टान्तमाह—**सुप्तेति**। पूर्वं सुप्तस्य, पश्चात् प्रवुद्धस्य=जागरितस्य, इव=यथा, स्मरणं भवति तथा, पूर्वेद्युः=पूर्वस्मिन् दिने। अवगतानाम्=ज्ञातानाम्। अर्थानां=विषयाणाम्। अपरेद्युः=अपरस्मिन् दिने, स्मरणं भवतीति शेषः।

अत्रेदं विचार्यते—निशायां प्रसुप्तस्य पुरुषस्य पूर्वदिने ज्ञातविषयाणां परदिने यथा स्मरणं भवतीति सुनिश्चितमस्ति, न तु रात्रौ तद्विषयस्य विस्मरणं कदाचिज्जायते। तथैव प्रलयप्राक्कालावच्छेदेन सृष्टौ अधीतानां सर्वेषामेव वेदानाम् अन्तरा प्रलयदशायां सुप्तवत् सन्तिष्ठमानस्यापि उत्तरकालीनायां सृष्टौ स्मरणमवश्यम्भवतीत्यपि सुनिश्चितमस्ति। एवं प्रकृष्टयोगजधर्मबलेन महर्षिप्रभृतीनां कल्पान्तरानुभूतस्य स्मरणं भवतीत्यत्र कैमुतिकन्यायसिद्धमावटयजैगीषव्ययोरेकं संवादमुपस्थापयति—**तथा चेति**। *आवटयजैगीषव्यसंवादं प्रमाणीकर्तुं तत्र भगवतो जैगीषव्यस्य वचनप्रामाण्यमुद्धरति*—**'दशसु महाकल्पेषु'** इति। महर्षेर्जैगीषव्यस्य संस्काररूपसाक्षात्कारणवशात् दशमहासर्गीयं जन्मपरिणामक्रममनुपश्यतो विवेकजन्यं ज्ञानं प्रादुरभूत्।

( १६-१७ ) वैशेषिका बौद्धाश्च शब्दस्याऽन्तर्भावमनुमाने प्रकुर्वन्ति तन्मतं

---

इस विषय में आवटय-जैगीषव्य का प्रसिद्ध संवाद उदाहरण के रूप में बतलाते हैं कि भगवान् जैगीषव्य ने अपने दश महाकल्पों के जन्म के परिणामों का पूरा वृत्त अनुभव के साथ आवटय से कहा— दशसु महाकल्पेषु विपरिवर्तमानेनानभिभूतबुद्धिसत्त्वेन मया' अर्थात् दश महाकल्पों के अन्दर रहते हुए मैंने यह अनुभव किया इत्यादि।

( १६ ) और शब्द के लक्षण में 'आप्त' पद के उपादान से बौद्धभिक्षु, निर्ग्रन्थक=जैन तथा समारमोचक=चार्वाक आदि अनाप्त पुरुषों के आगमाभासों का परिहार हो जाता है। इन आगमाभासों की असत्यता इनके परस्पर विरोधी होने के कारण वेदमूलक न होने से प्रमाणविरुद्ध अर्थ का अभिधान=कथन करने से सुस्पष्ट है तथा कुछ ही म्लेच्छ, प्रायः पशुसदृश नीच प्रकृति के पुरुष उन बौद्ध आदि आगमाभासों को स्वीकार करते हैं, यही उनका अयुक्तत्व समझना चाहिए।

( १७ ) 'आप्तवचनं तु' यह कारिकास्थ 'तु' शब्द वैशेषिकमत-खण्डनार्थ आप्त-

तद्धर्मो वाक्यम्, येन तत्र लिङ्गं भवेत्। न च वाक्यं वाक्यार्थं बोधयत् सम्वन्धग्रहणमपेक्षते, अभिनवकविविरचितस्य वाक्यस्याऽदृष्टपूर्वस्याऽननुभूतचरवाक्यार्थवोधकत्वादिति।

---

निरसितुमाह—**तुशब्देनेति**। आप्तवचनन्तु अत्रत्य-'तु'शब्देनेत्यर्थः। अनुमानाद्। व्यवच्छिनत्ति=पृथक्करोति। कथमनुमानात् पार्थक्यमित्यत आह—**वाक्यार्थ इति**।

**अयमाशयः**—'घटोऽस्ति' इति वाक्येन परस्परं घटाऽस्तित्वविषयको यो बोधो भवति सः शाब्दवोधो भवति, स च बोधोऽनुमितिरूप एवेति वैशेपिका बौद्धाश्च वदन्ति। तथाहि—'घटोऽस्ती'ति वाक्यश्रवणानन्तरं 'घटोऽस्ति'तावान्—अस्तिपदसमभिव्याहृतघट इति पदस्मारितत्वात्। तत्र पदानि स्वार्थोपस्थितिद्वारा शाब्दबोधं जनयन्ति, अतस्ते अस्तिपदसमभिव्याहृतघट इति पदस्यैव लिङ्गविधयाऽनुमितौ हेतुत्वं स्वीकृत्याऽनुमानेऽन्तर्भावयन्ति। तच्च न सम्भवति, कुतः ? तादृशपदवत्त्वरूपपदात्मकहेतोः पक्षेऽवृत्तित्वेन स्वरूपासिद्धेः। यतोऽनुमाने घटरूपाऽर्थात्मके पक्षे 'अस्ति'पदसमभिव्याहृतघटपदात्मकहेतोर्नास्ति कश्चन सम्वन्धः, क्रियाकारकपदानां पारस्परिकः सम्वन्धः शब्दानामेव स्वीक्रियते, अतोऽनुमानातिरिक्तस्य शब्दस्य प्रामाण्यं सर्वथाऽऽवश्यकमिति शब्दस्य नानुमानेऽन्तर्भाव इति मन्तव्यम्। एतदभिप्रायेणैवोक्तम्—'वाक्यार्थो हि प्रमेयं न तु तद्धर्मो वाक्यं, येन तत्र लिङ्गं भवेत्' अर्थात्—वाक्यार्थः=घटोऽस्तीति वाक्यजन्यः अस्तित्वविशिष्टघटरूपवाक्यार्थः। प्रमेयः=अनुमेयपदार्थः। तद्धर्मः=तस्य साध्यविशिष्टतया साधनीयस्य पक्षस्य 'अस्तित्वविशिष्टयोः' इति वाक्यार्थस्य, धर्मः=आधेयरूपो धर्मः। येन=विपयतासंसर्गेण। तत्र=वाक्यार्थानुमितौ। लिङ्गम्=अनुमापको हेतुः। अनुमाने साध्यनिरूपितव्याप्तिविशिष्टहेतोरेवाऽनुमितिहेतुत्वं स्वीक्रियते, वाक्यं तु व्याप्तिं विनापि वाक्यार्थबोधं जनयतीति व्याप्तिज्ञानानपेक्षशब्दजन्यबोधः शाब्दबोध एव नानुमितिरूप इति प्रतिपादयितुमाह—**न च वाक्यं वाक्यार्थं बोधयत् सम्वन्धग्रहणमपेक्षते इति**। अर्थात्—वाक्यम्=घटोऽस्तीति वाक्यम्। वाक्यार्थं बोधयत् =अस्तित्वविशिष्टो घट इति वाक्यार्थविपयकबोधजननकाले। सम्वन्धग्रहणम्=व्याप्ति-

---

वचन=शब्दप्रमाण को अनुमान से व्यवच्छिन्न=पृथक् सिद्ध करता है। पार्थक्य में युक्ति यह है—'वाक्यार्थो ही'ति। अर्थमात्र प्रमेय होता है, अतः वाक्य का अर्थ भी प्रमेय है, किन्तु वाक्य वाक्यार्थ का धर्म नहीं है, किन्तु उसे जानने का साधन है। यदि वाक्य वाक्यार्थ का धर्म होता तो वाक्य वाक्यार्थ का साधक लिङ्ग हो सकता था और वाक्यार्थ लिङ्गी, तव 'लिङ्गलिङ्गिपूर्वकम्' यह अनुमान का लक्षण आप्तवाक्यरूप आप्तवचन में जाता और आप्तवाक्यरूप आप्तवचन का अनुमान में अन्तर्भाव होता। जैसे वह्निस्वरूप प्रमेय का धर्म धूम होता है और वह वह्नि का साधक लिङ्ग है तथा वह्नि लिङ्गी है; 'लिङ्गलिङ्गिपूर्वकम्' यह लक्षण यहाँ समन्वित होता है।

दूसरी बात यह है कि वाक्य को वाक्य के अर्थ का ज्ञान कराते हुए पूर्वकालिक सम्वन्धज्ञान की अपेक्षा नहीं। और धूम अनुमानस्थल में वह्नि के अनुमित्यात्मक ज्ञान

( १८ ) एवं प्रमाणसामान्यलक्षणेषु तद्विशेषलक्षणेषु च सत्सु, यानि प्रमाणान्तराण्युपमानादीनि प्रतिवादिभिरभ्युपेयन्ते तान्युक्तलक्षणेष्वेव प्रमाणेष्वन्तर्भवन्ति ।

तथाहि—उपमानं तावत् 'यथा गौस्तथा गवयः' इति वाक्यम् । तज्जनिता धीरागम एव । योऽप्ययं 'गवयशब्दो गोसदृशस्य वाचकः' इति प्रत्ययः, सोऽप्य-

---

ज्ञानम् । न चाऽपेक्षते । अर्थात् यथा पर्वते वह्निविषयिणीमनुमितिरूपं बोधं जनयन् धूमः पूर्वं महानसादौ गृहीतस्य स्वीयव्याप्तिरूपसम्बन्धस्य ज्ञानमपेक्षते न च तथा वाक्यं वाक्यार्थविषयकबोधजननकाले प्राक्कालीनसम्बन्धज्ञानमपेक्षते । इत्यत्राऽनुरूपं दृष्टान्तमाह—**अभिनवकवीति** । येन कविना यस्य वाक्यस्य पूर्वं कदापि स्वार्थेन सह सम्बन्ध एव न ज्ञातस्तादृशाभिनवकविविरचितस्येत्यर्थः । अदृष्टपूर्वस्य = पूर्वमश्रुतस्य । अननुभूतचरवाक्यार्थबोधकत्वादिति । अननुभूतचरः = पूर्वमननुभूतपदार्थविषयको यो वाक्यार्थबोधस्तज्जनकत्वात्, पूर्वमननुभूतनवीनवाक्यार्थबोधकत्वदर्शनादित्यर्थः ।

( १८ ) सम्प्रति 'सर्वप्रमाणसिद्धत्वात्' इत्यनेनोक्तं प्रमाणत्रयातिरिक्तप्रमाणानामन्तर्भावं त्रिष्वेव प्रमाणेषु दर्शयति—**एवमिति** । प्रमाणानां यानि सन्ति सामान्यलक्षणानि विशेषलक्षणानि च तेषु निरूपितेषु सत्स्वित्यर्थः । **उपमानादीनि इति** । आदिनाऽर्थापत्त्यनुपलब्धिसम्भवैतिह्यादीनां ग्रहणम् । प्रतिवादिभिः = नैयायिक-भाट्ट-वेदान्ति-पौराणिकाऽऽलङ्कारिकैः । अभ्युपेयन्ते = स्वीक्रियन्ते । उक्तलक्षणेष्वेव = प्रत्यक्षानुमानशब्दात्मकेषु प्रमाणेषु । अन्तर्भवन्तीति । अन्तर्भावप्रकारश्चाऽनुपदमेव विवेचयिष्यते ।

प्रथममुपमानस्यान्तर्भावं दर्शयति—**तथा हीति** । नैयायिकाः 'प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम्' इत्यक्षपादीयसूत्रानुसारिणः 'कीदृशो गवय' इति नागरिकेण पृष्टः कश्चिदरण्यवासी प्रसिद्धेन गवा साधर्म्यादप्रसिद्धं गवयं येन वाक्येन बोधयति 'यथा गौस्तथा गवयः' इति, तद् वाक्यमुपमानं वदन्ति, विवदन्ते चात्र बहवस्तान् प्रत्याह—**उपमानं तावदिति** । 'यथा गौस्तथा गवयः' इति वाक्यजन्यवाक्यार्थज्ञानमागमप्रमाण-

---

के पूर्व महानस में गृहीत व्याप्तिरूप सम्बन्धज्ञान की अपेक्षा रखता है। क्योंकि अभिनवकवि-विरचित वाक्य का वाक्यार्थ के साथ कभी किसी को पूर्वकाल में सम्बन्ध गृहीत नहीं हुआ। इस प्रकार के अदृष्टपूर्व = अश्रुतपूर्व एवम् अनुभूतपूर्व वाक्य से भी वाक्यार्थबोध होता है। इससे भी स्पष्ट है कि आप्तवाक्य = आप्तवचन = शब्द-प्रमाण का अनुमान में कदापि अन्तर्भाव नही हो सकता है।

( १८ ) इस प्रकार प्रमाणसामान्यलक्षणों के तथा प्रमाणविशेषलक्षणों के सम्पन्न हो जाने पर प्रतिवादी लोग इन तीन प्रमाणो के अतिरिक्त उपमान आदि प्रमाणान्तरों को जो स्वीकार करते है, उन सभी प्रमाणों का इन पूर्वोक्त लक्षणवाले तीन प्रमाणो में ही अन्तर्भाव है।

तथाहि—गो के समान ही गवय होता है अर्थात् 'गोसदृशो गवयः' इस वाक्य का नाम ही उपमानप्रमाण है। इस वाक्य से जनित = जायमान जो चित्त-

नुमानमेव। यो हि शब्दो यत्र वृद्धैः प्रयुज्यते, सोऽसति वृत्त्यन्तरे तस्य वाचकः, यथा गोशब्दो गोत्वस्य। प्रयुज्यते चैवं गवयशब्दो गोसदृशे, इति तस्यैव वाचक इति तज्ज्ञानमनुमानमेव।

( १९ ) यत्तु गवयस्य चक्षुःसन्निकृष्टस्य गोसादृश्यज्ञानं तत् प्रत्यक्षमेव। अत एव स्मर्यमाणायां गवि गवयसादृश्यज्ञानं प्रत्यक्षम्। न ह्यन्यद् गवि

---

मेव। सांख्यनये वाक्यजन्यं ज्ञानमेवाऽऽगमप्रमाणं न तु वाक्यमात्रम्, चित्तवृत्तेस्तेषां मते प्रमाणत्वादिति चागमान्तर्भावान्नोपमानं प्रमाणान्तरमित्यर्थः। केचन तर्कप्रधानपरायणाः संज्ञासंज्ञिसम्बन्धज्ञानं–'गवयशब्दो गोसदृशस्य वाचकः' इत्याकारकमुपमितिः, तत्र 'गोसदृशो गवयशब्दवाच्यः' इत्यतिदेशवाक्यार्थस्मरणं द्वारीकृत्य प्रागुक्तवाक्यजन्यं 'गोसदृशो गवयः' इत्याकारकं सादृश्यज्ञानं करणं भवति तदेवोपमानमिति व्यवहरन्ति—तन्मतं निरस्यति—**योऽप्ययमिति**। अर्थात् योऽपि 'गवयशब्दः गोसदृशस्य वाचकः' इत्ययमुपमितिप्रमात्मकः प्रत्ययस्तस्यानुमानसाध्यत्वात् तत्करणमनुमानमेव नोपमानम्। अनुमानस्वरूपञ्च 'गवयपदं गोसदृशस्य वाचकम्—असति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वात्' इत्यतो नोपमानं पृथङ्मानान्तरं स्वीकार्यम्। उपसंहरति—**इति तज्ज्ञानमिति**। इति=एवंरीत्या। तत् ज्ञानम्=संज्ञासंज्ञिसम्बन्धज्ञानम्। अनुमानमेव=अनुमानफलस्वरूपाऽनुमितिरेवेति भावः।

( १९ ) अत्र मीमांसका इत्थं वदन्ति—यद् वनङ्गतस्य दृष्टगोपिण्डस्य नागरिकस्य साक्षाद् गवयं पश्यतः प्रत्यक्षदृष्टगवयसादृश्यावच्छिन्नाऽसन्निकृष्टगोपिण्डग्रहणात्मकम् 'अनेन सदृशी मदीया गौः' इति ज्ञानं जायते, तत्र 'गोसदृशो गवयः' इति ज्ञानमुपमानम्,

---

वृत्तिरूपा धी=ज्ञान है, वह आगम=आगमप्रमाण ही तो है। इस मत का खण्डन करते हैं कि—**योऽप्ययमिति**। 'गवयशब्दः गोसदृशस्य वाचकः' यही उपमितिप्रमा है और यह प्रमा भी अनुमितिप्रमा के समान अनुमानसाध्य है। अतः उस उपमितिप्रमा का करण भी अनुमान ही है, न कि उपमान। अनुमानशरीर यह है—'गवयपदं गोसदृशव्यक्तिवाचकम् असति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वात् गोत्वे प्रयुज्यमानगोपदवत्'। अतः उपमान अनुमान से भिन्न प्रमाण नहीं है, अपितु अनुमान में ही अन्तर्भूत है। इस अनुमानप्रयोग की सामग्री यह है—'यो हि शब्द' इति। ज्ञानवृद्ध जिस शब्द का अर्थ में प्रयोग करते हैं वह शब्द अभिधा के अतिरिक्त लक्षणा आदि दूसरी वृत्ति के न रहने पर उसी अर्थ का वाचक होता है; जैसे गो शब्द गोत्व या गौ का वाचक होता है। उसी प्रकार यह गवय शब्द गोसदृश व्यक्ति के लिए प्रयुक्त होता है, अतः गवय शब्द गोसदृश व्यक्ति का ही वाचक है। इसका निष्कर्ष यह निकला कि—संज्ञा-संज्ञिसम्बन्धज्ञान अनुमान का ही अनुमितिरूप फल है। अतः उपमानप्रमाण का अनुमानप्रमाण में ही अन्तर्भाव हो जाता है।

( १९ ) मीमांसक लोग स्वाभिमत उपमान का स्वरूप बतलाते हुए उसका खण्डन करते हैं—**'यत्तु गवयस्य'** इत्यादि भाष्य से। चक्षु से सन्निकृष्ट गवय में जो

सादृश्यम्, अन्यच्च गवये। भूयोऽवयवसामान्ययोगो हि जात्यन्तरवर्ती जात्यन्तरे सादृश्यमुच्यते। सामान्ययोगश्चैकः। स चेद् गवये प्रत्यक्षः, गव्यपि तथेति नोपमानस्य प्रमेयान्तरमस्ति, यत्र प्रमाणमुपमानं भवेत्, इति न प्रमाणान्तरमुपमानम्।

---

'अनेन सदृशी मदीया गौः' इदश्च ज्ञानमुपमितिरूपं फलं भवतीति तन्निषेधति—**यत्तु गवयस्येति**। तथा च गवयनिष्ठं गोसादृश्यज्ञानमुपमानम्, गोनिष्ठञ्च गवयसादृश्यज्ञानमुपमानफलमस्तीति मीमांसकाभिमतं वर्तते, तत्र यदस्ति गवयनिष्ठं गोसादृश्यज्ञानं तत् प्रत्यक्षमेवेति नोपमानं प्रमाणान्तरम्। **चक्षुःसन्निकृष्टस्येति**। यथा—चक्षुःसन्निकृष्टगोनिष्ठं गोत्वं प्रत्यक्षमस्ति, तथा चक्षुःसन्निकृष्टगवयनिष्ठं सादृश्यज्ञानमपि प्रत्यक्षमेवेति भावः।

ननु गवयनिष्ठगोसादृश्यस्य प्रत्यक्षात्मकं ज्ञानं जायतां परन्तु गोनिष्ठगवयसादृश्यज्ञानमेवोपमितिरेवास्तु तच्च न प्रत्यक्षं गवा चक्षुःसन्निकर्षाऽभावात्, अत आह—**अत एवेति**। यतश्चक्षुःसन्निकर्षावच्छिन्ने गवये गोसादृश्यज्ञानं प्रत्यक्षमतः=गवयनिष्ठगोसादृश्यस्यापि प्रत्यक्षत्वादेव। अर्थाद् गवयगतसादृश्यप्रत्यक्षवत् स्मृत्यारूढायां गवि वर्तमानं गवयसादृश्यमपि प्रत्यक्षमेवेति भावः। तदेवोक्तम्—'स्मर्यमाणायां गवि गवयसादृश्यज्ञानं प्रत्यक्षम्'। अतो नोपमानस्य प्रमाणान्तरत्वमभ्युपेयम्।

अत एवेत्यनेन प्रदर्शितं हेतुमाह—**न ह्यन्यदिति**। हि=यतः। गवि। अन्यत्=अन्यादृशम्। सादृश्यम्। गवये च अन्यत्—इति न। किन्तूभयोः सादृश्यमेकमेव, तच्च गवये चेत् प्रत्यक्षं गव्यपि तथेति भावः।

सादृश्यस्यैकत्वप्रतिपादकं लक्षणं ब्रूते—**भूयोऽवयवेति**। जात्यन्तरवर्ती-जात्यन्तरे=गोपिण्डे, वर्ती=वर्तमानो यः। भूयोऽवयवसामान्ययोगः—भूयसाम् अवयवानां यानि सामान्यानि=मुखत्व-लाङ्गूलत्व-खुरत्व-शृङ्गत्वादीनि, तेषां यः योगः=सम्बन्धः।

---

गोसादृश्य ज्ञान है, वह प्रत्यक्ष ही तो है। इसीलिए स्मर्यमाण गौ मे जो गवयसादृश्य ज्ञान 'अनेन सदृशी मदीया गौः' यह भी प्रत्यक्ष ही है। गौ में सादृश्य गवयसादृश्य से भिन्न हो और गवयनिष्ठ सादृश्य गौ के सादृश्य से भिन्न हो, ऐसा अनुभव नहीं होता है।

प्रश्न—गौ और गवय दोनो में एक ही सादृश्य कैसे है?

उत्तर—जात्यन्तर=गोपदार्थ में वर्तमान जो लांगूल, खुर, सींग आदि बहुत से अवयव, उनके जो सामान्य धर्म=लांगूलत्व, खुरत्व, शृङ्गत्व आदि, उनका जो योग=सम्बन्ध, वही जात्यन्तरवर्ती=गवयरूप जात्यन्तर में रहने वाला सादृश्य कहलाता है, अर्थात् वही सामान्ययोगरूप सादृश्य गवय में गौ का सादृश्य है और वही गौ में गवय का सादृश्य है। क्योंकि वह सामान्य=जाति का योग=सम्बन्ध सर्वत्र समान होने से एक है। जैसे घटत्व नील, पीत आदि सब घटों मे समान होने के कारण एक है; वैसे ही लांगूलत्व आदि सामान्ययोग भी सभी लांगूल आदि

( २० ) एवमर्थापत्तिरपि न प्रमाणान्तरम्। तथा हि—जीवतश्चैत्रस्य गृहाभावदर्शनेन बहिर्भावस्याऽदृष्टस्य कल्पनमर्थापत्तिरभिमता वृद्धानाम्। साऽप्यनुमानमेव। यदा खल्वव्यापकः सन्नेकत्र नास्ति तदाऽन्यत्रास्ति। यदाऽव्यापक एकत्राऽस्ति तदाऽन्यत्र नाऽस्ति, इति सुकरः स्वशरीरे व्याप्तिग्रहः। तथा च सतो गृहाभावदर्शनेन लिङ्गेन वहिर्भावदर्शनमनुमानमेव।

---

स एव जात्यन्तरे=गवये। **सामान्ययोगश्चेति**। अवयवैक्यसम्वन्धश्च। उभयत्रेति पूरणीयम्। एकः=घटत्व-पटत्वादिवदेकः। इत्थञ्च एकत्र व्यक्तौ सादृश्ये प्रत्यक्षीकृतेऽन्यत्र व्यक्तौ ( गवि, गवये वा ) स्वयमेव प्रत्यक्षीभूतं भवतीत्यत आह—**स चेदिति**। सः=भूयोऽवयवसामान्ययोगः। उपसंहरति—**इति नोपमानस्येति**। इति=इत्येवं प्रागुक्तप्रकारेण सादृश्यज्ञाने प्रत्यक्षसिद्धे। उपमानस्य=उपमानप्रमाणस्य। प्रमेयान्तरमस्ति=प्रत्यक्षप्रमेयातिरिक्तम्=उपमेयं किमपि वस्तु। यत्र=उपमेये।

( २० ) इदानीमर्थापत्तेः प्रमाणान्तरत्वं निराक्रियते—**एवमिति**। गृहाभावदर्शनेन=गृहाऽसत्त्वप्रत्यक्षेण। वहिर्भावस्य=वहिःसत्त्वस्य। अदृष्टस्य=अप्रत्यक्षस्य। वृद्धानाम्=मीमांसकानाम्। सा=अर्थापत्तिः। अप्रत्यक्षीभूतस्य गृहासत्त्वरूपस्याऽर्थस्य आपत्तिः=कल्पना, अर्थापत्तिः। भाट्टाः, वेदान्तिनश्च अर्थापत्तिं प्रमाणान्तरं स्वीकुर्वन्ति। अर्थापत्तिप्रमाणम्—उपपाद्यज्ञानम्, उपपाद्यज्ञानञ्च प्रमाणम्, उपपादकज्ञानं फलम्। तत्र वहिःसत्त्वमुपपादकम्, गृहासत्त्वञ्चोपपाद्यम्। साऽप्यनुमानमेवेति। अनुमानञ्च—'चैत्रः वहिः सत्त्ववान् जीवित्वे सति गृहेऽविद्यमानत्वात् अस्मदादिवत्'। तत्र गृहेऽविद्यमानत्वाऽपरपर्यायभूतस्य गृहासत्त्वरूपस्योपपाद्यज्ञानस्य लिङ्गविधयाऽनुमानेऽन्तर्भावः। तदुत्पन्नायाश्च वहिरस्तीत्याकारिकाया वहिःसत्त्वप्रमाया अनुमितित्वं स्वीक्रियते।

तत्राऽन्वयव्याप्तिं दर्शयति—**यदा खल्वव्यापक इति**। खलु निश्चयार्थकः। अव्यापकः =परिच्छिन्नः, सर्वमूर्तसंयोगित्वाभाववान्। सन्=सत्तावान्, क्वचिद्देशेऽस्तीति भावः। एकत्र=एकस्मिन् देशे ( गृहे ) नास्ति। तदा=तस्मिन् काले। अन्यत्र=वहिःप्रदेशे। अस्ति। अर्थाद् गृहाद् वहिरस्तीति भावः।

---

अवयवों में एक ही है। वह सामान्ययोगात्मक सादृश्य यदि गवय में प्रत्यक्ष है तो गौ में भी प्रत्यक्ष है, इसलिए उपमान की प्रत्यक्षात्मक प्रमेय से भिन्न उपमेय वस्तु कुछ नहीं है, जिसके ज्ञान के उपमान को प्रमाणान्तर माना जाय।

( २० ) इसी प्रकार मीमांसकाभिमत 'अर्थापत्ति' भी प्रमाणान्तर नहीं है। तथाहि—अर्थ की आपत्ति=कल्पना, यही अर्थापत्ति शब्द का अर्थ है—जैसे 'जीवित चैत्र का घर में अभाव देखकर वाहर कहीं गया होगा, इस रूप से जो वहिर्भाव =वहिःसत्त्वरूप अर्थ की कल्पना है, वही अर्थापत्ति है। इसको भी मीमांसकों ने प्रमाण माना है। परन्तु अर्थापत्ति भी अनुमान ही है, अर्थात् अनुमान में ही अन्तर्भूत है। क्योंकि जव कोई अव्यापक=एक देश में रहने वाली वस्तु या पदार्थ

( २१ ) न च चैत्रस्य क्वचित्सत्त्वेन गृहाभावः शक्योऽपह्नोतुम्, येनाऽसिद्धो गृहाभावो बहिर्भावे न हेतुः स्यात्। न च गृहाभावेन वा सत्त्वमपह्नूयते, येन सत्त्वमेवाऽनुपपद्यमानमात्मानं न बहिरवस्थापयेत्।

---

व्यतिरेकव्याप्तिं दर्शयति—**यदाऽव्यापक इति**। यदा=यस्मिन् काले। एकत्र=एकस्मिन् प्रदेशे, गृहे। अस्ति। तदा अन्यत्र=बहिः। नास्ति। तत्र दृष्टान्तमाह—**स्वशरीरे इति**। उपसंहरति—**तथा चेति**। प्रागुक्तप्रकारेण व्याप्तिज्ञाने जायमाने। सतः=अस्तित्ववतः, जीवत इत्यर्थः। चैत्रस्येति शेषः। गृहाभावदर्शनेन=गृहेऽभावदर्शनेन। लिङ्गेन=जीवित्वे सति गृहासत्त्वादिति हेतुना। बहिर्भावदर्शनम्=बहिरस्तीति प्रमात्मको निश्चयः। अनुमानमेव=अनुमानसाध्यत्वेन प्रमात्मिकाऽनुमितिरेव।

( २१ ) 'चैत्रः क्वचिदस्ति, अर्थात्—बहिरस्ति जीवित्वे सति गृहासत्त्वात्' इत्यस्मिन् प्रागुक्तानुमाने हेतोः स्वरूपासिद्धत्वमाशङ्क्य निषेधति—**न च चैत्रस्येति**। **अयमाशयः**—उक्तानुमाने पक्षे चैत्रे 'क्वचिदस्ती'ति साध्यान्तर्गतक्वचित्पदेन देशो गृह्यते, देशश्च गृहमपि भवितुमर्हति, तेन गृहेऽस्तीत्यपि निश्चेतुं शक्यते। तथा च गृहास्तित्वगृहास्तित्वाभावयोः परस्परं विरोधात्, एवञ्च पक्षे चैत्रे गृहास्तित्वसत्त्वेन गृहास्तित्वाभावो हेतुर्नैव कदापि स्थातुमर्हतीति भवति स्वरूपासिद्धिरित्याशङ्कां निराकरोति—**'न च चैत्रस्ये'**त्यादिनेति भावः। क्वचित् सत्त्वेन=क्वचिद्देशे वर्तमानत्वेन। गृहाभावः गृहास्तित्वाभावरूपो हेतुः। अपह्नोतुम्=अपलपितुम्। न च। शक्यः। यतो गृहास्तित्वाभावनिर्णयानन्तरमेव बहिःसत्त्वं निश्चीयते, तेन गृहास्तित्वाभावो हेतुर्न पक्षे निषेद्धुं शक्यते। येन=प्रागुक्तकारणप्रदर्शनेन। असिद्धः=स्वरूपासिद्धः। गृहाभावः=हेतुः। बहिर्भावे=बहिःसत्त्वे। न हेतुः स्यात्=न साधको भवेदिति।

साध्याप्रसिद्धिं निराकरोति—**न च गृहाभावेनेति**। सत्त्वम्=सत्त्वमात्रम्। अपह्नूयते=अपलपितुं शक्यते। येन=सत्त्वापनयनकारणेन। सत्त्वमेव। अनुपपद्यमानम्=अनुपपन्नम्। न बहिरवस्थापयेत्=बहिर्देशे नोपस्थापयितुं शक्नुयात्। तथा च बहिःसत्त्वरूपसाध्यस्य सत्त्वान्न साध्याप्रसिद्धिः।

---

एक स्थान में नहीं है तो अन्यत्र है और यदि वह अव्यापक वस्तु एकत्र=घर में है तो अन्यत्र=बाहर नहीं है—इस प्रकार की व्याप्ति अपने शरीररूपी दृष्टान्त के आधार पर सुकरता=सरलता से समझी जा सकती है या समझायी जा सकती है। अतएव इस प्रकार सत्ताविशिष्ट जीवित चैत्र को यदि हम घर में नहीं देखते हैं तो इसी गृहाभावदर्शनरूपी लिङ्ग से चैत्र के बाहर होने का अनुमान हो जाता है। अनुमान यह है—'चैत्रो बहिरस्ति जीवित्वे सति गृहेऽसत्त्वात्' इति।

( २१ ) यह भी कथन समुचित नहीं कि चैत्र कहीं बाहर है तो उसका घर में न न होना बाधित हो जायेगा, जिससे असिद्ध गृहाभाव चैत्र के बहिर्भाव=बहिःसत्त्व में हेतु ही न बन सके। यह भी नहीं कहा सकता कि गृहाभाव=घर में न रहने रूप हेतु से चैत्र की सत्ता मात्र को ही समाप्त कर दिया जाय, अर्थात् चैत्र घर में नहीं

तथा हि—चैत्रस्य गृहासत्त्वेन सत्त्वमात्रं विरुध्यते, गृहसत्त्वं वा ? न तावद्यत्र क्वचन सत्त्वस्याऽस्ति विरोधो गृहासत्त्वेन, भिन्नविषयत्वात् ।

( २२ ) देशसामान्येन गृहविशेषाक्षेपोऽपि पाक्षिक इति समानविषयतया विरोध इति चेत्, न । प्रमाणविनिश्चितस्य गृहेऽसत्त्वस्य पाक्षिकतया सांशयिकेन गृहसत्त्वेन प्रतिक्षेपायोगात् ।

---

सर्वजनप्रसिद्धो हि सत्त्वाऽसत्त्वयोर्विरोधो नहि वाचा केवलं निराकर्तुं शक्यते । अविरोधे किं कारणमिति जिज्ञासायां विरोधाभावं द्वेधा विकल्प्य सुस्पष्टयति—तथाहि—चैत्रस्येति । गृहासत्त्वेन = गृहेऽवर्तमानत्वेन । सत्त्वमात्रम् = यत्र कुत्रापि सत्त्वम् । विरुद्ध्यते ? इत्येको विकल्पः । गृहसत्त्वं वेति द्वितीयो विकल्पः ।

प्रथमं विकल्पं निरस्यति—**न तावदिति** । यत्र क्वचन सत्त्वस्य = यत्र कुत्रापि अस्तित्वस्य । गृहाऽसत्त्वेन = गृहाभावेन । न, अस्ति, विरोधः । भिन्नविषयत्वात् = सत्त्व-सत्त्वाभावयोर्भिन्नपदार्थसम्बन्धित्वात् । अर्थात् असत्त्वस्याऽस्ति गृहप्रदेशो विषयः, सत्त्वस्य च वहिर्देशो विषय इत्येवंरीत्या नास्ति समानो विषयः, अत एव न विरोधः ।

( २२ ) अत्र मीमांसकाः—क्वचित् सत्त्वगृहासत्त्वयोर्विषयस्य समानतां दर्शयन्ति—**देशसामान्येनेति** । समस्तदेशान्तर्गतत्वेन । गृहविशेषाक्षेपोऽपि—गृहविशेषस्य, आक्षेपः = अर्थतो लाभः ( गृहस्यापि समस्तदेशान्तर्गतत्वात् ) । पाक्षिकः = पक्षे प्राप्तः । इति = अतः । समानविषयतया = गृहसत्त्वरूपसमानविषयतया । विरोधः = गृहासत्त्वेन विरोधः । तथा च गृहसत्त्वगृहासत्त्वयोर्विरोधः सुस्पष्ट एव । इत्थञ्च प्रागुक्ता स्वरूपासिद्धिः साध्याप्रसिद्धिर्वा तदवस्थैवेति भावः ।

---

है तो कहीं भी नहीं है । जिससे चैत्र का सत्त्व = अस्तित्व ही यदि अनुपपद्यमान = समाप्त हो जाता है तो चैत्र का वहिःसत्त्व भी किस आधार पर अवस्थित हो पायेगा ? तथाहि—चैत्र के गृहासत्त्व = घर में न रहने के साथ सत्त्व का विरोध है या गृहसत्त्व का ? इसमें प्रथम पक्ष ठीक नहीं है, क्योंकि सत्त्व का गृहासत्त्व के साथ कोई विरोध ही नहीं है, भिन्न विषय होने से ।

( २२ ) द्वितीय विकल्प के आधार पर यदि यह कहा जाय कि 'चैत्र जीवित है और कहीं है'—इस आप्तवाक्य के अन्तर्गत 'कहीं है' इससे देशसामान्य आ जाता है और देशसामान्य के अन्तर्गत गृहरूप देश का आक्षेप = अर्थतः लाभ पाक्षिक = एकपक्ष में आ जाता है । तव तो समान विषय होने से विरोध स्पष्ट है । अतः स्वरूपासिद्धि प्रागुक्त दोष आ जाता है । क्योंकि 'चैत्रः क्वचिदस्ति जीवित्वे सति गृहेऽसत्त्वात् अस्मदादिवत्' इस अनुमान से चैत्ररूप पक्ष में 'क्वचित् सत्त्वरूपसाध्यात्मकधर्म' विद्यमान है अर्थात् चैत्र जीवित होता हुआ जब कि घर में नहीं है तो कहीं अवश्य है, यहाँ 'कहीं' पद से 'देशसामान्य' का ग्रहण होता है । 'देश' से 'गृह = घर' रूप देश भी आ गया, इससे चैत्र का घर में रहना सिद्ध है, तव 'गृहेऽसत्त्वात्' यह हेतु पक्ष = चैत्र में नहीं रह सकता है, अतः 'पक्षे हेत्वभावः स्वरूपासिद्धिः' यह स्वरूपा-

( २३ ) नाऽपि प्रमाणविनिश्चितो गृहाभावः पाक्षिकमस्य गृहसत्त्वं प्रतिक्षिपन् सत्त्वमपि प्रतिक्षेप्तुं सांशयिकत्वं च व्यपनेतुमर्हतीति युक्तम्। गृहावच्छिन्नेन चैत्राभावेन गृहसत्त्वं विरुद्धयते, न तु सत्त्वमात्रम्, तस्य तत्रौदासीन्यात्। तस्माद् गृहाभावेन लिङ्गेन सिद्धेन सतो बहिर्भावोऽनुमीयत इति युक्तम् ¹।

---

विरोधं निषेधति—न **प्रमाणविनिश्चितस्येति**। प्रत्यक्षप्रमाणेन सुनिश्चितस्य। गृहेऽसत्त्वस्य=गृहेऽभावस्य। पाक्षिकतया=सम्भावनामात्रेण, पक्षे=देशैकभागे, प्राप्ततया। सांशयिकेन=संशयग्रस्तत्वेन। सन्दिग्धेन=अनिश्चितेनेत्यर्थः। गृहसत्त्वेन। प्रतिक्षेपायोगात्=गृहाऽसत्त्वात्मकहेतोः प्रतिक्षेपस्य=निराकरणस्य=स्वरूपासिद्धिपर्यवसन्नस्य, अयोगात्=कर्तुमशक्यत्वात्। प्रमिताऽप्रमितयोरेकत्र सन्निपाते प्रमितेनाऽप्रमितस्यैव प्रतिक्षेपः समुचितो न त्वप्रमितेन प्रमितस्य, इत्थञ्च गृहासत्त्वात्मकहेतुर्न स्वरूपासिद्धया दुष्टत्वादसद्धेतुरित्यर्थः।

( २३ ) ननु प्रमितं गृहासत्त्वं यथा गृहसत्त्वं निषेधति तथा सत्त्वमात्रमेव निषेधतु इत्याशङ्क्य निराकरोति—**नापि प्रमाणविनिश्चित इति**। प्रत्यक्षप्रमाणेन विनिश्चितः। गृहाभावः=गृहासत्त्वम्। अस्य=चैत्रस्य। पाक्षिकम्=पक्षे=देशैकभागे, आक्षेपात् प्राप्तम्। गृहसत्त्वम्। प्रतिक्षिपन्=निराकुर्वन्। सत्त्वमपि=सत्त्वमात्रमपि=यत्र कुत्रापि देशे सत्त्वमपीत्यर्थः, गृहसत्त्वमिव बहिःसत्त्वमपीति यावत्। प्रतिक्षेप्तुम्=निषेद्धुम्=निरसितुम्। सांशयिकत्वम्=सन्दिग्धत्वम्। व्यपनेतुम्=निराकर्तुम्। अर्हतीति न युक्तम्।

गृहसत्त्वस्य प्रत्यक्षप्रमाणविनिश्चितो यो गृहासत्त्वरूपो बाधस्तस्य सांशयिकत्वं नहि क्वचिद् दृष्टम्। अपि च गृहसत्त्वस्य सन्दिग्धत्वे चैत्रो गृहेऽस्ति, नास्ति वेति संशयस्वरूप निर्वाच्यम्। तथा सति गृहसत्त्वमिव गृहासत्त्वमपि संशयविषयीभूतं स्यात्। तच्च न युक्तम्—यतो गृहासत्त्वस्य विशेषतश्चाक्षुषप्रमाविषयत्वात्तस्य विपरीतप्रमाणविषयत्वरूपः संशयो न कदापि भवितुमर्हति। किं स्थाणुत्वनिश्चये जायमाने स्थाणुर्वा पुरुषो वेति संशयो जायते कस्यापि प्राणिन इति।

---

सिद्धि दोष स्पष्ट है। 'इति चेन्न' यदि ऐसा कहते है, तो वह ठीक नहीं है, क्योंकि चैत्र का घर में न रहना—'गृहेऽसत्त्व' प्रत्यक्षप्रमाण से जब कि अच्छी प्रकार निश्चित हो चुका है, तब फिर 'क्वचिदस्ति' का पाक्षिक तथा सांशयिक पर्यवसित रूप जो 'गृहसत्त्व' =घर में रहना है, उससे 'गृहेऽसत्व' का प्रतिक्षेप=निषेध नही हो सकता है।

( २३ ) चैत्र का प्रत्यक्षप्रमाण से निश्चित 'गृहाभाव' चैत्र के गृहसत्त्व का निषेध करता हुआ 'क्वचिदस्ति' से बोध्य जो चैत्र का सत्त्व, उसका भी प्रतिक्षेप=निषेध करेगा; एवं गृहसत्त्व का जो सांशयिकत्व रूप है उसका भी निराकरण करेगा। 'इति न युक्तम्' यह कथन युक्तियुक्त नही है। कारण कि गृहावच्छिन्न=गृहनिष्ठ=घर में रहने वाला जो प्रत्यक्षप्रमाण-विनिश्चित चैत्र का अभाव, उस चैत्राभाव के साथ केवल

एतेन—'विरुद्धयोः प्रमाणयोर्विषयव्यवस्थयाऽविरोधापादनमर्थापत्तेर्विषयः' इति निरस्तम्, अवच्छिन्नानवच्छिन्नयोर्विरोधाभावात्। उदाहरणान्तराणि चार्थापत्तेरेवमेवानुमानेऽन्तर्भावनीयानि। तस्मान्नाऽनुमानात्प्रमाणान्तरमर्थापत्तिरिति सिद्धम्।

---

इदानीं गृहसत्त्वस्य बाधं सत्त्वमात्रस्य च बाधाभावं दर्शयति—**गृहावच्छिन्नेनेति**। गृहवृत्तिना, गृहनिष्ठेनेत्यर्थः। चैत्राभावेन। तस्य=गृहासत्त्वस्य। तत्र=सत्त्वमात्रनिराकरणे। औदासीन्यात्=विरोधाभावेन निर्व्यापारत्वात्।

उपसंहरति—**तस्मादिति**। यतश्चैत्रस्य गृहासत्त्वं प्रत्यक्षप्रमाणविनिश्चितं तस्मादित्यर्थः। गृहाभावेन=गृहासत्त्वेन। लिङ्गेन=हेतुना। सिद्धेन=प्रत्यक्षप्रमाणतः सिद्धेन, प्रत्यक्षप्रमाणविनिश्चितगृहाऽसत्त्वहेतुनेत्यर्थः। सतः=जीवतश्चैत्रस्य। बहिर्भावः=बहिःसत्त्वम्। अनुमीयते=चैत्रो बहिरस्ति जीवित्वे सति गृहेऽसत्त्वात्।

सम्प्रति अर्थापत्तेर्विषयं प्रदर्श्य तस्याः प्रामाण्यं निराकर्तुमाह—**एतेनेति**। वक्ष्यमाणहेतुनेत्यर्थः। अवच्छिन्नानवच्छिन्नयोर्विरोधाभावप्रदर्शनेन। निरस्तमित्यनेनाऽन्वयः। विरुद्धयोः=सम्भावनामात्रेण विरोधावच्छिन्नयोः प्रत्यक्षागमप्रमाणयोः, न तु वस्तुतो विरुद्धयोः। विषयव्यवस्थया=आगमस्य बहिःसत्त्वं विषयः, प्रत्यक्षस्य च गृहासत्त्वमिति विषयव्यवस्थयेत्यर्थः। अविरोधापादनम्=विरोधाभावसम्पादनम्। अर्थापत्तेः=अर्थापत्तिप्रमाणस्य। विषयः=फलम्। इति मतं निरस्तम्। तत्र हेतुमाह—**अवच्छिन्नेति**। गृहावच्छिन्नमसत्त्वं प्रत्यक्षसिद्धम्। तदनवच्छिन्नं च सत्त्वं (बहिःसत्त्वम्) आगमसिद्धम्, अवच्छेदकभेदेन एकस्मिन्नधिकरणे भावाभावयोर्वृत्तौ न कश्चिद् विरोधश्च अतस्तयोर्विरोधाभावात्। तन्निराकरणार्थमर्थापत्तेः प्रमाणान्तरत्वस्वीकारो व्यर्थ एवेति भावः। **उदाहरणान्तराणीति**। 'पीनो देवदत्तो दिवा न भुङ्क्ते' इति वाक्यावगतं रात्रिभोजनमर्थापत्त्या कल्प्यते। एवमन्यान्यपि उदाहरणानि अर्थापत्तेः सन्ति, परन्तु तेषां सर्वेषामनुमानसाध्यत्वान्नार्थापत्तेः फलभूतानि तानि। अनुमानञ्च—

---

चैत्र के गृहसत्त्व का विरोध है, न कि 'क्वचिदस्ति' से बोध्य सत्त्वमात्र का; क्योंकि सत्त्वमात्र के बाध करने में गृहासत्त्व उदासीन=शक्तिविहीन है—'तत्र तस्यौदासीन्यात्'। इसलिए प्रत्यक्षप्रमाण से सिद्ध गृहाभाव=गृहासत्त्वरूप लिङ्ग=हेतु से जीवित चैत्र के बहिर्भाव का अनुमान होना सर्वथा युक्त=उचित है। अर्थात्—'चैत्रः बहिरस्ति जीवित्वे सति गृहेऽसत्त्वात् अस्मदादिवत्'। **एतेनेति**। सत्त्व और गृहासत्त्व का कोई विरोध नहीं है; इस पूर्वोक्त विचार से सत्त्व-गृहासत्त्वरूप विरुद्ध अर्थ के साधक जो आगम और प्रत्यक्षप्रमाण इन दोनों प्रमाणों के जो विषय=आगमप्रमाण का बहिःसत्त्व, प्रत्यक्षप्रमाण का गृहासत्त्व, उसकी व्यवस्था से जो बहिःसत्त्व तथा गृहासत्त्व का अविरोधापादन, वही अर्थापत्ति का विषय है। एतेन=इस पूर्वोक्त विचार से कुछ लोगों का यह कथन निरस्त हो जाता है। क्योंकि अवच्छिन्न और अनवच्छिन्न अर्थात् गृहावच्छिन्न जो प्रत्यक्षप्रमाणसिद्ध चैत्र का असत्त्व तथा गृहान-

( २४ ) एवमभावोऽपि प्रत्यक्षमेव । न हि भूतलस्य परिणामविशेषात् कैवल्यलक्षणादन्यो घटाभावो नाम । प्रतिक्षणपरिणामिनो हि सर्वे एव भावाः,

---

देवदत्तो रात्रिभोजी दिवाऽभुञ्जानत्वे सति पीनत्वात्, व्यतिरेके खलु—यो नास्ति रात्रिभोजी स दिवाऽभुञ्जानः सन् पीनोऽपि नास्ति, सोपवासवत् । अर्थापत्तेः प्रमाणान्तरत्वनिराकरणमुपसंहरति—**तस्मादिति** । अनुमानात्=अनुमानप्रमाणात् । अर्थापत्तिः । प्रमाणान्तरम्=अतिरिक्तं प्रमाणम् । न=नास्तीत्यर्थः । इति सिद्धम्= इति सर्वथा सुनिश्चितम् ।

( २४ ) एवं भट्टमतानुयायिनो वेदान्तिनश्च यद्यत्र घटः स्यात्तर्हि उपलभ्येत, नोपलभ्यतेऽतो नास्तीत्येवं प्रत्यक्षयोग्यवस्तूपलम्भाभावजन्यमिह भूतले घटो नास्तीति घटात्मकविषयाभावज्ञानमनुपलब्धिप्रमाणकार्यमित्यतोऽनुपलब्धिरतिरिक्तं प्रमाणमवश्यमभ्युपेयमित्याशङ्कां निराकरोति—**एवमभावोऽपीति** । अर्थात् यथाऽर्थापत्तेर्न प्रमाणान्तरत्वं तथा भट्टादिमतस्वीकृताया अनुपलब्धेरपि न प्रमाणान्तरत्वमपि तु प्रत्यक्षमेव सा । अभावोऽपि=अनुपलब्धिरपि । प्रत्यक्षमेव=प्रत्यक्षानतिरिक्तं प्रमाणम् ।

ननु 'प्रतिविषयाध्यवसायो दृष्टम्' इत्यनेनार्थसन्निकृष्टेन्द्रियाश्रिताध्यवसाय(ज्ञान)-स्यैव प्रत्यक्षत्वकथनादभावेन सहेन्द्रियसन्निकर्षाभावादभावो नेन्द्रियप्रत्यक्ष इत्याशङ्कां शमयति—**न हीति** । हि=यतः । परिणामविशेषात्=भूतलस्य परिणामविशेषात् । कैवल्यलक्षणात्=केवलभूतलस्य याऽवस्था तत्स्वरूपात्, सन्तिष्ठमानस्य द्रव्यस्य पूर्वधर्म-निवृत्तौ धर्मान्तरोत्पत्तिः परिणामः कथ्यते, तथा च सद्विजातीयत्वरूपस्य पूर्वधर्मस्य निवृत्तौ भूतलस्य कैवल्यरूपधर्मान्तरेण ( भूतलत्वेन ) या स्थितिः सैव भूतलपरिणाम इति नाऽभावस्य परिणामविशेषत्वक्षतिरिति भावः । अन्यः=भूतलाऽतिरिक्तः । नाम =नामकः, ( पदार्थः ) अस्तीति शेषः । इत्थञ्च भूतलेन परिणामिना सहेन्द्रियसन्निकर्षः संयोगात्मको भवत्येवातस्तत्परिणामविशेषोऽभावोऽपीन्द्रियसन्निकृष्ट एवेति भावः ।

---

वच्छिन्न जो आगमप्रमाणसिद्ध चैत्र का सत्त्व, इन दोनों का कोई विरोध ही नहीं है; अतः विरोध दूर करने के लिए जो अर्थापत्ति का प्रमाणान्तर स्वीकार है, वह सर्वथा व्यर्थ है । इसी प्रकार अर्थापत्ति के जो उदाहरणान्तर हैं, उन सभी का अनुमान में अन्तर्भाव कर देना चाहिए । इसलिए अर्थापत्ति अनुमान से पृथक् प्रमाण नहीं है ।

( २४ ) इसी प्रकार अभाव भी=अभावज्ञान का कारण अनुपलब्धि भी प्रमाणान्तर नहीं है, अपितु प्रत्यक्षप्रमाण में अन्तर्भूत है ।

प्रश्न—अभाव के साथ जब इन्द्रिय का सन्निकर्ष ही नहीं, तब अभाव का इन्द्रिय से प्रत्यक्ष भी नहीं हो सकता है ?

उत्तर—न हीति । भूतले घटाभावः=भूतल में घटाभाव है अथवा भूतलं घटाभाववत्=भूतल घटाभाववाला है । यहाँ केवल भूतल का जो कैवल्यलक्षण परिणामविशेष है,-उससे अन्य कोई घटाभाव नाम की वस्तु या पदार्थ नहीं है । क्योंकि अभाव अधिकरणस्वरूप है और अधिकरण भूतल है तथा भूतल इन्द्रियग्राह्य है । अतः

ऋते चितिशक्तेः। स च परिणामभेद ऐन्द्रियक इति नाऽस्ति प्रत्यक्षानवरुद्धो विपयो यत्राऽभावाह्वयं प्रमाणान्तरमभ्युपेयमिति।

( २५ ) सम्भवस्तु यथा—खार्यां द्रोणाढकप्रस्थाद्यवगमः। स चाऽनुमानमेव। खारीत्वं हि द्रोणाद्यविनाभूतं प्रतीतं खार्यां द्रोणादिसत्त्वमवगमयति।

---

इदानीं पदार्थानां परिणामान्तरप्राप्तौ सांख्यसिद्धान्तं दर्शयति—प्रतिक्षणपरिणामिन इति। भावत्वेनाऽभिमताः सर्वेऽपि प्रकृतिमहत्तत्त्वादिस्थूलभूतान्ताः पदार्थाः सन्ति। प्रतिक्षणपरिणामिनः=क्षणं क्षणं प्रति परिणामशालितां गच्छन्ति। सर्वस्य त्रिगुणात्मकत्वात्, गुणानां चलस्वभावाच्च। ननु तर्हि भावत्वेनाभिमतस्य भावपदार्थस्याऽऽत्मनोऽपि परिणामापत्तिः स्यात्, अत आह—ऋते चितिशक्तेरिति। चितिशक्तेः=चेतनस्य। ऋते=विना। सांख्यनये आत्मनः पुष्करपलासवन्निर्लेपत्वात् निर्धर्मकत्वं श्रूयते।

ननु भवतु अभावस्य भूतलपरिणामरूपता तावतापि कथमनुपलब्धेः प्रमाणान्तरत्वं न स्वीक्रियते ? अत आह—स च परिणामभेद इति। सः=कैवल्यरूपः धर्मपरिणामविशेपः। ऐन्द्रियकः=भूतलरूपत्वेन इन्द्रियजन्यप्रत्यक्षविपयः। इति=अतः। नास्ति। प्रत्यक्षानवरुद्धः=इन्द्रियस्वरूपप्रत्यक्षप्रमाणाऽग्राह्यः। विपयः=प्रमाणान्तरत्वेनाऽभिमतोऽनुपलब्धिनामकः कश्चित् पदार्थः। नास्ति। यत्र=यस्मिन् अभावविपयकज्ञाने। अभावाह्वयम्=अभावनामकम्, अभावविपयकज्ञानजनकाऽनुपलब्धिस्वरूपम्। प्रमाणान्तरम्=प्रत्यक्षप्रमाणातिरिक्तं प्रमाणम्। अभ्युपेयं भवेत्। इत्थञ्चाऽनुपलब्धिग्राह्यत्वेनाऽङ्गीकृतस्याऽभावरूपस्य प्रमेयस्येन्द्रियजन्यप्रत्यक्षविपयत्वेनाऽनुपलब्धेर्नास्ति प्रमाणान्तरत्वमिति तु परमार्थः।

( २५ ) पौराणिकानां नये स्वीकृत-'सम्भव'प्रमाणस्याऽनुमानस्वरूपतां प्रतिपादयति—सम्भवस्त्विति। खारीद्रोणादयः परिमाणविशेपाः। द्रोणचतुष्टयं खारी, चतुराढकश्च द्रोणः, चतुःप्रस्थं चाढकं, चत्वारः कुडवाश्च प्रस्थं, मुष्टिचतुष्टयं च कुडव इति। एवञ्च खार्याख्ये महापरिमाणे स्वल्पपरिमाणा द्रोणादयोऽन्तः सम्भवन्तीत्येव-

---

भूतल के इन्द्रियग्राह्य होने से भूतलस्वरूप अभाव भी इन्द्रियग्राह्य होने से प्रत्यक्ष ही है, अतः अभावज्ञान के लिए अनुपलब्धि को प्रमाणान्तर मानना व्यर्थ है। क्योंकि प्रकृति महत्तत्त्व से लेकर स्थूलभूत-पर्यन्त सभी भावपदार्थ प्रतिक्षण परिणामशील है, केवल चेतन पुरुप को छोड़कर, क्योंकि वह निर्धर्मक है। और केवल भूतल का जो कैवल्यलक्षण परिणामभेद है, वह ऐन्द्रियक=इन्द्रियजन्य प्रत्यक्षात्मक ज्ञान का विपय है, अतः इन्द्रियरूप प्रत्यक्षप्रमाण से अग्राह्य कोई भी अभाव नाम की वस्तु नहीं है, जिसका ग्राहक अनुपलब्धि को प्रमाणान्तर स्वीकार किया जाय।

( २५ ) पौराणिक लोग संभव को एक अतिरिक्त प्रमाण मानते हैं। जैसे खारी में द्रोण, आढ़क, प्रस्थ इत्यादि के परिमाण–तौल का ज्ञान कराने वाला प्रमाण संभव है। परन्तु संभवप्रमाण से जो द्रोणादि का ज्ञान होता है, वह संभवप्रमाण का फल

( २६ ) यच्चाऽनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यमात्रम्—इति होचुर्वृद्धाः—इत्यैतिह्यम् ( द्र० न्यायभाष्य २।२।१ )। यथा 'इह वटे यक्षः प्रति-

---

म्प्रकारकोऽवगमः = अवबोधः 'सम्भवः'। सम्भवस्याऽनुमानेऽन्तर्भावमाह—**स चेति**। स च = सम्भवश्च। अनुमानमेव = सम्भवस्याऽनुमानेऽन्तर्भूतत्वान्न प्रमाणान्तरत्वम्। अनुमानान्तर्भावप्रकारं प्रतिपादयति—**खारीत्वं हीति**। यथा वह्निनाऽविनाभूतो धूमो ज्ञातः सन्नेव वह्निविषयिणीं प्रमानुमितिं जनयति तथा द्रोणाद्यविनाभूतं खारीत्वं द्रोणादिसत्त्वमवगमयतीत्यनुमानसमानत्वान्नानुमानात् पृथक् 'सम्भव'नामकं प्रमाणमस्ति।

**अयमाशयः**—अनुमानमविनाभावरूपव्याप्तिबलेनैव अर्थं प्रतिपादयतीत्येव दर्शयति—खारीत्वं द्रोणाद्यविनाभूतं = द्रोणादिव्याप्यं सदेव प्रतीतं भवति, अर्थाद् द्रोणादिव्याप्यत्वेन प्रतीतिविषयीभूतमेव खारीत्वं द्रोणादिसत्त्वं खार्यां बोधयति। यथा वह्निव्याप्यत्वेन प्रतीतिविषयीभूतो धूमो वह्निसत्त्वमवगमयति = बोधयति पर्वते। अतः सम्भवोऽनुमाने एवान्तर्भूतः। अनुमानञ्च—'खारी-द्रोणादिघटिता खारीत्वात्' इत्यनुमानेन खार्यां द्रोणादिघटितत्वं सिद्ध्यति। घटितत्वसम्बन्धेन द्रोणवत्ताज्ञानमनुमानमेव, तदर्थं खारीत्वरूपसम्भवस्य प्रमाणान्तरत्वस्वीकारो व्यर्थः।

( २६ ) इतिहासं विदाङ्कुर्वद्भिरैतिह्यनामकमेकमतिरिक्तं प्रमाणं स्वीक्रियते, तदपि निराक्रियते—**यच्चेति**। अनिर्दिष्टप्रवक्तृकम् = असौ उच्चारयिता एतद्विषयकप्रमाज्ञानवान् इत्यादिरूपेण न निर्दिष्टः = निश्चितः, प्रवक्ता यस्य तद् अनिर्दिष्टप्रवक्तृकम्। प्रवादपारम्पर्यमात्रम् = बहुजनपरम्पराप्रवादमात्रम्। वृद्धाः = वयोवृद्धाः, विद्यावृद्धाश्च। इति। ह = निश्चयेन। ऊचुः = कथितवन्तः। इति वाक्यरूपं वचनमेव ऐतिह्यं प्रमाणम्। तदुदाहरणमाह—**यथेति**। 'इह वटे' इत्यादिवाक्यम्। वाक्यजन्यं यक्षनिवासकर्तृकज्ञानं फलं प्रमितिः। तन्निराकरोति—**न तत् प्रमाणमिति**। अस्तित्वसम्पन्नस्यैव प्रमाणस्य सांख्याभिमतप्रमाणत्रयान्तर्भावविचारो युक्तः, ऐतिह्यन्तु प्रमाण-

---

संभवप्रमिति है। अर्थात् जिसके पास सौ रुपये हैं, वहाँ पचास का होना तो सर्वथा संभव है, ऐसे ही 'खारी' का ज्ञान होने पर द्रोण आदि का ज्ञान होना यह भी 'सभव' प्रमाण का फल है। परन्तु सांख्यसिद्धान्तानुसार संभवप्रमाण भी अनुमान ही है। जो अविनाभाव = व्याप्ति के आधार पर अर्थ का प्रतिपादन करे वह 'अनुमान' ही है; जैसे खारीत्व द्रोणादि का अविनाभूत = व्याप्य होकर प्रतीत होता है। 'यत्र यत्र खारीत्वं तत्र तत्र द्रोणादिघटितत्वम्'—इस व्याप्ति के आधार पर खारीत्व द्रोणादि का व्याप्य है, यह स्पष्ट है। जैसे कि धूम वह्नि का व्याप्य होकर वह्नि का अनुमापक बनता है, ऐसे ही प्रकृत में भी खारीत्व द्रोणादि के सत्त्व = सत्ता का अवगम = निश्चय कराने के कारण 'संभव' अनुमान में ही अन्तर्भूत है।

( २६ ) ऐतिहासिक लोग इतिहास के आधार पर 'ऐतिह्य' प्रमाण मानते हैं। ऐतिह्य का लक्षण है कि जो अनिर्दिष्ट प्रवक्तृक हो अर्थात् केवल परम्परा से वृद्धजनों के प्रवादस्वरूप हो वही 'ऐतिह्य' प्रमाण है। जैसे वृद्ध लोगों ने कह दिया कि इस वटवृक्ष

वसति' इति, न तत् प्रमाणम्। अनिर्दिष्टप्रवक्तृकत्वेन सांशयिकत्वात्। आप्तवक्तृकत्वनिश्चये त्वागम एव, इत्युपपन्नं—'त्रिविधम्प्रमाणम्' इति ॥ ५ ॥

( १ ) एवं तावद् व्यक्ताव्यक्तज्ञलक्षणप्रमेयसिद्धयर्थं प्रमाणानि लक्षितानि। तत्र व्यक्तं पृथिव्यादि स्वरूपतः पांसुलपादो हालिकोऽपि प्रत्यक्षतः प्रतिपद्यते। पूर्ववता चानुमानेन धूमादिदर्शनाद् वह्न्यादीनि चेति तद्व्युत्पादनाय मन्दप्रयोजनं शास्त्रमिति दुरधिगममनेन व्युत्पाद्यम्। तत्र यत्प्रमाणं यत्र शक्तं तदुक्तलक्षणेभ्यः प्रमाणेभ्यो निष्कृष्य दर्शयति—

---

मेव नास्ति। कुतः ? इति जिज्ञासायामाह—**अनिर्दिष्टेति**। अनिश्चितोच्चारयितृकत्वेन तदीयप्रामाण्यस्य, सांशयिकत्वात्=संशयग्रस्तत्वात्। ननु यथार्थवक्तृपरम्परागतप्रवादरूपत्वेनैवैतिह्यस्य प्रामाण्यमस्तीत्यत आह—**आप्तवक्तृकत्वेति**। आप्तः=यथार्थवक्ता, तथाविधवक्तृकमिदं वाक्यमिति निश्चये तु। आगम एव=एतादृशं वाक्यं शब्देऽन्तर्भूतमिति नास्ति ऐतिह्यस्य प्रमाणान्तरत्वम् ॥ ५ ॥



( १ ) इदानीं षष्ठकारिकामवतारयति—**एवमिति**। तावदिति वाक्यालङ्कारे। **व्यक्ताव्यक्तज्ञेति**। व्यक्तं=बुद्धि-अहङ्कार-मनांसि, इन्द्रियाणि, पञ्चतन्मात्राणि, स्थूलभूतानि चैते विंशतित्रयंपदार्था व्यक्तशब्देन कथ्यन्ते, इतोऽन्यत् प्रकृति-पुरुषेति पदार्थद्वयमवशिष्टम्, सर्वानादाय पञ्चविंशतिपदार्था भवन्ति, ते एव च स्वीकृताः सांख्यैः। एतदेवोक्तं—**व्यक्ताव्यक्तज्ञेति**। अव्यक्तं=प्रकृतिः, ज्ञः=पुरुषः=आत्मा=चेतनः। एतेषां प्रमेयपदार्थानां सिद्धयर्थमेव प्रमाणानि लक्षितानि। **तत्रेति**। तत्र='व्यक्त-अव्यक्त-ज्ञ' एतत्त्रिविधपदार्थमध्ये। **व्यक्तमिति**। व्यक्तपदार्थान्तर्गतं यत् पृथिव्यादि तत्। **स्वरूपत इति**। स्वरूपतः=घट-पटादिस्थूलपदार्थरूपेण। पांसुलपादः=धूलिधूसरितपादः। हालिकोऽपि=हलचालकोऽपि, निरक्षरः पुरुषोऽपीत्यर्थः। प्रत्यक्षतः=प्रत्यक्षप्रमाणतः। प्रतिपद्यते=निश्चिनोति। एवं पूर्ववता=पूर्ववन्नामकेन। **वह्न्या-**

---

के ऊपर यक्ष रहता है—यह वृद्धजन-वाक्यजन्य जो तादृश वृक्षानुयोगिकयक्षप्रतियोगिकनिवास ज्ञान है, वही उस ऐतिह्य प्रमाण का फल है। परन्तु 'न तत् प्रमाणान्तरम्' अर्थात् 'ऐतिह्य' स्वतन्त्र अतिरिक्त प्रमाण नहीं है। क्योंकि उस वाक्य के वक्ता के निश्चयात्मक ज्ञान न होने के कारण ऐतिह्य सांशयिक है और यदि यह निश्चय है कि इस वाक्य का वक्ता अमुक व्यक्ति है तब तो आप्तवक्तृकत्व का निश्चय हो जाने से 'ऐतिह्य' आगम=शब्दप्रमाण में ही अन्तर्भूत है, अतिरिक्त प्रमाण नहीं है। इस प्रकार तीन ही प्रमाण हैं, यह सिद्ध है ॥ ५ ॥

( १ ) इस प्रकार व्यक्त, अव्यक्त और ज्ञ ( चेतनपुरुष ) इन प्रमेय पदार्थों की सिद्धि के लिए प्रमाणों के लक्षण किये गये हैं। उनमें व्यक्त पृथिवी आदि=घट-पटादि को स्वरूप से पांसुलपाद=धूलिधूसरित, हालिक=हल चलाने वाला भी प्रत्यक्षप्रमाण से जानता है। और अनुमेय पदार्थ जो वह्नि आदि हैं, उन्हें धूमदर्शन से पूर्ववत् अनुमान से सुगमता से जान लिया जाता है, अतः इस प्रकार के सुगमता से

**सामान्यतस्तु दृष्टादतीन्द्रियाणां प्रतीतिरनुमानात् ।**
**तस्मादपि चासिद्धं परोक्षमाप्तागमात् सिद्धम् ॥ ६ ॥**

( २ ) 'सामान्यतः' इति । 'तु'शब्दः प्रत्यक्षपूर्ववद्भ्यां विशिनष्टि । सामान्यतोदृष्टादध्यवसायादतीन्द्रियाणां प्रधानपुरुषादीनां प्रतीतिः—चितिच्छायापत्तिर्बुद्धेरध्यवसाय इत्यर्थः ।

---

दीनि । अप्रत्यक्षीभूतानि अपि प्रतिपद्यते इति शेषः । अतः, तद्व्युत्पादनाय=तादृशप्रमेयपदार्थज्ञानाय । दुरधिगमम्=दुरवबोधम् । अनेन=सांख्यशास्त्रेण । व्युत्पाद्यम्=निरूपणीयम् । तत्र=सूक्ष्मतन्मात्रादिव्यक्ताव्यक्तचेतनपदार्थानां मध्ये । यत्र=यस्मिन् प्रमेये । शक्तम्=ज्ञानजनने समर्थम् । तत्=तत्प्रमाणम् । उक्तलक्षणेभ्यः । प्रमाणेभ्यः=प्रत्यक्षानुमानागमेभ्यः । निष्कृष्य=पृथक्कृत्य ।

अन्वयः—सामान्यतस्तु दृष्टादिति मूलम् । सामान्यतोदृष्टात् । अनुमानात् । अतीन्द्रियाणाम् । प्रतीतिः । ( जायते ) तस्मादपि च असिद्धं परोक्षम् आप्तागमात् सिद्धम् ।

( २ ) 'तु' शब्दः । विशिनष्टि=व्यवच्छिनत्ति । अर्थात् 'तु'शब्दः सामान्यतोदृष्टमनुमानं प्रत्यक्षप्रमाण-पूर्ववदनुमानाभ्यां व्यवच्छिनत्तीत्यर्थः । सांख्यमते बुद्धिवृत्तेरेव प्रमाणत्वादतः सामान्यतोदृष्टादनुमानादित्यस्य तथैव विवरणमाह—अध्यवसायादिति । तथा च सांख्यनये लिङ्गज्ञानजन्यचित्तवृत्तेरनुमानप्रमाणत्वादित्यर्थः । अर्थात् व्याप्तिज्ञानादिजन्यो 'वह्निमानयम्' इत्याद्याकारो यो बुद्धेर्वृत्तिविशेषस्तद्रूपाध्यवसायस्यैवानुमानप्रमाणत्वादिति भावः । अतीन्द्रियाणाम्=इन्द्रियाग्राह्याणाम् । प्रतीतिः=पौरुषेयबोधात्मकफलरूपानुमितिः ।

ननु जडाया बुद्धेः कथं ज्ञानरूपोऽध्यवसायः ? इत्यत्राह—चितिच्छायापत्तिरिति । चित्सन्निधानेन या बुद्धेश्चित्—तादात्म्यापत्तिस्तद्बलादेव बुद्धेर्ज्ञानरूपो व्यापार इत्यर्थः ।

---

ज्ञेय प्रमेय पदार्थों के लिए यह सांख्यशास्त्र मन्द प्रयोजन है, इससे दुरधिगम=कठिनतया ज्ञेय अर्थात् दुर्बोध प्रमेयपदार्थों को ही जानना चाहिए । अतः ऊपर कथित लक्षण वाले प्रमाणों में से जो प्रमाण जिस प्रमेयपदार्थ को सिद्ध करने में समर्थ हैं, उसे विभक्त कर कारिकाकार ईश्वरकृष्ण दिखला रहे हैं—

कारिकार्थ—अतीन्द्रिय पदार्थों की प्रतीति=ज्ञान सामान्यतोदृष्ट अनुमान से होती है और सामान्यतोदृष्ट अनुमान से भी जो परोक्ष विषय असिद्ध है=निश्चय के अयोग्य है उसका निश्चय आप्तागम=शब्दप्रमाण से होता है ।

( २ ) 'तु' शब्द सामान्यतोदृष्ट अनुमान को प्रत्यक्ष तथा पूर्ववत् से पृथक् करता है । प्रधान=प्रकृति और पुरुष आदि की प्रतीति=चितिच्छायापत्ति अर्थात् आत्मा का बुद्धि में प्रतिबिम्ब पड़ने से बुद्धि की चेतना ( पुरुष ) के साथ तादात्म्य की प्राप्तिरूप आपत्ति, वही बुद्धि का अध्यवसाय है; यह सब सामान्यतोदृष्ट अनुमान

( ३ ) उपलक्षणं चैतत्, शेषवत इत्यपि द्रष्टव्यम् । तत्किं सर्वेष्वतीन्द्रियेषु सामान्यतोदृष्टमेव प्रवर्त्तते ? तथा च यत्र तन्नाऽस्ति, महदाद्यारम्भक्रमे स्वर्गापूर्वदेवतादौ च तत्र तेषामभावः प्राप्त इत्यत आह—'तस्मादपि' इति । तस्मादपीत्येतावतैव सिद्धे चकारेण शेषवत इत्यपि समुच्चितम् ॥ ६ ॥

---

अमुमेवाऽर्थमाह—**बुद्धेरध्यवसाय इति** । बुद्धचा उपात्तविषयाणां स्वप्रतिविम्बिते चेतने समर्पणं फलं=बोधः=प्रमा=अनुमितिरित्यर्थः ।

( ३ ) उपलक्षणं चैतत् । एतत्=सामान्यतोदृष्टादिति कथनम् । शेषवतः=अवीतात् केवलव्यतिरेकीत्याख्यपरिशेषानुमानादपि केषाञ्चिदतीन्द्रियाणां तन्मात्रेन्द्रियाणां प्रतीतिर्भवतीत्यपि द्रष्टव्यम् । **तत् किमिति** । अर्थात् किं समस्ताऽतीन्द्रियप्रमेयपदार्थेषु सामान्यतोदृष्टानुमानमेव प्रवर्तते ? तत्र ओम् ( हाँ ) इति वदन्तं प्रति ब्रूते—**तथा चेति** । यत्र=यस्मिन्नतीन्द्रिये । तत्=सामान्यतोदृष्टमनुमानं शेषवद् वा । नास्ति=न प्रवर्तते । यथा—महदाद्यारम्भक्रमे अर्थात् 'प्रकृतेर्महाँस्ततोऽहङ्कारः' इत्यादिसृष्टचारम्भक्रमे, स्वर्गादिपरलोके, अपूर्वाख्यधर्माधर्मयोश्च, इन्द्रादिदेवतासु च । आदिना यागादीनां स्वर्गादिहेतुत्वे, क्षीर-दधिसागरादौ च । एतेषु नानुमानं प्रमाणमपि प्रवर्तते अतोऽतीन्द्रियसिद्धौ अनुमानातिरिक्तप्रमाणानङ्गीकारे तेषामभावप्रसङ्गः स्यात्तन्निरासायाह—**तस्मादपीति** । सामान्यतोदृष्टानुमानादपीत्यर्थः । तथा च सामान्यतोदृष्टानुमानात् शेषवदनुमानाच्च यदतीन्द्रियं न सिद्धचति तत्र शब्दस्य प्रामाण्यमनुसन्धेयमिति तु परमार्थः । तदेवोक्तं वाचस्पतिमिश्रेण—'तस्मादपि चासिद्ध परोक्षमाप्तागमात् सिद्धम्' ॥ ६ ॥

---

से होता है । अर्थात् प्रधान, पुरुष आदि की प्रतीति न प्रत्यक्षप्रमाण से और न ही 'पूर्ववत्' अनुमान से होती है, किन्तु सामान्यतोदृष्ट अनुमान से होती है ।

( ३ ) सामान्यतोदृष्ट अनुमान से अतीन्द्रिय पदार्थों की प्रतीति होती है; यह कथन उपलक्षण है अर्थात् सर्वांश में या सर्वतोभावेन मान्य नहीं है, क्योंकि 'शेषवत्' अनुमान से भी अतीन्द्रिय पदार्थों की प्रतीति होती है, अतः उसे भी ले लेना चाहिए ।

प्रश्न—वाचस्पतिमिश्र से किसी ने ( शिष्य-प्रभृति जिज्ञासु ने ) पूछा कि—'तत् किम्' ? तो क्या सभी अतीन्द्रिय पदार्थों की प्रतीति कराने में सामान्यतोदृष्ट तथा शेषवत् अनुमान ही प्रवृत्तिशील बनते हैं ? यदि ऐसा माना जाय तो जहाँ उन दोनों अनुमानों की प्रवृत्ति नहीं होती, जैसे महत्=महत्तत्त्व आदि के आरम्भक्रम में=उत्पत्तिक्रम में 'प्रकृतेर्महाँस्ततोऽहङ्कारः' इत्यादि रूप में होने वाले उत्पत्तिक्रम-स्थल में तथा स्वर्ग, धर्माऽधर्मरूप अपूर्व में, देवतादि में, वहाँ पूर्वोक्त दोनों अनुमानों की प्रवृत्ति न होने पर स्वर्गादि के अभाव की आपत्ति लग जायेगी ।

उत्तर—**'तस्मादपि' इति** । अर्थात् सामान्यतोदृष्ट तथा शेषवत् अनुमान से जो ( परोक्ष ) अतीन्द्रिय वस्तु सिद्ध नहीं हो सकती है, उस वस्तु की सिद्धि आप्तागम=शब्दप्रमाण से होती है ॥ ६ ॥

( १ ) स्यादेतत्, यथा गगनकुसुमकूर्मरोमशशविषाणादिषु प्रत्यक्षमप्रवर्त्तमानं तदभावमवगमयति, एवं प्रधानादिष्वपि । तत्कथं तेषां सामान्यतोदृष्टादिभ्यः सिद्धिः ? इत्यत आह—

**अतिदूरात् सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात् ।**
**सौक्ष्म्याद्व्यवधानादभिभवात् समानाभिहाराच्च ।। ७ ।।**

(२) 'अतिदूरात्' इति । अनुपलब्धिरिति वक्ष्यमाणं सिंहावलोकनन्यायेनाऽनुषञ्जनीयम् । यथा उत्पतन् वियति पतत्री अतिदूरतया सन्नपि प्रत्यक्षेण

---

**अनुपलब्धिकारणत्वविवेचनम्**

( १ ) सप्तमकारिकामुत्थापयितुं शङ्कते—**स्यादेतदित्यादिना** । एतत्=वक्ष्यमाणम् । स्यात्=भवेत् । **यथेति** । यथा गगनकुसुमादिषु प्रत्यक्षप्रमाणस्याप्रवर्तमानत्वात्तेषामभावः सिद्ध्यति, तेषामभावो वा प्रमीयते । तथैव प्रकृतिपुरुषयोरपि अभावः प्रमीयताम् । तदेवोक्तम्—**एवं प्रधानादिष्वपीति** । तेषाम्=प्रधानपुरुषादीनाम् । तथा च असत्त्वेन निश्चिते वस्तुनि न प्रमाणावतारः सम्भवति । अलीकस्य सर्वथा प्रमाणागोचरतया अनुमानागमयोरप्यप्रवृत्तिरेव स्यादिति भावः ।

**अन्वयः**—अतिदूरात्, अतिसामीप्याद्, इन्द्रियघातात्, मनोऽनवस्थानात्, सौक्ष्म्याद् व्यवधानाद्, अभिभवात् समानाभिहारात् च ( अनुपलब्धिर्भवतीति शेषः ) ।

( २ ) समाधानमाह—विद्यमानेऽपि वस्तुनि दोषबलादिन्द्रियाप्रवृत्तिदर्शनात् न प्रधानपुरुषादीनामभावो निर्धारयितुं शक्यते, इत्यतस्तत्र दोषमाह—**अतिदूरादिति** । कस्यापि वस्तुनोऽनुपलब्धौ एतेऽष्टहेतवो भवन्ति । भावपरश्चात्र निर्देशो विज्ञेयः ।

---

( १ ) *प्रश्न—ठीक है; किसी भी वस्तु अथवा पदार्थ का प्रमाज्ञान प्रमाण के* द्वारा होता है, यह हमने भी मान लिया, क्योंकि यह सर्वानुभवसिद्ध है । परन्तु जैसे आकाशपुष्प कूर्म=कछुवे के रोम तथा शश-विषाण आदि की सिद्धि करने में सर्वथा असमर्थ प्रत्यक्षप्रमाण उनके अभाव का प्रमाज्ञान करा देता है, उसी प्रकार प्रधान, पुरुष आदि का भी अभावविषयक प्रमाज्ञान करा दे, फिर प्रधान, पुरुष आदि अप्रामाणिक अवस्तुओं की सिद्धि सामान्यतोदृष्ट तथा शेषवत् अनुमान से भी कैसे हो सकेगी ?

कारिकार्थ—उत्तर—अतिदूरत्व, अतिसामीप्य, इन्द्रियघात=इन्द्रिय का नष्ट हो जाना, मन का स्थिर न रहना, सूक्ष्मता, व्यवधान=भित्तिप्रभृति की आड़ में छिपा देना, अभिभव=किसी वस्तु को दूसरी वस्तु से ढँक देना, समानाभिहार=समान वस्तु के साथ मिल जाना—*इन आठ कारणों से वस्तु का प्रत्यक्ष नहीं हो पाता है ।* अतः वस्तुओं=पदार्थों की अनुपलब्धि=अप्रत्यक्ष में ये आठ ही कारण है ।

( २ ) वक्ष्यमाण=आगे की कारिका में पठित 'अनुपलब्धि' पद का अन्वय सिंहवलोकनन्याय से=पूर्वकारिका में अग्रिम कारिका के पद की अनुवृत्ति से इस

नोपलभ्यते। सामीप्यादित्यत्राऽप्यतिरनुवर्तनीयः। यथा लोचनस्थमञ्जनमतिसामीप्यान्न दृश्यते। इन्द्रियघातोऽन्धत्वबधिरत्वादिः। मनोऽनवस्थानात्—यथा कामाद्युपहृतमनाः स्फीतालोकमध्यवर्त्तिनमिन्द्रियसन्निकृष्टमप्यर्थं न पश्यति। सौक्ष्म्यात्—यथेन्द्रियसन्निकृष्टं परमाण्वादि प्रणिहितमना अपि न पश्यति।

---

सिंहावलोकनन्यायेनेति। यथा वने गच्छन् सिंहो मध्ये मध्ये हिंसकभीत्या पृष्ठभागमपि पश्यति, तथैवोत्तरवाक्यस्थपदानां पूर्ववाक्येष्वप्यनुसन्धानं सम्भवति। तथा चोक्तम्—

'सिंहावलोकिताख्यश्च मण्डूकप्लुतिरेव च।
गङ्गास्रोत इति ख्याता अधिकारास्त्रयो मताः॥'

अतिदूरत्वादनुपलब्धेरुदाहरणमाह—**यथा उत्पतन् वियतीति**। अतिदूरत्वं नाम इन्द्रियसन्निकर्षायोग्यत्वम्, अयं च विषयनिष्ठो दोषः। अतिसामीप्यादित्यस्योदाहरणमाह—**यथा लोचनस्थमिति**। अतिसामीप्यश्च—इन्द्रियसन्निकर्षयोग्यत्वे सति इन्द्रियवृत्त्यविषयत्वम्, अयमपि विषयनिष्ठो दोषो बोध्यः। मनोऽनवस्थानात् इत्यस्योदाहरणमाह—**यथा कामाद्युपहतमना इति**। मनोऽनवस्थानात्=इतरव्यासङ्गेनेन्द्रियसंयोगाभावात्। कामाद्युपहतमनाः—कामादिविकारेण उपहतं=दूषितं मनो यस्य सः तथा। स्फीतालोकमध्यवर्तिनम्—स्फीतः=विशेषतो विस्तृतः, यः आलोकः=सूर्यादितेजःप्रकाशस्तन्मध्ये वर्तमानमित्यर्थः। मनोऽनवस्थिततया इन्द्रियसम्बद्धमपि विषयं घटपटादिकं न पश्यति। अयञ्च मनोयोगाभावात्मकः इन्द्रियनिष्ठो दोषविशेषः। सौक्ष्म्यादित्यस्योदाहरणमाह—**यथेन्द्रियसन्निकृष्टमिति**। प्रणिहितमनाः=समाहितचित्तः। समा-

---

कारिका में अतिदूरत्वादि आठ हेतुओं के उत्तर=बाद में कर देना चाहिए, अर्थात् इन आठ अतिदूरत्वादि हेतुओं से वस्तु की अनुपलब्धि होती है।

जसे आकाश में अतिदूर उड़ता हुआ पक्षी अथवा वायुयान आदि वस्तु अपने पूरे परिमाण के सहित अतिदूर होने से प्रत्यक्षप्रमाण इन्द्रिय से उपलब्ध=प्रत्यक्षगोचर नहीं होता है।

'सामीप्यात्'—यहाँ पर भी 'अति' शब्द को जोड़ देना चाहिए। अर्थात् 'अतिसामीप्य' से भी वस्तु की अनुपलब्धि=अप्रत्यक्ष होती है। जैसे लोचनस्थ=नेत्रस्थित अंजन अतिसमीप होने से नहीं दीखता है।

'इन्द्रियघातात्'—इन्द्रियघात=इन्द्रिय के नष्ट हो जाने से भी किसी वस्तु की उपलब्धि=प्रत्यक्ष नहीं होती है। 'इन्द्रियघात'—अन्धत्व=अन्धा हो जाना, 'बधिरत्व'—=बधिर=बहरा हो जाना रूप है। अन्धे को रूप या रूपवाली वस्तु का प्रत्यक्ष नहीं होता। बधिर को शब्द का प्रत्यक्ष नहीं होता। इसी प्रकार रसनघात को रस का और घ्राणघात को गन्ध का प्रत्यक्ष नहीं होता है।

'मनोऽनवस्थानात्'=मन स्थिर न रहने से अर्थात् कामादि विकार से मन के दूषित हो जाने पर विक्षिप्तमनस्क पुरुष प्रचण्ड प्रकाश में पड़ी हुई वस्तु इन्द्रियसम्बद्ध को भी नहीं देख पाता है।

व्यवधानात्—यथा कुड्यादिव्यवहितं राजदारादिकं न पश्यति। अभिभवात्—यथाऽह्नि सौरीभिर्भाभिरभिभूतं ग्रहनक्षत्रमण्डलं न पश्यति। समानाभिहारात्—यथा तोयदविमुक्तानुदबिन्दून् जलाशये न पश्यति। चकारोऽनुक्तसमुच्चयार्थः। तेनाऽनुद्भवोऽपि सङ्गृहीतः। तद्यथा क्षीराद्यवस्थायां दध्याद्यनुद्भवान्न पश्यति।

( ३ ) एतदुक्तं भवति। न प्रत्यक्षनिवृत्तिमात्राद् वस्त्वभावो भवति, अति-

---

हितचित्तः सन्नपि मनुष्यः इन्द्रियसन्निकृष्टं परमाण्वादि न पश्यति। सौक्ष्म्यञ्च निरवयवद्रव्यत्वम्। व्यवधानादित्यस्योदाहरणमाह—**यथा कुड्यादिव्यवहितमिति**। व्यवधानत्वं नाम इन्द्रियार्थसन्निकर्षविघटकत्वम्। अभिभवादित्यस्योदाहरणमाह—**यथाऽह्नीति**। अह्नि=दिने। सौरीभिः=सूर्यसम्बन्धिनीभिः। भाभिः=किरणदीप्तिभिः। अभिभवत्वञ्च स्वसजातीयोत्कटवस्त्वन्तर्गतत्वम्। अयमपि विषयनिष्ठो दोषो बोध्यः। समानाभिहारादित्यस्योदाहरणमाह—**यथा तोयदविमुक्तानिति**। समानाभिहारत्वञ्च स्वसजातीयवस्त्वन्तरसम्मिश्रणत्वम्। अयमपि विषयनिष्ठो दोषो विज्ञेयः। **अनुद्भवोऽपीति**। अनुद्भवत्वञ्च कारणाऽवस्थात्मकत्वम्। तथा च अनुद्भवादपि क्षीराद्यवस्थायां=दुग्धाद्यवस्थायां दध्यादि मानवो न पश्यति।

( ३ ) गगनकुसुमादिवत् प्रधानादीनामप्यभावात् अलीकत्वमेव कथन्न स्वीक्रियते ? इत्यस्योत्तरमाह—**एतदुक्तं भवतीति**। अतिप्रसङ्गं दर्शयति—**तथाहि गृहाद् विनिर्गत**

---

'सौक्ष्म्यात्'—सूक्ष्मता के कारण सावधानचित्त हुआ भी मनुष्य इन्द्रियसन्निकृष्ट हुए परमाणु आदि को नही देख पाता है।

'व्यवधानात्'—कुड्यादि=भीत आदि से व्यवहित=व्यवधान के कारण राजदारादि को लोग नही देख पाते है।

'अभिभवात्'—किसी प्रत्यक्षयोग्य वस्तु को उसके समानजातीय दूसरी वस्तु से ढँका जाना ही 'अभिभव' शब्दार्थ है। जैसे दिन में सूर्यसम्बन्धी किरणों के प्रकाश से अभिभूत ग्रह और नक्षत्रों के मण्डल को लोग नही देख पाते हैं।

'समानाभिहारात्'—अपने समानजातीय दूसरी वस्तु में मिल जाना ही 'समानाभिहार' शब्दार्थ है। जैसे वर्षाकाल मे मेघ से गिरे हुए जल की बिन्दुओं को तालाब के अन्दर कोई भी व्यक्ति पृथक् रूप से नही देख पाता है। 'समानाभिहाराच्च' यहाँ पर 'च' शब्द से अनुक्त हेतुओं का संग्रह भी कर लेना चाहिए। इससे अनुद्भव=अनभिव्यक्ति को प्राप्त हुआ हेतु भी 'अनुपलब्धि' के कारणीभूत हेतुओं में संगृहीत हो जाता है। जैसे क्षीर=दूध की अवस्था में अनभिव्यक्त दही आदि का प्रत्यक्ष नही होता है।

( ३ ) 'एतदुक्तं भवति'—इस विषय में ऐसा कहा जाता है कि किसी वस्तु की प्रत्यक्षनिवृत्तिमात्र से अर्थात् प्रत्यक्ष न होने मात्र से उस वस्तु के अभाव का निश्चय नहीं

प्रसङ्गात्। तथा हि—गृहाद्विनिर्गतो गृहजनमपश्यंस्तदभावं विनिश्चिनुयात्, न त्वेवम्। अपि तु योग्यप्रत्यक्षनिवृत्तेरयमभावं विनिश्चिनोति। न च प्रधानपुरुषादीनामस्ति प्रत्यक्षयोग्यता, इति न तन्निवृत्तिमात्रात्तदभावनिश्चयो युक्तः प्रामाणिकानामिति ॥ ७ ॥

( १ ) कतमत्पुनरेतेषु कारणं प्रधानादीनामनुपलब्धौ ? इत्यत आह—

**सौक्ष्म्यात्तदनुपलब्धिर्नाऽभावात् कार्यतस्तदुपलब्धेः।**
**महदादि तच्च कार्यं प्रकृतिसरूपं विरूपं च ॥ ८ ॥**

'सौक्ष्म्यात्' इति। अथाऽभावादेव सप्तमरसवदेतेषामनुपलब्धिः कस्मान्न भवति ? इत्यत आह—'नाऽभावात्' इति। कुतः ? कार्यतस्तदुपलब्धेः इति। 'तत्' इति प्रधानं परामृशति। पुरुषोपलब्धौ तु प्रमाणं वक्ष्यति—'सङ्घातपरार्थत्वात्' इति। ( का० १७ )

---

इति। योग्यप्रत्यक्षनिवृत्तेरिति। तथा च योग्यताविशिष्टप्रत्यक्षनिवृत्तेरेवाभावग्राहकत्वं स्वीकार्यम्। प्रधानपुरुषादीनां तादृशयोग्यतानिवृत्तिमात्रात् न तद्भावनिश्चयो समुचितः प्रामाणिकानाम् ॥ ७ ॥

( १ ) अष्टमकारिकामवतारयति—कतमत्पुनरिति। एतेषु=प्रागुक्तातिदूरत्वाद्यष्टविधकारणानां मध्ये। प्रधानादीनाम्। अनुपलब्धौ=अप्रत्यक्षे। कतमत्कारणम्=किं कारणम्। इत्यत आह—सौक्ष्म्यादिति। एतेषाम्=प्रधानपुरुषादीनाम्। अनुपलब्धिः=अप्रत्यक्षम्। सौक्ष्म्यादिति हेतोरेवेति विज्ञेयम्।

अन्वयः—सौम्यात् तदनुपलब्धिः न अभावात् कार्यतः तदुपलब्धेः तच्च कार्यं महदादि प्रकृतिसरूपं विरूपञ्च।

ननु यथा मधुराम्ललवणादयः षडेव रसाः समुपलभ्यन्ते, षड्रसभिन्नस्य कस्यापि

---

किया जा सकता है, क्योंकि ऐसा होने से अतिप्रसङ्ग हो जायेगा। तथाहि—घर से बाहर गया हुआ व्यक्ति जब घर के व्यक्तियों को नहीं देख पाता है तो उसे घर के लोगों के अभाव का निश्चय हो जाना चाहिए, परन्तु ऐसा होता नहीं है, अपितु प्रत्यक्षयोग्य वस्तु के प्रत्यक्ष न होने पर ही उसके अभाव का निश्चय मनुष्य करता है। प्रधान=प्रकृति और पुरुष में तो प्रत्यक्ष की योग्यता ही नहीं है, इसलिए प्रधान और पुरुष को प्रत्यक्ष का विषय न होने से उनके अभाव का निश्चय कर बैठना यह प्रामाणिक पुरुषों के लिए युक्तियुक्त नहीं है ॥ ७ ॥

( १ ) प्रश्न—इन पूर्वोक्त अनुपलब्धि के आठ कारणों में कौन ऐसा कारण है जिससे प्रकृति, पुरुष का प्रत्यक्ष नहीं हो पाता है ?

उत्तर—'सौक्ष्म्यात्तदनुपलब्धिः' अर्थात् सूक्ष्म होने के कारण ही प्रकृति, पुरुष की उपलब्धि=प्रत्यक्ष नहीं हो पाती है, अभाव से नहीं।

प्रश्न—प्रधान और पुरुष नाम की कोई वस्तु ही नहीं है, इस अभाव के कारण

( २ ) दृढतरप्रमाणावधारिते हि प्रत्यक्षमप्रवर्त्तमानमयोग्यत्वान्न प्रवर्तते इति कल्प्यते। सप्तमस्तु रसो न प्रमाणेनाऽवधारित इति न तत्र प्रत्यक्षस्यायोग्यता शक्याऽध्यवसातुमित्यभिप्रायः।

( ३ ) किं पुनस्तत्कार्यं यतः प्रधानानुमानम् ? इत्यत आह—'महदादि तच्च कार्यम्' इति। एतच्च यथा गमकं तथोपरिष्टादुपपादयिष्यते। तस्य च

---

सप्तमरसस्य रसविशेषस्य वाऽभावादेव नोपलब्धिर्जायते तथा प्रधानादीनामप्यनुपलब्धिरभावादेव भवतु न सौक्ष्म्यादित्याशङ्कां निराकरोति—**नाऽभावादिति**। न सप्तमरसवत् प्रधानपुरुषादीनामभावात् अप्रत्यक्षं मन्तव्यम्। प्रधानपुरुषादीनामनुपलब्धौ अभावो न हेतुः किन्तु 'सौक्ष्म्यात्' इत्येव हेतुः, कथमिति चेत्। समाधत्ते—**'कार्यतस्तदुपलब्धेरि'ति**। अत्र 'तत्'पदेन प्रधानस्यैव ग्रहणं न तु पुरुषस्यापि, पुरुषोपलब्धौ 'सङ्घातपरार्थत्वात्' इत्यादिनाऽग्रे प्रमाणस्य वक्ष्यमाणत्वात्।

( २ ) प्रत्यक्षाप्रवृत्त्या प्रधानपुरुषादीनां सप्तमरसवदभाव एव कथं न स्वीक्रियते ? इत्याशङ्क्य तन्निरस्यति—**दृढतरप्रमाणावधारिते इति**। दृढतरं=प्रबलतरं, यत् =प्रमाणम् अनुमानं, तेन अवधारिते=निश्चिते प्रधानादौ, अप्रवर्तमानं प्रत्यक्षम्= प्रत्यक्षप्रमाणमिन्द्रियम्। अयोग्यत्वात्=निरवयवत्वेन योग्यताया अभावान्न प्रवर्तते, न तु असत्त्वात्। दृष्टान्तवैषम्यं दर्शयति—**सप्तमस्तु रस इति**। सप्तमस्तु रसो नास्त्येवेत्यसत्त्वादेव तत्र प्रत्यक्षं न प्रवर्तते नाऽयोग्यत्वादित्यस्ति विशेषः।

( ३ ) प्रधानस्य किं कार्यं यदुक्तं 'कार्यतस्तदुपलब्धेः' इत्यत आह—**'महादादि**

---

ही सप्तम रस के समान प्रकृति, पुरुष का प्रत्यक्ष नहीं होता है; यही क्यों न मान लिया जाय ?

उत्तर—'नाऽभावात्' अभाव के कारण प्रकृति, पुरुष का अप्रत्यक्ष नहीं माना जा सकता है, क्योंकि महदादिरूप कार्य से प्रधान के अस्तित्व का निश्चय स्पष्ट है। 'तदुपलब्धेः'—यहाँ पर 'तत्' शब्द से प्रधान का परामर्श=ग्रहण होता है। पुरुष की उपलब्धि में तो 'सङ्घातपरार्थत्वात्' ( का० १७ ) से प्रमाण का उल्लेख करेंगे।

( २ ) दृढ़तर अनुमान=सामान्यतोदृष्ट आदि प्रमाणों के द्वारा प्रधान, पुरुष आदि पदार्थों के अवधारित=निश्चित हो जाने पर प्रधान, पुरुष आदि पदार्थों का अस्तित्व अक्षुण्ण है, उनकी सत्ता निर्विवाद है। अब यदि प्रत्यक्षप्रमाण उनकी सत्ता सिद्ध करने में अप्रवर्तमान है तो वहाँ हम यह कल्पना करते हैं कि प्रत्यक्षप्रमाण अयोग्य होने के कारण वहाँ प्रवृत्त नही होता है। परन्तु सातवें रस का अस्तित्व तो किसी भी प्रमाण से सिद्ध ही नही है, अतः उसके विषय में प्रत्यक्षप्रमाण की अयोग्यता नही मानी जा सकती है। यह कारिकाकार ईश्वरकृष्ण का अभिप्राय है।

( ३ ) प्रश्न—वह प्रकृति का कौन-सा कार्य है, जिससे प्रधान का अनुमान होता है ?

उत्तर—'महदादि तच्च कार्यम्' अर्थात् महत्=बुद्धि आदि ही प्रकृति का वह

कार्यस्य विवेकज्ञानोपयोगिनी सारूप्यवैरूप्ये आह—'प्रकृतिसरूपं विरूपं च' इति। एते तूपरिष्टाद्विभजनीय इति ॥ ८ ॥

(१) कार्यात् कारणमात्रं गम्यते। सन्ति चात्र वादिनां विप्रतिपत्तयः। तथाहि—केचिदाहुः—असतः सज्जायते इति। 'एकस्य सतो विवर्त्तः कार्यजातं न वस्तु सत्' इत्यपरे, अन्ये तु—'सतः असज्जायते' इति, 'सतः सज्जायते' इति वृद्धाः।

---

तच्च कार्यम् इति। एतच्च=महदादि कार्यञ्च। यथा गमकं=येन प्रकारेण प्रधानानुमापकम्। उपरिष्टात्=१४।१५ कारिकायाम्। सारूप्य-वैरूप्ये=साधर्म्य-वैधर्म्ये।

(१) अन्यदार्शनिकानां विप्रतिपत्तिप्रदर्शनपुरःसरम् 'असदकरणादि'त्यादिना सांख्याभिमत-सत्कार्यतावादं संस्थापयितुं पूर्वं भूमिकामारचयति—**कार्यात् कारणमात्रमिति**। यथा धूमस्वरूपकार्येण वह्निरूपधूमकारणं निश्चीयते, तथा कस्यापि कार्यस्य दर्शनात् 'अस्य किमपि कारणमस्ति' इत्येवंरूपेण सामान्यतस्तत्कारणं निश्चीयते, न तु 'इदमस्य कारणम्' इति विशेषतो निश्चयो भवतीति न प्रधानकारणत्वविनिश्चयः। ननु गम्यतां कार्यात् कारणमात्रम्, तथापि विशेषतः कारणत्वनिश्चयावसरेऽन्यस्य कारणस्याऽनुपलब्धेः पारिशेष्यात् प्रधानकारणत्वनिश्चयोऽवश्यम् 'अजामेकामि'त्यादिश्रुतिबलाद् भविष्यतीत्यत्राह—**सन्ति चात्रेति**। अत्र= विशेषतः कारणविषये। वादिनां= विभिन्नदार्शनिकानाम्। विप्रतिपत्तयः—विरुद्धाः प्रतिपत्तयः=भिन्ना भिन्ना मतयः सन्ति, अतः प्रधानस्यैव कारणत्वं निश्चेतुं न शक्यते।

ता विप्रतिपत्तीरेव दर्शयति—**तथाहीति**। बौद्धानां मतं दर्शयति—**केचिदाहुः—असतः सज्जायते इति**। असतः=अभावात्, विनष्टबीजादेः, सत्=अङ्कुरादिकं जायते इत्यर्थः। अद्वैतवेदान्तिनां मतं दर्शयति—**एकस्य सत इति**। एकस्य=अद्वितीयस्य, सतः=त्रिकालाबाध्यस्य ब्रह्मणः, विवर्तः अतात्त्विकः अन्यथाभावः, कार्यजातं= यावज्जगद्रूपं शुक्तेरिव रजतम् अतात्त्विकान्यथाप्रथात्मकं कार्यजातम्। न वस्तु सत्= न परमार्थतः सदित्यर्थः। तथा चोक्तम् –

'यस्तात्त्विकोऽन्यथाभावः परिणाम उदीरितः।
अतात्त्विकोऽन्यथाभावो विवर्तः स उदीरितः' ॥

---

कार्य है, जिस कार्य से प्रकृति का अनुमान होता है। यह 'महत्' आदि कार्य कैसे प्रकृति का गमक=बोधक=अनुमापक है, इसका आगे (१०-११वीं कारिका में) उपपादन करेगें। और उस 'महत्' आदि कार्य के सारूप्य=साधर्म्य, वैरूप्य=वैधर्म्य, जो कि विवेकज्ञान के उपयोगी हैं, उन्हें आगे की 'प्रकृतिस्वरूपं विरूपञ्च' इस कारिका में विभागपूर्वक कहेंगे ॥ ८ ॥

(१) अन्यान्यवादियों की विप्रतिपत्तियों का प्रदर्शन करते हुए सांख्यमत में सत्कार्यवाद की स्थापना के लिए 'असदकरणात्' इत्यादि कारिका की भूमिका का आरम्भ करते हैं—**'कार्यात् कारणमात्रम्' इति**। कार्य से कारणमात्र का निश्चय होता

( २ ) तत्र पूर्वस्मिन् पक्षत्रये प्रधानं न सिद्धयति। सुखदुःखमोहभेदवत्स्वरूपपरिणामशब्दाद्यात्मकं हि जगत्कारणस्य प्रधानत्वं सत्त्वरजस्तमःस्वभावत्वमवगमयति।

---

स च विवर्तः अपरित्यक्तपूर्वरूपस्य रूपान्तरप्रतीतिविषयत्वम्। अथवा पूर्वरूपापरित्यागेन असत्यनानाकारप्रतिभासो विवर्तः। यथा—शुक्तौ रजतस्य, रज्ज्वां वा सर्पस्य प्रतीतिः। न्यायवैशेषिकमतं दर्शयति—**अन्ये तु; सत असज्जायते इति**। सतः= भावस्वरूपपरमाण्वादितः, असत् = पूर्वमविद्यमानं द्वयणुकादि जायते इत्यर्थः। पूर्वमसदेव तत्तद्घटादि कार्य दण्डादि सामग्री सान्निध्ययुक्तात् मृदादिकारणाद् भिन्नं सज्जायते इति तु परमार्थः। न्यायवैशेषिकानां मते उत्पत्तेः पूर्वं कार्यं नासीत्, अनन्तरं कारणसामग्रीवशात् जायते। सांख्यमतं दर्शयति—**सतः सज्जायत इति**। सतः= भावात्मकनित्यप्रकृतितः, सत् =अनागतावस्थया कारणे वर्तमानमेव कार्यं जायते—आविर्भवतीत्यर्थः। अर्थात् कारणव्यापारेण कार्यमभिव्यज्यते इति तु निष्कर्षः। सांख्यानां मते कारणमेव कार्यरूपेण परिणमतेऽन्यत्वं सत्यत्वञ्च स्वीक्रियते। यथा—'दुग्धं दधिरूपेण परिणमते' तस्मात् नास्ति दुग्धाद् दधिकार्यान्तरम्।

( २ ) सांख्यातिरिक्तमतत्रये कार्यकारणयोरभेदासम्भवात् प्रकृतिर्न सिद्धयतीति दर्शयति—**तत्र पूर्वस्मिन्निति**। तत्र=मतचतुष्टयमध्ये, कार्यज्ञानेन यादृशं कारणं प्रधानं सिद्धं भवति तादृशं प्रधानं पूर्वस्मिन् मतत्रये नैव सिद्धयति। अर्थात् सुखाद्यात्मककार्यदर्शनेन कारणमपि तादृशमेव सुखाद्यात्मकं सिद्धं भवति न तु तदतिरिक्तं, तथाविधञ्च कारणं प्रकृतिरेवास्ति, सा च प्रथममतत्रये नैव सिद्धयति।

कीदृशी सा प्रकृतिः कार्यलिङ्गकानुमानेन सिद्धयति, या अन्यस्मिन् मतत्रये न सिद्धयतीति जिज्ञासायामाह—**सुखदुःखमोहभेदवत्स्वरूपपरिणामशब्दाद्यात्मकमिति**। सुखदुःखमोहस्वरूपा ये भेदाः=विशेषास्ते विद्यमाना यत्र तत् सुखदुःखमोहभेदवत्, एवंविधं स्वरूपं येषां ते सुखदुःखमोहभेदवत्स्वरूपाः, एतादृशा ये परिणामाः=पञ्च-

---

है, अर्थात् इस कार्य का कोई कारण अवश्य है। परन्तु वह कारण कौन है ? यहाँ वादिलोगों की बहुत-सी विप्रतिपत्तियाँ=विरुद्ध दृष्टियाँ है।

'तथाहि' कुछ लोग=बौद्ध, कहते हैं कि—असत्=अभावरूप कारण से 'सत्' कार्य उत्पन्न होता है। और अपर=अद्वैतवेदान्ती लोग कहते हैं कि—एक सत् ब्रह्म का विवर्त=अतात्त्विक=अन्यथाभाव रूप ही यह चराचरात्मक जगत् स्वरूप-कार्य है, परन्तु वह सत् नही है और अन्य लोग=वैशेषिक सत् कारण से असत् कार्य की उत्पत्ति मानते हैं और वृद्ध लोगों=सांख्यलोगों का कहना है कि सत् कारण से सत् कार्य उत्पन्न होता है।

( २ ) परन्तु वहाँ प्रथम तीनों पक्षों में प्रधान=प्रकृति की सिद्धि नहीं हो पा रही है, अतः हम कौमुदीकारदर्शित प्रधानसिद्धि-प्रकार को 'सुख-दुःखमोहभेदवत्' इत्यादि ग्रन्थ से बतला रहे हैं—यह चराचर जगत् सुखदुःखमोहभेदवत् स्वरूपपरिणाम-

( ३ ) यदि पुनरसतः सज्जायेत असत् निरुपाख्यं कारणं सुखादिरूपशब्दाद्यात्मकं कथं स्यात् ? सदसतोस्तादात्म्यानुपपत्तेः।

( ४ ) अथैकस्य सतो विवर्त्तः शब्दादिप्रपञ्चः तथाऽपि सतः सज्जायत इति न स्यात्। न चाऽस्याऽद्वयस्य प्रपञ्चात्मकत्वम्, अपि त्वप्रपञ्चस्य प्रपञ्चात्मकतया प्रतीतिर्भ्रम एव।

---

तन्मात्रादिरूपशब्दाद्याः, त एवात्मा=स्वरूपं यस्य तत् सुखदुःखमोहभेदवत्स्वरूपपरिणामशब्दाद्यात्मकं, तस्य भावस्तत्त्वम्। एतादृशं समस्तजगत्कारणं प्रधानं कार्यदर्शनात् सिद्धयति, तच्च अन्यस्मिन् पक्षत्रये नैव सिद्धयति इति भावः। अर्थात् कार्यस्वरूपाणां शब्दादीनां कारणस्य परिणामरूपत्वं विज्ञेयम्। पटादीनामिव तन्तुसमुदायस्य।

( ३ ) बौद्धमतेऽपि प्रधानं न सिद्धयतीत्याह—**यदि पुनरिति**। असत्=अभावात्मकम्। अत एव निरुपाख्यम्=उपाख्यारहितम्, अर्थात् 'इदं सदि'ति निर्वचनशून्यं निरुपाख्यम्, क्वचिदपि सत्त्वेन प्रतीत्यविषयत्वम् इत्यर्थः।

( ४ ) अद्वैतवेदान्तिनां मतेऽपि प्रधानं न सिद्धयतीत्याह—**अथैकस्येति**। एकस्य=अद्वितीयस्य। सतः=त्रिकालाबाध्यस्य ब्रह्मणः। विवर्तः=अतात्त्विकोऽन्यथाभावः। शब्दादिप्रपञ्चः=नामरूपात्मकं जगत् कार्यरूपं जायते इत्यर्थः। तथा च अद्वैतवेदान्तिनां मते न कार्यात्मकं कारणं सिद्धयति, यतः सता कारणेन सहाऽसतः कार्यस्य तादात्म्यानुपपत्तेरित्यत एव वेदान्तिभिश्चतुर्थो मिथ्यात्वप्रकार आद्रियते, तत्र मिथ्याभूतस्य कार्यस्य ब्रह्मणा सह कल्पिततादात्म्यस्य स्वीकारेऽपि वास्तविकतादात्म्यस्य सर्वथाऽसम्भवात् इति नैतन्मते प्रधानसिद्धिरिति भावः। एतदेव शब्दान्तरेण स्पष्टयति—**तथापीति**। तथा च कारणस्य सद्रूपतया कार्यस्य मिथ्यात्वात् सतः सज्जायते इति सांख्यमतस्याऽसिद्धत्वात् प्रधानं नैव सिद्धयतीत्यर्थः।

---

भूत जो शब्द-स्पर्श-रूप-रस-गन्ध हैं, तत् स्वरूप है, ये स्थूलपृथिवी आदि में स्थूल हैं और सूक्ष्मतन्मात्राओं में सूक्ष्म हैं, अतः तादृश शब्दादिस्वरूप इस जगत् का कारण भी वैसा ही त्रिगुणात्मक=सत्त्व-रज-तमस्वभाववाले प्रधान=प्रकृति को ही होना चाहिए।

( ३ ) यदि बौद्धमतानुसार असत्=अभाव रूप कारण से सत्कार्य की उत्पत्ति मानते हैं तो असत्, अतएव निरुपाख्य=धर्मशून्य=अनिर्वचनीय कारण सुख-दुःख आदि स्वरूप शब्द-स्पर्श आदि कार्यों से अभिन्न कैसे हो सकेगा? क्योंकि सत् और असत् में तादात्म्य=अभेद कभी भी नही हो सकता है। कारण असत्=अभाव है और कार्य सत्=भावरूप है। भाव और अभाव में अभेद सर्वथा बाधित है।

( ४ ) अद्वैतवेदान्तमतानुसार एक सत् ब्रह्म का ही विवर्त=अतात्त्विकरूप यह शब्दादिप्रपञ्च=नामरूपात्मक कार्यभूत जगत् है। तथापि इस सिद्धान्तानुसार भी सत् कारण से सत्कार्य की उत्पत्ति वाला सिद्धान्त सिद्ध नहीं हो पा रहा है, क्योंकि यह अद्वैतब्रह्म प्रपञ्चात्मक नहीं है और न हो सकता है; कारण कि ब्रह्म सत्य है और जगत् मिथ्या है और अप्रपञ्च ( निर्गुण ) ब्रह्म की यदि प्रपञ्चात्मक रूप से प्रतीति

( ५ ) येषामपि कणभक्षाक्षचरणादीनां सत एव कारणादसतो जन्म, तेषामपि सदसतोरेकत्वानुपपत्तेर्न कार्यात्मकं कारणमिति न तन्मते प्रधानसिद्धिः। अतः प्रधानसिद्ध्यर्थं प्रथमं तावत्सत्कार्यं प्रतिजानीते।

**असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात्।**
**शक्तस्य शक्यकरणात् कारणभावाच्च सत् कार्यम् ॥ ९ ॥**

---

ननु 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इति सूत्रेण भगवान् व्यासः कार्यकारणयोरनन्यत्वप्रतिपादनात् कथं नाऽद्वैतवेदान्तिनां नये तादात्म्यं स्यादित्यत्राह—**न चास्याऽद्वयस्येति**। अद्वयस्य=सर्वथा द्वैतविवर्जितस्य ब्रह्मणः। प्रपञ्चात्मकत्वं=शब्दादिप्रपञ्चरूपता। न चास्ति। अप्रपञ्चस्य=प्रपञ्चशून्यस्य ब्रह्मणः। प्रपञ्चात्मकतया=अविद्याकल्पितप्रपञ्चात्मकत्वेन। ( जायमाना ) प्रतीतिः।

( ५ ) न्याय-वैशेषिकमतेऽपि न प्रधानं सिद्ध्यतीति दर्शयति—**येषामपीति**। कणम्=अन्नकणम्, भक्षयतीति कणभक्षः=कणादः। अक्षं=चक्षुः, चरणे यस्येति अक्षचरणः=गोतमः। आदिना कार्यकारणयोस्तादात्म्यानङ्गीकर्तारः सर्वेऽपि ग्राह्यास्तेषां मतेऽपि सदसतोस्तादात्म्यानुपपत्तेर्न प्रधानं सिद्ध्यतीति तत्साधनायाह—**असदकरणादिति**। १. असदकरणात्, २. उपादानग्रहणात्, ३. सर्वसम्भवाभावात्, ४. शक्तस्य शक्यकरणात्, ५. कारणभावाच्च, कार्यं सदिति सिद्ध्यति स्वोत्पत्तेः पूर्वमपि।

---

मानते हैं तो वह भ्रम है, क्योंकि प्रपञ्च अविद्याकल्पित है। अतः इस मत में भी कार्य-कारण का अभेद नहीं बनता है।

( ५ ) और जिन कणभक्ष=कणाद तथा अक्षचरण=अक्षपाद=गौतम आदि के मतानुसार सत् कारण परमाणुओं से असत् कार्य द्व्यणुक तथा जगत् की उत्पत्ति होती है, इसलिए उनके मत में भी सत् और असत् अर्थात् कारण और कार्य में एकत्व=अभेद सर्वथा अनुपपन्न है; अतः उस मत मे भी प्रधान की सिद्धि नहीं हो पा रही है। इसलिए प्रधान की सिद्धि के लिए सर्वप्रथम सत्कार्यवाद अर्थात् उत्पत्ति के पूर्व में भी कार्य सत्=विद्यमान है, इस वाद की प्रतिज्ञा करते हैं—'असदकरणात्' इस ग्रन्थ से।

**कारिकार्थ**—'असदकरणात्'—सांख्य 'असदकरणात्' इत्यादि पाँच हेतु से उत्पत्ति के पूर्व में भी 'कार्य सत् है' यह सिद्ध करता है, अर्थात् जैसे असत्=सत्ताविहीन शश-शृङ्गादि का कोई कारण नहीं होता है, वैसे ही उत्पत्ति के पूर्व में भी असत् कार्य का कोई भी कारण नहीं हो सकेगा। अतः उत्पत्ति के पश्चात् जैसे कार्य को सत् मानते हो, ऐसे ही उत्पत्ति के पूर्व भी सत् ही मानना चाहिए। 'उपादानग्रहणात्'—उपादानकारण के साथ कार्य का ग्रहण=सम्बन्ध होता है, जैसे तन्तुओं के साथ पट का। असत् कार्य का कारण से सम्बन्ध सर्वथा असंभव है, 'अतः कार्यं सत् उत्पत्तेः प्रागपि'। 'सर्वसम्भवाभावात्' अर्थात् सब कार्यों का सम्भव=उत्पत्ति सभी कारणों से नहीं होता है, जैसे तन्तुओं से घट का। यदि कार्य असत् है अर्थात् असत् की भी उत्पत्ति

( ६ ) 'असदकरणात्' इति। 'सत् कार्यम्' कारणव्यापारात् प्रागपीति शेषः। तथा च न सिद्धसाधनं नैयायिकतनयैरुद्भावनीयम्।

---

( ६ ) कस्मात् ? असदकरणात्=असतः=शशशृङ्गतुल्यस्य स्वोत्पत्तेः प्रागवर्तमानस्य, अकरणात्=उत्पत्त्यसम्भवात्। अत्र व्यतिरेकव्याप्तिविशिष्टो हेतुः, अर्थात् यद् असत् तत् न करणं, ( तद् अकरणम्=अनुत्पन्नम् ) यथा शशशृङ्गं वन्ध्यापुत्रादिकञ्च। यच्चोत्पन्नं तत् सत्, यथा घट-पटादिः। अनुमानन्तु—कार्यमुत्पत्तेः प्रागपि सत् असदकरणात्।

उपादानग्रहणात्—उपादानैः=कारणैः, सह, ग्रहणात्=कार्यस्य सम्बन्धात्। सम्बन्धश्च कार्यस्य सत एव भवितुमर्हति। घटात्मककार्यार्थी पुरुषस्तस्योपादानभूतमृत्तिकाया ग्रहणं करोति, यथा वा दधिरूपकार्यार्थी पुरुषः तदुपादानस्य=क्षीरस्यैव ग्रहणं करोति, नान्यस्य, अत उपादानग्रहणादपि हेतोरुत्पत्तेः प्राक् कारणे कार्यमस्तीति सिद्धयति। अत्रानुमानञ्च कार्यं सत् उपादानग्रहणात्।

सर्वसम्भवाभावात्—सर्वेषां कार्याणां सर्वत्र सम्भवाऽभावात्, अर्थात् कस्यचित्कार्यस्योत्पत्तये एव किमपि कारणमेवोपादीयते, न तु सर्वस्योत्पत्तये सर्वमुपादीयते। उत्पत्तेः प्राक् कार्यस्याऽसत्त्वपक्षे नाऽयं नियमः सङ्गच्छते, घटोत्पत्त्यर्थं मृत्तिका गृह्यते न तन्त्वादि, यदि उत्पत्तेः प्रागसदेव कार्यं स्यात् तदा कार्यासत्त्वस्य सर्वत्राविशेषात् तन्त्वादिभ्योऽपि घटः स्यात्, न च भवति तस्मान्न कार्यमसत्। सत्त्वपक्षसमाश्रयणे तु घटस्य मृत्तिकायामेव सत्त्वात् मृत्तिकात एव घटोत्पत्तिः सम्भवति न तन्त्वादिभ्य इति।

---

हो तो तन्तुओं से घट एवं मिट्टी से पट उत्पन्न होने लग जाय। 'शक्तस्य शक्यकरणात्' का नियम है—जो कारण जिस कार्य को उत्पन्न करने की शक्ति रखता है, वह कारण स्वीय शक्ति के आश्रयीभूत उसी कार्य का करण=असाधारण कारण होता है। असत् कार्य को उत्पन्न करने की शक्ति ही किसी कारण में नहीं है, अतः कार्य सत् ही है। 'कारणभावात्'—कार्य और कारण में अभेद है, अतः यदि कार्य को उत्पत्ति के पूर्व असत् माना जायेगा तो कार्य और कारण का तादात्म्य अनुपपन्न हो जायेगा, अतः उत्पत्ति के पूर्व भी कार्य सत् ही है।

( ६ ) प्रस्तुत कारिका के अन्त में जो 'सत् कार्यम्' है, यह पक्ष साध्य का उल्लेख है। अर्थात् यहाँ 'कार्य' पक्ष है और 'सत्त्व'=अस्तित्व साध्य है और अवशिष्ट पाँच हेतु हैं। 'सत् कार्यम्' यहाँ 'कारणव्यापारात् प्रागपि' इतना और जोड़ देना चाहिए, अर्थात् कारण के व्यापार से पूर्व भी अर्थात् उत्पत्ति के पूर्व भी कार्य अपने कारण में विद्यमान है। अर्थात् उत्पत्ति के पूर्व कार्य कारणात्मना विद्यमान है और बाद में कार्यात्मना, ये ही दो कार्य की स्थिति हैं।

'तथा च' नैयायिकों के शिष्य 'कार्य सत्' इस सांख्यानुमान में सिद्धसाधन दोष का उद्भावन करते थे। उनका कहना था कि कारणव्यापार के पश्चात् तो कार्य की सत्ता=कार्य-सिद्ध है ही, उसी को आप ( सांख्य ) फिर सिद्ध करते हो तो यही सिद्ध-साधन है। इसी के निराकरण की दृष्टि से वाचस्पतिमिश्र ने कहा—'कारणव्यापारात्

( ७ ) यद्यपि बीजमृत्पिण्डादिप्रध्वंसानन्तरमङ्कुरघटाद्युत्पत्तिरुपलभ्यते, तथाऽपि न प्रध्वंसस्य कारणत्वम्, अपि तु भावस्यैव बीजाद्यवयवस्य। अभावात्तु भावोत्पत्तौ तस्य सर्वत्र सुलभत्वात् सर्वदा सर्वकार्योत्पादप्रसङ्ग इत्यादि न्यायवार्तिकतात्पर्यटीकायामस्माभिः प्रतिपादितम्।

( ८ ) प्रपञ्चप्रत्ययश्चाऽसति बाधके न शक्यो मिथ्येति वदितुमिति कणभक्षाक्षचरणमतमवशिष्यते। तत्रेदं प्रतिज्ञातम्—'सत् कार्यम्' इति। अत्र हेतु-

---

( ७ ) बौद्धमतं दूषयति—**यद्यपीति**। यद्यपीति अनास्थायां वर्तते। अर्थात् यथा क्वचिदभावस्य कारणत्वं तथैव क्वचिद् भावस्यापि। अङ्कुरोत्पत्तौ बीजध्वंसो यथा कारणं, मृत्पिण्डध्वंसो वा घटोत्पत्तौ यथा कारणं भवति, न तथा सर्वत्रेत्यत आह—**तथापीति**। पटाद्युत्पत्तौ अध्वस्तानामेव तन्तूनां कारणत्वम्, एवमध्वस्ता एव परमाणवो द्व्यणुकमुत्पादयन्ति। अङ्कुराद्युत्पत्तिस्थलेऽपि न बीजध्वंसस्य कारणत्वं, किन्तु बीजाद्यवयवानामेवेत्यत आह—**अपि तु भावस्यैवेति**। अभावत्वेनाऽभावस्य भावोत्पत्तौ कारणत्वे आपत्तिमपि दर्शयति—**अभावात्त्विति**। तस्य = अभावस्य, यस्य कस्याप्यभावस्य। सर्वत्र सुलभत्वात् = मरुभूम्यादावपि सुलभत्वात्, तथा च तत्राप्यङ्कुरोत्पादप्रसङ्गः स्यात्। आकाशेऽपि घटपटाद्युत्पत्तिः स्यात्। तदेवोक्तं कौमुद्यां—**सर्वत्र सर्वकार्योत्पादप्रसङ्ग** इति। यद्यभावाद् भावः समुत्पद्येत तर्हि अभावत्वाविशेषात् कारणत्वविशेषाङ्गीकारो व्यर्थः। उपमृदितानां बीजादीनां योऽभावस्तस्य, कूर्मरोम-वन्ध्यापुत्रादीनाञ्च निःस्वभावत्वाऽविशेषात् अभावत्वे नास्ति कश्चिद् विशेषः, येन तन्त्वादिभ्य एव पटो जायते न कपालादिभ्य इति नियमोऽपि कथं सङ्गच्छेत ? लोकेऽपि क्वचिदभावाद् भावोत्पत्तिर्नाऽनुभूयते। नापि च तदुपपत्तिमेव पश्यामः।

( ८ ) अद्वैतवेदान्तिमते दोषमाह—**प्रपञ्चप्रत्ययश्चेति**। जगदात्मकप्रपञ्चस्य यः, प्रत्ययः = प्रत्यक्षानुभवः। असति बाधके = बाधकप्रमाणेऽविद्यमाने सति। **मिथ्येतीति**।

---

प्रागपि' अर्थात् कारणव्यापार के पश्चात् जैसे कार्य सत् है, ऐसे ही कारणव्यापार के पूर्व में भी कार्य सत् है, यही सांख्य का कथन है, अतः हमारे 'सत् कार्य' साधन मे दोषोद्भावन न करें, अर्थात् सिद्धसाधन दोष का उद्भावन न करें।

( ७ ) 'यद्यपि बीजमृत्पिण्डादीति' बौद्ध का कहना है कि बीज-ध्वंस एवं मृत्तिकापिण्ड-ध्वंस के पश्चात् ही क्रमशः अंकुर तथा घटोत्पत्ति देखने में आती है, अतः अभाव से भाव की उत्पत्ति माननी चाहिए; बौद्ध का यह कथन ठीक नही। तथापि सांख्य कहता है कि वहाँ ध्वंस कारण नही है, किन्तु अंकुरोत्पत्ति में भावभूत बीजावयव ही कारण है और घटोत्पत्ति में मृत्तिकावयव कारण है। और यदि अभाव से भावकार्य की उत्पत्ति मानेंगे तो वह सर्वत्र सुलभ है, अतः सर्वदा सर्वकार्योत्पादप्रसङ्ग होने लग जायेगा, इत्यादि विषय का हमने न्यायवार्तिक-तात्पर्यटीका में प्रतिपादन किया है।

( ८ ) पूर्वोक्त बौद्धमत के खण्डन के बाद अब अद्वैतवेदान्त मत का खण्डन करते है—**'प्रपञ्चप्रत्ययश्च'** इति। अर्थात् प्रपञ्च प्रत्यय का जब तक कोई प्रबल

माह—'असदकरणात्' इति। असत् चेत् कारणव्यापारात् पूर्वं कार्यम्, नाऽस्य सत्त्वं कर्त्तुं केनाऽपि शक्यम्। न हि नीलं शिल्पिसहस्रेणाऽपि पीतं कर्त्तुं शक्यते।

( ९ ) 'सदसत्त्वे घटस्य धर्मौ' इति चेत्, तथाऽपि असति धर्मिणि न तस्य

---

जगदात्मकप्रपञ्चस्य प्रत्यक्षतः प्रमानुभूतस्य मिथ्यात्वं नैव वदितुं शक्यते। तदुक्तम्—

'तस्माद् यन्नास्ति नास्त्येव यस्त्वस्ति परमार्थतः'।

अर्थात् शशशृङ्गवन्ध्यापुत्रादिकं यन्नास्ति तन्नास्त्येव, यस्तु घटपटादिरूपो जगदात्मकप्रपञ्चोऽस्ति तस्यास्तित्वं पारमार्थिकं स्वीक्रियते। अपि च दोषजन्यः शुक्तौ 'इदं रजतम्' इति मिथ्याप्रत्ययः अदुष्टेन्द्रियात्मकप्रत्यक्षप्रमाणबलेन नेदं रजतमित्यादिस्वरूपेण बाध्यते, नहि तथाऽयं जगदात्मकप्रपञ्चः केनापि प्रबलप्रमाणेन बाधितो भवति, अतो न मिथ्याऽपि तु सत्य एव। अपि च—वाचारम्भणश्रुतिः कार्यकारणयोस्तादात्म्यं व्यवस्थापयति, तु कार्यस्य मिथ्यात्वं प्रतिपादयति। 'घटेन जलमाहर' इत्यादिव्यवहारेणापि प्रपञ्चस्य सत्यता प्रमीयते।

इदानीं न्यायमतं खण्डयति—**कणभक्षाक्षचरणेति**। कणभक्षः=कणादः, अक्षचरणः=गोतमः, तस्य मतम्='सतोऽसज्जायते' इति मतम्। अवशिष्यते। खण्डनार्थमिति शेषः। तत्र=निमित्ते सप्तमी, न्याय-वैशेषिकमतनिरासार्थमित्यर्थः। स्वीयप्रतिज्ञातमर्थं साधयति—'**असदकरणात्**' इति हेतुना। अर्थात् 'कार्यं सत् असदकरणात्' इत्यनुमानरूपः प्रतिज्ञातार्थः फलितः। अस्य=असत्कार्यस्य। केनापि=केनापि साधनेन।

( ९ ) न्यायवैशेषिकमतेन समर्थितं निराकरोति—**सदसत्त्वे** इति। तथा चोत्पत्तेः प्राग् घटोऽसन्निति असत्त्वं तद्धर्मः, उत्पत्त्यनन्तरञ्च घटः सन्निति सत्त्वमपि तद्धर्मः,

---

बाधक प्रमाण न हो तब तक उसे मिथ्या कभी भी नहीं कहा जा सकता है। अब कणभक्ष=कणाद और अक्षचरण=गोतम के 'सतः असज्जायते' इस मत के खण्डन के लिए और अवशिष्ट रह गया है। वहाँ न्याय-वैशेषिक के मतखण्डनार्थ मूलकार ईश्वरकृष्ण ने प्रतिज्ञा की है कि—'सत् कार्यम्'। उसमें न्यायमत के खण्डनार्थ अथवा 'सत्कार्य'-साधनार्थ प्रथम हेतु है—'असदकरणात्'। अर्थात् कारणव्यापार से पूर्व=उत्पत्ति से पूर्व यदि कार्य असत् है तो असत् को सत् कोई भी नहीं कर सकता है। जैसे हजार शिल्पी=कारीगर भी नील=नीलरंग को पीत नहीं कर सकते हैं।

( ९ ) प्रश्न—नैयायिक कहता है कि जैसे एक ही घट पाक के पूर्व श्याम और वही पाक के बाद रक्त वर्ण देखने में आता है अर्थात् श्यामत्व, रक्तत्व दोनों धर्म उसी एक घट में रहते हैं। वैसे ही कारणव्यापार=उत्पत्ति के पूर्व घट असत् है और उसके बाद वही घट सत् है, अतः सत्त्व और असत्त्व दोनों ही घट के धर्म हैं, ऐसा ही क्यों न मान लिया जाय ?

धर्म इति सत्त्वं तदवस्थमेव, तथा च नाऽसत्त्वम्। असम्बद्धेनाऽतदात्मना चाऽसत्त्वेन कथमसन् घटः ?

( १० ) तस्मात् कारणव्यापारादूर्ध्वमिव ततः प्रागपि सदेव कार्यमिति।

---

अतः सत्त्वासत्त्वे व्यवस्थितविषयौ धर्मावित्यर्थः। निराकरोति—**तथापीति**। तथापि= सदसत्त्वयोर्धर्मयोः स्वीकारेऽपि। **असति धर्मिणीति**। धर्मिणोऽभावे सत्त्वधर्मानुपपत्त्या-धर्मिसत्त्वं सुतरां सिद्धयति। सत्त्वं तदवस्थमेव=उत्पत्तेः प्रागपि कार्यस्य सत्त्वं स्वीकार्यम्। एवञ्च न न्याय-वैशेषिकाभिमतं कार्यस्यासत्त्वं सिद्धयति।

किञ्च—उत्पत्तेः पूर्वं 'घटोऽसन्' इति भवत्कथनं ( न्याय-वैशेषिककथनं ) न सङ्गच्छते, इत्याह—**असम्बद्धेनेति**। धर्मिणा सह असम्बद्धेन। अर्थात् न्याय-वैशेषिकमते धर्मधर्मिणोर्भेदात् समवायादिना सम्बन्धेनैव तयोराश्रयाश्रयिभावो भवति, सांख्यनये च तादात्म्येन धर्मेणेत्यस्ति विशेषः। अतदात्मना=अघटात्मना, घटभिन्नेनेत्यर्थः। घटोत्पत्तिप्राक्कालावच्छेदेन घटस्याऽविद्यमानत्वात्। असत्त्वेन=असत्त्वधर्मेण। असन् घटः=घटस्वरूपम् असत्, इत्यर्थो वाच्यः। स च सर्वथाऽसम्भवी, यतोऽसता घटेन सहाऽसत्त्वरूपधर्मस्य कथमपि सम्बन्धो नहि भवितुमर्हति। तथा च धर्मिसम्बद्धेनैव विद्यमानेन धर्मेण तदाश्रयत्वनियमान्नासम्बद्धेन, नाऽतदात्मना वाऽसत्त्वेन धर्मेण तदाश्रयत्वं सम्भवतीति भावः।

( १० ) फलितार्थमाह—**तस्मादिति**। ऊर्ध्वम्=कार्योत्पत्त्यनन्तरम्। प्रागपि=

---

उत्तर—सांख्य कहता है यदि ऐसा है तो उस शशशृङ्ग के समान असत् धर्मी घट, पट आदि में सत्त्व तथा असत्त्व ये धर्म कैसे रह सकेंगे, जब कि धर्मी ही स्वयं अविद्यमान=अस्तित्वशून्य है, अतः धर्मी घट, पट आदि को सत् ही मानना होगा, असत् नहीं।

सांख्य नैयायिक से कहता है कि दूसरी बात यह है कि उत्पत्ति के पूर्व यदि घट को असत् मानते हो तो उस समय 'असन् घटः' यह प्रतीति होनी चाहिए। परन्तु यह प्रतीति न तुम्हारे यहाँ बनती है और न हमारे यहाँ, क्योंकि न्यायमत में धर्म और धर्मी का भेद होने से समवाय आदि सम्बन्ध से सम्बद्ध धर्म के साथ धर्मी का आश्रयाश्रयी भाव बनता है। परन्तु उत्पत्ति के पूर्व यदि घट असत् है अर्थात् सर्वथा असम्बद्ध है, तब असम्बद्ध उस घटात्मक धर्मी के साथ असत्त्वरूप धर्म को लेकर 'असन् घटः' अर्थात् 'असत्त्वरूपधर्माश्रयो घटः' यह आश्रयाश्रयीभाव कथमपि नहीं बन सकता है। क्योंकि धर्मी में जब धर्म रहेगा, तभी उन दोनों का आश्रयाश्रयीभाव बन सकेगा। किन्तु जब धर्मी ही असत् होने के कारण स्वयं सत्ताविहीन है तब उसमें असत्त्वरूप धर्म रहेगा कैसे ? अतः घट-पटादिरूप कार्य को उभयथा अर्थात् उत्पत्ति के पूर्व तथा पश्चात् सत् ही मानना होगा।

ऐसे ही हमारे=सांख्य के मतानुसार भी 'असन् घटः' यह प्रयोग नहीं हो सकता है, वही कहा गया है—'अतदात्मना चे'ति भाष्य के द्वारा।

कारणाच्चाऽस्य सतोऽभिव्यक्तिरेवाऽवशिष्यते। सतश्चाऽभिव्यक्तिरुपपन्ना। यथा पीडनेन तिलेषु तैलस्य, अवघातेन धान्येषु तण्डुलानाम्, दोहनेन सौरभेयीषु पयसः। असतः करणे तु न निदर्शनं किञ्चिदस्ति। न खल्वभिव्यज्यमानं चोत्पद्यमानं वा क्वचिदसद् दृष्टम्।

( ११ ) इतश्च कारणव्यापारात् प्राक् सदेव कार्यम्—'उपादानग्रहणात्'। उपादानानि—कारणानि, तेषां ग्रहणं—कार्येण सम्बन्धः। उपादानैः कार्यस्य

---

उत्पत्तेः प्रागपि। सदेव कार्यमित्यभ्युपगम्यताम्। कारणात्=कारणसामग्रीतः। अस्य=सतः कार्यस्य। अभिव्यक्तिः=आविर्भावमात्रम्। अवशिष्यते=साध्यतयाऽवशिष्यते, नोत्पत्तिरपीति भावः।

एतदेव सुस्पष्टयति—**सतश्चाऽभिव्यक्तिरिति**। उत्पत्तेः पूर्वं सत एव वस्तुनः पश्चादभिव्यक्तिर्जायते। सतोऽभिव्यक्तिं दृष्टान्तयति—**यथा पीडनेनेति**। उत्पत्तेः पूर्वमसतोऽभिव्यक्तौ दृष्टान्ताभावं दर्शयति—**असतः करणे त्विति**। करणे=अभिव्यक्तौ। निदर्शनं=दृष्टान्तः। तदेव विशदयति—**न खल्विति**। 'खलु' इति एवकारार्थकः। तथा च यद् वस्तु असत् तद् वस्तु सांख्यमतेनाऽभिव्यज्यमानं न्यायमतेन चोत्पद्यमानं नैव क्वचिद् दृष्टम्, यथा वन्ध्यापुत्रादिः।

( ११ ) उत्पत्तेः प्राक् कार्यं सदित्यत्र हेत्वन्तरमाह—**इतश्च कारणेति**। इतः= उपादानग्रहणादिति हेतोरपि। सदेव कार्यम्। सिद्धमिति शेषः। ग्रहणशब्दस्य सम्बन्धरूपमर्थमाह—**ग्रहणं=कार्येण सम्बन्ध इति**। उपादानग्रहणादित्यस्य हेतोरदुष्टत्वं

---

( १० ) प्रश्न—कारणव्यापार=उत्पत्ति के पूर्व कार्य सत्=विद्यमान है, तब कारण की क्या आवश्यकता है?

उत्तर—**'कारणाच्चे'ति**। अर्थात् कारण से इस सत् कार्य की अभिव्यक्ति मात्र शेष रह जाती है और अभिव्यक्ति सत् की ही होती है, यह उपपत्ति=प्रमाण सिद्ध है। जैसे तिलों के अन्दर तैल पहिले से ही विद्यमान है, किन्तु पीडनरूप कारण से उसकी=तैल की अभिव्यक्ति मात्र हो जाती है। ऐसे ही धानों के अन्दर विद्यमान तण्डुल=चावलों की अभिव्यक्ति अवघात=कूटने से होती है एवं गौओं के अन्दर विद्यमान दूध की अभिव्यक्ति दोहनरूप कारण से होती है और उत्पत्ति के पूर्व यदि कार्य को असत् मानते हैं तो उसके कारण=अभिव्यक्ति में कोई भी निदर्शन=दृष्टान्त नहीं है। इसी को स्पष्ट करते हैं—**'न खल्विति'**। अर्थात् अभिव्यक्ति के योग्य एवं उत्पत्ति के योग्य वस्तु कहीं भी असत्=अस्तित्वशून्य नहीं देखने में आयी। अतः उत्पत्ति के पश्चाद्वत् पूर्व भी कार्य को सत् मानो।

( ११ ) **'इतश्च' इति**। कारणव्यापार से पूर्व में सत् ही कार्य है, यह 'उपादानग्रहणात्' इस हेतु से भी सिद्ध है। 'उपादान' शब्द का अर्थ है—'समवायिकरण' और 'ग्रहण' शब्द का अर्थ है—'कार्य के साथ सम्बन्ध'। अर्थात् उपादानकारणों के साथ जो कार्य का सम्बन्ध, यही 'उपादानग्रहणात्' का अर्थ है। इस विषय में इतना कहना और

सम्बन्धादिति यावत्। एतदुक्तं भवति—कार्येण सम्बद्धं कारणं कार्यस्य जनकम्, सम्बन्धश्च कार्यस्याऽसतो न सम्भवति, तस्मादिति।

स्यादेतत्, असम्बद्धमेव कारणैः कार्यं कस्मान्न जन्यते? तथा चाऽसदेवोत्पत्स्यत इत्यत आह—'सर्वसम्भवाभावात्' इति। असम्बद्धस्य जन्यत्वे असम्बद्धत्वा अविशेषेण सर्वं कार्यजातं सर्वस्माद्भवेत्। न चैतदस्ति, तस्मान्नाऽसम्बद्धमसम्बद्धेन जन्यते, अपि तु सम्बद्ध सम्बद्धेन जन्यत इति। यथाऽऽहुः सांख्यवृद्धाः—

'असत्त्वे नाऽस्ति सम्बन्धः कारणैः सत्त्वसङ्गिभिः।
असम्बद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः॥' इति।

---

सम्पादयितुमाह—एतदुक्तमिति। कार्येण सम्बद्धमेव कारणं कार्यं जनयति, सम्बन्धश्च अभेदापरपर्यायभूतस्तादात्म्यरूपः, स च सत्कारणस्य सता कार्येण सहैव भवितुमर्हति नासता, अतः सदेव कार्यं स्वीकार्यम्।

तृतीयहेतोरवतरणिकामाह—स्यादेतदिति। कारणैः=उपादानकारणैः (तन्त्वादिभिः—कपालादिभिः)। कस्मात्=कस्माद् बाधकात्। तथा च बाधकाभावात् असदेव कार्यं कथन्नोत्पद्यते? इत्यत आह—सर्वसम्भवाभावादिति। तन्त्वादिकारणातिरिक्तेषु सर्वेषु अधिकरणेषु पटादिकार्यस्य यः सम्भवः=प्रादुर्भावः, तदभावात् असम्बद्धकार्यं नैव कदापि भवितुमर्हतीति भावः। विपक्षबाधकानुकूलतर्कप्रदर्शनपरं 'सर्वसम्भवाभावात्' इति हेतुपदं व्याचष्टे—असम्बद्धस्य जन्यत्वे इति। तथा च सांख्यमते 'सर्वस्मात् सर्वकार्योत्पत्तिप्रसङ्गरूपोऽनुकूलतर्कोऽस्ति'। भवन्मते (न्यायवैशेषिकमते) च 'असम्बद्धान्येव कारणानि कार्यं जनयन्ति' इत्यत्र नास्ति कश्चित् अनुकूलतर्कः, इत्यच्च

---

आवश्यक है कि कार्य के साथ सम्बद्ध कारण ही कार्य का जनक होता है और सम्बन्ध असत्=अविद्यमान कार्य का कदापि सम्भव नहीं। अतः कार्य को उत्पत्ति के पूर्व भी सत् ही मानना होगा।

शङ्का—'स्यादेतत्'—यह कहना तो आप=सांख्य का बहुत ठीक है, परन्तु असम्बद्ध कार्य ही कारणों से क्यों नहीं उत्पन्न होता है? इससे असत् ही कार्य उत्पन्न हो जायेगा।

समाधान—'सर्वसम्भवाभावात्' इति। सभी कार्यों की उत्पत्ति सभी कारणों से नहीं होती है। तात्पर्य यह है कि असम्बद्ध कार्य की उत्पत्ति मान लेने पर असम्बद्धत्व तो सर्वत्र अविशेष=समान है, तब तो सभी कार्य सभी कारणों से होने लग जायेंगे, तन्तुओं से घट तथा कपाल=मिट्टी से पट इत्यादि। 'न चैतदस्ति' ऐसा अनुभव में नहीं आता है। अतः असम्बद्ध कार्य की असम्बद्ध कारण से उत्पत्ति नहीं होती है, किन्तु सम्बद्ध कार्य की ही सम्बद्ध कारण से उत्पत्ति होती है। इस विषय में वृद्ध=सांख्य विद्वानों की सम्मति बतलाते हैं—'असत्त्वे' इति। असत्त्वे=कार्य को उत्पत्ति के पूर्व असत्=अविद्यमान मानने पर सत्त्वसङ्गी=सत्ताविशिष्ट कारणों के साथ

( १२ ) स्यादेतत्, असम्बद्धमपि सत् तदेव करोति यत्र यत् कारणं शक्तं, शक्तिश्च कार्यदर्शनादवगम्यते। तेन नाव्यवस्थेत्यत आह—'शक्तस्य शक्यकरणात्' इति। सा शक्तिः शक्तकरणाश्रया, सर्वत्र वा स्यात्, शक्ये एव वा ? सर्वत्र चेत्, तदवस्थैवाऽव्यवस्था। शक्ये चेत्, कथमसति शक्ये तत्र ? इति वक्तव्यम्। शक्तिभेद एव एतादृशो यतः किञ्चिदेव कार्यं जनयेत् न सर्व-

---

सर्वस्मात् कारणात् सर्वकार्योत्पत्तिप्रसङ्गरूपबाधकदर्शनेन सदेव कार्यं स्वीकार्यम्। अस्मिन्नर्थे वृद्धसम्मतिमाह—'**असत्त्वे नास्ति सम्बन्धः**' इत्यादिः।

( १२ ) कार्यसम्बद्धं कारणं कारणसम्बद्धमेव कार्यं जनयति इत्युक्तमसहमानस्तार्किकः शङ्कते—**स्यादेतदिति**। असम्बद्धमपि = कार्येण असम्बद्धमपि। शक्तं = शक्तिविशिष्टम्। शक्तौ प्रमाणमाह—**शक्तिश्चेति**। कारणनिष्ठा शक्तिश्चेत्यर्थः। कार्यदर्शनात् = मृदः एव घटो जायते सुवर्णादेव च सौवर्णमाभूषणम्। अवगम्यते = अनुमीयते। तथा चानुमानम्—वह्नौ दाहानुकूला शक्तिरस्ति दाहरूपकार्यजनकत्वात् यन्नैवं तन्नैवं यथा जलमिति। तेन = शक्तिमत एव कारणस्य कार्यजनकत्वाभ्युपगमेन। अव्यवस्था= सर्वस्मात् कारणात् सर्वकार्योत्पत्तिप्रसङ्गरूपा अव्यवस्थितिरित्यर्थः।

'शक्तस्य शक्यकरणात्' इति हेतुमवतार्य तार्किकशङ्कां विकल्प्य निराकरोति—**सा शक्तिरिति**। शक्तकारणाश्रया = शक्तं = कार्यजननसामर्थ्ययोग्यं कारणम् आश्रयो यस्याः सा, कार्यजननशक्तिमति कारणे विद्यमाना या शक्तिः सा शक्तिरित्यर्थः। १. किं = सर्वत्र = सर्वकार्यविषया = किं सर्वेषु कार्येषु स्यादित्यर्थः ? २. शक्ये एव वा ? = उत शक्ये कार्ये एव स्यादित्यर्थः ? तत्राद्यपक्षं दूषयति—**सर्वत्र चेदिति**। सा शक्तिः सर्वत्र चेत्, तर्हि सर्वं कार्यं सर्वस्माद् भवेदित्येवमापत्तिस्वरूपाऽव्यवस्था तदवस्थैव स्यात्।

---

उन असत् कार्यों का सम्बन्ध = तादात्म्य नहीं हो पायेगा, क्योंकि सांख्यमत में कार्य-कारण का तादात्म्य होता है। दूसरी बात यह भी है कि असम्बद्ध = असत् ( कार्यं ) की उत्पत्ति को चाहने वाले नैयायिकों के मत में कोई भी व्यवस्था नहीं रह जायेगी, अर्थात् तन्तुओं से पट होता है, दूध से दही होता है, मिट्टी से घट होता है—यह व्यवस्था नहीं रह जायेगी। अर्थात् तन्तुओं से घट क्यों न हो ?

( १२ ) **'स्यादेतत्' इति**। आप = सांख्य का यह पूर्वोक्त कथन ठीक है, किन्तु कार्य से असम्बद्ध होता हुआ भी सत् कारण उसी कार्य को उत्पन्न कर सकेगा जिस कार्य की उत्पादनशक्ति युक्त वह कारण होगा। और उस शक्ति का निश्चय=अनुमित्यात्मक निश्चय कार्य दर्शन से होता है—'कपालं घटोत्पादनशक्तिमद् घटजनकत्वात्'। इससे शक्त कारण ही कार्य का उत्पादक हो सकेगा, सभी कार्य सब कारणों से होने लग जायेंगे—यह अव्यवस्था भी नहीं होगी। इसके खण्डन के लिए चतुर्थ हेतु 'शक्तस्य शक्यकरणात्' का उल्लेख करते हैं—अर्थात् जिस कार्य के उत्पादन में जो कारण शक्त होता है वह कार्योत्पादनात्मिका शक्ति शक्तकारण में ही है, अथवा सर्वत्र है, अथवा शक्य कार्य में है ? यदि सर्वत्र है अर्थात् सभी कार्यों में वह शक्ति है तब तो 'सर्वं कार्यं सर्वस्मात् कारणात् भवेत्' यह अव्यवस्था फिर से लागू हो जायेगी। यदि कहो शक्य-

मिति चेत्, हन्त भोः ! शक्तिविशेषः कार्यसम्बद्धो वाऽसम्बद्धो वा ? सम्बद्धत्वे नाऽसता सम्बन्ध इति सत् कार्यम् । असम्बद्धत्वे सैवाऽव्यवस्था, इति सुष्ठूक्तं 'शक्तस्य शक्यकरणात्' इति ।

---

तन्त्वादिभ्यो घटादीनामुत्पत्त्यापत्तिस्वरूपाऽव्यवस्था स्यात् । 'मृत्तिकात एव घटः, सुवर्णादेव च कटकम्' इति नियमभङ्गः, व्यवस्थाया अनुपपत्तिश्च स्यात् । द्वितीयपक्षं दूषयति—**शक्ये चेदिति** । शक्ये एव सा शक्तिरस्ति इत्युच्यते चेत्तदाऽप्याह—**कथमसति शक्ये इति** । असति=अविद्यमाने शक्ये । वक्तव्यम्=कथं वक्तुं योग्यं स्यात्, न कथमपीत्यर्थः ।

शक्तिरपि कार्यसम्बद्धैव कार्यं जनयति नासम्बद्धेति सांख्यसिद्धान्तमजानन् नैयायिकः शङ्कते—**शक्तिभेद एवेति** । 'सा शक्तिः सर्वत्र वर्तते' इत्यपि वयमङ्गीकुर्मः, परन्तु तथापि सर्वस्मात् सर्वकार्योत्पत्तिप्रसङ्गो नास्ति, यतः शक्तिभेदात् कारणं किञ्चिदेव कार्यं जनयति न सर्वं, येन मृत्तिकात एव घटो जायते न तन्तुभ्यः, एवं तन्तुभ्य एव पटो जायते न कपालादिभ्य इति न कश्चिद्दोषः, तदेवोक्तं—'**किञ्चिदेव कार्यं जनयेदि**'त्यादिः ।

सिद्धान्ती उत्तरयति—**हन्त भोरित्यादिना** । नैयायिककथनस्य दौर्बल्यं दर्शयितुं स्वाभिप्रायस्य च प्राबल्यं सूचयितुं हर्षार्थकं 'हन्त' इत्यव्ययपदम् । 'शक्तिविशेषः कार्यसम्बद्धो वे'ति प्रथमपक्षं दूषयति—**सम्बद्धत्वे इति** । तथा च असता कार्येण सह शक्तेः सम्बन्धो न भवितुमर्हतीति सत्कार्यं सिद्धम् । 'असम्बद्धो वे'ति द्वितीयपक्षं निराकरोति—**असम्बद्धत्वे इति** । यदि स शक्तिभेदः कार्यासम्बद्धः सन् कार्यं जनयति तदा 'सर्वं कार्यं सर्वस्माद् भवेत्' इत्येवंरूपा प्रागुक्ताऽव्यवस्था स्यात् । उपसंहरति—**सुष्ठूक्तमिति** । अर्थात् शक्तं कारणं शक्तिसम्बद्धमेव कार्यं जनयति नासम्बद्धमतः सुष्ठूक्तं=साधूक्तं, शक्तस्य शक्यकरणात् ।

---

कार्य मे ही वह शक्ति है, तब बतलाओ कि कार्य तो आप=नैयायिक के यहाँ असत् है अर्थात् कार्योत्पत्ति के पूर्व अविद्यमान है, तब उसमें वह शक्ति कैसे रहेगी ?

शङ्का—नैयायिक कहता है कि शक्तिभेद=शक्तिविशेष ही ऐसा कारण है जो कुछ ही कार्य को उत्पन्न करता है, सभी कार्य को नही, जैसे तन्तुओं के अन्दर विद्यमान वह शक्तिविशेष पटात्मक कार्य को ही उत्पन्न करता है, न कि घटकार्य को। इसी प्रकार सर्वत्र समझ लेना चाहिए ।

समाधान—सांख्य नैयायिक से कहता है कि हमें दुःख के साथ कहना पड़ता है कि वह शक्तिविशेष आपके कार्य से सम्बद्ध है या असम्बद्ध ? यदि वह कारणनिष्ठ शक्तिविशेष कार्य से सम्बद्ध है तो उसका असत् कार्य के साथ सम्बन्ध कैसे हो सकेगा ? अतः कार्य को सत् ही मानना होगा और यदि वह शक्तिविशेष कार्य से असम्बद्ध है तो फिर वही अव्यवस्था हो जायेगी कि सभी कार्य सब कारणों से होने लग जायेंगे, क्योंकि असम्बद्धत्व समान है । अतः ईश्वरकृष्ण ने सत्कार्य को सिद्ध करने के लिए ठीक ही कहा है—'शक्तस्य शक्यकरणात्' ।

( १३ ) इतश्च सत्कार्यमित्याह—'कारणभावाच्च'। कार्यस्य कारणात्मकत्वात्। न हि कारणाद्भिन्नं कार्यम्, कारणं च सदिति कथं तदभिन्नं कार्यमसद्भवेत् ?

( १४ ) अवीताऽनुमानप्रमाणैः कार्यकारणयोरभेदं प्रदर्शयन्। कार्यस्य कारणाभेदसाधनानि च प्रमाणानि—

न पटस्तन्तुभ्यो भिद्यते, तन्तुधर्मत्वात्। इह यद्यतो भिद्यते तत् तस्य धर्मो न भवति, यथा गौरश्वस्य। धर्मश्च पटस्तन्तूनां, तस्मान्नाऽर्थान्तरम्।

उपादानोपादेयभावाच्च नाऽर्थान्तरत्वं तन्तुपटयोः। ययोरर्थान्तरत्वं न

---

( १३ ) सांख्यमतसिद्धसत्कार्यवादं संस्थापयितुं हेत्वन्तरमप्याह—**इतश्चेति**। **कारणभावाच्चेति**। तथा च 'कार्यम् उत्पत्तेः प्रागपि सत् कारणभावात्=कारणाभिन्नत्वात्'।

( १४ ) ननु कार्यस्य कारणाभिन्नत्वे न किञ्चित् प्रमाणं नापि युक्तिमनुभवाम इति नैयायिकाशङ्कायां प्रमाणान्याह—**न पटस्तन्तुभ्य इत्यादिः**। अत्र 'पटः पक्षः, न तन्तुभ्यो भिद्यते इति साध्यम्, तद्धर्मत्वादिति हेतुः, तद्धर्मत्वादित्यस्य तन्तुधर्मत्वादित्यर्थो बोध्यः। एतेन उत्पत्तेः प्राक् कार्यस्य सद्रूपतया कारणाभिन्नत्वं दर्शितम्। व्यतिरेकव्याप्तिं दर्शयन् उदाहरणवाक्यमाह—**इह यद्यत इति**। इह=अत्रानुमाने='न पटस्तन्तुभ्यो भिद्यते' इत्याद्यनुमाने इत्यर्थः। यत्=गौः। यतः=अश्वतः। तत्=गौः। तस्य=अश्वस्य। अतो गवाश्वयोर्नाऽभेदः। 'यद् यतो भिद्यते' इति साध्याभावकथनम्। 'तत्तस्य धर्मो न भवती'ति च हेत्वभावसमुल्लेखः। इत्थञ्च व्यापकाभावेन व्याप्याभावः सिद्ध्यतीति नियमात्, प्रकृते व्यापकस्य=तद्धर्मत्वाभावस्य, अर्थात् तन्तुधर्मत्वाभावस्य पटेऽभावात् व्याप्यस्य तन्तुभेदस्याऽभावः सिद्ध्यतीति कार्यकारणयोरभेदः सुस्पष्ट एवेति भावः। पक्षे तद्धर्मत्वरूपहेतोरस्तित्वं प्रदर्शयितुमुपनयवाक्यमाह—**धर्मश्चेति**। निगमनवाक्यमाह—**तस्मान्नार्थान्तरमिति**। तस्मात्=तन्तुधर्मत्वा-

---

( १३ ) 'इतश्चे'ति। इस पञ्चम हेतु 'कारणभावात्' से भी सत् कार्य ही सिद्ध होता है। 'कारणभावात्' का अर्थ है—कारणात्मकत्वात्। अर्थात् कार्य कारणात्मक=कारण से अभिन्न है। तब फिर कार्य कारण से भिन्न कदापि नहीं हो सकता है। कारण जब सत् है, तब उससे अभिन्न कार्य असत् कैसे हो सकता है ? अतः कार्य को सत् ही मानना होगा।

( १४ ) कार्य का कारण से अभेद सिद्ध करने वाले प्रमाण ये हैं—पट तन्तुओं से भिन्न नहीं है क्योंकि तन्तुओं का धर्म होने से जो जिससे भिन्न होता है, वह उसका धर्म नहीं होता है; जैसे गौ अश्व का धर्म नहीं है, अतः गौ अश्व से भिन्न है। तन्तुओं का धर्म पट है, इसलिए पट तन्तुओं से अर्थान्तर=भिन्न नहीं है।

उपादान-उपादेयभाव=कार्य-कारणभाव होने से भी तन्तु पट में अर्थान्तरत्व=भेद नहीं है। क्योंकि जिनमें अर्थान्तरत्व=भेद होता है, उनमें उपादान-उपादेय-

तयोरुपादानोपादेयभावः, यथा घटपटयोः। उपादानोपादेयभावश्च तन्तुपटयोः। तस्मान्नाऽर्थान्तरत्वम् ।

इतश्च नाऽर्थान्तरत्वं तन्तुपटयोः, संयोगाप्राप्त्यभावात् । अर्थान्तरत्वे हि संयोगो दृष्टो यथा कुण्डबदरयोः, अप्राप्तिर्वा यथा हिमवद्विन्ध्ययोः। न चेह संयोगाप्राप्ती, तस्मान्नाऽर्थान्तरत्वमिति ।

( १५ ) इतश्च पटस्तन्तुभ्यो न भिद्यते, गुरुत्वान्तरकार्याग्रहणात् । इह

---

भावाभाववत्त्वात् । नार्थान्तरम्=न तन्तुभिन्नः पटः । अनुमानान्तरमाह—**उपादानोपादेयभावाच्चेति** । उपादीयते=कार्योत्पत्त्यर्थं गृह्यते इत्युपादानम्, कारणमित्यर्थः । उपादेयम्=व्यवहारसम्पादयितुं योग्यम्, कार्यमित्यर्थः, तयोर्भावस्तस्माद् उपादानोपादेयभावात् । कार्यकारणभावादित्यर्थः । नार्थान्तरत्वं तन्तुपटयोरिति । न परस्परं भिन्नत्वं तयोरित्यर्थः । उदाहरणं प्रदर्शयन् व्यतिरेकव्याप्तिं दर्शयति—**ययोरर्थान्तरत्वमिति** । उपनयवाक्यं दर्शयति—**उपादानोपादेयभावश्च तन्तुपटयोरिति** । निगमनवाक्यं दर्शयति—**तस्मान्नार्थान्तरत्वमिति** ।

हेत्वन्तरमपि दर्शयति—**संयोगाप्राप्त्यभावादिति** । संयोगश्च अप्राप्तिश्च तयोरभावात् । 'अप्राप्तयोस्तु या प्राप्तिः सैव संयोग ईरितः' इत्यनुसारात् अप्राप्तयोः प्राप्तिः संयोगः, अप्राप्तिश्च विभागः । इत्थञ्च कार्यकारणयोरभेदसाधकं संयोगानाश्रितत्वात्, विभागानाश्रितत्वाच्चेति हेतुद्वयं फलितम् । इत्यभिप्रायेणैव संयोगं दृष्टान्तमाह—**अर्थान्तरत्वे हीति** । विभागं दृष्टान्तमाह—**अप्राप्तिर्वेति** । हिमाचलविन्ध्याचलयोरप्राप्तिः सार्वकालिकी दृष्टा । उपनयवाक्यमाह—**न चेह संयोगाऽप्राप्तीति** । इह=तन्तुपटयोः । नास्ति संयोगः, नापि विभागो वा वर्तते । निगमनवाक्यं दर्शयति—**तस्मान्नार्थान्तरत्वमिति** । तस्मात्=संयोगानाश्रितत्वात्, विभागानाश्रितत्वाच्च । नार्थान्तरत्वम्=न तन्तुपटयोर्भेदः ।

( १५ ) कार्यकारणयोरभेदसाधकं हेत्वन्तरमाह—**गुरुत्वान्तरकार्याग्रहणादिति** । 'गुरुणी द्वे' इति विश्वनाथोक्तेर्जलभूम्योर्गुरुत्वं तिष्ठति, तच्च गुरुत्वं भारविशेषः, तदेव गुरुत्वं पतनात्मककर्मकारणमपि । कपालनिष्ठगुरुत्वापेक्षयाऽन्यनिष्ठं गुरुत्वं गुरुत्वान्तरं

---

भाव नही होता है, जैसे घट और पट मे । उपादान-उपादेयभाव तन्तु और पट मे है, अतः उनमें अर्थान्तरत्व=भेद नही है । इस प्रमाण से भी तन्तुपट मे अर्थान्तरत्व नही है—'संयोगाप्राप्त्यभावात्' अर्थात् संयोग तथा अप्राप्ति=विभाग इनका अभाव होने से तन्तु और पट मे भेद नही है । क्योकि अर्थान्तरत्व=भेद होने में संयोग देखा जाता है; जैसे कुण्ड और बदर=बेर में । अथवा अर्थान्तरत्व होने में अप्राप्ति=विभाग देखा जाता है, जैसे हिमालय और विन्ध्याचल मे । परन्तु यहाँ तन्तुपट मे न न संयोग है और न अप्राप्ति=विभाग है, इसलिए इनमे अर्थान्तरत्व नहीं है ।

( १५ ) पट तन्तुओ से भिन्न नही है, उसमें एक हेतु यह भी है—'गुरुत्वान्तरकार्याग्रहणात्', अर्थात् तन्तुनिष्ठ जो गुरुत्व, उससे न्यूनाधिकयरूप गुरुत्वान्तर का ग्रहण

यद्यस्माद्भिन्नम्, तस्मात् तस्य गुरुत्वान्तरं कार्यं गृह्यते, यथैकपलिकस्य स्वस्तिकस्य यो गुरुत्वकार्योऽवनतिविशेषस्तस्माद्द्विपलिकस्य स्वस्तिकस्य गुरुत्वकार्योऽवनतिभेदोऽधिकः। न च तथा तन्तुगुरुत्वकार्यात्पटगुरुत्वकार्यान्तरं दृश्यते। तस्मादभिन्नस्तन्तुभ्यः पट इति। तान्येतान्यभेदसाधनान्यवीतानि।

एवमभेदे सिद्धे, तन्तव एव तेन तेन संस्थानभेदेन परिणताः पटः, न तन्तुभ्योऽर्थान्तरं पटः।

---

कथ्यते, तस्य यत् कार्यम् अधोनमनादिरूपं, पतनविशेषावनतिरूपं वा तस्य घटेऽग्रहणात्। तथा च यादृशं गुरुत्वं कपाल-तन्त्वादिकारणेषु अनुभूयते तादृगमेव तत्कार्य घट-पटादिष्वपि, अतोऽनेनापि हेतुना कार्यकारणयोरभेद एव सिद्ध्यति, तस्मादभिन्नस्तन्तुभ्यः पटः। तत्र दृष्टान्तमाह – **यथैकपलिकस्येति**। अशीति ( ८० ) रक्तिकाया एकं तोलकं भवति, तोलकचतुष्टयञ्चैकं पलम्, तादृशपलपरिमितसुवर्णविनिर्मितस्य 'स्वस्तिक'स्य = स्वस्तिकाख्यभूषणविशेषस्येत्यर्थः। गुरुत्वकार्यः = गुरुत्वजन्योऽधोनमनादिकार्यविशेषः। तस्मात् = एकपलिकस्वस्तिकापेक्षया। द्विपलिकस्य = पलद्वयगुरुत्वपरिमितगुरुत्वावच्छिन्नस्य। अधिकः = भिन्नः।

अस्योपनयवाक्यमाह—**न च तथेति**। तन्तुगुरुत्वकार्यात् = तन्तुगुरुत्वकार्यं यद् अधोनमनादिरूपं तस्मादित्यर्थः। पटगुरुत्वकार्यान्तरम् = पटगुरुत्वस्य कार्यं यद् अधोनमनादिरूपं तत्ततो भिन्नं नेत्यर्थः। निगमनवाक्यमाह—**तस्मादभिन्न इति**। तस्मात् = गुरुत्वान्तरकार्याऽग्रहणादित्यर्थः।

पूर्वं पञ्चमकारिकायाम् 'अस्य चावीतस्य व्यतिरेकिण उदाहरणमग्रेऽभिधास्यते' इत्युक्तं तदेवेदानीं स्मारयति—**तान्येतानीति**। अभेदसाधनानि = कार्यकारणयोरभेदसाधकानि = अभेदप्रमानुमितिकरणानीत्यर्थः। अवीतानि = व्यतिरेकव्याप्तिविशिष्टानि अनुमानानीत्यर्थः।

ननु यदि तन्तुपटयोरभेदः स्वीक्रियते तदा 'इमे तन्तवः, अयञ्च पटः' इत्यादि भेदव्यवहारः कथं स्यादित्यत आह—**एवमभेदे सिद्धे इति**। तेन तेन संस्थानभेदेन =

---

पटरूप कार्य में नहीं होता है, अतः पट तन्तुओं से भिन्न नहीं है। जो जिससे भिन्न होता है वहाँ कारणनिष्ठ गुरुत्व से कार्यनिष्ठ न्यूनाधिक्यरूप गुरुत्वान्तर का ग्रहण होता है। जैसे एकपलिक स्वस्तिक का जो गुरुत्व कार्य है—अवनतिविशेष, उसकी अपेक्षा द्विपलिक स्वस्तिक का गुरुत्व कार्य अवनतिविशेष अधिक होता है। परन्तु तन्तुनिष्ठ गुरुत्वकार्य से पटनिष्ठ न्यूनाधिक्यरूप गुरुत्वान्तर देखने में नहीं आता है, अतः पट तन्तुओं से अभिन्न है। अतएव ये कार्य और कारण में 'गुरुत्वान्तरकार्याग्रहणात्' तथा 'संयोगाप्राप्त्यभावात्' इत्यादि लिङ्गिक = हेतुक तथा अवीत = व्यतिरेकि अनुमानों से अभेदसाधन का प्रदर्शन कर दिया।

इस प्रकार कार्य और कारण में अभेद सिद्ध हो जाने पर तन्तु ही संस्थानभेद = आतानवितानभावापन्नाऽवयवसंयोगविशेष से परिणत = अवस्थान्तर को प्राप्त अर्थात्

( १६ ) स्वात्मनि क्रियानिरोधबुद्धिव्यपदेशार्थक्रियाभेदाश्च नैकान्तिकं भेदं साधयितुमर्हन्ति। एकस्मिन्नपि तत्तद्विशेषाविर्भावतिरोभावाभ्यामेतेषाम-

---

आतानवितानभावापन्नाऽवयवसंयोगभेदेनेत्यर्थः। परिणताः=अवस्थान्तरं गताः। फलितार्थमाह—**न तन्तुभ्य इति**। अतः पटो न तन्तुभ्यो भिन्न इत्यर्थः। केवलमवस्थाभेदात् नामादिभेदव्यवहार उपपद्यते इति तु परमार्थः।

( १६ ) इदानीं नैयायिका अनुपदमेव वक्ष्यमाणहेतुभिः कार्यकारणयोर्भेदं साधयन्ति। यथा—पटस्तन्तुभ्यो भिन्नः पटीयोत्पत्तिक्रियाभेदात्, पटीयविनाशात्मकनिरोधभेदात्, 'इमे तन्तवः, अयञ्च पटः' इत्यादिज्ञानरूपबुद्धिभेदात्, एवम् 'इह तन्तुषु पटः' इत्यादिव्यवहाररूपव्यपदेशभेदात्, तथा तन्तुभिः पटः सीव्यते, अनन्तरञ्च पटेन शरीरमाच्छाद्यते इत्येवमर्थक्रियाभेदात्, अपि च विभिन्नप्रयोजनजनकत्वनियमरूपार्थक्रियाव्यवस्थाभेदोऽपि कार्यकारणयोर्भेदसाधको हेतुर्बोध्यः। तत्रापि यदि कार्यकारणयोरभेदो बलात् स्वीक्रियते, तदा मृत्तिकाखण्डेन जलाहरणं स्यात्, घटेन भित्तिकानिर्माणं स्यात्, तन्तुभिश्च शरीराच्छादनं स्यादित्याद्यापत्तयो दोषा गले पतिता भविष्यन्तीति वदतां नैयायिकानां मतं खण्डयति—**स्वात्मनीति**। स्वात्मनि=स्वभिन्ने वस्तुनि पटादौ। समाधत्ते—**नैकान्तिकमिति**। अर्थात् प्रागुक्ताः क्रिया-निरोध-बुद्धि-व्यपदेशभेदादयो हेतवो नहि कार्यकारणयोः ऐकान्तिकं=वास्तविकं=पारमार्थिकं भेदं साधयितुमर्हन्तीति भावः। एतेषां क्रिया-निरोध-बुद्धि व्यपदेशभेदादिहेतूनामौपाधिकभेदस्यैव साधयितुं समर्थत्वात्, न तु पारमार्थिकभेदस्यापि इति तु सांख्यसत्कार्यनिष्कर्षः।

कुत इति जिज्ञासायामाह—**एकस्मिन्नपीति**। अभिन्नेऽपि वस्तुनि तत्तद्विशेषाऽऽविर्भावतिरोभावरूपोपाधिभेदबलेन औपाधिकभेदमाश्रित्यैव प्रागुक्तषड्भिर्हेतुभिः कार्य-

---

पटीय अवस्था को प्राप्त हुए तन्तु ही पट कहलाते है, तन्तुओ से अर्थान्तर=भिन्न पट नही है, तन्तु ही पटव्यवहारयोग्यतापन्न हो जाते है।

( १६ ) **'स्वात्मनी'ति**। अब पूर्वोक्त अभेदसाधक सांख्यानुमान=अवीतानुमान में नैयायिक सत्प्रतिपक्षदोष का उद्भावन करते है। वे कहते है कि इन क्रियाभेद एवं निरोधभेद आदि लिङ्गक पूर्वोपदर्शित अनुमानों से कार्य और कारण में भेद सिद्ध हो रहा है। सांख्य ने पहले 'संयोगाऽप्राप्त्यभावात्' इत्यादि हेतुकानुमानों से कार्य और कारण में अभेद सिद्ध किया था। नैयायिकों का कथन है कि 'क्रियाभेद' आदि दूसरे हेतुकानुमानो से अभेद का अभाव सिद्ध हो रहा है, यही तो सत्प्रतिपक्ष है—'साध्याभावसाधकं हेत्वन्तरं यस्य स सत्प्रतिपक्षः'। सांख्य कहता है कि यह भेद औपाधिक भेद है; ऐकान्तिक=वास्तविक भेद को तुम्हारे अनुमान सिद्ध नहीं कर पा रहे हैं—'नैकान्तिकं भेदं साधयितुमर्हन्ति' इति।

प्रश्न—नैयायिक सांख्य से पूछता है कि क्रियाभेद, निरोधभेद आदि हेतुकानुमान कार्य कारण में ऐकान्तिक=वास्तविक अर्थात् पारमार्थिक भेद नही सिद्ध कर सकते है, ऐसा क्यों ?

विरोधात् । यथा हि कूर्मस्याऽङ्गानि कूर्मशरीरे निविशमानानि तिरोभवन्ति, निःसरन्ति चाऽविर्भवन्ति, न तु कूर्मतस्तदङ्गानिन्युपद्यन्ते प्रध्वंसन्ते वा । एवमेकस्या मृदः सुवर्णस्य वा घटमुकुटादयो विशेषा निःसरन्त आविर्भवन्त उत्पद्यन्ते इत्युच्यन्ते, निविशमानास्तिरोभवन्ति विनश्यन्तीत्युच्यन्ते । न पुनरसतामुत्पादः सतां वा निरोधः । यथाऽऽह भगवान् कृष्णद्वैपायनः—

'नाऽसतो विद्यते भावो नाऽभावो विद्यते सतः' । इति । ( गी० २।१६ )

---

कारणयोर्भेदः सिद्धयति । एतेषाम् = क्रिया-निरोध-बुद्धि-व्यपदेशभेदादिहेतूनाम् । अविरोधात् = विरोधाभावात् । तथा च तेषां भेदरूपहेतूनां कार्यकारणयोः पारमार्थिकाऽभेदबाधने नास्ति सामर्थ्यम्, औपाधिकभेदसाधनेनैव तेषां चरितार्थत्वात् । विरोधाभावं दर्शयति—**यथाहीत्यादिना** । तत्र दृष्टान्तमुखेन समर्थयति—**कूर्मस्याऽङ्गानीति** । इत्थश्च यथा सतामेव कूर्माङ्गानामाविर्भावतिरोभावौ जायेते, तथैव सत एव पटस्य तन्तुभ्य आविर्भावतिरोभावौ जायेते, सत एव तैलस्य तिलेभ्य आविर्भावतिरोभावौ जायेते । नैयायिकानां ये आविर्भावतिरोभावौ उत्पत्ति-विनाशशब्देनोच्येते । मृदादिभ्य आविर्भूतघटभावा आविर्भवन्त उत्पद्यन्ते इत्युच्यन्ते, एवं मृदादिषु सन्निविशमानाश्च तिरोभावं प्राप्ताः सन्तो घटादयो विनश्यन्तीत्युच्यन्ते, तथा चोक्तम्—एवमेकस्या एव मृदः सुवर्णस्य वा घटमुकुटादयो विशेषा इत्यादिः । **न पुनरिति** । असताम् = अविद्यमानानाम्, अलीकानां वेत्यर्थः । घटादीनां कारणव्यापाराद् उत्पादः, सताम् = विद्यमानानाम्, घटादीनां वा । निरोधः = ध्वंसो, न पुनर्भवितुमर्हतीति शेषः । अस्मिन्नर्थे भगवद्गीतावाक्यं

---

उत्तर—सांख्य कहता है कि अभिन्न वस्तु में भी अर्थात् तन्तु आदि स्वरूप पृथिवीरूप वस्तु में तुरी, वेमा आदि के व्यापाररूप उपाधि से तत्तद्विशेषधर्म जो पटोत्पत्ति आदि क्रिया से लेकर शरीराच्छादनरूप प्रावरणपर्यन्त हैं, उनके आविर्भाव, तिरोभाव से क्रियाभेद, निरोधभेद आदि पाँचों हेतु चरितार्थ हो जाते हैं, फिर कोई विरोध ही नहीं रह जाता है, तव 'संयोगाप्राप्त्यभावात्' 'गुरुत्वान्तरकार्याग्रहणात्' इत्यादि हेतुओं से सिद्ध कार्य और कारण = पट-तन्तु, घट तथा मिट्टी में पारमार्थिक अभेद साधन में कोई प्रतिवन्धक नहीं । उसी का समर्थक दृष्टान्त है—**'यथा हि कूर्मस्याङ्गानि'** इति ।

जैसे कछुवे के शरीर में विद्यमान उसके अङ्ग कभी शरीर से वाहर निकलते हैं, कभी फिर अन्दर शरीर में ही समाविष्ट हो जाते हैं, यही निविशमान = समाविष्ट होना तथा निःसरण = शरीर से वाहर निकलना ही क्रमशः तिरोभाव एवम् आविर्भाव कहलाता है, न कि कछुवे के शरीर से वे अङ्ग उत्पन्न होते और ध्वस्त होते हैं । इसी प्रकार मिट्टी के अन्दर विद्यमान घट का जब आविर्भाव होता है तव उसे उत्पन्न हुआ कहते हैं और जव वह घट मिट्टी में ही समाविष्ट = तिरोभूत हो जाता है तव उसे विनष्ट हुआ कहते हैं । परन्तु वस्तुस्थिति यह है कि जो असत् हैं उनका कभी समुत्पाद नहीं होता है और जो सत् हैं उनका कभी निरोध = विनाश

( १७ ) यथा कूर्मः स्वावयवेभ्यः सङ्कोचविकासिभ्यो न भिन्नः, एवं घट-मुकुटादयोऽपि मृत्सुवर्णादिभ्यो न भिन्नाः। एवञ्च 'इह तन्तुषु पटः' इति व्यपदेशो यथा 'इह वने तिलकाः' इत्युपपन्नः।

( १८ ) न चार्थक्रियाभेदोऽपि भेदमापादयति, एकस्याऽपि नानार्थ-क्रियादर्शनात्। यथैक एव वह्निर्दाहकः पाचकः प्रकाशकश्चेति। नाऽप्यर्थ-

---

प्रमाणयति—'नासतो विद्यते भाव' इत्यादिः। असतः=वन्ध्यापुत्रादेरिव अवर्तमान-स्यार्थस्य। भावः=उत्पत्तिः, न विद्यते। सतः=विद्यमानस्य, अर्थस्य। अभावः= अस्तित्वाभावो न भवितुमर्हतीति भावः। सदसतोरेकत्र समावेशो भवितुमशक्यत्वात्।

( १७ ) मृद्घटप्रभृत्योः कार्यकारणयोरभेदमुपपादयति—**यथा कूर्म इति**। यथा कूर्मः सङ्कोचविकासशालिस्वावयवेभ्यो न भिन्नः, तथैव घटोऽपि वर्तमानावस्थापन्नमृदः अतीतावस्थापन्नमृदश्च न भिन्न., एवं सौवर्णाऽऽभूषणादयोऽपि वर्तमानावस्थापन्नस्व-कारणीभूतसुवर्णतो न भिन्नाः, नापि चाऽतीतावस्थापन्नसुवर्णतो भिन्नाः, किन्तु सर्वथा-ऽभिन्ना एव। व्यपदेशभेदोऽपि न भेदसाधक इत्यत आह—**एवञ्चेति**। अत्र चशब्दोऽव-धारणे, एवमेवेत्यर्थः। व्यपदेशोऽपि उपपन्न इत्यन्वयः। तत्र दृष्टान्तमाह—**यथा इह वने इति**।

( १८ ) अर्थक्रियाभेदस्यापि न भेदसाधकत्वमित्यत आह—**न चार्थक्रियाभेदोऽपीति**। न भेदमापादयति=कार्यस्य कारणाद् भेदं नहि साधयितुमर्हति, व्यभिचारात्। व्यभि-

---

नहीं होता है। जैसे भगवान् कृष्ण ने कहा भी है—**'नासतो विद्यते भावः'** इत्यादि। अर्थात् जो वन्ध्या-पुत्र अथवा नरशृङ्ग के समान असत् हैं, उनकी सत्ता सर्वथा बाधित है, वे कभी भी सत् नहीं हो सकते है और जो पदार्थ सत् हैं उनका अभाव=ध्वंस नहीं हो सकता है। इसी प्रकार प्रकृत में भी समझना चाहिए कि उत्पत्ति के पूर्व यदि घटादि कार्य असत् हैं तो उन्हें हजार कारणव्यापार भी उत्पन्न नहीं कर सकते हैं। अतः उत्पत्ति के पश्चात् कार्य जैसे सत् है ऐसे ही पूर्व भी वह सत् है, कारण भी सत् है, दोनों का अभेद है।

( १७ ) इसमें अनुरूप दृष्टान्त है कि जैसे कूर्म=कछुवा संकोच-विकासशाली अपने अवयवों से भिन्न नहीं है। इसी प्रकार घट और मुकुट आदि कार्य भी क्रमशः अपने-अपने कारण मिट्टी और सुवर्ण आदि से भिन्न नहीं हैं। और 'इह तन्तुपु पटः' यह जो आधाराधेयभावसूचक भेदव्यपदेश होता है, इसका पर्यवसान भी अभेद में ही है। जैसे 'इह वने तिलकाः' अर्थात् 'तिलक' नाम के वृक्षसमुदाय का नाम ही तो वन है। तिलक नामक वृक्षसमुदाय से भिन्न वन नहीं है। वृक्षसमुदाय और वन में जो भेदव्यप-देश होता है वह भेद एकमात्र अप्रामाणिक है, 'राहोः शिरः' इसके समान औपचारिक जैसे है, वैसे ही तन्तु और पट में भी समझना चाहिए।

( १८ ) जैसे व्यपदेशभेद कार्य और कारण में वास्तविक भेद का साधक न होकर अभेद का साधक है, वैसे ही अर्थक्रियाभेद भी वास्तविक भेद का साधक नहीं

क्रियाव्यवस्था वस्तुभेदे हेतुः, तेषामेव समस्तव्यस्तानामर्थक्रियाव्यवस्थादर्शनात् । यथा प्रत्येकं विष्टयो वर्त्मदर्शनलक्षणामर्थक्रियां कुर्वन्ति, न तु शिबिका-

---

चारं ग्राहयति—**नानार्थक्रियादर्शनादिति** । एकस्य वस्तुनोऽपि विलक्षणनानाक्रियावत्तया दर्शनादित्यर्थः । तत्रानुरूपं दृष्टान्तमाह—**यथैक एक वह्निरिति** । दाहकः= दहनक्रियावान्, भवति । पाचकः=पाचनक्रियावानपि । प्रकाशकः=प्रकाशक्रियावान् । एवञ्च भेदस्वरूपसाध्याभाववति वह्नौ अर्थक्रियाभेदात्मकहेतोः सत्त्वाद् व्यभिचारः सुस्पष्ट एव । अर्थक्रियाव्यवस्थाभेदस्यापि न भेदसाधकत्वमित्याह—**नाप्यर्थक्रियाव्यवस्थेति** । तेषामेव=तन्तूनाम् । समस्तव्यस्तानाम्=समस्तानां=संयुक्तानां, शरीरादिसमाच्छादनात्मकार्थक्रियाव्यवस्थासामर्थ्यं दृश्यते । व्यस्तानाम्=परस्परमसंयुक्तानाम्, सीवनात्मकार्थक्रियाव्यवस्थासामर्थ्यं दृश्यते । व्यस्तेषु तन्तुषु शरीराच्छादनरूपार्थक्रियाव्यवस्थाया दर्शनं न भवति । समस्तेषु च तन्तुषु सीवनात्मकार्थक्रियाव्यवस्थाया अभावो दृश्यते । इत्थञ्च पटान्तरत्वेनाभिमतेषु 'पट' इति व्यवहारयोग्येषु समस्ततन्तुषु तन्तुभेदात्मकसाध्याभावेन अर्थक्रियाव्यवस्थाभेदरूपहेतोश्च तत्र सत्त्वाद् व्यभिचारान्न वस्तुभेदः सिद्ध्यति । एकस्यैव वस्तुनः समस्तस्य व्यस्तस्य च अर्थक्रियान्तरशालित्वं दृष्टान्तेन साधयति—**यथा प्रत्येकं विष्टय इति** । विष्टयः=भृत्याः । वर्त्मदर्शनलक्षणाम्—वर्त्मनः=मार्गस्य, दर्शनलक्षणाम्=दर्शनस्वरूपाम् (अन्यस्मै) ।

---

है—'न चार्थक्रियाभेदोऽपी'ति । क्योंकि व्यभिचार है, उसी को दिखलाते हैं—'नानार्थक्रियादर्शनात्' से । अर्थात् 'वास्तविकभेदात्मकसाध्याभाववति वह्नौ औपाधिकाक्रियात्मकभेदरूपहेतोः सत्त्वात्' । नानार्थक्रियादर्शन जैसे एक ही वह्नि जलाने का, प्रकाश करने का तथा पकाने का भी कार्य करती है, परन्तु इनसे वह्नि में सर्वथा अभेद ही है । यह देखने में नहीं आता है कि जलाने वाली वह्नि अलग हो, प्रकाश करने वाली अलग हो और पाचन करने वाली वह्नि अलग हो ।

प्रश्न—नैयायिक कहता है कि सीवन कार्य तन्तुओं से ही होता है न कि पट से; और शरीर आदि का आच्छादनरूप कार्य पट से होता है न कि तन्तुओं से । इस प्रकार तन्तु और पटस्वरूप जो अर्थ हैं, उनकी जो सीवन एवं आच्छादनरूप क्रियाएँ हैं, वे अलग-अलग व्यवस्थित हैं । सीवन तन्तुओं में और आच्छादन पट में, तब फिर तन्तु और पट अर्थात् कारण और कार्य में अभेद कैसे हो सकता है, जब कि भेद स्पष्ट है ?

उत्तर—**नापीति** । जैसे अर्थक्रियाभेद कार्य और कारण के भेद का साधक नहीं हो सकता है, उसी प्रकार अर्थक्रियाव्यवस्था भी कार्य-कारणरूप वस्तु के भेद का साधक हेतु नहीं है । सांख्य का कथन है कि वे समस्त=परस्पर संयुक्त तन्तु ही प्रावरण=शरीररूप अर्थ की आच्छादनरूप क्रिया को सम्पन्न करते हैं और व्यस्त= अलग-अलग तन्तु ही पटरूप अर्थ की सीवनरूप क्रिया को सम्पन्न करते हैं । वहाँ सीवनरूप क्रिया तथा प्रावरणरूप क्रिया एकत्र ही तन्तुरूप अर्थ में व्यवस्थित है, अर्थ-

वहनम्, मिलितास्तु शिबिकामुद्वहन्ति, एवं तन्तवः प्रत्येकं प्रावरणमकुर्वाणा अपि मिलितास्तु शिबिकामुद्वहन्ति।

( १९ ) स्यादेतत्—आविर्भावः पटस्य कारणव्यापारात् प्राक् सन् असन् वा ? असंश्चेत् प्राप्तं तर्ह्यसदुत्पादनम्। अथ सन्, कृतं तर्हि कारणव्यापारेण। न हि सति कार्ये कारणव्यापारप्रयोजनं पश्यामः। आविर्भावे चाऽऽविर्भावा-

---

शिविकावहनम्=शिबिका=दोलाख्यो विमानविशेषः, तस्या वहनम्। मिलितास्तु=एककार्यसम्पादनकर्तृत्वेन व्यापृतास्तु। एवम्=तथा। प्रत्येकं तन्तवः। प्रावरणम्=आच्छादनम्। आविर्भूतपटभावाः—आविर्भूतः=आविर्भावं प्राप्तः, पटरूपो भावो=धर्मो येषु ते। आविर्भूतप्रावरणधर्मका इत्यर्थः। प्रावरिष्यन्ति=प्रावरणं करिष्यन्ति।

'सतश्चाभिव्यक्तिरुपपन्ना, यथा पीडनेन तिलेषु तैलस्य' इत्यादिकं पूर्वं यदुक्तं तत्राभिव्यक्तिः सती असती वेति विचार्य सांख्यमतं पुनर्निराकर्तुं नैयायिको ब्रूते—स्यादेतदिति। द्वितीयपक्षं निराकरोति—प्राप्तं तर्हीति। तन्तुषु पटस्य आविर्भावः सन् वर्ततेऽसन् वेति ? यदि असन्नेव आविर्भावः कारणव्यापाराज्जायते तदा पटादिकार्यमपि कारणव्यापारात् असदेव जायते इति स्वीक्रियताम् इति सत्कार्यवादभङ्गः प्राप्तः। प्रथमपक्षं निराकरोति—कृतं तर्हीति। कृतम्=व्यर्थमित्यर्थः। कारणव्यापारस्य व्यर्थत्वे प्रत्यक्षं प्रमाणमाह—नहि सतीति। हि=यतः। कार्ये=पटादिकार्ये। सति=विद्यमाने। कारणव्यापारस्य किमपि प्रयोजनमेव नास्ति। यदि च प्रथमः आविर्भावोऽनभिव्यक्त

---

क्रियाव्यवस्थाभेद है ही नहीं, जिसके आधार पर तन्तु और पट में ( कारण और कार्य मे ) भेद सिद्ध किया जा सके। इसमे अनुरूप दृष्टान्त बतलाते हैं—'यथा प्रत्येकमि'ति। जैसे प्रत्येक विष्टि=भृत्य=नौकर किसी दूसरे व्यक्ति के लिए वर्त्म=मार्ग दर्शनरूप क्रिया को तो सम्पन्न कर सकता है, न कि शिविका=पालकी का वहन=उठाना रूप क्रिया को भी। शिविकावहनरूप अर्थक्रियाव्यवस्था को तो मिलितभृत्य=भृत्य-समुदाय ही कर सकता है। इसी प्रकार प्रत्येक तन्तु प्रावरण=शरीराच्छादनरूप क्रिया को सम्पन्न करने में अशक्त होते हुए भी जब वे तन्तु परस्पर में मिलकर आविर्भूतपटभावापन्न हो जाते हैं, तब वे प्रावरणरूप क्रिया को भी सम्पन्न करते हैं। अतः वहाँ अर्थक्रियाव्यवस्थाभेद है ही नहीं, जिससे कारण तथा कार्य मे भेद हो सके।

( १९ ) नैयायिक सांख्यमत में फिर दोषोद्भावन करता है—'स्यादेतत्' इससे। यहाँ यह प्रश्न उपस्थित होता है कि सांख्य ने कहा—आविर्भूतपटभावापन्न तन्तु ही प्रावरणरूप कार्य को करते हैं—'एवं मिलितास्तन्तव आविर्भूतपटभावाः प्रावरिष्यन्ति' इति। अर्थात् तुरी, वेमा आदि कारणों के व्यापार से तन्तुओं के अन्दर विद्यमान=सत् पट का जो आविर्भाव होता है, वह आविर्भाव पट के कारणव्यापार से पूर्व सत् है अथवा असत् ? यदि असत् है, तब तो असत् की उत्पत्ति होती है—न्याय के इस सिद्धान्त को आपने=सांख्य ने स्वीकार कर लिया। और यदि वह आविर्भाव सत्=

न्तरकल्पनेऽनवस्थाप्रसङ्गः। तस्मादाविर्भूतपटभावास्तन्तवः क्रियन्ते इति रिक्तं वचः।

( २० ) मैवम्। अथाऽसदुत्पद्यत इति मते केयमसदुत्पत्तिः ? सती, असती वा ? सती चेत्, कृतं तर्हि कारणैः। असती चेत्, तस्या अप्युत्पत्त्यन्तरमित्यनवस्था।

अथ—उत्पत्तिः पटान्नाऽर्थान्तरम्, अपि तु पट एवाऽसौ, तथाऽपि यावदुक्तं भवति 'पटः' इति, तावदुक्तं भवति 'उत्पद्यते' इति। ततश्च 'पटः' इत्युक्ते

---

अतस्तदभिव्यक्त्यर्थमेव द्वितीय आविर्भाव आवश्यकः, स च कारणव्यापारेणैव जायतेऽत आविर्भावस्याऽऽविर्भावाय कारणव्यापारः सर्वथा सप्रयोजनः, एवञ्च सति अनवस्थादोषः प्रसज्येत, इत्यत आह—**आविर्भावे चेति**। न च बीजाङ्कुरवत् अस्या अप्यनवस्थायाः प्रामाणिकत्वमाशङ्कनीयम्, असत्कार्यस्वीकारेण व्यवस्थायां सत्यामनवस्थादोषग्रस्तस्य सत्कार्यवादस्य सर्वथा स्वीकर्तुमशक्यत्वात् इति नैयायिकाशयः। नैयायिकोक्तमुपसंहरति—**तस्मादिति**। क्रियन्ते=कारणव्यापारेणोत्पाद्यन्ते। रिक्तं वचः=अप्रामाणिकं वचः। अतोऽसत्कार्यवाद एव स्वीकार्यः।

( २० ) नैयायिकोक्तं दूषयति सांख्यसिद्धान्ती—**मैवमिति**। सांख्यः कथयति—नैयायिकनयेऽपि उत्पत्तिः सती असती वेति। सती चेत्तदा तत्रापि कारणव्यापारो व्यर्थः। यदि चासती तदा पूर्ववदेवाऽनवस्थाप्रसङ्गः, तथाहि—असत्युत्पत्तेरुत्पत्त्यन्तरमपि पूर्वमसदेवेति स्वीक्रियतामिति तस्याऽप्ययन्दुत्पत्त्यन्तरं वाच्यं, तस्याप्युत्पत्त्यन्तरस्याऽसद्रूपतया तादृशमुत्पत्त्यन्तरमपि सत्कर्तुमन्यदेवोत्पत्त्यन्तरं वक्तव्यमित्येवंक्रमेण तस्याप्यन्यदित्यश्वाऽनवस्थाप्रसङ्गः स्यादत्रापि पक्षे। भवता नैयायिकेन एतद्दोषनिराकरणाय यदुत्तरं क्रियते तदेव ममापीति विभाव्यताम्।

---

विद्यमान है तब कारणव्यापार ही व्यर्थ है। क्योंकि कार्य के विद्यमान रहते हुए कारणव्यापार का कोई प्रयोजन ही हम नहीं देखते हैं।

यदि यह कहा जाय कि आविर्भाव भी पहिले अनभिव्यक्त=अप्रकट ही है, कारणव्यापार से उसकी अभिव्यक्ति होती है। अतः आविर्भाव के आविर्भाव के लिए कारणव्यापार सप्रयोजन है। इस प्रकार फिर वह आविर्भाव भी पूर्व में अनभिव्यक्त ही होगा, उसके आविर्भाव के लिए भी कारणव्यापार नितान्त आवश्यक है। इस प्रकार अनवस्थितरूप से इस आविर्भावप्रवाह के चलते रहने से अनवस्था दोष आ जायेगा। इसलिए 'आविर्भूतपटभावास्तन्तवः क्रियन्ते' यह कथन सर्वथा अप्रामाणिक है। अर्थात् तन्तुओं से आविर्भूत हुए पट ही तन्तु हैं, यह सांख्यकथन सर्वथा अप्रामाणिक है।

( २० ) खण्डन—'मैवम्'। सांख्य कहता है 'अथाऽसदुत्पद्यते' अर्थात् असत् कार्य की उत्पत्ति होती है, इस मत में यह असत् की उत्पत्ति सत् है या असत् है ? यदि सत् है अर्थात् कारणसामग्री के पूर्व ही घटादि कार्य की उत्पत्ति हो चुकी है, तब दण्ड, चक्र आदि कारणसामग्री व्यर्थ है।

'उत्पद्यते' इति न वाच्यम्, पौनरुक्त्यात्। 'विनश्यति' इत्यपि न वाच्यम्, उत्पत्तिविनाशयोर्युगपदेकत्र विरोधात्।

तस्मादियं पटोत्पत्तिः स्वकारणसमवायो वा, स्वसत्तासमवायो वा ? उभ-

---

नैयायिकः शङ्कते उत्पत्तिर्हि आद्यक्षणसम्बन्धः, स च स्वरूपसम्बन्धविशेषः न तु संयोगः, गुणक्रियादीनां तदस्वीकारात्, स च स्वरूपसम्बन्धविशेषोऽनुयोगिरूपः, अनुयोगी च प्रकृते पटः, पटस्य च कारणसामग्रीव्यापारात् पूर्वमनुत्पन्नत्वात् तदभिन्नाया उत्पत्तेरपि तथात्वं बोध्यम्, तथा चाऽनुत्पन्नपटाऽभिन्नोत्पत्त्यर्थं कारणव्यापारोऽपेक्ष्यते इत्याशयेनाह—**अथोत्पत्तिरपीति**। नार्थान्तरम् = न भिन्ना, किन्तु पटस्वरूपा। सिद्धान्ती दूषयति—**तथापीति**। एवं सतीत्यर्थः, पटोत्पत्त्योः समानार्थकतयेति भावः। अर्थाद् योऽर्थः पटशब्देन कथ्यते स एव उत्पत्तिशब्देनापि, एवञ्च पटोत्पत्त्योरनर्थान्तरत्वाऽभ्युपगमे तयोः पर्यायत्वापत्तिः स्यात्, इत्याशयेनाह—**तथापि यावदुक्तमिति**। इत्थञ्च 'पट' इत्युक्ते 'उत्पद्यते' इति स्वयमेवोक्तं भवति, एवम् 'उत्पद्यते' इत्युक्ते 'पट' इति च स्वयमेवोक्तं भवति, एवं सति 'पट उत्पद्यते' 'पटो जायते' इति वक्तव्यं, न्यायमतेन पुनरुक्तदोषापत्तेः। तथा च सति 'घटो घट' इतिवत् 'पट उत्पद्यते' 'घट उत्पद्यते' इत्यादिस्थलेष्वपि शाब्दबोधो न स्यात् इति तु परमार्थः।

एवं पटादिपदस्य उत्पत्त्यर्थकत्वे दूषणान्तरमप्याह—**विनश्यतीति**। 'पटो विनश्यति' इत्यपि न वाक्यम्, अयोग्यत्वात्। अयोग्यत्वे हेतुमाह—**उत्पत्तिविनाशयोरिति**। एकत्र = एकस्मिन्नधिकरणे। युगपत् = एकस्मिन् काले। विरोधात् = सहानवस्थानात्।

एवञ्चोत्पत्तिः पटादिरूपानुयोगिभिन्नैव वाच्या नैयायिकेन इत्यत आह—**तस्मा-**

---

और यदि उत्पत्ति असत् है तो जैसे घट, पट आदि कार्य को सत् सिद्ध करने के लिए उनकी उत्पत्ति मानते हैं, उत्पत्ति के बाद उनकी सद्रूपता निर्विवाद है। उसी प्रकार उत्पत्ति को सत् सिद्ध करने के लिए उत्पत्ति की भी उत्पत्ति मानो, फिर दूसरी उत्पत्ति को सत् सिद्ध करने के लिए दूसरी उत्पत्ति की भी उत्पत्ति अर्थात् तीसरी उत्पत्ति मानो, इस प्रकार अनवस्था हो जायेगी। नैयायिक का कथन है कि उत्पत्ति उत्पन्न होने वाले घट-पटादि कार्य से भिन्न नहीं है, बल्कि घट-पट आदि स्वरूप ही है। सांख्य कहता है कि घट-पट आदि कार्य और उनकी उत्पत्ति दोनों को यदि एक मानते हैं तो घट-पट आदि कार्य का जो अर्थ है वही 'उत्पद्यते' का भी अर्थ हुआ, तब तो घट-पट आदि के कहने से 'उत्पद्यते' आ ही गया, फिर 'घट उत्पद्यते' 'पट उत्पद्यते' यह कहने की क्या आवश्यकता है ? फिर ऐसा कहने पर पौनरुक्त्य दोष और आ जाता है।

विनश्यति='घटो विनश्यति,' 'पटो विनश्यति' यह भी नहीं कहना चाहिए, कारण कि घट-पट से तो उत्पत्ति रूप अर्थ आ गया और 'विनश्यति' से 'विनाश' रूप अर्थ आ गया, ऐसी परिस्थिति में उत्पत्ति और विनाश ये दोनों विरुद्ध अर्थ एक काल में तथा एक स्थान में कैसे रहेंगे, आपस मे एक-दूसरे का विरोध होने से ? इसलिए

यथाऽपि नोत्पद्यते, अथ च तदर्थानि कारणानि व्यापार्यन्ते एवं सत एव पटादेआवर्भावाय कारणापेक्षेत्युपेपन्नम् ।

---

दियमिति । यतः पूर्वोक्तासम्भवस्तस्मादित्यर्थः । 'सा पटोत्पत्तिः' स्वकारणसमवाय इति । स्वं पटस्तस्य कारणेपु तन्तुपु यः समवायः=समवायनामकः सम्बन्धस्तत्स्वरूपेत्यर्थः । वा=अथवा । एतादृशसमवायात्मिकाया उत्पत्तेस्तन्तुष्वपि सत्त्वेनाऽतिव्याप्तेरतस्तन्निराकरणाय आह—**स्वसत्तासमवायो वेति**। स्वस्मिन् पटे यः सत्तायाः समवायस्तत्स्वरूपेत्यर्थः । एतच्च—उभयथापि=प्रकारद्वयेऽपि । नोत्पद्यते, उत्पतिरिति शेषः । अर्थात् उत्पत्तिर्नोत्पद्यते, समवायस्य नित्यत्वेन समवायरूपाया उत्पत्तेरपि नित्यत्वात् ( प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वात् ) उत्पत्तित उत्पत्तेर्भवितुमशक्यत्वात् । कारणव्यापारस्तूभयत्रापि कल्पेऽपेक्ष्यते इत्याह—**अथ चेति** । अथ च=यथा च । तदर्थानि=उत्पत्तिप्रयोजनकीभूतानि । कारणानि=तुरीवेमादीनि । व्यापार्यन्ते=स्वीयव्यापारसमन्वितानि क्रियन्ते । भवद्भिर्नैयायिकैरिति शेषः । एवं=तथा । सत एव पटादेः=उत्पत्तेः प्राक् सिद्धस्यैव पटादेरित्यर्थः । आविर्भावाय=अभिव्यक्तिसम्पादनाय । मम सांख्यस्य मतेऽपि कारणव्यापारापेक्षाऽस्तीति । उपपन्नम्=सिद्धम् ।

---

नैयायिक को इस पटोत्पत्ति एवं घटोत्पत्ति को 'स्व-कारणसमवाय' अथवा 'स्वसत्तासमवाय' ही कहना होगा। अर्थात् स्वपद से प्रकृत में जैसे घट-पट आदि कार्य, उनका जो अपने-अपने कारण में समवाय, तत्स्वरूप ही उनकी उत्पत्ति है। अथवा घट-पटादिकार्य में जो उनकी सत्ताजाति का समवाय, तत्स्वरूप ही उत्पत्ति है, ऐसा मानना होगा।

'उभयथाऽपि नोत्पद्यते' अर्थात् उत्पत्ति को समवाय स्वरूप माने जाने वाले भी दोनों प्रकार ठीक नहीं हैं। कारण कि उत्पत्ति की समवायरूपता सर्वथा अनुपपन्न है। क्योंकि आपका=नैयायिक का समवाय जब नित्य है तो समवाय स्वरूप उत्पत्ति को भी नित्य ही मानना होगा, तब फिर उत्पत्ति की उत्पत्ति पूर्वोक्त प्रश्न ही समाप्त हो जाता है।

और दूसरी वात यह है कि समवाय नित्य होने के कारण सत् है और घट-पट आदि कार्य होने के कारण असत् हैं, तब फिर असत् घट-पट का अपने-अपने कारण में समवाय कैसे हो सकेगा? एवं घट-पटरूप कार्य में सत्ताजाति का समवाय भी कैसे हो पायेगा? क्योंकि सत् और असत् का सम्वन्ध सर्वथा असम्भव है, अतः कार्य को सत् ही मानना होगा।

'अथ च तदर्थानि' इति। सांख्य कहता है—हे नैयायिको! आप लोगों का जैसे यह कहना है कि कार्यार्थी के द्वारा घट-पटादि कार्योत्पत्ति रूप प्रयोजन के लिए दण्ड-चक्रादि तथा तुरी-वेमादि कारणव्यापार अपेक्षित होता है, वैसे ही हमारे यहाँ भी सत् जो पटादि हैं, उनके आविर्भाव के लिए कारणव्यापार अपेक्षित होता है, यह उपपन्न=सिद्ध हो गया।

न च पटरूपेण कारणानां सम्बन्धः, तद्रूपस्याऽक्रियात्वात् क्रियासम्बन्धित्वाच्च कारकाणाम् अन्यथा कारणत्वाभावात्। तस्मात् सत् कार्यमिति पुष्कलम् ॥ ९ ॥

( १ ) तदेवं प्रधानसाधनानुगुणं सत्कार्यमुपपाद्य यादृशं तत् प्रधानं साधनीयं तादृशमादर्शयितुं विवेकज्ञानोपयोगिनी व्यक्ताव्यक्तसारूप्ये तावदाह—

---

पटस्य स्वरूपं यत् तदीयविशालपरिणामादिकं तदर्थं कारणव्यापारोऽपेक्ष्यते इति नैयायिकः समुत्तरयति चेत्तत्राह—**न च पटरूपेणेति**। पटस्य रूपं=स्वरूपं यद् विशालपरिणामादिकं, तेन सह कारणानां नास्ति जन्यजनकभावरूपः सम्बन्धः, इत्यतोऽसम्बद्धस्य कृते नास्ति कारणव्यापारापेक्षा। शङ्कते—पटरूपेण कथन्नास्ति कारणानां सम्बन्धः ? इति जिज्ञासायामाह—**तद्रूपस्याऽक्रियात्वादिति**। तद्रूपस्य=पटरूपस्य=परिणामादेः, गुणत्वेन, अक्रियात्वात्=क्रियानात्मकत्वात्=क्रियारहितत्वात्। न जायतां पटरूपं क्रियात्मकम्, तावतापि तेन सह कथन्नास्ति कारणानां सम्बन्धः ? इत्याशङ्कायामाह—**क्रियासम्बन्धित्वाच्चेति**। कारणानाम्=तुरीवेमादीनाम्, क्रियया=स्वकार्यपटेन सार्धमेव, सम्बन्धित्वात्=जन्यजनकभावसम्बन्धवत्त्वादित्यर्थः। विपक्षे बाधकमाह—**अन्यथा कारणत्वाभावादिति**। अन्यथा=क्रियासम्बन्धित्वं कारकाणामिति नियमाऽस्वीकारे। **कारणत्वाभावादिति**। उपसंहरति—**तस्मात् सत्कार्यमिति**। तस्मात्=सत्कार्यवादस्य सर्वथा निर्दुष्टत्वात्। सत्कार्यम्=कारणव्यापारात् पूर्वमपि कार्यं सदेव। इति पुष्कलम्=इति दृढीकृतम्। अस्ति ॥ ९ ॥

( १ ) पूर्वमष्टमकारिकायां 'महदादि तच्च कार्यं प्रकृतिसरूपं विरूपञ्च' इत्युक्तं

---

प्रश्न—नैयायिक कहता है कि तादृशसमवायात्मक उत्पत्ति के नित्य होने के कारण वहाँ कारणव्यापार की आवश्यकता न हो, किन्तु फिर भी घट-पट आदि कार्य के बृहत् परिमाण आदि स्वरूप के लिए तो कारणव्यापार नितान्त अपेक्षित है।

उत्तर—सांख्य कहता है—**'न च पटरूपेणे'ति**। अर्थात् घट-पट आदि कार्यों का जो अपना-अपना बृहत् परिमाण या स्वल्प परिमाण आदि स्वरूप है, उस स्वरूप के साथ घट-पटादि के कारणों का कार्य-कारणभाव सम्बन्ध ही नहीं है। अतः घट-पटादि के परिमाण आदि स्वरूप के लिए भी कारणव्यापार सर्वथा व्यर्थ है।

प्रश्न—नैयायिक पूछता है कि पटादि के कारणों का पटादि के स्वरूप के साथ सम्बन्ध क्यों नही है ?

उत्तर—'तद्रूपस्ये'ति। अर्थात् पट का जो परिमाण आदि स्वरूप है, वह गुण है क्रिया नहीं और करणरूप कारकविशेष कारण का कारणत्व क्रिया से सम्बन्धित होने के नाते ही उपपन्न होता है। 'क्रियासम्बन्धित्वं कारकत्वम्' यह वैयाकरणों का सिद्धान्त है। अतः जहाँ क्रियासम्बन्धित्व नहीं वहाँ कारकत्व-विशेष कारणत्व भी नहीं। इस कारण से उत्पत्ति के पूर्व भी कार्य को सत् ही मानना होगा ॥ ९ ॥

( १ ) अब हम प्रधान की अनुमिति अनुगुण सत्कार्य को अनुमान द्वारा सिद्ध

**हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् ।**
**सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम् ॥ १० ॥**

( २ ) 'हेतुमत्' इति । व्यक्तं हेतुमत्, हेतुः कारणम्, तद्वत्, यस्य च यो हेतुस्तमुपरिष्टाद्वक्ष्यति ( द्र० २२ का० ) । 'अनित्यम्' विनाशि तिरोभावीति यावत् । 'अव्यापि' सर्वं परिणामिनं न व्याप्नोति । कारणेन हि कार्यमाविष्टम्, न कार्येण कारणम् । न च बुद्ध्यादयः प्रधानं वेविषतीत्यव्यापकाः ।

---

तदिदानीं साधर्म्य-वैधर्म्ये विवेचयितुं दशमकारिकाया अवतरणमाह—**तदेवमिति** । तदेवम् = नवमकारिकोक्तदिशा । प्रधानसाधनानुगुणम्—प्रधानस्य = प्रकृतेः, साधनस्य = अनुमितिरूपसिद्धेः, अनुगुणम् = परम्परया कारणम् । यादृशम् = पुरुषमहदादिभिन्नम् । आदर्शयितुम् = अनुमापयितुम् । विवेकज्ञानोपयोगिनी = प्रकृतिः स्वेतरभिन्ना, इत्याकारकस्वेतरभेदानुमितिप्रयोजके ।

**अन्वयः**—व्यक्तम्, हेतुमत्, अनित्यम्, अव्यापि, सक्रियम्, अनेकम् । आश्रितम्, लिङ्गम्, सावयवम्, परतन्त्रम् ( भवति ), अव्यक्तं विपरीतम् ॥ १० ॥

( २ ) आह—**हेतुमदित्यादिना** । व्यक्तम् = प्रकृतिपुरुषभिन्नं महदादिपृथिवीपर्यन्तं त्रयोविंशतितत्त्वम् । हेतुमत्, अनित्यम्, अव्यापि, सक्रियम्, अनेकम्, आश्रितम्, लिङ्गम्, सावयवम्, परतन्त्रं च वर्तते । अव्यक्तम् = प्रकृतिः । विपरीतम् = एतद्विरुद्धधर्मवत्त्वम्, अस्ति । **उपरिष्टाद्वक्ष्यतीति** । उपरिष्टात् = 'प्रकृतेर्महान्' इत्यादि २२ कारिकायाम् । अनित्यम् = विनाशि, विनाशस्य ध्वंसरूपतया सांख्यनये तदनङ्गीकारादाह—**तिरोभावीति** । सर्वं न व्याप्नोतीति अव्यापि = अव्यापकम् । असर्वगतमित्यर्थः । व्यक्तपदार्थानामव्यापित्वे हेतुमाह—**कारणेनेति** । कारणेन = तन्मात्रादिरूपकारणेन । कार्यम् ।

---

कर जिस प्रकार प्रधान की सिद्धि करनी है, उस प्रकार उसे दिखलाने के लिए सर्वप्रथम विवेकज्ञानोपयोगी व्यक्त और अव्यक्त के साधर्म्य तथा वैधर्म्य को बतलाते हैं—'हेतुमदनित्यम्' इत्यादि कारिका से ।

**कारिकार्थ**—व्यक्त ( महदादि ) हेतुमान्, अनित्य, अव्यापी, सक्रिय, अनेकाश्रित, लिङ्ग (ज्ञापक) तथा सावयव और परतन्त्र हैं । ठीक इसके विपरीत अव्यक्त (प्रधान) अहेतुमान्, नित्य, व्यापी, निष्क्रिय, एक, अनाश्रित, अलिङ्ग, निरवयव तथा स्वतन्त्र है ।

( २ ) व्यक्त = चराचर विश्व हेतु = कारण वाला है । जिसका जो हेतु है, उसे ऊपर = आगे 'प्रकृतेर्महान्' इस २२वीं कारिका में कहेंगे । एवं व्यक्त, अनित्य = विनाशी = तिरोभावी है तथा अव्यापी है अर्थात् व्यक्त सम्पूर्ण परिणामशाली जडवर्ग को व्याप्त नहीं कर पाता है, क्योंकि कारण से कार्य आविष्ट = व्याप्त होता है न कि कार्य से कारण; इसलिए बुद्धि आदि कार्य अपने कारण प्रधान = प्रकृति को व्याप्त नहीं कर सकने के कारण अव्यापक कहे गये हैं ।

( ३ ) 'सक्रियम्' परिस्पन्दवत् । तथा हि बुद्ध्यादयः उपात्तमुपात्तं देहं त्यजन्ति, देहान्तरं चोपाददते, इति तेषां परिस्पन्दः । शरीरपृथिव्यादीनां च परिस्पन्दः प्रसिद्ध एव ।

( ४ ) 'अनेकम्' प्रतिपुरुषं बुद्ध्यादीनां भेदात् । पृथिव्याद्यपि शरीरघटादिभेदेनाऽनेकमेव ।

( ५ ) 'आश्रितम्' स्वकारणमाश्रितम् । बुद्ध्यादिकार्याणामभेदेऽपि कथञ्चिद् भेदविवक्षयाऽऽश्रयाश्रयिभावः, यथा 'इह वने तिलकाः' इत्युक्तम् ।

---

आविष्टम्=व्याप्तं, भवतीति शेषः । वेविषन्ति=व्याप्नुवन्ति । बुद्ध्यादिकारणं स्वस्वकार्यं व्याप्नुवदपि प्रधानं स्वकारणं न व्याप्नोति इति तु परमार्थः ।

( ३ ) सक्रियम्=परिस्पन्दवत्, परिस्पन्दः=प्रवेशनिःसरणरूपा क्रिया तद्वदित्यर्थः । तदेव सुस्पष्टयति—तथाहीति । उपात्तमुपात्तम्=गृहीतं गृहीतम् । देहम्=स्थूलशरीरम् । देहान्तरम्=अन्यदेहम् । उपाददते=गृह्णन्ति ।

( ४ ) अनेकम्=भिन्नम् । तदेव सुस्पष्टयति—**प्रतिपुरुषमित्यादिना** । पुरुषं पुरुषं प्रति बुद्ध्यादीनां भिन्नत्वादनेकत्वं स्पष्टमेव ।

( ५ ) **आश्रितमिति** । स्वकारणप्रधानाश्रितं बुद्ध्यादि, प्रधानाश्रिता बुद्धिः, बुद्धिमाश्रितोऽहङ्कारः, अहङ्काराश्रितानि इन्द्रियाणि पञ्चतन्मात्राणि च, पञ्चतन्मात्राश्रितानि पञ्च महाभूतानि, इत्थं सर्वमपि बुद्ध्यादि व्यक्तं स्वस्वकारणमाश्रित्य वर्तते । सांख्यनये कार्यकारणयोरभेदात् कः कस्याश्रयः, कश्चाश्रित इति जिज्ञासायामाह—**कार्याणामभेदेऽपीति** । कार्याणां स्वस्वकारणेन सहाऽभेदेऽपि अर्थात् कारणव्यापारात् प्राक् अर्थात् कार्यस्य कारणात्मना स्थितिकालेऽभेदबुद्धिसत्त्वेऽपि कार्योत्पत्त्यनन्तरं भेदबुद्ध्या 'इदं कारणम् इदञ्च कार्यम्' इति व्यवहारभेदमादायाऽऽश्रयाश्रयिभावो बोध्य इति हृदयम् । अत्र पूर्वोक्तं दृष्टान्तं स्मारयति—**यथा इहेति** । तिलकनामकवृक्षसमुदायस्यैव वनत्वेन तिलकाख्यवृक्ष-वनयोरभेदेऽपि 'इह वने एतावन्तः सन्ति तिलकवृक्षाः' इति भेदव्यवहारमादाय यथा आश्रयाश्रयिभावो भवति तथैव प्रकृतेऽपि बोध्यः ।

---

( ३ ) व्यक्त सक्रिय=परिस्पन्द=प्रवेश-निःसरणादि रूप क्रियाशील है। अर्थात् बुद्धि आदि व्यक्त पदार्थ बारम्बार ग्रहण किये हुए शरीरों का परित्याग करते हैं और दूसरे-दूसरे शरीरों को धारण करते हैं, यही धारण और परित्याग परिस्पन्द है। और शरीर तथा पृथिवी आदि का चलना-फिरना आदि क्रिया तो प्रत्यक्ष सिद्ध ही है।

( ४ ) 'अनेकम्'—व्यक्त अनेक हैं, कारण कि प्रत्येक प्राणी के अन्दर बुद्धि आदि भिन्न-भिन्न हैं। पृथिवी आदि शरीर भी घटादि भेद से अनेक हैं।

( ५ ) 'आश्रितम्'—व्यक्त पदार्थ अपने-अपने कारण के आश्रित हैं। बुद्धि आदि कार्यभूत पदार्थों का अपने कारण से अभेद होने पर भी कार्यात्मना भेद-विवक्षा से आश्रयाश्रयीभाव होता है। जैसे तिलकवृक्षसमुदाय का नाम ही वन है, अतः अभेद होने पर भी वन को आश्रय और तिलकवृक्षों को आश्रित मानकर भेदविवक्षा से 'इह वने तिलकाः' यहां आश्रयाश्रयीभाव होता है, वैसे ही प्रकृत में भी जानना चाहिए।

( ६ ) 'लिङ्गम्' प्रधानस्य। यथा चैते बुद्धयादयः प्रधानस्य लिङ्गम्, तथोपरिष्टाद्वक्ष्यति। प्रधानं तु न प्रधानस्य लिङ्गं पुरुषस्य लिङ्गं भवदपीति भावः।

( ७ ) 'सावयवम्' अवयवनमवयवः, अवयवानामवयविनां मिथः संश्लेषो मिश्रणं संयोग इति यावत्। अप्राप्तिपूर्विका प्राप्तिः संयोगः। तेन सह वर्त्तत इति सावयवम्। तथा हि—पृथिव्यादयः परस्परं संयुज्यन्ते, एवमन्येऽपि, न तु प्रधानस्य बुद्धयादिभिः संयोगः, तादात्म्यात्। नाऽपि सत्त्वरजस्तमसां परस्परं संयोगः, अप्राप्तेरभावात्।

---

( ६ ) **लिङ्गमिति**। लिङ्गयति = ज्ञापयतीति लिङ्गम् = अनुमापकम् = अनुमितिकारणमित्यर्थः। कस्येत्याकाङ्क्षायामाह—**प्रधानस्येति**। प्रधानस्य = मूलप्रकृतेः, लिङ्गं भवति बुद्धयादिः। केन प्रकारेण बुद्धयादिः प्रधानस्य लिङ्गं भवतीति जिज्ञासायामाह—**यथा चैते इति**। **उपरिष्टादिति**। 'भेदानां परिमाणात्' इत्यादिकारिकाद्वये इत्यर्थः। तत्र 'महदादयः अव्यक्तकारणवन्तः परिमाणात् = परिमितत्वात्, घटादिवत्'। एवम् 'महदादयः अव्यक्तकारणवन्तः समन्वयात् घटादिवत्' इत्येवंरीत्या बुद्धयादयः प्रधानस्य लिङ्गं भवन्ति। 'बुद्धयादयः प्रधानस्य लिङ्गमिति कथनान्न प्रधानेऽतिव्याप्तिरित्याह—**प्रधानन्त्विति**। अर्थात् प्रधानं पुरुषस्य लिङ्गं भवेदपि किन्तु प्रधानं प्रधानस्य लिङ्गं न भवतीति न प्रधानेऽतिव्याप्तिः। पुरुषस्य लिङ्गं जायमानमपि प्रधानं स्वस्य प्रधानस्य लिङ्गं नैव भवितुमर्हतीति न लिङ्गसाधर्म्यस्य प्रधानेऽतिव्याप्तिः यतस्तस्य लिङ्गस्य व्यक्तस्यैव साधर्म्यं भवितुमर्हत्वादिति भावः।

( ७ ) **सावयवमिति**। इत्यस्यार्थमाह—**अवयवनमिति**। इत्यस्याप्यर्थमाह—**अवयव इति**। अवयवस्य पर्यायमाह—**मिथः संश्लेष इति**। संश्लेपपदार्थश्च—**मिश्रणमिति**। तदर्थश्च—**संयोग इति**। संयोगश्च—**अप्राप्तिपूर्विका प्राप्तिरिति**। एतदेव स्पष्टयति—**तथाहीति**। सर्वेऽपि पृथिव्यादिव्यक्तपदार्थाः पूर्वमप्राप्ता भवन्ति पश्चात् प्राप्ता इति। इत्येव

---

( ६ ) 'लिङ्गम्'—अर्थात् बुद्धि आदि व्यक्त पदार्थ प्रधान = प्रकृति के अनुमापक लिङ्ग हैं, यह ऊपर = आगे 'भेदानां परिमाणात्' इस १५-१६वीं कारिका से ईश्वरकृष्ण स्वयं कहेंगे। प्रधान प्रधान का अनुमापक लिङ्ग नहीं होता है, प्रधान पुरुष का अनुमापक लिङ्ग होता है।

( ७ ) 'सावयवम्'—अर्थात् व्यक्त पदार्थ सावयव = अवयववाला है। अवयव का अर्थ है—अवयवन; अवयवों तथा अवयवियों का जो परस्पर में सश्लेश है, वही मिश्रण है, वही संयोग है। पहिले से अप्राप्त दो वस्तुओं का जो प्राप्त हो जाना = मिल जाना वही तो संयोग है। इस प्रकार के संयोग के साथ रहने वाली वस्तु या व्यक्त पदार्थ सावयव कहलाता है। तथाहि—पृथिवी आदि व्यक्त पदार्थ परस्पर में संयुक्त होते हैं, अर्थात् संयोग को प्राप्त होते हैं। इसी प्रकार अन्य पदार्थ भी एक-दूसरे से संयुक्त होते हैं। किन्तु प्रधान = प्रकृति का बुद्धि आदि के साथ संयोग नहीं होता

( ८ ) 'परतन्त्रम्' बुद्ध्यादि। बुद्ध्या स्वकार्येऽहङ्कारे जनयितव्ये प्रकृत्यापूरोऽपेक्ष्यते, अन्यथा क्षीणा सती नाऽलमहङ्कारं जनयितुमिति स्थितिः। एवमहङ्कारादिभिरपि स्वकार्यजनने इति सर्वं स्वकार्येषु प्रकृत्याऽऽपूरमपेक्षते। तेन परां प्रकृतिमपेक्षमाणं कारणमपि स्वकार्यजनने परतन्त्रं व्यक्तम्।

( ९ ) 'विपरीतमव्यक्तम्' व्यक्तात्। अहेतुमत्, नित्यं, व्यापि, निष्क्रियम्; यद्यप्यव्यक्तस्याऽस्ति परिणामलक्षणा क्रिया, तथाऽपि परिस्पन्दो नाऽस्ति। एकम्, अनाश्रितम्, अलिङ्गम्, अनवयवम्, स्वतन्त्रम्, अव्यक्तम् ॥ १० ॥

---

गतिरन्येषां तन्मात्रादीनामपि। अप्राप्तिपूर्विकेत्यस्य फलमाह—**न तु प्रधानस्येति**। कथमित्याकाङ्क्षायामाह—**तादात्म्यादिति**। तादात्म्यस्थले न कदापि अप्राप्तिर्भवति। ननु गुणत्रयाणां सत्त्वरजस्तमसां परस्परं संयोगाश्रयत्वात् प्रधानेऽतिव्याप्तिः स्यादित्याशङ्कायामाह—**नापीति**। सत्त्वाद त्रियाणां गुणानां सर्वदैव प्राप्तत्वात् संयोगस्य प्रश्न एव नास्ति अप्राप्तेरभावादिति नातिव्याप्तिः।

( ८ ) **परतन्त्रमिति**। पराधीनमित्यर्थः। तदेव सुस्पष्टयति—**बुद्ध्या स्वकार्य इति**। बुद्धिः स्वकार्याऽहङ्कारोत्पादने प्रकृत्यापूरम्=प्रकृतिसाहाय्यम्, अपेक्षते। यथा वृक्षः फलोत्पादने पृथिवीसाहाय्यमपेक्षते, पृथिवी स्वांशप्रदानेन फलोत्पादनार्थं वृक्षाय साहाय्यं प्रयच्छति, तथैव प्रकृतिसाहाय्येन बुद्धिः स्वकार्यमहङ्कारमुत्पादयति। अन्यथा=प्रकृतिसहयोगाऽभावे। क्षीणा सती=अशक्ता सती, स्वकार्यमहङ्कारमपि जनयितुं, नाऽलम्=न समर्था स्यादित्यर्थः। फलितार्थमाह—**इति सर्वं स्वकार्येष्विति**। इति=यतः, सर्वं व्यक्तं स्वकार्यजनने प्रकृतिसाहाय्यमपेक्षते, तेन हेतुना सर्वमपि व्यक्तं कारणं परां प्रकृतिमपेक्षमाणं सत् परतन्त्रं भवतीत्यर्थः।

( ९ ) व्यक्तसाधर्म्यं कथयित्वा इदानीं व्यक्तवैधर्म्यं प्रकृतौ ब्रूते—**विपरीतमव्यक्तमिति**। कस्माद् विपरीतमिति जिज्ञासायामाह—**व्यक्तादिति**। अर्थाद् अव्यक्तम् अहे-

---

है, क्योंकि सांख्य के यहाँ कार्य और कारण मे तादात्म्य=अभेद है और सत्त्वगुण, रजोगुण, तमोगुण इनका भी अप्राप्ति का अभाव होने से परस्पर में संयोग नहीं है।

( ८ ) 'परतन्त्रम्'—बुद्धि आदि परतन्त्र हैं। क्योंकि बुद्धि को अपने कार्य अहङ्कार को उत्पन्न करने में अपने कारण प्रकृति का आपूर=साहाय्य=सहायता अपेक्षित है। अन्यथा=विना प्रकृति की सहायता के बुद्धि क्षीण=कमजोर होती हुई अहङ्कार को उत्पन्न नही कर सकती है, यह वस्तुस्थिति है। इसी प्रकार अहङ्कार आदि को भी तन्मात्रा, इन्द्रिय आदि अपने कार्य को उत्पन्न करने मे अपने कारण बुद्धि की सहायता अपेक्षित है। इस प्रकार सभी व्यक्त पदार्थ अपने-अपने कार्य को उत्पन्न करने में अपने-अपने कारण की अपेक्षा रखते हैं। अतः परा प्रकृति=मूल प्रकृति की अपेक्षा करने वाला कारण बुद्धितत्त्व अपने कार्य के जनन में परतन्त्र है।

( ९ ) 'विपरीतमव्यक्तम्'—अर्थात् अव्यक्त सर्वथा व्यक्त से विपरीत है, अर्थात् अव्यक्त अहेतुमत्=कारणरहित है। क्योंकि यही समस्त चराचर विश्व का मूलकारण

( १ ) तदनेन प्रवन्धेन व्यक्ताव्यक्तयोर्वैधर्म्यमुक्तम् । सम्प्रति तयोः साधर्म्यम्, पुरुषाच्च वैधर्म्यमाह—

**त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि ।**
**व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान् ॥ ११ ॥**

( २ ) 'त्रिगुणम्' इति । त्रयो गुणाः सुख-दुःखमोहा अस्येति त्रिगुणम् । तदनेन सुखादीनामात्मगुणत्वं पराभिमतमपाकृतम् ।

---

तुमद्, नित्यं, व्यापि, निष्क्रियं=प्रवेशनिःस्सरणादिक्रियाशून्यम् । एकम्=सजातीयभेदरहितम् । अनाश्रितं=क्वापि कारणे न वृत्तिमत्, स्वकारणरहितत्वात् । अलिङ्गम्=कारणाज्ञापकम् । अनवयवम्=असंयोगि । स्वतन्त्रम्=परान्पेक्षं सत् स्वकार्योत्पादने सामर्थ्यसम्पन्नमित्यर्थः ॥ १० ॥

( १ ) इदानीमेकादशीकारिकामवतारयति—**तदनेनेति** । तयोः=व्यक्ताव्यक्तयोः, मिथः साधर्म्यं, पुरुषाच्च तयोर्वैधर्म्यमाह—**त्रिगुणमित्यादिना** । एवञ्च व्यक्तसाधर्म्यं अव्यक्तस्याप्यस्तीति दर्शयति—त्रिगुणम्, अविवेकि, विषयः, सामान्यम्, अचेतनम्, प्रसवधर्मि, इति च व्यक्ताव्यक्तयोः साधर्म्यं विज्ञेयम् । पुरुषे तद्वैधर्म्यमाह—**तद्विपरीत** इत्यादिना । तथा च पुरुषस्त्रिगुणत्वादि विपरीतधर्मवानित्यर्थः ।

**अन्वयः**—व्यक्तं तथा प्रधानम्, त्रिगुणम्, अविवेकि, विषयः सामान्यम्, अचेतनं प्रसवधर्मि ( भवति ), तथा च पुमान् तद्विपरीतः ( भवति ) ।

( २ ) **त्रिगुणमिति** । 'त्रिगुणम्' इत्यत्र गुणपदार्थमाह—'सुखदुःखमोहाः' इति ।

---

है । इसलिए यह आविर्भाव एवं तिरोभाव से शून्य है और यह अव्यक्त नित्य है, व्यापक है, निष्क्रिय है ।

यद्यपि अव्यक्त=प्रधान=प्रकृति में भी परिणामलक्षणा क्रिया विद्यमान है । तथापि वहाँ परिस्पन्द=चलनात्मिका क्रिया नहीं है । इसी प्रकार अव्यक्त अनाश्रित है, अलिङ्ग=स्वकारणानुमापक भिन्न है, अनवयव=निरवयव है, स्वतन्त्र है ॥१०॥

( १ ) इस पूर्वोक्त कारिकात्मक प्रवन्ध के द्वारा व्यक्त और अव्यक्त का वैधर्म्य ( विरुद्धधर्म ) वतलाया जा चुका है । अव व्यक्त और अव्यक्त का साधर्म्य ( समानधर्म ) तथा पुरुष से इन दोनों का वैधर्म्य वतलाते हैं—'त्रिगुणमविवेकि' से ।

कारिकार्थ—व्यक्त और अव्यक्त ये दोनों त्रिगुण हैं । ( सत्त्व, रज एवं तमोगुण युक्त ) अविवेकी, ( अभिन्न ) विषय ( भोग्य ) और सामान्य, अचेतन, प्रसवधर्मी ( परिणामशील ) हैं । किन्तु पुरुष इनसे विपरीत, निर्गुण, विवेकी, अविषय, असाधारण, चेतन एवं अप्रसवधर्मी हैं । साथ ही साथ पूर्वोक्त कारिका में जो 'हेतुमदनित्यम्' इत्यादि कहा है इसके विपरीत जैसे प्रधान हैं, वैसे ही पुरुष भी अहेतुमान् इत्यादि है ।

( २ ) 'त्रिगुणम्' इति । सुख-दुःख-मोह—ये तीनों गुण जिसमें रहें, वह त्रिगुण

( ३ ) 'अविवेकि' इति। यथा प्रधानं न स्वतो विविच्यते, एवं महदादयोऽपि न प्रधानाद् विविच्यन्ते, तदात्मकत्वात्। अथ वा सम्भूयकारिताऽत्राविवेकिता। न हि किञ्चिदेकं पर्याप्तं स्वकार्ये, अपि तु सम्भूय। तत्र नैकस्मात् यस्य कस्यचित् केनचित्सम्भव इति।

---

न्यायमतं निराकर्तुमाह—**तदनेनेति**। अनेन = सुखादीनाम् आत्मभिन्नव्यक्ताव्यक्तधर्मत्वकथनेन। पराभिमतम् = नैयायिकाभिमतम्। सुखादीनाम्, आत्मगुणत्वम् = जीवात्मगुणत्वम्। अपाकृतम् = खण्डितम्। 'अहमेव गुणातीतः' 'साक्षी चेता केवलो निर्गुणश्च' इत्यादिश्रुतिविरोधान्न सुखादीनामात्मगुणत्वं मन्तव्यमिति भावः।

( ३ ) **अविवेकीति**। विवेकः = भेदज्ञानं, स न विद्यते यस्य तद् अविवेकि = स्वकारणप्रधानाभिन्नमित्यर्थः। तदेवोपपादयति—**यथा प्रधानमिति**। स्वतः = स्वस्माद् = प्रधानात्। न विविच्यते = न विद्यते, स्वस्मिन् स्वभेदस्य स्थातुमशक्यत्वात्। विविच्यन्ते = भिद्यन्ते। तदात्मकत्वात् = प्रधानात्मकत्वात्, प्रधानाभिन्नत्वादित्यर्थः। सांख्यनये कार्यकारणयोस्तादात्म्यात् महदादीनां प्रधानात्मकत्वं सुस्पष्टमेवेति बोध्यम्।

ननु यथा प्रधानं स्वस्मान्न भिद्यते एवं पुरुषोऽपि पुरुषान्न भिद्यते इति व्यक्ताव्यक्तसाधर्म्यस्याऽविवेकित्वस्य पुरुषेऽतिव्याप्तिरित्यस्वरसात् अविवेकित्वस्यार्थान्तरमाह—**अथवेति**। सम्भूयकारिता = परस्परं मिलित्वा कार्यकर्तृत्वशालिता। तदेव स्पष्टयति—**नहि किञ्चिदेकमिति**। हि = यतः। किञ्चित् = किमपि बुद्ध्यादिकम्। एकम् = अन्यसाहाय्यनिरपेक्षं सत्। स्वकार्ये = स्वकार्यजनने। न। पर्याप्तम् = समर्थम्। अपि तु सम्भूय = स्वकारणप्रकृतिसाहाय्यं प्राप्यैव। फलितार्थमाह—**तत्रेति**। तत्र = एवं सति, प्रागुक्तनियमानुसरणे सतीत्यर्थः। केनचित् = केनापि प्रकारेण। एकस्मात् = सहायकनिरपेक्षात् कस्मादपि कारणात्। न। कस्यचित् = कस्यापि कार्यस्य। सम्भवः = उत्पत्तिरस्तीत्यर्थः। प्रादुर्भाव इति यावत्।

---

है, जैसे—व्यक्त और अव्यक्त। इस कथन से नैयायिको को जो यह अभिमत है कि सुख-दुःख आदि आत्मा के गुण है वह खण्डित हो गया।

( ३ ) 'अविवेकि' पृथक् होना रूप विवेक जिनमें नही है, वे दोनों अविवेकी कहलाते हैं, जैसे प्रधान = अव्यक्त; यह न तो अपने से ही पृथक् है, और न महत्तत्त्व = बुद्धितत्त्व आदि ही प्रधान से पृथक् = भिन्न है, क्योंकि सांख्य के यहाँ कार्य और कारण का अभेद होने से महदादि प्रधान = प्रकृति से अभिन्न हैं।

अथवा—आपस में मिलकर कार्य करना यह भी 'अविवेक' शब्द का अर्थ है। व्यक्त और अव्यक्त इन दोनों में से एक कोई भी अपने कार्य को करने में पर्याप्त = समर्थ नही है, बल्कि मिलकर ही समर्थ है। अतः व्यक्त और अव्यक्त इन दोनों तत्त्वों मे से कोई भी एक तत्त्व किसी भी कार्य की किसी भी प्रकार से उत्पत्ति नही कर सकता है।

( ४ ) ये त्वाहुः—विज्ञानमेव हर्षविषादमोहशब्दाद्यात्मकम्, न पुनरितोऽन्यस्तद्धर्मेति, तान् प्रत्याह—'विषय' इति। विषयो—ग्राह्यः, विज्ञानाद् बहिरिति यावत्।

( ५ ) अत एव 'सामान्यम्' 'साधारणम्' घटादिवदनेकैः पुरुषैर्गृहीत-

---

( ४ ) विषय इति पदं व्याख्यातुकामस्तस्यावतरणं पूर्वमाह—ये त्वाहुरिति। ये तु=विज्ञानवादिनो योगाचारास्तु ( बौद्धाः )। यथा जाग्रदवस्थायां बाह्यावलम्बनरहितमेव मरुमरीचिकादिविज्ञानं जायते, तथैव विज्ञानत्वाविशेषाद् घटपटादिविषयकं ज्ञानमपि बाह्यावलम्बनशून्यमेव सर्वथा भवति। घटपटादिकं सर्वमपि पदार्थजातं विज्ञानस्यैवाऽऽकारविशेषः, तस्यापि भावत्वादेव क्षणिकत्वम्। उक्तञ्च—

'बुद्धिस्वरूपमेकं हि वस्त्वस्ति परमार्थतः।
प्रतिभानस्य नानात्वान्न चैकत्वं विहन्यते॥'

इति योगाचारमतनिराकरणाय विषयग्रहणप्रयोजनं स्फुटयितुं तन्मतं दर्शयति—**विज्ञानमेवेति**। हर्षविषादमोहशब्दाद्याकाराम्—हर्षः=सुखम्, विषादः=दुःखम्, मोहः=अज्ञानम्=मूढता, तत्स्वरूपा ये शब्दादयस्ते एव आकारा यस्य तत्—हर्षविषादमोहशब्दाद्याकारं, तथाभूतं विज्ञानमेवेत्यर्थः। इतः=विज्ञानात्। अन्यः=बाह्यघटपटादिप्रपञ्चः। न पुनः=पुनर्नास्त्येव किमपि। विज्ञानमेव घटपटादि बाह्यप्रपञ्चाकारेण प्रतिभासते इति न विज्ञानाद् विषयो भिद्यते। तान् प्रत्याह—**विषय इति**। विसिनोति =विषयिणमनुबध्नातीति व्युत्पत्त्या विषयपदार्थमाह—**विषयः=ग्राह्य इति**। ज्ञानविषय इति च तदर्थः। अनुव्यवसायादिस्थले ज्ञानमपि ज्ञानविषय इति योगाचारमतखण्डनाय 'विषय'ग्रहणप्रयोजनं सर्वथाऽनावश्यकमेवेति 'भक्षितेऽपि लशुने न शान्तो व्याधिर'तस्तदर्थमाह—**विज्ञानाद् बहिरिति**।

( ५ ) अर्थस्य विज्ञानात्मकत्वेऽनुपपद्यमानं 'सामान्यम्' इति विशेषणान्तरमवतारयति—**अत एवेति**। यस्मात् कारणात् विज्ञानाद्भिन्नं घटादिकम् अत एव 'साधार-

---

( ४ ) और जो योगाचार बौद्ध यह कहते हैं कि विज्ञान ही हर्ष, विषाद, मोह =सुख-दुःख-मोहरूप शब्दादि का आकार विशेष है, विज्ञान से अतिरिक्त कोई भी धर्म या धर्मीरूप वस्तु नहीं है। उन विज्ञानवादी को लक्ष्य करके कहा—'विषयः' इति। अर्थात् ग्राह्य=ज्ञानविषय, ज्ञान का विषय। योगाचार के यहाँ तो ज्ञान भी ज्ञान का विषय होता है। इससे योगाचार का खण्डन तो नहीं हो पाया, इसके लिए 'ग्राह्य' का अर्थ किया 'विज्ञानाद् वहिः' अर्थात् घट-पटादि पदार्थ विज्ञानस्वरूप न होकर विज्ञान से भिन्न हैं। अर्थात् घट-पटादि ग्राह्य हैं और विज्ञान ग्राहक है। अतः ग्राह्यत्वेन और ग्राहकत्वेन में अलग-अलग प्रतीति होने से ग्राह्य और ग्राहक में भेद स्पष्ट है। इसीलिए व्यक्त, अव्यक्त को कहा—

( ५ ) **'सामान्यम्'** इति। अर्थात् व्यक्त, अव्यक्त सामान्य=साधारण हैं, सर्व साधारण हैं, घट-पटादि की तरह अनेक पुरुषों से गृहीत हैं। यदि इन्हें विज्ञानाकार

मित्यर्थः। विज्ञानाकारत्वे तु असाधारण्याद्विज्ञानानां वृत्तिरूपाणां तेऽप्यसाधारणाः स्युः। विज्ञानं यथा परेण न गृह्यते, परबुद्धेरप्रत्यक्षत्वादित्यभिप्रायः। तथा च नर्तकी भ्रूलताभङ्गे एकस्मिन् बहूनां प्रतिसन्धानं युक्तम्। अन्यथा तत्र स्यादिति भावः।

( ६ ) 'अचेतनम्' इति। सर्व एव प्रधानबुद्ध्यादयोऽचेतनाः, न तु वैनाशिकवत् चैतन्यं बुद्धेरित्यर्थः।

---

णम्' = पुरुषभेदेऽपि अभिन्नत्वेन सर्वपुरुषसाधारणम् अर्थात् सर्वपुरुषप्रत्यक्षविषयं भवतीत्यर्थः। तदेवोपपादयति—अनेकैरिति। एवञ्च एकस्यैवार्थस्याऽनेकपुरुषजन्यज्ञानविषयत्वेन सर्वपुरुषसाधारण्यं जायते, परन्तु तच्च विज्ञानवादे नोपपन्नं भवतीति भावः।

कथन्नोपपन्नं भवतीत्यत्राह—'**विज्ञानाकारत्वे त्वि**'ति। घट-पटादिविषयाणां विज्ञानस्वरूपताङ्गीकारे तु। तेऽपि = घट-पटादिरूपा अर्था अपि। असाधारणाः = प्रतिपुरुषं भिन्नाः, स्युर्न सर्वपुरुषसाधारणाः भविष्यन्ति। तत्र हेतुमाह—**असाधारण्याद् विज्ञानानाम् इति**। बुद्धिवृत्तिरूपाणां विज्ञानानां प्रतिपुरुषं भिन्नत्वादित्यर्थः। तदेव सुस्पष्टयति—**विज्ञानं यथेति**। विज्ञानम् = चैत्रीयं विज्ञानम्। परेण = मैत्रेण। परबुद्धेः = अन्यदीयविज्ञानस्य। अप्रत्यक्षत्वात् = अपरं प्रति प्रत्यक्षत्वायोगात्। तथैव विज्ञानाऽभिन्नोऽपि घट-पटादिरूपोऽर्थोऽन्येन नैव गृह्येतेति भावः। घटादिविषयाणां विज्ञानभिन्नत्वे प्रसिद्धं दृष्टान्तं दर्शयति—**तथा चेति**। तथा च = घट-पटादिविषयाणामनेकपुरुषजन्यज्ञानविषयत्वेन सर्वपुरुषसाधारण्ये स्वीक्रियमाणे च। एकस्मिन् अभिन्ने। नर्तकीभ्रूलताभङ्गे—नर्तक्याः भ्रूः एव लतास्तस्य भङ्गे = भ्रुकुटिकटाक्षविक्षेपरूपेऽभिनयविशेषे। बहूनाम् = द्रष्टॄणाम्। प्रतिसन्धानम् = दृष्टस्य पुनरनुसन्धानरूपं स्मरणकल्पं ज्ञानान्तरम्। युक्तम् = समुचितम्। अन्यथा = विज्ञानवद् असाधारण्ये तु। तत् = प्रतिसन्धानम्। न स्यादिति। न स्यात् = निराबाधं नोपपद्येत।

---

मानते है तब तो वृत्तिरूप विज्ञान जैसे सर्वसाधारण न होकर असाधारण होता है, वैसे ही घट-पटादि, तथा व्यक्त और अव्यक्त भी असाधारण हो जायेंगे। विज्ञान का जैसे दूसरे से ग्रहण नहीं होता है, अर्थात् परबुद्धि का = परकीय विज्ञान का प्रत्यक्ष नहीं होता है। जैसे चैत्र के विज्ञान का मैत्र को प्रत्यक्ष नही होता है, विज्ञान के विषय घट-पटादि का प्रत्यक्ष सभी को होता है। अतः घट-पटादि, व्यक्त तथा अव्यक्त को विज्ञानात्मक मान लेने पर ये सर्वसाधारण से ग्राह्य नहीं होना चाहिए, जब कि ये सब से ग्राह्य हैं। अतः घट-पटादि एवं व्यक्त-अव्यक्त विज्ञान से भिन्न हैं; इसमें अनुरूप दृष्टान्त है—'तथा च नर्तकीभ्रूलताभङ्गे' इति। अर्थात् नर्तकी के एक ही भ्रूभङ्ग हो जाने पर एक ही साथ अनेक पुरुषों का जो प्रतिसन्धान = विभिन्न दृष्टियों से देखना, वह तभी युक्त = संगत होता है, जब कि घट-पटादि तथा व्यक्त-अव्यक्त को सामान्य = साधारण माना जाय, विज्ञानरूप न माना जाय। अन्यथा = नर्तकीभ्रूलताभङ्ग को विज्ञान से अभिन्न मानने पर अनेकद्रष्टृपुरुषकर्तृक प्रतिसंधान निराबाध नही हो सकेगा।

( ७ ) 'प्रसवधर्मि' इति। प्रसवरूपो धर्मो यः सोऽस्याऽस्तीति प्रसवधर्मि। प्रसवधर्मेति वक्तव्ये मत्वर्थीयः प्रसवधर्मस्य नित्ययोगमाख्यातुम्। सरूपविरूपपरिणामाभ्यां न कदाचिदपि वियुज्यत इत्यर्थः।

( ८ ) व्यक्तवृत्तमव्यक्तेऽतिदिशति—'तथा प्रधानम्' इति। यथा व्यक्तं तथाऽव्यक्तमित्यर्थः।

( ९ ) ताभ्यां वैधर्म्यं पुरुषस्याऽऽह—'तद्विपरीतः पुमान्' इति।

---

( ६ ) अचेतनम् = चेतनाद् भिन्नम्, अनवभासकत्वादित्यर्थः। अचेतनाः = प्रधानबुद्ध्यादयस्तत्कार्यभूताश्च सर्वेऽपि विषया जडा इत्यर्थः। वैनाशिकवदिति। बौद्धवत्।

( ७ ) **प्रसवधर्मीति**। प्रसवः = कार्याविर्भावहेतुत्वरूपः धर्मपरिणामस्तद्वत्त्वं साधर्म्यम्। प्रसवश्चासौ धर्मश्चेति प्रसवधर्मः, सोऽस्यास्तीति प्रसवधर्मीति समासः, तदेवाह—**प्रसवरूपो धर्म इति**। मत्वर्थीयनिर्देशो व्यर्थ इत्यत आह—**नित्ययोगमिति**। प्रसवरूपस्य धर्मस्य प्रकृत्यादिधर्मिणा सह नित्यसम्बन्धं ज्ञापयितुं मत्वर्थीय इनि-प्रत्यय इति भावः।

नित्ययोगं सुस्पष्टयति—**सरूपविरूपेति**। अर्थात् त्रिगुणत्वमादाय महदादयः प्रकृतेः सरूपपरिणामभूताः सन्ति, हेतुमत्त्व-अनित्यत्वादिना च विरूपपरिणामभूता इति। सरूपविरूपौ च तौ परिणामौ च ताभ्यामिति समासः।

( ८ ) **व्यक्तवृत्तमिति**। व्यक्तेषु = महदादिषु, वृत्तं = कथितं, यत् साधर्म्यं त्रिगुणत्वादिरूपं, तत् अव्यक्ते = प्रधाने। अतिदिशति = निर्दिशति। **'तथा प्रधानम्' इति**।

( ९ ) इदानीं वैधर्म्यं दर्शयति—**ताभ्यामिति**। ताभ्यां = व्यक्ताव्यक्ताभ्याम्। तद्विपरीतः—ताभ्यां = व्यक्ताव्यक्ताभ्यां, विपरीतः = विलक्षणः। पुमान् = पुरुषः।

---

( ६ ) **'अचेतनम्' इति**। सभी प्रधान, बुद्धि आदि पदार्थ अचेतन = जड हैं। वैनाशिक = योगाचार बौद्ध के समान बुद्धि चेतन नहीं है।

( ७ ) **'प्रसवधर्मि' इति**। अर्थात् जिसमें कार्याविर्भावजनकत्वरूप धर्मपरिणाम विद्यमान रहे। यद्यपि 'प्रसवो धर्मो यस्य तत्' इस बहुव्रीहिसमासपक्ष में 'प्रसवधर्म' यही पद प्रयुक्त होना चाहिए था, न कि 'प्रसवधर्मि'। तथापि कारिकाकार ने इस शब्द को 'प्रसवश्चासौ धर्मश्चेति प्रसवधर्मः' इस कर्मधारयसमास के बाद मत्वर्थीय 'इनि' प्रत्यय से निष्पादित कर प्रयोग किया है; उसका आशय यह है कि 'प्रसव रूप धर्म की नित्यता प्रकट हो'। तात्पर्य यह है कि व्यक्त ( प्रधान ) सरूप (समान रूप) तथा विरूप ( असमान रूप ) परिणामों से कभी भी विमुक्त नहीं रहते।

( ८ ) **'व्यक्तवृत्तम्' इति**। ईश्वरकृष्ण 'तथा प्रधानम्' इससे व्यक्त के धर्मों का अव्यक्त में अतिदेश कर रहे हैं। अर्थात् जैसे व्यक्त पूर्वोक्त 'त्रिगुणत्व' 'अविवेकित्व' आदि धर्मों से युक्त है वैसे ही अव्यक्त भी।

( ९ ) व्यक्त और अव्यक्त इन दोनों से पुरुष का वैधर्म्य बतलाते हैं कि—'पुरुष व्यक्त तथा अव्यक्त के धर्मों के विपरीत धर्मवाला है'।

स्यादेतत्—अहेतुमत्त्वनित्यत्वादि प्रधानसाधर्म्यमस्ति पुरुषस्य, एवमनेकत्वं व्यक्तसाधर्म्यम्, तत्कथमुच्यते 'तद्विपरीतः पुमान्' इति ? अत आह—'तथा च' इति। चकारोऽप्यर्थः। यद्यप्यहेतुमत्त्वादिकं साधर्म्यम्, तथाऽप्यत्रैगुण्यादिवैपरीत्यमस्त्येवेत्यर्थः ॥ ११ ॥

( १ ) त्रिगुणमित्युक्तम्, तत्र के ते त्रयो गुणाः ? किं च तल्लक्षणम् ? इत्यत आह—

**प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः ।**
**अन्योऽन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः ॥ १२ ॥**

---

**अहेतुमत्त्वनित्यत्वादीति** । आदिपदेन अवशिष्टाः सर्वेऽपि धर्मा ग्राह्याः, तथाहि—अहेतुमत्त्वम्, नित्यत्वम्, व्यापकत्वम्, निष्क्रियत्वम्, अनाश्रितत्वम्, अलिङ्गत्वम्, निरवयवत्वम्, स्वतन्त्रत्वम्, इति यत् प्रधानस्य साधर्म्यमस्ति तदेव पुरुषस्यापि वर्तते, तथा 'अनेकत्वम्' इति च यद् व्यक्तसाधर्म्यमस्ति तदपि पुरुषस्यास्तीति व्यक्ताव्यक्तसाधर्म्यं यदस्ति पुरुषे तदनुक्त्वा कथमुक्तं 'तद्विपरीतः पुमानि'ति ? जिज्ञासानिराकरणायाह—**चकारोऽप्यर्थ इति** । 'तथा च' इत्यत्र 'च'शब्दोऽप्यर्थकः । इत्थञ्च 'तथा च' इत्यस्य 'तथापि' इत्यर्थः । तदेवाऽऽह—**यद्यपीत्यादिना** । अस्य=पुरुषस्य । **अस्त्येवेति** । इत्थञ्च 'तद्विपरीतः पुमान्' इत्युक्तं साधु सङ्गच्छते । नहि खलु व्यक्ताव्यक्तगतसकलधर्मवैपरीत्यं पुरुषस्यास्ति, येन 'तद्विपरीतः पुमान्' इति कथनमसङ्गतं स्यादिति भावः ।

( १ ) इदानीं द्वादशीं कारिकामवतारयति—**'त्रिगुणमित्युक्तम्'** इत्यादिना । **प्रीत्यप्रीतिविषादात्मका इति** । गुणाः=सत्त्वरजस्तमांसि, क्रमेण प्रीत्यप्रीतिविषादात्मका विज्ञेयाः । तत्र—सत्त्वम्=सत्त्वगुणः=प्रीतिः=सुखं=प्रसन्नता, तदात्मकम्=तत्स्वरूपम् । अत्र प्रीतिशब्देन आर्जव-श्रद्धा-अनुकम्पा-क्षमा-लज्जा-सन्तोष-विवेका-

---

प्रश्न—ठीक है; पुरुष विपरीतधर्मवाला है, परन्तु अहेतुमत्त्व, नित्यत्वादि प्रधान के धर्म पुरुष में हैं और 'अनेकत्व' यह व्यक्त का साधर्म्य पुरुष में है, फिर कैसे ईश्वरकृष्ण ने कहा कि पुरुष विपरीत धर्मवाला है—'तद्विपरीतः पुमान्' इति ?

उत्तर—'तथा च' यहाँ चकार 'अपि' अर्थ का बोधक है, अर्थात् यद्यपि पुरुष में 'अहेतुमत्त्व' आदि प्रधान साधर्म्य है। तथापि अत्रैगुण्यादि वैपरीत्य=वैधर्म्य भी तो है॥ ११ ॥

( १ ) 'त्रिगुणम्' इति। ११वीं कारिका में 'त्रिगुणम्' यह कहा है; किन्तु वे तीन गुण कौन-से हैं ? उनका लक्षण क्या है ? इसे बतलाने के लिए १२वीं कारिका को उठाते है—'प्रीत्यप्रीतिविषादात्मकाः' इति।

कारिकार्थ—सत्त्वगुण, रजोगुण, तमोगुण; इन तीनों गुणों के लक्षण हैं—प्रीत्यात्मकत्व=प्रीति ( सुख ) स्वरूपत्व, अप्रीत्यात्मकत्व=अप्रीति ( दुःख ) स्वरूपत्व, विषादात्मकत्व=विषाद ( मोह ) स्वरूपत्व। इनका क्रम से प्रयोजन इस प्रकार है—प्रकाश करना, प्रवृत्ति करना तथा स्थिति करना।

( २ ) 'गुणाः' इति परार्थाः। 'सत्त्वं लघु प्रकाशकम्' ( का० १३ ) इत्यत्र च सत्त्वादयः क्रमेण निर्देक्ष्यन्ते। तदनागतावेक्षणेन तन्त्रयुक्त्या वा प्रीत्यादीनां यथासङ्ख्यं वेदितव्यम्।

---

दीनां सङ्ग्रहः। रजः=रजोगुणः=अप्रीतिः=दुःखम्=अप्रसन्नता, तदात्मकम्। अप्रीतिशब्देन निन्दा-द्वेष-द्रोह-मद-मात्सर्य-लोभादीनामपि परिग्रहः। तमः=तमोगुणः=विपादो=मोहस्तदात्मकम्। अत्र विषादशब्देन विप्रलम्भ-कार्पण्य-कौटिल्य-भय-ईर्ष्या-नास्तिक्य-अज्ञानादीनामपि सङ्ग्रहो विधेयः। स्वरूपमुक्त्वा प्रयोजनमाह—**प्रकाशप्रवृत्तिनियमार्था इति**। तत्र प्रकाशविधानं सत्त्वगुणस्य प्रयोजनम्, प्रवृत्तिविधानं रजोगुणस्य प्रयोजनं, नियमनकरणं तमोगुणस्य प्रयोजनं, नियमनञ्च प्रकाशक्रिययोः सन्निरोधः, तयोः प्रतिरोध इति यावत्। तेषां वृत्तीराह—**अन्योऽन्याभिभवेति**। अन्योऽन्याभिभववृत्तयः, अन्योऽन्याश्रयवृत्तयः, अन्योऽन्यजननवृत्तयः, अन्योऽन्यमिथुनवृत्तयश्च भवन्ति।

अत्रेदमाशङ्क्यते—यदा प्रकाशप्रवृत्तिभ्यामेव समस्तं कार्यं सिद्ध्यति तदा काऽऽवश्यकता तमःकार्यस्य नियमनस्येत्यतस्तदावश्यकतां दर्शयति—**रजःप्रवर्तकत्वादिति**। प्रवर्तकस्वभाववत्त्वाद् रजोगुणः सर्वदैव सर्वत्र च सत्त्वगुणं चालयेत् अथवा प्रवर्तयेद् यदि गुरुणा तमसा न नियम्येत, अर्थात् सत्त्वगुणः रजोगुणद्वारा सर्वदैव प्रवृत्तिशीलो भवेद् यदि तमोगुणः सत्त्वगुणं न सन्निरुद्ध्यात्।

( २ ) 'अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः' इत्यादि द्वादश्यां कारिकायां ये गुणाः सन्ति ते के सन्ति ये च वाचस्पतिना परार्थाः समुद्घोषिताः? इत्यत्राह—'सत्त्वं लघु प्रकाशकमि'ति। त्रयोदशकारिकायां ये पृथक्-पृथक् सत्त्वादिगुणा निर्देक्ष्य-

---

तीनों गुणों के क्रमशः लक्षण हैं—प्रीत्यात्मकत्व, अप्रीत्यात्मकत्व, विषादात्मकत्व अर्थात् प्रीति ( सुख ) स्वरूपत्व, अप्रीति ( दुःख ) स्वरूपत्व, विपाद ( मोह ) स्वरूपत्व। इनके तीन ही अपने-अपने अलग-अलग प्रयोजन हैं—प्रकाश करना सत्त्वगुण का, प्रवृत्ति करना रजोगुण का और नियमन ( स्थिति ) करना यह तमोगुण का प्रयोजन है। तथा अन्योन्याभिभव, अन्योन्याश्रय, अन्योन्यजनन, अन्योन्यमिथुन—ये इनके चार वृत्ति ( व्यापार ) हैं। इनका अर्थस्फुटीकरण हिन्दी व्याख्या में देखें।

( २ ) 'गुणाः' इति। सत्त्वगुण, रजोगुण, तमोगुण—ये तीनों परार्थ हैं, अर्थात् पर=पुरुष के अर्थ=सुख-दुःख अन्यतरसाक्षात्काररूप भोगात्मक प्रयोजन के लिए हैं।

प्रश्न—'गुणाः परार्थाः' यह तो कह दिया, किन्तु वे गुण कौन हैं, उनका क्या नाम है, यह कुछ नहीं कहा?

उत्तर—'सत्त्वं लघु प्रकाशकम्' इस १३वीं कारिका में सत्त्व आदि गुणों का क्रमशः निर्देश करेंगे।

( ३ ) एतदुक्तं भवति—प्रीतिः-सुखम्, प्रीत्यात्मकः सत्त्वगुणः । अप्रीतिः-दुःखम्, अप्रीत्यात्मको रजोगुणः । विषादः-मोहः, विषादात्मकस्तमोगुण इत्यर्थः ।

( ४ ) ये तु मन्यन्ते 'न प्रीतिर्दुःखाभावादतिरिच्यते' एवं दुःखमपि न प्रीत्यभावादन्यदिति, तान् प्रति 'आत्म'ग्रहणम् । नेतरेतराभावः सुखादयः,

---

माणाः सन्ति त एवाऽत्र ग्राह्याः । ननु अग्रे निर्देक्ष्यमाणानां गुणानां कथमत्र भानं स्यादित्यत आह—तदनागतेति । तदनागतावेक्षणेनेत्यर्थः । तत् = उत्तरकारिकायां निर्देक्ष्यमाणं गुणत्रयम्, अनागतस्य = उत्तरत्र भाविनोऽपि पदार्थस्य, अवेक्षणेन = बुद्धया समाकृष्य स्मरणेन, अयमेव चाऽनागतावेक्षणन्यायोऽपि—उत्तरत्र भाविनोऽपि पदार्थस्य बुद्धया समाकृष्य स्मरणेनाऽनुसन्धानमिति । अथवा तन्त्रयुक्त्या=सांख्यशास्त्रदर्शितदिशा, अर्थाद् गुणशब्दः सांख्ये सत्त्वरजस्तमःस्वेव प्रयुज्यते इति निर्णीतदिशेत्यर्थः । प्रीत्यादीनां = सत्त्वादिलक्षणानाम्, प्रीत्यप्रीतिविषादात्मक इत्यादिस्वरूपाणामित्यर्थः । लक्ष्यमिति शेषः ।

( ३ ) 'प्रीत्यप्रीतिविषादात्मका' इति लक्षणनिर्वचनं सुस्पष्टयति—एतदुक्तं भवतीत्यादिना । प्रीत्यात्मकः सत्त्वगुणः, अप्रीत्यात्मको रजोगुणः, विषादात्मकस्तमोगुण इत्यादिस्थलेषु सर्वत्र 'आत्म'शब्दस्य सम्बन्धः कार्यः ।

( ४ ) 'आत्म'ग्रहणेन सुखदुःखयोः परस्पराभावरूपतावादिचार्वाकमतनिरासाय प्रथमतश्चार्वाकमतं दर्शयति— ये तु मन्यन्ते इति । ये तु=चार्वाकास्तु । अतिरिच्यते= भिन्ना भवति, प्रीतिरिति शेषः । भारादिवाहकस्य भाराद्यपगमे 'सुखी संवृत्तोऽहम्'

---

प्रश्न—जिन गुणों का १३वी कारिका में उल्लेख होना है, उन तीनों गुणों की प्रतीति यहाँ कैसे हो पायेगी ?

उत्तर—यहाँ हमने १२वीं कारिका में 'प्रीत्यप्रीतिविषादात्मकाः' यही तीनों सत्त्वादि गुणों का लक्षण बतला दिया है । इससे अध्ययनकर्ता लोग 'अनागतावेक्षण' न्याय अर्थात् अनागत = भावी पदार्थ के अवेक्षण के आधार पर अथवा 'तन्त्रयुक्ति' तन्त्र = सांख्यशास्त्र में उल्लिखित जो 'युक्ति' अर्थात् गुणशब्द का सत्त्व, रज, तम, इन तीनों में ही संकेत का निश्चय, उसके आधार पर उन तीनों गुणों के लक्ष्यस्वरूप सत्त्वादि गुणों को यथासंख्य = क्रम से अर्थात् प्रीति से सत्त्वगुण, अप्रीति से रजोगुण, इत्यादि रूप से 'वेदितव्यम्' अर्थात् स्वयं जान लेना चाहिए ।

( ३ ) 'एतदुक्तं भवति'—कौमुदीकार वाचस्पतिमिश्र उस यथासंख्य को ही स्पष्टीकरण की दृष्टि से कह रहे हैं कि सुख प्रीत्यात्मक है, वही सत्त्वगुण है । अप्रीति दुःखरूप है, वह अप्रीत्यात्मक होने के कारण रजोगुण है । विषाद मोह है, अतः तमोगुण विषादरूप = मोहरूप है ।

( ४ ) और चार्वाक जो यह मानते हैं कि प्रीति दुःखाभाव से अतिरिक्त नहीं है, अर्थात् दुःख का अभाव ही प्रीति है । ऐसे ही दुःख भी प्रीति के अभाव से अन्य =

अपि तु भावाः, आत्मशब्दस्य भाववचनत्वात् । प्रीतिरात्मा—भावो येषां ते प्रीत्यात्मानः । एवमन्यदपि व्याख्येयम् । भावरूपता चैषामनुभवसिद्धा । परस्पराभावात्मकत्वे तु परस्पराश्रयापत्तेरेकस्याऽप्यसिद्धेरुभयासिद्धिरिति भावः ।

---

इति प्रतीतेर्दुःखाभावविषयकतया दुःखाभाव एव सुखम्, तुल्यवित्तिवेद्यतया च सुखाभाव एव दुःखं न तु पृथक् पृथक् तौ पदार्थौ स्वीक्रियेते इति कथयतां चार्वाकाणां मतं निराकरणार्थमाह—**तान् प्रति आत्मग्रहणमिति** । आत्मपदोपादानम् इत्यर्थः ।

आत्मपदोपादानेन कथं तन्मतनिरासस्तथाह—**नेतरेतराभावा** इति । सुखादीनां परस्परं नाभावरूपत्वमपि तु भावरूपत्वमेव, तथा च सुखमपि पृथग् भावभूतः पदार्थः, एवमेव दुःखमपि भावभूतं पृथगेव पदार्थः । तत्र हेतुमाह—**आत्मशब्दस्येति** । 'भारापगमे' इत्यादिदृष्टान्तेन साधिता परस्पराभावरूपतापि न सङ्गच्छते, यतस्तत्र भारापगमे दुःखाभावे सुखरूपता औपचारिकी वर्तते न तु वास्तविकी, अतो न तत्र परस्पराभावरूपता तयोः । **एवमन्यदपीति** । द्वेषाभावो रागः, रागाभावश्च द्वेष इत्यपि न भवितुमर्हति, तथा शत्रुत्वाभावो मित्रत्वं, मित्रत्वाभावश्च शत्रुत्वमित्यपि न वदितुं शक्यते । एवञ्च सुखदुःखादीनामनुभवसिद्धभावरूपत्वानङ्गीकारे दोषमाह—**परस्पराभावात्मकत्वे तु इति** । परस्पराश्रयापत्तेः=अन्योन्याश्रयापत्तेरित्यर्थः । अन्योन्याश्रयस्य दूषकत्वे हेतुमाह—**एकस्याप्यसिद्धेरिति** । तथा च सुखपदार्थाज्ञाने दुःखपदार्थस्य ज्ञानं न स्यात्, दुःखपदार्थज्ञानाभावे च सुखपदार्थस्य ज्ञानं न स्यादित्युभयमपि सर्वथाऽज्ञातमेव ( असिद्धमेव ) स्यादिति भावः ।

---

अतिरिक्त नहीं है, बल्कि प्रीति का अभाव ही दुःख है—उन चार्वाक के प्रति अर्थात् उनके इस मत या कथन का खण्डन करने के लिए ही कारिकाकार ने 'आत्म' ग्रहण किया है । इससे सुखादि को इतरेतर के अभावस्वरूप नहीं समझना चाहिए, अर्थात् प्रीति को दुःखाभाव एवं दुःख को प्रीति का अभाव तथा सुख को दुःखाभाव एवं दुःख को सुखाभाव समझना सर्वथा गलत है । अपितु ये भाव ही हैं, क्योंकि 'आत्म' शब्द भाव का वाची है । प्रीति आत्मा=स्वरूप है, जिनकी वे वस्तुएँ प्रीतिस्वरूप हैं । ऐसे ही 'अप्रीत्यात्मक' एवं 'विषादात्मक' शब्दों का भी अर्थ समझ लेना चाहिए ।

और सुख, दुःख, मोह इनकी भावरूपता तो 'अहं सुखी', 'अहं दुःखी' इत्यादि अनुभवात्मक प्रतीतियों के आधार पर सिद्ध ही हैं । परस्पर के अभावात्मक मानने पर तो परस्पर के आश्रयापत्ति होने के कारण एक की असिद्धि होने पर दोनों की असिद्धि हो जायेगी । अर्थात् अभावज्ञान प्रतियोगिज्ञान सापेक्ष होता है, अतः दुःखरूप प्रतियोगी का ज्ञान होने पर ही दुःखाभावरूप सुख=प्रीति का ज्ञान हो सकेगा और सुख का ज्ञान होने पर सुखाभावरूप दुःख=अप्रीति का ज्ञान हो पायेगा । इस प्रकार यह परस्पराश्रय=अन्योन्याश्रय दोषापत्ति स्पष्ट है । इस प्रकार तुम्हारे चार्वाक के यहाँ सुख, दुःख दोनों का कोई भी स्वतन्त्र अस्तित्व नहीं है, क्योंकि दोनों ही तो अभाव-

( ५ ) स्वरूपमेषामुक्त्वा प्रयोजनमाह—'प्रकाशप्रवृत्तिनियमार्थाः' इति। अत्रापि यथासङ्ख्यमेव। रजःप्रवर्त्तकत्वात् सर्वत्र लघु सत्त्वं प्रवर्त्तयेत्, यदि तमसा गुरुणा न नियम्येत। तमोनियतन्तु क्वचिदेव प्रवर्त्तयतीति भवति तमो नियमार्थम्।

---

( ५ ) स्वरूपमेषामिति। सत्त्वादिगुणानां स्वरूपलक्षणमुक्त्वेत्यर्थः। अत्रापीति। प्रकाशप्रवृत्तिनियमार्था इत्यत्रापि। यथासङ्ख्यमेवेति। प्रकाशार्थं सत्त्वम्, प्रवृत्त्यर्थं रजः, नियमार्थञ्च तमोऽपेक्ष्यते, इत्येवंरूपेण यथासङ्ख्यं=क्रमिकः, सम्बन्धो विज्ञेयः। तथा च तत्र प्रकाशविधानं सत्त्वगुणस्य प्रयोजनम्, प्रवृत्तिकरणं रजोगुणस्य, नियमनसंविधानञ्च तमोगुणस्य प्रयोजनम्। नियमनञ्च प्रकाशक्रिययोः सन्निरोधः, तयोः प्रतिरोध इति यावत्।

अत्रेदमाशङ्क्यते—यदा प्रकाशप्रवृत्तिभ्यामेव सर्वं कार्यं सेत्स्यति सिद्ध्यति च तदा काऽऽवश्यकता तमःकृत्यस्य नियमनस्येत्यतस्तदावश्यकतां दर्शयति—रजःप्रवर्तकत्वादिति। प्रवर्तकस्वभाववत्वाद् रजोगुणः सर्वदैव सर्वत्र चालयेत्, यदि तमसा गुरुणा न नियम्येत, अर्थात् सत्त्वगुणः सर्वदैव प्रवृत्तिशीलो भवेद् यदि तमोगुणः सत्त्वगुणं न सन्निरुन्ध्यात्। तमोनियतमिति। तमसा सन्निरुद्धन्तु इत्यर्थः।

---

रूप हैं। ऐसी स्थिति में जैसे दुःखाभावरूप सुख स्वास्तित्वाभाव प्रयुक्त असिद्ध है, वैसे ही सुखाभावरूप दुःख भी स्वास्तित्वाभाव प्रयुक्त असिद्ध है। वही कहा है—'एकस्याऽप्यसिद्धेरुभयासिद्धिः' इति।

( ५ ) कौमुदीकार इन तीनों गुणों का स्वरूप बतलाकर अब प्रयोजन बतलाते हैं—'प्रकाशप्रवृत्तिनियमार्थाः' इति। यहाँ भी प्रकाश, प्रवृत्ति, नियम, इन तीनों का अन्वय यथासंख्य=क्रम से सत्त्वगुण, रजोगुण, तमोगुण के साथ ही करना चाहिए। अर्थात् प्रकाशार्थ सत्त्व, प्रवृत्त्यर्थ रज तथा नियमार्थ तम, इस रूप से तीनों का अन्वय यथासंख्य कर देना चाहिए।

प्रश्न—सत्त्वगुण और रजोगुण इन दोनों के प्रयोजनात्मक कार्य जो प्रकाश और प्रवृत्ति हैं, उन्हीं से सब प्रयोजन हल हो जायेंगे, फिर क्या आवश्यकता है तमोगुण के कार्यनियमन=अवरोध=कार्यावरोध की ?

उत्तर—'रजःप्रवर्तकत्वात्' इति। तमोगुण अथवा तमोगुण के कार्यनियमन की आवश्यकता यह है कि रजोगुण प्रवर्तक=प्रवृत्ति का कारण होने के कारण सर्वत्र लघु जो सत्त्वगुण है उसे हमेशा प्रवृत्तिशील ही बनाये रहे, इससे सर्वत्र सात्त्विक प्रकाशमय ही कार्य होते रहें, कहीं भी, कभी भी, किसी प्रकार भी अन्धकारमय कार्य हो ही नहीं, यदि गुरु तमोगुण के द्वारा रजोगुण के प्रवृत्तिरूप कार्य को नियमित=अवरुद्ध न किया जाय। तमोगुण से नियमित हुआ रजोगुण कहीं ही सत्त्वगुण को प्रवृत्तिशील बनाता है, इसीलिए तमोगुण को नियमन के रूप में माना है।

( ६ ) प्रयोजनमुक्त्वा क्रियामाह—'अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च' इति। वृत्तिः क्रिया, सा च प्रत्येकमभिसम्बध्यते। 'अन्योन्याभिभववृत्तयः'। एषामन्यतमेनार्थवशादुद्भूतेनान्यदभिभूयते। तथा हि—सत्त्वं रजस्तमसी अभिभूय शान्तामात्मनो वृत्तिं प्रतिलभते; एवं रजः सत्त्वतमसी अभिभूय घोराम्; एवं तमः सत्त्वरजसी अभिभूय मूढामिति।

( ७ ) 'अन्योन्याश्रयवृत्तयः'। यद्यप्याधाराधेयभावेन नाऽयमर्थो घटते,

---

( ६ ) इदानीं स्वस्वप्रयोजनमुक्त्वा क्रियामाह—अन्योन्याभिभवेति। क्रिया च प्रकृते एतेषां गुणानामसाधारणी वृत्तिर्विज्ञेया। प्रत्येकमभिसम्बध्यते इति। इत्थञ्च अन्योन्याभिभववृत्तयः, अन्योन्याश्रयवृत्तयः, अन्योन्यजननवृत्तयः, अन्योन्यमिथुनवृत्तयः इतिरीत्या वृत्तिपदस्य प्रत्येकमन्वयः। एषाम् = सत्त्वादित्रयाणां गुणानाम्। अन्यतमेन= एकेन केनचिद् गुणेन। अर्थवशाद् = धर्माधर्मनिमित्तकसुखादिरूपस्वप्रयोजनवशात्। उद्भूतेन = स्वकार्यजननोन्मुखेन। अन्यत् = स्वातिरिक्तगुणान्तरम्।

केन प्रकारेण खलु गुणान्तरेण गुणान्तरमभिभूयते ? इत्याकाङ्क्षायामाह—तथाहि, सत्त्वं रजस्तमसीति। अभिभूय = अभिभवं कृत्वा, दुर्बलीकृत्येत्यर्थः। आत्मनः = स्वस्य। शान्तां = प्रकाशात्मिकाम् = सुखादिरूपाम्। वृत्तिं = व्यापारम्। प्रतिलभते = प्राप्नोति = करोतीत्यर्थः। एवं रजःघोराम्, तमश्च मूढामिति, 'आत्मनो वृत्तिं लभते' इत्यनेन सम्बन्धो बोध्यः।

( ७ ) 'अन्योन्याश्रयवृत्तय' इति तु नैव घटते, यतो 'घटवद् भूतलम्' इतिवद् गुणानामाधाराधेयभावरूप आश्रयाश्रयिभावो नास्तीत्यत्राह—तथापि यदपेक्षयेति।

---

( ६ ) प्रयोजन बतलाकर अब तीनों गुणों के व्यापार को बतलाते हैं—'अन्योन्याभिभव' इत्यादि से। वृत्ति नाम है क्रिया = व्यापार का और उस 'वृत्ति' का 'अभिभव' 'आश्रय' इत्यादि प्रत्येक के साथ सम्बन्ध है, अर्थात् अन्योन्याभिभववृत्तयः, अन्योन्याश्रयवृत्तयः, अन्योन्यजननवृत्तयः, अन्योन्यमिथुनवृत्तयः।

'अन्योन्याभिभववृत्ति' बतलाते हैं—'एषाम्' इति। सत्त्वगुण, रजोगुण, तमोगुण, इन तीनों गुणों में से कोई एक गुण अर्थवश = अपने धर्माऽधर्महेतुक सुखादिरूप प्रयोजनवश स्वकार्योत्पादनाभिमुख होकर दूसरे दो गुणों को अभिभूत कर देता है। 'तथाहि' इति। जैसे—सत्त्वगुण रजोगुण और तमोगुण इन दोनों गुणों को अभिभूत करके अर्थात् दुर्बल बनाकर अपनी शान्तवृत्ति = सुखादिरूप वृत्ति को सम्पन्न करता है, जिससे चारों ओर शान्ति, प्रकाश एवं सुख का ही अनुभव होता रहता है। ऐसे ही रजोगुण सत्त्व और तम को अभिभूत करके अपनी घोरात्मिका = दुःखात्मिका वृत्ति को ही प्राप्त होता है। इसी प्रकार तमोगुण भी सत्त्व तथा रज इन दोनों गुणों को अभिभूत करके अपनी मूढ़ात्मिका = मोहात्मिका वृत्ति का लाभ करता है।

( ७ ) 'अन्योन्याश्रयवृत्तयः' इति। अर्थात् एक गुण दूसरे दो गुणों का आश्रय लेता है। यद्यपि यहां आधाराऽऽधेयभावरूप आश्रय सम्भव नहीं है 'घटवद् भूतल'

तथापि यदपेक्षया यस्य क्रिया स तस्याऽऽश्रयः। तथाहि—सत्त्वं प्रवृत्तिनियमावाश्रित्य रजस्तमसोः प्रकाशेनोपकरोति, रजः प्रकाशनियमावाश्रित्य प्रवृत्त्या इतरयोः, तमः प्रकाशप्रवृत्ती आश्रित्य नियमेनेतरयोरिति।

( ८ ) 'अन्योन्यजननवृत्तयः'। अन्यतमोऽन्यतममपेक्ष्य जनयति। जननं च परिणामः, स च गुणानां सदृशरूपः। अत एव न हेतुमत्त्वम्, तत्त्वान्तरस्य हेतोरभावात् नाप्यनित्यत्वं, तत्त्वान्तरे लयाभावात्।

---

यदपेक्षया यस्य क्रिया=यस्यां क्रियायां यं सहयोगित्वेन स्वीकरोति स एव सहयोगी सहयोगयोग्यस्याऽऽश्रयः, तथा च परस्परं सहयोगित्वरूपो गौण एवाऽऽश्रयाश्रयिभावः प्रकृते ग्राह्यः।

एतदेव सुस्पष्टयति—**तथाहि—सत्त्वं प्रवृत्तिनियमाविति**। सत्त्वं=सत्त्वगुणः। प्रवृत्तिनियमौ=रजस्तमसोः कार्यभूतौ। आश्रित्य=सहयोगित्वेन स्वीकृत्य। रजस्तमसोः=रजस्तमसी, उपकरोति=उपकारं करोति, साहाय्यं करोतीत्यर्थः। रजः=रजोगुणः। प्रकाशनियमौ=सत्त्वतमसोः कार्यभूतौ। प्रवृत्त्या=स्वकार्यस्वरूपया। इतरयोः=रजस इतरयोः सत्त्वतमसोः। उपकरोति इत्यस्य सर्वत्र सम्बन्धः। एवं तमः=तमोगुणः। नियमेन=तमोगुणकार्यभूतेन। इतरयोः=तमोभिन्नयोः सत्त्वरजसोः। अत्रापि उपकरोति इत्यस्य सम्बन्धो बोध्यः।

( ८ ) **अन्योन्यजननवृत्तय इति**। अन्यतमः=सत्त्वादिगुणानां मध्ये कश्चिदेको गुणः ( प्रतिसर्गावस्थायाम् )। अन्यतमम्=रजोगुणं तमोगुणम्। अपेक्ष्य=आश्रित्य। जनयति=समुत्पादयति। सर्वेऽपि गुणा परस्परं मिलित्वैव सर्वकार्यजनकीभूता भवन्ति, पारस्परिकसहयोगेनैव महदादिकार्योत्पादका भवन्तीत्यर्थः। जननशब्दार्थमाह—**जननञ्चेति**। परिणामः=तत्तत्कार्यरूपेण परिणतिः। नाऽसतः समुत्पत्तिः, तथासति असत्कार्यवादमतानुप्रवेशापत्तिरूपो दोषः स्यादिति भावः। स च=परिणामश्च। गुणानां=सत्त्वादिगुणानाम्। सदृशपरिणामः=साम्यावस्थारूपः परिणामः। ननु

---

की तरह। तथापि जिसकी अपेक्षा करके अर्थात् जिसके सहारे से जिसका क्रियात्मक व्यापार सम्पन्न हो, वही उसका आश्रय होता है। इसी को स्पष्ट करते हैं—'तथाहि' इति। जैसे—सत्त्वगुण रज और तम के कार्य प्रवृत्ति तथा नियम इन दोनों का आश्रय प्राप्त कर, अर्थात् इन दोनों को अपना सहायक बनाकर रज और तम का अपने प्रकाशात्मक कार्य के द्वारा उपकार करता है, ऐसे ही रजोगुण सत्त्व और तम के कार्य प्रकाश तथा नियम का आश्रय प्राप्त कर अपने प्रवृत्तिरूप कार्य द्वारा सत्त्व और तम इन दोनों का उपकार करता है। ऐसे ही तमोगुण भी सत्त्व तथा रज के कार्य प्रकाश तथा प्रवृत्ति का आश्रय प्राप्त कर अपने कार्य नियमन के द्वारा अपने से इतर सत्त्व तथा रज का उपकार करता है।

( ८ ) 'अन्योन्यजननवृत्तयः' इति। अर्थात् सत्त्व, रज, तम इन तीन गुणों में से कोई एक गुण अन्य दोनों गुणो की अपेक्षा रखता है, अर्थात् वह एक गुण स्वाति-

( ९ ) 'अन्योन्यमिथुनवृत्तयः'। अन्योन्यसहचराः, अविनाभाववृत्तय इति यावत्। 'चः' समुच्चये। भवति चात्रागमः।

---

सत्त्वादित्रयाणां गुणानां परिणामरूपतासत्त्वे तेऽपि हेतुमन्तो भविष्यन्ति, इत्थञ्च प्रकृतिरपि हेतुमती भविष्यतीति व्यक्तसाधर्म्यस्य हेतुमत्त्वस्य तत्रातिव्याप्तिः स्यादिति भावः। एवं हेतुमत्वेन प्रकृतेरनित्यत्वमपि स्यादिति तस्याप्यतिव्याप्तिः स्यादतस्तन्निरसितुमाह—अत एवेति। यतः सदृशपरिणामभूतस्य पदार्थस्य हेतुमत्वं न स्वीक्रियतेऽपि तु विसदृशपरिणामस्यैवाऽतः प्रकृतेः सदृशपरिणामरूपत्वान्न तस्या हेतुमत्त्वम्। यथा गन्धतन्मात्रारूपकारणस्य विसदृशपरिणामभूता पृथिवी गन्धतन्मात्रारूपहेतुमती भवति। एवं रसतन्मात्राया विसदृशपरिणामभूतं जलं रसतन्मात्रारूपहेतुमद् भवति। एवमेवाऽन्यत्रापि वोध्यम्। ननु सदृशपरिणामरूपत्वे कथन्नास्ति हेतुमत्त्वमित्यत्राह—तत्त्वान्तरस्येति। विजातीयतत्त्वस्येत्यर्थः। यत्र विजातीयतत्त्वमन्येन केनचिद् विजातीयतत्त्वेन जन्यते तत्रैव विसदृशपरिणामभूतं विजातीयं तत्त्वं हेतुमद् भवति, प्रकृते न तथा, अपि तु प्रकृते सत्त्वादिगुणा एव प्रकृतिस्वरूपाः सन्ति। गुणेभ्योऽतिरिक्तं प्रधाननामकं किमपि तत्त्वान्तरमेव नास्ति, अर्थाद् गुणा एव विसदृशपरिणामस्य प्रतिद्वन्द्विभूतं यत् सदृशपरिणामरूपं प्रधानं तादृशप्रधानशब्देन कथ्यन्ते। अतो विजातीयतत्त्वान्तरात्मकपरिणामाभावात् तं प्रति अन्यस्य कस्यचित्तत्त्वान्तररूपहेतोरभावान्न प्रधानस्य हेतुमत्त्वं सिद्धयति।

ननु सृष्टिकाले सत्त्वादिगुणेषु क्षोभस्य जायमानत्वात् साम्यावस्थारूपपरिणामस्याऽभावेन प्रकृतेरनित्यत्वं वाच्यम्, एवं सति क्वापि प्रकृतेर्लयो वाच्यः, लये सति चाऽनित्यत्वं वाच्यम्, इत्यत्राह—**नाप्यनित्यत्वमिति**। प्रधानस्येति शेषः। कुत इति जिज्ञासायामाह—**तत्त्वान्तरे इति**। विजातीयतत्त्वे इति यावत्। तथा च विजातीयतत्त्वरूपतत्त्वान्तरे तिरोभवनशालित्वमेवाऽनित्यत्वम्। तदानीं नास्ति गुणत्रयादतिरिक्तं किमपि तत्त्वान्तरं यत्राऽस्यास्तिरोभावः सम्भाव्येत इति प्रकृतेस्तत्त्वान्तरभूते विजातीयतत्त्वे तिरोभावाऽभावान्नानित्यत्वमिति न व्यक्तसाधर्म्यस्याऽव्यक्तेऽतिव्याप्तिरिति भावः।

( ९ ) **'अन्योन्यमिथुनवृत्तय'** इति। परस्परं स्त्रीपुरुषवत् मिथुनीभूतास्तदेवाह—**अन्योन्यसहचरा इति**। सहचारपदस्याऽर्थमाह—**अविनाभाववर्तिन इति**। समुच्चितमर्थं-

---

रिक्त दो गुणों का साहाय्य प्राप्त कर परिणाम को उत्पन्न करता रहता है। 'जनन' का अर्थ यहाँ गुणों का सदृश परिणाम है, न कि अपूर्वोत्पादन; कारण कि इससे असत् कार्यवाद का प्रसङ्ग हो जायेगा।

( ९ ) **'अन्योन्यमिथुनवृत्तयः'** इति। अर्थात् ये तीनों गुण मिथुनवृत्ति वाले हैं, मिथुनीभूत हैं, अर्थात् वरावर साथ रहने वाले हैं, अर्थात् अविनाभाववर्ती हैं=एक-दूसरे के अभाव में कदापि नहीं रहने वाले हैं, अर्थात् नित्यसम्बद्ध हैं। 'मिथुनवृत्तयश्च गुणः' यहाँ 'च' समुच्चयार्थिक है। उसी समुच्चयार्थ को वतलाते हैं—'भवति चात्राऽऽगमः' इति। यहाँ देवीभागवत ( ३।८ ) की उक्ति ही आगमप्रमाण है।

'अन्योऽन्यमिथुनाः सर्वे सर्वे सर्वत्र गामिनः।
रजसो मिथुनं सत्त्वं सत्त्वस्य मिथुनं रजः॥
तमसश्चाऽपि मिथुने ते सत्त्वरजसी उभे।
उभयोः सत्त्वरजसोर्मिथुनं तम उच्यते॥
नैषामादिः सम्प्रयोगो वियोगो वोपलभ्यते'॥ इति॥ १२॥
( दे० भा० ३।८ )

( १ ) 'प्रकाशप्रवृत्तिनियमार्थाः' इत्युक्तम्, तत्र के ते इत्थम्भूताः कुतश्चेत्यत आह—

---

माह—**भवति चात्रागमः** इति। **अन्योन्यमिथुना इति**। सर्वे=त्रयोऽपि गुणाः। अन्योन्यमिथुनाः=परस्परं सहचराः। सर्वे च ते, सर्वत्र=समस्तजडवर्गेषु। गामिनः=अनुस्यूताः, सन्ति, परस्परं सम्मिलिताः सन्तीत्यर्थः। पारस्परिकं मिथुनीभावमेव विशदीकरोति—**रजसो मिथुनमिति**। सत्त्वं=सत्त्वगुणः। रजसः=रजोगुणस्य। मिथुनम्=सहचरितम्। रजः। सत्त्वस्य। मिथुनं=सहचारि। ते उभे सत्त्वरजसी। तमसः=तमोगुणस्य। मिथुने=सहचारिणी। उभयोः=द्वयोः। सत्त्वरजसोः। तमः=तमोगुणः। मिथुनम् उच्यते। एषाम्=सत्त्वादिगुणानाम्। आदिः=जायते, अस्ति, वर्धते, विपरिणमते, अपक्षीयते, विनश्यति, एतेषु षड्भावविकारेषु प्रथम उत्पत्तिरूपो विकारः। न। उपलभ्यते=ज्ञायते। एतेषामुत्पत्तेरभावादित्यर्थः। सम्प्रयोगः=इमे परस्परं कदा के च संयुक्ता इत्यादिरूपेण संयोगः। वा=अथवा। नोपलभ्यते। गुणानामनादित्वेन तेषां संयोगस्याप्यनादित्वं विज्ञेयम्। अथवा, वियोगः=परस्परमेतेषां पार्थक्यम्। नोपलभ्यते। सर्वकालावच्छेदेन परस्परमेतेषां संयुक्तत्वादित्यर्थः॥ १२॥

( १ ) इदानीमग्रिमां त्रयोदशीं कारिकामवतारयति—**प्रकाशप्रवृत्तिनियमार्था** इति। तत्र=तेषु त्रिगुणेषु मध्ये। ते=गुणाः। के=किं नामानः। इत्थम्भूताः=प्रकाशकरः, प्रवृत्तिकरः, नियमनकरश्च। कुतश्च=कस्माच्च प्रयोजनात्?

---

**'अन्योन्यमिथुनाः'** इति। अर्थात् सभी सत्त्वादिगुण अन्योन्यमिथुन=परस्पर सहचर हैं। 'सहचर' शब्द का अर्थ ऊपर बतलाया जा चुका है। सहचर होने के कारण ही सब गुण सर्वत्र=सभी जडसमुदाय में गामी=अनुस्यूत हैं। सर्वत्र गामित्व को स्पष्ट करते हैं—**'रजसो मिथुनम्'** इति। सत्त्वगुण रजोगुण का मिथुन=सहचारी है, सत्त्वगुण का मिथुन रजोगुण है और सत्त्व तथा रज ये दोनों तमोगुण के मिथुन=सहचारी हैं और सत्त्व और रज इन दोनों का मिथुन=सहचारी है और सत्त्व और रज इन दोनों का मिथुन तम है। इन सत्त्वादिगुणों का आदि=छः प्रकार के भावभूत विकारों में से प्रथम जो उत्पत्तिरूप विकार है, अर्थात् 'जायते' यह विकार नहीं है और न इनका 'सम्प्रयोग'=संयोग ही होता है और न ही 'वियोग'=पार्थक्य होता है, कारण कि ये हमेशा संयुक्त ही रहते हैं॥ १२॥

( १ ) प्रकाश, प्रवृत्ति तथा नियम—ये अर्थ=प्रयोजन वाले तीन गुण हैं, यह १२वीं कारिका में कह चुके हैं। इस प्रकार के प्रयोजन वाले वे कौन-कौन गुण हैं,

**सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः।**
**गुरु वरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः ॥ १३ ॥**

( २ ) 'सत्त्वम्' इति। सत्त्वमेव लघु प्रकाशकमिष्टं साङ्ख्याचार्यैः। तत्र कार्योद्गमने हेतुर्धर्मो लाघवं गौरवप्रतिद्वन्द्वि; यतोऽग्नेरूर्ध्वज्वलनं भवति। तदेव लाघवम्। कस्यचित्तिर्यग्गमने हेतुर्भवति, यथा वायोः। एवं करणानां वृत्तिपटुत्वहेतुर्लाघवम्; गुरुत्वे हि मन्दानि स्युरिति सत्त्वस्य प्रकाशात्मकत्वमुक्तम्।

---

अन्वयः—सत्त्वं लघु प्रकाशकं ( सांख्यैः ), इष्टम्, रजः उपष्टम्भकं चलञ्च ( इष्टम् ), तमः गुरु वरणकम् एव ( इष्टम् ), ( एतेषां ) वृत्तिः अर्थतः प्रदीपवत् ( वर्तते )।

सत्त्वं लघु इति। लघुत्वं, प्रकाशकत्वञ्च सत्त्वगुणस्य लक्षणम्। उपष्टम्भकत्वं, चलत्वञ्च रजसो लक्षणम्। गुरुत्वं, वरणकत्वञ्च तमसो लक्षणम्। इष्टम्। सांख्याचार्यैः। अर्थतः। वृत्तिः। प्रदीपवत्। भवतीति शेषः।

( २ ) सत्त्वमेव=सत्त्वगुणः। लघु=कस्मिन्नपि कार्ये पटुत्वसम्पादकम्, प्रकाशकञ्च, इष्टं=स्वीकृतं, सांख्याचार्यैः। तत्र लघुत्वं सुस्पष्टयति—तत्र कार्योद्गमने इति। तत्र=लघुत्वप्रकाशयोर्मध्ये। कार्योद्गमने—कार्यस्य=कार्यमात्रस्य, उद्गमने=ऊर्ध्वगमने=ऊर्ध्वकोटिगमने, आविर्भावे च। हेतुः=यत्कारणम्। तत्, लाघवम्=सत्त्वगुणवृत्तिलघुत्वरूपो धर्म एव। तच्च लघुत्वं, गौरवप्रतिद्वन्द्वि=गुरुत्वविरोधीत्यर्थः। तदुदाहरति—यतोऽग्नेरिति। यतः=यस्मात् लघुत्वधर्मात्। अग्नेः=लघुत्वाश्रयीभूत-

---

अर्थात् उनका क्या नाम हैं तथा किस कारण से वे गुण प्रकाश, प्रवृत्ति, नियमन, रूप प्रयोजन वाले हैं? यह बतलाते हैं—**'सत्त्वं लघु'** इति।

**कारिकार्थ**—सत्त्वगुण लघु तथा प्रकाशक है ( सांख्याचार्यों को यही अभिमत है ), रजोगुण प्रेरक तथा चंचल है और तमोगुण गुरु तथा आवरक है। ( परस्पर विरोधी होने पर भी ) ये आपस में ( भोगापवर्ग ) पुरुषार्थ के लिए दीपक के समान मिलकर कार्य करते हैं।

( २ ) सांख्याचार्यो ने भी सत्त्व को लघु=हलका अर्थात् मन को हलका=स्वस्थ=प्रसन्न रखने वाला कहा है, इसीलिए प्रकाशक=सदसद्वस्तुप्रकाशकारी इष्ट माना है। उनमें 'लघुत्व' की परिभाषा इस प्रकार की है—जो किसी भी कार्य के उद्गमन=ऊर्ध्वगमन=उत्थान में हेतु होता है, अर्थात् उसका किसी भी प्रकार पतन नहीं होने देता है, ऐसे धर्म को लघुत्व कहते हैं और यह गुरुत्व का विरोधी है। ( कुछ लोग लघुत्व को गुरुत्वाभाव रूप मानते हैं, परन्तु उनका वह दृष्टिकोण सर्वथा निराधार है। जैसे गुरुत्व स्वतन्त्र भावभूत पदार्थ है, वैसे ही लघुत्व भी स्वतन्त्र भावपदार्थ है। उदाहरणार्थ जैसे—'अद्वैत' तथा 'अज्ञान' द्वैताभाव एवम् अज्ञानाभाव न होकर दोनों भावभूत पदार्थ हैं। )

( ३ ) सत्त्वतमसी स्वयमक्रियतया स्वकार्यप्रवृत्तिं प्रत्यवसीदन्ती रजसोपष्टभ्येते—अवसादात् प्रच्याव्य स्वकार्ये उत्साहं-प्रयत्नं कार्येते। तदिदमुक्तम्-'उपष्टम्भकं रज:' इति। कस्मादित्यत उक्तम्—'चलम्' इति। तदनेन रजसः प्रवृत्त्यर्थत्वं दर्शितम्।

---

स्याऽग्नेः। ऊर्ध्वज्वलनम्=ऊर्ध्वगमनं, भवति। तदेव लाघवम्=स एव लघुत्वरूपो धर्मः। कस्यचित्=वायोः। तिर्यग्गमने=वक्रगमने ( टेढा चलने में )। करणानाम्=वाह्याभ्यन्तरेन्द्रियरूपकरणानाम्, मनोऽहङ्कारबुद्धीनाञ्च। वृत्तिपटुत्वहेतुः—वृत्तयः=स्वस्वविषयग्रहणसमर्थसन्निकर्षात्मकव्यापारविशेषाः, तासां, पटुत्वहेतुः=अविलम्वेनैव विषयाकारनैपुण्यसम्पादनहेतुः। लाघवम्=लघुत्वम्, तच्चेन्द्रियादिकरणवृत्तिपटुत्वरूपम्। व्यतिरेकव्याप्तिमाह—**गुरुत्वे हीति**। हि=यतः। गुरुत्वे=लघुत्वप्रतिद्वन्द्विभूते गुरुत्वे सति। मन्दानि=स्वविषयप्रकाशनशक्तिशून्यानि। इत्यतः स्वविषयप्रकाशनात्मकपटुत्वज्ञानेनैव सत्त्वगुणे लघुत्वमनुमेयम्। सत्त्वं लघु विषयप्रकाशकत्वात्।

( ३ ) रजसः प्रोक्तमुपष्टम्भकत्वं दर्शयति—**सत्त्वतमसीति**। स्वयं=स्वतः। अविक्रियतया=प्रवृत्तिशून्यतया। स्वस्वकार्यं प्रति=स्वस्वप्रकाशनियमनात्मककार्यं प्रति। स्वीयप्रवृत्तिजननायेति योजनीयम्। अवसीदन्ती=शक्तिशून्यत्वेन शिथिलीभूते। उपष्टभ्येते इत्यस्य स्वयं विवरणमाह—**अवसादात् प्रच्याव्येत्यादिना**। अवसादात्=शैथिल्यात्, प्रच्याव्य=शैथिल्यं निरस्य। स्वकार्ये=सत्त्वगुणस्य प्रकाशात्मके स्वकार्ये, तमसश्च नियमनात्मके=अवरोधात्मके कार्ये। **उत्साहप्रयत्नमिति**। उत्साहस्य पर्यायमाह—**प्रयत्नमिति**। तदेवोक्तम्—**उपष्टम्भकं रज इति**। उपष्टम्भकम्=सत्त्वतम-

---

'यतोऽग्ने'रिति। जिस लघुत्व के कारण अग्नि का ऊर्ध्वज्वलन अर्थात् अग्नि की ज्वालाएँ ऊपर को ही जाती है, वही लघुत्व किसी के तिर्यक्=तिरछा या टेढा गमन =चलने में भी कारण वनता है; जैसे वायु का तिर्यग्गमन प्रसिद्ध है।

**'एवं कारणानाम्'** इति। इसी प्रकार कारणों=इन्द्रियों के वृत्तिपटुत्व=शीघ्र ही विषयाकारवृत्ति के सम्पादनकर्तृत्व में भी कारण यह लघुत्व ही है। क्योंकि इन्द्रियों के गुरु=भारी हो जाने पर वे इन्द्रियों अपने-अपने विषय के प्रकाशन में मन्द=असमर्थ हो जाती है, इसलिए सत्त्वगुण को विषयों का प्रकाशक कहा है, अर्थात् इन्द्रियों के विषयों का अवभासक यही सत्त्वगुण है।

( ३ ) 'सत्त्वतमसी'ति। सत्त्वगुण और तमोगुण ये दोनों स्वयं क्रियाविहीन होने के कारण अपने-अपने कार्य करने में अर्थात् प्रकाशन एवं नियमन रूप कार्यों के सम्पादन में सर्वथा असमर्थ ही रहें, यदि रजोगुण इनकी सहायता न करे, जिस प्रकार की निष्क्रिय वृद्ध को लाठी सहायता करती है। रजोगुण ही इन दोनो गुणों को अवसाद=शैथिल्य से दूर करता है, अर्थात् सत्त्व और तम के शैथिल्यरूप असामर्थ्य को दूर कर इन्हें अपना-अपना कार्य करने से सोत्साह एवं प्रवृत्तिशील वनाता है। यही कहा है—'उपष्टम्भकं रजः'।

( ४ ) रजस्तु चलतया परितस्त्रैगुण्यं चालयत् गुरुणाऽऽवृण्वता च तमसा तत्र तत्र प्रवृत्तिप्रतिबन्धकेन क्वचिदेव प्रवर्त्यत इति ततस्ततो व्यावृत्त्या तमो नियामकमुक्तम्—'गुरु वरणकमेव तमः' इति। एवकारः प्रत्येकं भिन्नक्रमः सम्बध्यते—सत्त्वमेव, रज एव, तम एवेति।

---

सोत्तेजकम्। उपष्टम्भकत्वकारणं पृच्छति—कस्मादिति। उत्तरयति—चलमिति। चलनात्मकक्रियायुक्तम्, प्रवृत्तिशीलमिति तु निष्कर्षः। तदनेन=तस्मात्कारणात् चलमिति पदेन। प्रवृत्त्यर्थत्वम्=प्रवृत्तिप्रयोजनकत्वम्।

( ४ ) कारिकायां 'गुरु वरणकमेव तमः' इत्युक्तं, वरणकत्वमुपपादयति—**रजस्तु चलतयेति**। चलतया=प्रवृत्तिशीलतया। त्रैगुण्यम्=त्रिगुणात्मकम्=इन्द्रियवर्गम्। चालयत्=स्वस्वविषयेषु प्रवृत्तिं जनयत्। गुरुणा=जाड्यभाववता। आवृण्वता= आवरणशीलेन=नियमनकर्त्रा=अवरोधविधायिना, मध्ये मध्ये कदाचित् कदाचित् तत्तत्कार्येषु प्रतिरोधं कुर्वता। तमसा=तमोगुणेन। तत्र तत्र=क्वचित्क्वचित्कार्येषु। प्रवृत्तिप्रतिबन्धकेन=रजोगुणकार्यभूतायाः प्रवृत्तेर्निरोधकतया। क्वचिदेव=तत्तत्कार्येष्वेव, प्रवर्त्यते, न सर्वत्र। इत्यस्य भावार्थं पूरयति—ततस्ततो व्यावर्त्य=तस्मात्तस्मात् कार्याद् रजोगुणस्य प्रवृत्तिं सन्निरुद्धच। एतत्सन्निरोधरूपकारणवशादेव तमसो नियामकत्वमङ्गीकृतमिति भावः।

'गुरु वरणकमेव' अत्रत्योऽयमेवकारः कारिकाकारेण 'वरणकेन' सहाऽन्वितो व्यधायि, परन्तु 'वरणकेन' सह 'एव'शब्दस्याऽन्वयमकृत्वा सत्त्वरजस्तमोभिः सहैव

---

प्रश्न—**'कस्मात्'** इति। रजोगुण में कौन-सी ऐसी शक्ति है, जिसके आधार पर वह सत्त्व और तम को अपने-अपने कार्य करने में सोत्साह तथा प्रवृत्तिशील बनाता है ?

उत्तर—**'चलम्'** इति। अर्थात् जिस कारण से रजोगुण स्वयं चल=सक्रिय होने से प्रवृत्तिशील है, इसीलिये वह उपष्टम्भक=उत्तेजक है, अर्थात् सत्त्व और तम को अपने-अपने कार्य करने में उत्तेजना प्रदान करने वाला है। अर्थात् सत्त्व और तम को भी अपने साथ बराबर चलाता ही रहता है। इससे रज को प्रवृत्त्यर्थत्व=प्रवृत्तिरूप प्रयोजन वाला बतलाया गया है

( ४ ) **'रजस्तु चलतया'** इति। ईश्वरकृष्ण ने जो कहा 'गुरु वरणकमेव तमः' इस वाक्य के द्वारा 'तम' का वरणकत्व=नियामकत्व=अवरोधकत्व का उपपादन करते हैं—'रज' चलनात्मक क्रियाशील होने के कारण त्रैगुण्य=त्रिगुणात्मक इन्द्रिय आदि को अपने-अपने विषयग्रहणात्मक कार्य में हमेशा चालित=प्रवृत्तिशील बनाये रखे, परन्तु जब रज को उन-उन कार्यों में प्रवृत्तिप्रतिबन्धक तम के द्वारा प्रवृत्ति कार्य करने से रोक दिया जाता है, तब कुछ ही विषयों में वह इन्द्रियों को प्रवृत्तिशील बना पाता है। अर्थात् तमोगुण हमेशा रजोगुण को तत्तत्कार्यों में इन्द्रियादि सम्बन्धी प्रवृत्तिकारकता नहीं बने रहने देता है, अतः रजोगुण की सार्वदिक प्रवृत्ति भंग करने के कारण तम को 'नियामक' कहा है—'गुरु वरणकमेव तमः'। 'वरणकमेव' यहाँ यह 'एव' पद भिन्नक्रम है, यह 'वरणक' के साथ अन्वित न होकर गुणों से अन्वित है तथा उनमें

( ५ ) ननु एते परस्परविरोधशीला गुणाः सुन्दोपसुन्दवत् परस्परं ध्वंसन्त इत्येव युक्तं, प्रागेव तेषामेकक्रियाकर्त्तृताया इत्यत आह—'प्रदीपवच्चार्थतो वृत्तिः' इति। दृष्टमेतत्—यथा वर्त्तितैलेऽनलविरोधिनी, अथ मिलिते सहाऽनलेन रूपप्रकाशलक्षणं कार्यं कुरुतः। यथा च वातपित्तश्लेष्माणः परस्पर-

---

तस्याऽन्वयो विधेयः, अर्थात् लघुत्वात् सत्त्वमेव प्रकाशकम्, रज एव चलत्वात् उपष्टम्भकम्, तम एव च गुरुत्वाद् वरणकम्। इत्येवंरीत्या एवकारः प्रत्येकं भिन्नक्रमः सम्बध्यते। भिन्नक्रमश्च—यत्र यस्य पाठस्तत्रान्वयमकृत्वा ततोऽन्यत्राऽन्वय इति।

( ५ ) ननु प्रागुक्तरीत्या गुणानां परस्परं विभिन्नधर्मकतया 'अन्योन्याश्रयवृत्तयः' इत्यादिना मिलितानां तेषामेकक्रियाकर्तृत्वाभिधानं कथमपि नोपपद्यते। परस्परं विरुद्धानां गुणानामहिनकुलवत् एकार्थविधानं न सम्भवति, इत्याशङ्क्यते—**ननु परस्परविरोधशीला इति**। गुणाः=सत्त्वादिगुणाः। ध्वंसन्ते=नश्यन्ति। तत्र दृष्टान्तमाह—**सुन्दोपसुन्दवदिति**। सुन्दोपसुन्दनामकौ द्वौ राक्षसौ सोदरावास्ताम्। काञ्चिदेकां कामिनीं कामयमानाभ्यां ताभ्यां प्रवर्तिते सङ्ग्रामे युद्धं कृत्वा द्वावेव हतौ, इति कथा महाभारते श्रूयते। सैव प्रकृतेऽप्यनुसन्धेया। तेषा=सत्त्वादिगुणानाम्। **एकक्रियाकर्तृताया इति**। स्वस्वव्यापारद्वारा परस्परं मिलित्वा एककार्यकर्तृत्वस्य सुन्दोपसुन्दवद् दूरतो निरास इत्याशङ्क्य समाधत्ते—**प्रदीपवच्चार्थतो वृत्तिरिति**। दृष्टमेतद्=एतत्=परस्परविरोधशीलानामपि मिलित्वा क्वचिदेककार्यकर्तृत्वम्। दृष्टम्=दृश्यते इत्यर्थः। कुत्र दृश्यते ? इत्यत आह—**यथेति**। यद्यपि वर्तितैले अनल( अग्नि )विरोधिनी स्तः, अथ च=तथापि। अग्रे स्पष्टमेव। वर्तितैलदृष्टान्तस्थले वर्तितैलयोः परस्पर-

---

भी प्रत्येक गुण के साथ 'एव' का अन्वय है, जैसा कि वाचस्पतिमिश्र ने स्वयं कहा है—'सत्त्वमेव, रज एव, तम एव इति'। अर्थात् 'सत्त्वमेव लघुत्वात् प्रकाशकम्', 'रज एव चलनत्वात् उपष्टम्भकम्' ( =तत्तत्कार्यों में प्रवृत्तिप्रयोजक ), 'तम एव गुरुत्वात् वरणकम्' इति।

( ५ ) प्रश्न—परस्पर विरोधी ये तीनों गुण जिस प्रकार सुन्द और उपसुन्द नामक दो अत्यन्त बलवान् राक्षस जो कि सहोदर भाई थे, तिलोत्तमा नामक एक सुन्दरी युवती के पीछे विरोधी बनकर स्वयं आपस में लड़कर ध्वस्त हो गये, इसी प्रकार परस्पर विरोधी ये तीनों गुण भी किसी कार्य को करने के पहिले ही पारस्परिक अभिघात से ध्वस्त हो जायेंगे, तब फिर विरोधी ये तीनों गुण मिलकर किसी एक कार्य को कैसे सम्पन्न कर सकेंगे ?

उत्तर—'प्रदीपवच्चार्थतो वृत्तिः'—अर्थतः=प्रयोजन की दृष्टि से इन तीनों गुणों का वृत्तिरूप व्यापार प्रदीप के समान होता है। 'दृष्टमेतत्' इति। यह देखने में आता है कि जैसे बत्ती, तेल और अग्नि—ये तीनों परस्पर विरोधी हैं, परन्तु अनल=अग्नि के साथ मिलित होकर रूप एवं रूप वाले घट-पटादि पदार्थों के प्रकाशलक्षण कार्य को

विरोधिनः शरीरधारणलक्षणकार्यकारिणः। एवं सत्त्वरजस्तमांसि मिथो विरुद्धान्यप्यनुवर्त्स्यन्ति स्वकार्यं करिष्यन्ति च। 'अर्थतः' इति। पुरुषार्थत इति यावत्, यथा च वक्ष्यति—

'पुरुषार्थ एव हेतुर्न केनचित् कार्यते करणम्' इति। ( का० ३१ )

( ६ ) अत्र च सुखदुःखमोहाः परस्परविरोधिनः स्वस्वानुरूपाणि सुखदुःखमोहात्मकान्येव निमित्तानि कल्पयन्ति। तेषां च परस्परमभिभाव्याभिभावकभावान्नानात्वम्।

---

मविरोधान्नाऽयं दृष्टान्तः सर्वांशे समानः, अतः सर्वांशे समानोदाहरणमाह—**यथा चेति**। वातः, पित्तः, श्लेष्मा चेति परस्परविरोधिनोऽपि मिलित्वा शरीरधारणलक्षणम् एकं कार्यं कुर्वन्ति। प्रकृतेऽपीयमेव रीतिरनुसन्धेया। अनुवर्त्स्यन्ति=इतरगुणानां कार्योत्पत्तौ साहाय्यं करिष्यन्ति। स्वकार्यम्=स्वस्वकार्यम्। करिष्यन्ति च। अस्या एव कारिकाया अवतरणिकायामुक्तम्—तत्र के ते इत्थम्भूताः, कुतश्चेति शङ्कायां समाधत्ते—**अर्थत इति**। पुरुषस्य भोगापवर्गात्मकप्रयोजनवशेन गुणाः प्रदीपवत् स्वस्वव्यापारद्वारा सम्भूय प्रवर्तन्ते इत्यर्थः। यथा—वत्सविवृद्धिनिमित्तमचेतनं क्षीरं प्रवर्तते तथैवाऽचेतना प्रकृतिरपि पुरुषस्य भोगापवर्गरूपं प्रयोजनं सम्पादयितुं प्रवर्तमाना भवतीत्यत्र मूलकारोक्तिरपि प्रमाणम्—**पुरुषार्थ एवेति**। तथा च न केनचित्=नान्येन केनचित् कर्त्रा। करणम्=इन्द्रियादिकम्। कार्यते=प्रेर्यते।

( ६ ) ननु 'त्रिगुणमविवेकि' इत्यादिना सर्वस्यैव पुरुषातिरिक्तस्य त्रिगुणात्मकत्वं प्रतिपादितम्। तच्च नानुभूयते, यद् वस्तु यस्मिन् काले यस्य पुरुषस्य सुखात्मकं भवति तदेव वस्तु तस्मिन्नेव काले तस्य पुरुषस्य दुःखात्मकं मोहात्मकञ्च न भवतीत्यनुभवसिद्धम्। तस्माद् असुखादिस्वभावा भावा जातिकालावस्थाद्यपेक्षयैव सुखदुःखकारणीभूता भवन्ति, न तु स्वत एवेति प्रश्नोदये समाधत्ते—**अत्र चेति**। गुणस्वरूप-

---

सम्पन्न करते हैं। अथवा वात, पित्त, कफ—ये तीनों परस्पर विरोधी हैं, फिर भी शरीरधारणलक्षण कार्य को मिलकर सम्पन्न करते हैं। इसी प्रकार सत्त्व, रज, तम, ये तीनों आपस में विरोधी होते हुए भी अनुवर्ती=किसी भी कार्य के करने में परस्पर में सहायक बनते हैं और अपने कार्य को करते हैं।

'अर्थत' इति। अर्थात् ये तीनों गुण यह कार्यसम्पादन पुरुष के भोगापवर्गरूप अर्थ=प्रयोजन के दृष्टिकोण से करते हैं। जैसा कि 'पुरुषार्थ एव हेतुर्न केनचित् कार्यते करणम्' इस अगली ३१वीं कारिका में यह विषय स्पष्ट किया जायेगा।

( ६ ) प्रश्न—'अत्र च' इति। गुणों के स्वरूप के विवेचन के प्रसङ्ग में यह भी एक उल्लेखनीय विषय है कि सुख, दुःख, मोह ये सर्वथा परस्पर में विरोधशाली हैं, अतः ये अपने-अपने अनुरूप=स्व-स्व-प्रादुर्भावप्रयोजक ही सुख, दुःख एवं मोहात्मक निमित्तों की कल्पना=अपेक्षा करते हैं। जैसे सुख अपने प्रादुर्भाव में धर्मापेक्ष सुखस्वरूप सत्त्वगुण की अपेक्षा रखता है। इसी प्रकार दुःख भी अपने प्रादुर्भाव में अधर्मा-

( ७ ) तद्यथा—एकैव स्त्री रूपयौवनकुलशीलसम्पन्ना स्वामिनं सुखाकरोति। तत्कस्य हेतोः ? स्वामिनं प्रति तस्याः सुखरूपसमुद्भवात्। सैव स्त्री

---

निरूपणावसरे चेत्यर्थः। निमित्तानि = सहकारिकारणसहितानि उपादानकारणानि। कल्पयन्ति = अपेक्षन्ते।

**अयम्भावः**—परस्परविरोधशीलाः सन्ति ये सुखदुःखमोहास्ते नहि कारणमन्तरेणैव प्रादुर्भवन्ति किन्तु ते स्वस्वोत्पत्तौ निमित्तानि समपेक्षन्ते। निमित्तान्यपि ते नहि यानि कानिचिदेव कल्पयन्ति अपि तु स्वस्वोत्पत्त्यनुरूपाण्येव अर्थात् सुखदुःखमोहात्मकान्येव तेऽपेक्षन्ते। तथा च सुखं स्वोत्पत्तौ धर्ममपेक्षमाणं सुखस्वरूपं सत्त्वगुणरूपं निमित्तं कल्पयति। दुःखञ्चाऽधर्मापेक्षं दुःखरूपं रजोगुणात्मकं निमित्तं कल्पयति। मोहश्चापि स्वोत्पत्तौ अधर्मापेक्षं मोहस्वरूपं तमोगुणात्मकं निमित्तमपेक्षते। तत्रापि देशकालादृष्टजात्यादयो निमित्तसहकारिणो विज्ञेयाः।

ननु धर्माधर्मादीनां निमित्तविशेषाणां सर्वत्र समानतया कथं व्यवस्था भविष्यतीत्यत्राह—**तेषाञ्चेति**। धर्मादिस्वरूपनिमित्तानाञ्चेत्यर्थः। नाविशिष्टत्वं किन्तु बहुत्वमेव, तत्र हेतुमाह—**परस्परमिति**। यद् उत्कृष्टं भवति तदितरस्य प्रतिरोधकं भवति अतस्तन्निमित्तमभिभावकं कथ्यते, यच्च निष्कृष्टत्वेन स्वकार्यजननेऽशक्तं भवति तन्निमित्तमभिभाव्यं भवति। एवञ्च सुखदुःखमोहात्मकानां त्रिगुणानां प्रागुक्ताभिभाव्याभिभावकस्वभावदर्शनात् नानात्वं सुस्पष्टमेव। सर्वेषामेव प्रतिक्षणपरिणामित्वात्, धर्मो यदा उत्कृष्टो भवति तदा सत्त्वगुणोऽपि तथाविधो भवति, स च तदा रजस्तमोऽभिभूय सुखं जनयति। एवमधर्मो रजःसहकृतो भूत्वा दुःखं, तमःसहकृतश्चाधर्मो मोहं जनयतीति निष्कर्षः। इत्थञ्च धर्मादिनिमित्तानां कदाचिदेव जायमानत्वान्न सर्वेषामविशिष्टत्वप्रसङ्ग इति भावः।

( ७ ) भावभूतपदार्थानां सुख-दुःखाद्यात्मकत्वं दृष्टान्तमुखेन सुस्पष्टयति—**तद् यथा एकैव स्त्रीति**। स्वामिनं = स्वस्वामिनम्। सुखाकरोति = अनुकूलतया पूर्णतयाऽऽनन्दयति। पृच्छति—**तत्कस्येति** ? उत्तरयति—स्वामिनं प्रति = पतिं प्रति, स्वस्वामि-

---

पेक्ष दुःखस्वरूप रजोगुण की अपेक्षा करता है। ऐसे ही मोह भी अपने प्रादुर्भाव में उत्कट अधर्मापेक्ष मोहस्वरूप तमोगुण की अपेक्षा रखता है। अतः वे सुख-दुःख-मोह-स्वरूप क्रमिक निमित्त सत्त्वगुण, रजोगुण तथा तमोगुण हैं। एवं ये तीनों गुण धर्म तथा अधर्म से सापेक्ष है, इस कारण धर्माऽधर्म भी निमित्त है और उन्हें परस्पर में अभिभाव्य, अभिभावक भाव के कारण नाना माना है। नानात्व का स्पष्टीकरण संस्कृत टीका में देखें।

( ७ ) दृष्टान्त के द्वारा भी इसका उपपादन करते हैं—'तद्यथा एकैव स्त्रीति'। अर्थात् जैसे एक ही स्त्री रूप, यौवन, कुल एवं शील से सम्पन्न होकर अपने पति को सुख प्रदान करती है। क्यों करती है ? इस प्रश्न का उत्तर दिया कि उस स्त्री का अपने पति के प्रति सुखात्मक सत्त्वरूप से समुद्भव होता है।

सपत्नीर्दुःखाकरोति, तत् कस्य हेतोः ? ताः प्रति तस्या दुःखरूपसमुद्भवात् । एवं पुरुषान्तरं तामविन्दमानं सैव मोहयति, तत् कस्य हेतोः ? तं प्रति तस्या मोहरूपसमुद्भवात् । अनया च स्त्रिया सर्वे भावा व्याख्याताः ।

( ८ ) तत्र यत् सुखहेतुः तत् सुखात्मकं सत्त्वम्, यद् दुःखहेतुस्तद् दुःखात्मकं रजः, यन्मोहहेतुस्तन्मोहात्मकं तमः ।

---

चित्तोद्भूतधर्मरूपनिमित्तवशात् स्वीयपतिम्प्रतीत्यर्थः । तस्याः=रूपयौवनादिसम्पन्नायाः स्त्रियाः । सपत्नीः=स्वसपत्नीः । दुःखाकरोति=पीडां ददाति । पुनः पृच्छति—तत्कस्य हेतोरिति । उत्तरयति—ताः प्रति=सपत्नीचित्तोद्भूताऽधर्मात्मकनिमित्तवशात् सपत्नीः प्रति । तस्याः=स्त्रियः । **दुःखरूपसमुद्भवादिति** । दुःखस्वरूपरजोगुणात्मकत्वेन प्रादुर्भावादिति भावः । तस्या एव रूपयौवनकुलशीलसम्पन्नायाः स्त्रियो मोहात्मकचित्तवृत्तिप्रयोजकत्वं दर्शयति—**एवं पुरुषान्तरमिति** । तामविन्दमानम्—ताम्=स्वाम्, अर्थात् रूपयौवनकुलशीलसम्पन्नां चैत्रीयकान्ताम्, अविन्दमानम्=अलभमानम् । पुरुषान्तरम्=चैत्रातिरिक्तं कमपि कामुकं मैत्रादिकम् । सैव=चैत्रीयभार्यैव । मोहयति=मोहान्धकारे पातयति, अर्थात् पुण्यात्मनस्ते बत चैत्रस्य स्त्रीरत्नमिदं न तु मन्दभाग्यस्य मम मैत्रस्येत्येवं विषादयतीति भावः ।

अयमेव विषयोऽन्यत्रापि भावपदार्थेषु बोद्धव्य इत्युपदिशति—**अनया स्त्रियेति** । एतत्कामिनीदृष्टान्तेनाऽन्येषामपि भावभूतपदार्थानां सुख-दुःखाद्यात्मकत्वं स्वयं विचारणीयम् ।

यथा मेघोन्नत्या जायमाना वृष्टिः कृषकजनानां कृते सुखमुत्पादयति, पान्थजनानाञ्च दुःखं, विरहिव्यक्तीनाञ्च मोहम् । एवं धार्मिको राजा धर्मावलम्बिनां जनानां कृते सुखं जनयति, पापात्मनाञ्च दुःखं मोहञ्चेति । एवमन्यान्यपि बहूनि उदाहरणानि सन्तीति ध्येयम् ।

( ८ ) प्रागुक्तं निमित्तनानात्वं दर्शितमपि पुनः स्मारयति—**तत्रेत्यादिना** । तत्र=एतत्कामिन्युदाहरणे । यत् सुखहेतुः=स्वीयपतिचित्तवृत्तिसुखकारणमस्ति । तत्=

---

और वही स्त्री रूप-यौवनादि गुणगणविशिष्ट होती हुई भी अपनी सपत्नी=सौतों को कष्ट पहुँचाती है । इसका कारण यह है कि उस सपत्नी के प्रति उसका दुःखरूप रजोगुण से समुद्भव=प्रकट होना होता है ।

और इसी प्रकार उसे न प्राप्त कर सकने वाले व्यक्ति को वह मोह में डाल देती है अर्थात् विषादग्रस्त कर देती है, कारण कि उस न पा सकने वाले पुरुष के प्रति उस स्त्री का मोहात्मक तमोगुणरूप से समुद्भव देखने में आता है ।

इस उपर्युक्त स्त्रीस्वरूप दृष्टान्त से विश्व के समस्त पदार्थों का त्रैगुणिक रूप स्वयं जिज्ञासु लोग समझ लें । समस्त त्रैगुणिक रूप इसी में निहित है ।

( ८ ) पूर्वोक्त स्त्री-दृष्टान्त में उस स्त्री का जो अपने पति के प्रति सुख का कारण है, वह सुखात्मक सत्त्वगुण है और सपत्नी के प्रति जो दुःख का कारण है, वह

( ९ ) सुखप्रकाशलाघवानां त्वेकस्मिन् युगपदुद्भूतावविरोधः, सहदर्शनात्। तस्मात् सुखदुःखमोहैरिव विरोधिभिरविरोधिभिरेकैकगुणवृत्तिभिः सुखप्रकाशलाघवैर्न निमित्तभेदा उन्नीयन्ते। एवं दुःखोपष्टम्भकत्वप्रवर्तकत्वैः, एवं मोहगुरुत्वावरणैः, इति सिद्धं त्रैगुण्यमिति॥ १३ ॥

---

कारणम्। सुखात्मकम्=पतिचित्तानुस्यूतं सुखधर्मस्वरूपम्। सत्त्वम्=सत्त्वगुणः। अर्थात् स्वीयकान्तचित्तवृत्तिसुखस्वरूपप्रत्ययं प्रति यन्निमित्तं तद् धर्मापेक्षं कान्ताकलेवरगतं सुखस्वरूपं सत्त्वं विज्ञेयमित्यर्थः। यद् दुःखहेतुरिति। यच्च सपत्नीचित्तवृत्तिदुःखस्य, हेतुः=कारणम्। तत्=कारणम्। दुःखात्मकम्=दुःखस्वरूपं=दुःखधर्मकम्। रजः=रजोगुणः। यन्मोहहेतुरिति। यच्च चैत्रादन्यमैत्रचित्तवृत्तिमोहस्य हेतुः=कारणम्। तत्=कारणम्। मोहात्मकम्=मोहस्वरूपम्, मोहधर्मकम्। तमः=तमोगुणः।

( ९ ) ननु धर्माऽधर्मः, उत्कटाऽधर्मादिरूपनिमित्तभेदात् सत्त्व-रजस्तमांसि परस्परं विलक्षणास्त्रयो गुणाः सिद्धयन्ति, तथैव सत्त्वस्यापि सुख-प्रकाश-लाघवात्मकधर्मरूपकारणवशात् त्रैविध्यं सेत्स्यति, एवं दुःख-उपष्टम्भकत्व-प्रवर्तकत्वधर्मरूपकारणवशात् रजसोऽपि त्रैविध्यं स्यात्, तथैव तमसोऽपि मोहगुरुत्व-आवरणरूपधर्मवशादेव त्रैविध्यं स्यादिति प्रत्येकस्य त्रयस्त्रयो भेदा जायन्ते, तथा च नवगुणा भविष्यन्तीत्यत्राह— **सुखप्रकाशलाघवानामिति**।। सुखस्य, प्रकाशस्य, लाघवस्य चेत्यर्थः। एकस्मिन्=सत्त्वगुणे। युगपत्=एककालावच्छेदेन=एकस्मिन्नेव काले। उद्भूतौ=उत्पत्तौ। अविरोधः=विरोधाभावः। वर्तते इति शेषः। कथमिति जिज्ञासायामाह—**सहदर्शनादिति**। एकस्मिन्नेव काले सहैव उत्पद्यन्ते।

**अयमाशयः**—यत्र गुणानां नानात्वे निमित्तं धर्मादिनानात्वं प्रयोजकं भवेत्तथा सहोत्पत्तौ विरोधश्च जायते तत्रैव संख्यायां वैलक्षण्यं कल्प्यते, यत्र चैतन्न दृश्यते तत्र संख्यावैलक्षण्यमपि नानुभूयते इति नियमात् सुखप्रकाशलाघवादीनां न सत्त्वाद्यतिरिक्तगुणत्वमिति गुणत्रयमेव सिद्धं नाधिकगुणत्वमिति भावः।

---

दुःखात्मक रजोगुण है एवं न पा सकने वाले पुरुष के प्रति जो मोह का अथवा विषाद का कारण है, वह मोहात्मक तमोगुण है।

( ९ ) 'सुखप्रकाशलाघवानाम्' इति। अर्थात् सुख, प्रकाश, लाघव—इन तीनों धर्मों का एक पदार्थ स्वरूप अधिकरण में=सत्त्वगुण में, एक साथ उत्पन्न या आविर्भूत होने में कोई विरोध नहीं है, क्योंकि उन सभी की एककालावच्छेदेन सहोपलब्धि देखने में आती है। इसलिए जैसे आपस में विरोधी जो सुख-दुःख मोह हैं, इनके अनुभवों से सत्त्व, रज, तमः स्वरूप परस्पर भिन्न निमित्तों का अनुमान होता है, वैसे ही एक अधिकरण सत्त्वगुण में विद्यमान, जो आपस में सर्वथा अविरोधी सुख, प्रकाश तथा लाघव है, उनका निमित्त केवल सत्त्वगुण है या धर्म है; वहाँ भेद ही नहीं है फिर भेदानुमान कैसा ?

एवं दुःख, उपष्टम्भकत्व, प्रवर्तकत्व इनसे एवं मोह, गुरुत्व, आवरण, इनसे भी

( १ ) स्यादेतत्, अनुभूयमानेषु पृथिव्यादिष्वनुभवसिद्धा भवन्त्वविवेकित्वादयः। ये पुनः सत्त्वादयो नाऽनुभवपथमधिरोहन्ति, तेषां कुतस्त्यमविवेकित्वं विषयत्वं सामान्यत्वमचेतनत्वं प्रसवधर्मित्वं च ? इत्यत आह—

---

तस्मात्=अविरोधादेव। इव=यथा। विरोधिभिः=परस्परं विरोधशीलैः। सुखदुःखमोहैः। निमित्तभेदा उन्नीयन्ते=अपेक्ष्यन्ते। ( तथा ) अविरोधिभिः=एकस्मिन् काले समुत्पत्तावविरोधिभिः। एकैकगुणवृत्तिभिः=सत्त्वगुणवृत्तिभिः=सुखप्रकाशलाघवैः, एवं रजोगुणवृत्तिभिः=दुःखोपष्टम्भकत्वप्रवर्तकत्वैः, तथा तमोगुणवृत्तिभिः=मोहगुरुत्वावरणैः। निमित्तभेदा न उन्नीयन्ते=नापेक्ष्यन्ते, अपि तु सत्त्वगुणवृत्तिस्वरूपैः सुखादिभिः केवलं धर्मापेक्षं सत्त्वमेवोन्नीयते। रजोगुणवृत्तिस्वरूपैश्च दुःखादिभिः केवलम् अधर्मापेक्षं रजोगुण उन्नीयते। एवं तमोगुणवृत्तिस्वरूपैश्च मोहादिभिरपि एकमात्रमविद्यापेक्षं तमोऽपेक्ष्यते इति भावः। उपसंहारमाह—**इति सिद्धं त्रैगुण्यमिति** ॥ १३ ॥

( १ ) सर्वेषां भावानां त्रिगुणात्मकत्वं साधयित्वा इदानीं तेनैव त्रिगुणात्मकत्वेन हेतुना प्रधानादीनामविवेकित्वादिधर्मवत्त्वं बोधयितुम् 'अविवेक्यादेः सिद्धिः' इत्यादिकारिकामवतारयति—**स्यादेतदिति**। एतत्=अनुभूयमानेष्वित्यादिना वक्ष्यमाणम्। अनुभूयमानेषु=प्रत्यक्षविषयेषु। अनुभवसिद्धाः=प्रत्यक्षविषयीभूताः। अविवेकित्वादयः=अविवेकित्वादिधर्माः। 'परन्तु' इति योजनीयम्। सत्त्वादयः=सत्त्वादिगुणाः। नाधिरोहन्ति=न प्रत्यक्षतो दृश्यन्ते। कुतस्त्यम्=कस्मात् ( प्रमाणात् ) अवगतम् ? 'सत्त्वादय' इत्यत्र सत्त्वपदेन सत्त्वादिगुणत्रयसाम्यावस्थास्वरूपा प्रकृतिर्गृह्यते, आदिना च महत्तत्त्वादयो गृह्यन्ते। अविवेकित्वम्=परस्परं मिलित्वा कार्यकरणशालित्वम्। विषयत्वम्=भोगसाधनत्वम्। भोगश्च सुखदुःखान्यतरसाक्षात्काररूपः। सामान्यत्वम्=साधारणत्वम्, नानापुरुषभोग्यत्वम्। अचेतनत्वं=जडत्वम्। प्रसवधर्मित्वम्=सरूपविरूपाऽन्यतरपरिणामशालित्वञ्चेति जिज्ञासायामाह—**अविवेक्यादेः सिद्धिरिति**।

---

निमित्त मूल गुणों का भेदानुमान नहीं किया जा सकता है। कारण कि प्रथम में निमित्त रजोगुण या अधर्म है, जिससे वहाँ न तो रजोगुण का भेद रजोगुण में है और न अधर्म का भेद अधर्म में है, अतः वहाँ भी दोनों जगह भेदानुमान नहीं बनता है। इसी प्रकार मोह, गुरुत्व, आवरण इनसे भी उनके निमित्तस्वरूप भिन्न-भिन्न गुणों का अनुमान नहीं किया जा सकता है। अतः तीन गुण ही सिद्ध हैं, यह सिद्ध हो गया ॥ १३ ॥

( १ ) यह ठीक है कि अनुभूयमान अर्थात् प्रत्यक्षगम्य पृथिवी आदि स्थूलभूतों में अविवेकित्व आदि धर्मों की सत्ता अनुभवसिद्ध हो, परन्तु जो सत्त्वादि गुण अर्थात् महत्तत्व, प्रधान आदि प्रत्यक्षगम्य नहीं हैं, उनमें अविवेकित्व, विषयत्व, अचेतनत्व, प्रसवधर्मित्व आदि धर्मों की सिद्धि कैसे होगी ? इसके उत्तर में ईश्वरकृष्ण कहते हैं—'अविवेक्यादेः सिद्धिः'।

**अविवेक्यादेः सिद्धिस्त्रैगुण्यात्तद्विपर्ययाभावात् ।**
**कारणगुणात्मकत्वात्कार्यस्याऽव्यक्तमपि सिद्धम् ॥ १४ ॥**

( २ ) 'अविवेक्यादेः' इति । अविवेकित्वमविवेकि । यथा 'द्व्येकयोर्द्विवचनैकवचने' ( पा० सू० १।४।२२ ) इत्यत्र द्वित्वैकत्वयोरिति, अन्यथा ह्येकेष्विति स्यात् ।

( ३ ) कुतः पुनरविवेकित्वादेः सिद्धिरित्यत आह—'त्रैगुण्यात्' इति ।

---

अविवेकित्वादिधर्माणां प्रागुक्तानां प्रधानमहदादौ सिद्धिः त्रैगुण्यादिति हेतुना कार्या। अर्थात्—प्रधानम् अविवेकि त्रिगुणत्वात् घटादिवत् महत्तत्त्वादिकमपि पक्षीकृत्याऽनुमानं बोध्यम् । एतेन अव्यक्तं सिद्ध्यतीति भावः । एवं 'यत्र अविवेकित्वरूपं साध्यं नास्ति तत्र त्रैगुण्यरूपहेतुरपि नास्ति' इतीयं व्यतिरेकव्याप्तिरपि अव्यक्तसाधिका बोध्या:, तदुक्तं कारिकायां—**तद्विपर्ययाभावादिति ।** इयञ्चान्वयव्यतिरेकव्याप्तिरग्रे स्फुटीभविष्यति ।

**अन्वयः**—अविवेक्यादेः सिद्धिः त्रैगुण्यात् तद्विपर्ययाभावात् ( भवति ), कार्यस्य कारणगुणात्मकत्वात् अव्यक्तमपि सिद्धम् ॥ १४ ॥

( २ ) 'अविवेकि' इति पदं भावप्रधाननिर्देशेन अविवेकित्वपरम् । तत्रोदाहरणतया पाणिनीयसूत्रमप्याह—**'द्व्येकयोः'** इति । ननु सूत्रे द्वित्वविशिष्ट-एकत्वविशिष्टपरतैव कथन्न स्वीक्रियते ? इत्यत्राह—**अन्यथा इति ।** सूत्रे द्व्येकशब्दयोर्द्वित्वैकत्वपरत्वानङ्गीकारेणेत्यर्थः । द्विशब्देन द्वित्वविशिष्टद्वयोर्ग्रहणे एकशब्देनैकत्वविशिष्टैकत्वस्य ग्रहणे ततश्च तयोर्द्वन्द्वे समासे कृते सति द्व्येकशब्दो बहुसंख्याकः स्यात्तथा च सति सूत्रे 'द्व्येकेषु' अयमेव निर्देशः स्यात् न तु 'द्व्येकयोः' इति, तथा निर्देशाऽदर्शनाच्च द्वित्वैकत्वपरताऽत्र निश्चीयते ।

( ३ ) पृच्छति—**कुतः पुनरिति ।** कस्माद्धेतोरविवेकित्वादयः सिद्ध्यन्ति ? इत्य-

---

**कारिकार्थ**—त्रिगुणात्मक होने के कारण अव्यक्त ( प्रधान ) के अविवेकत्वादि गुणों की सिद्धि हो जाती है । जहाँ अविवेकित्वादि धर्मों का अभाव है, वहाँ त्रैगुण्य का भी अभाव है; जैसे आत्मा । कार्य सर्वदा कारण गुणात्मक देखा जाता है, इसलिए त्रिगुणात्मक अव्यक्त के सिद्ध होने में कोई बाधा नहीं ।

( २ ) कारिका में 'अविवेकि' आदि पद भावप्रधान-निर्देश से 'अविवेकित्व' आदि धर्मपरक हैं । वहाँ अनुरूप दृष्टान्त पाणिनि का सूत्र है—'द्व्येकयोर्द्विवचनैकवचने', यहाँ पर द्वि और एक पद क्रमशः द्वित्व तथा एकत्व परक हैं ।

भावप्रधान अर्थ कर देने पर ही यहाँ पर 'द्व्येकयोः' यह द्विवचन का प्रयोग संगत होता है । अन्यथा 'द्वि' 'एक' इन शब्दों के अर्थ में 'त्रित्व' या 'बहुत्व' आने से 'द्व्येकयोः' के स्थान पर 'द्व्येकेषु' ऐसा बहुवचनान्त का प्रयोग होना चाहिए था ।

( ३ ) प्रश्न—तब फिर प्रधान तथा व्यक्त में अविवेकित्व आदि धर्मों की सिद्धि= अनुमिति कैसे होगी ?

'यद्यत् सुखदुःखमोहात्मकं तत्तदविवेकित्वादियोगि यथेदमनुभूयमानं व्यक्तम्' इति स्फुटत्वादन्वयो नोक्तः।

(४) व्यतिरेकमाह—'तद्विपर्ययाभावात्' इति। अविवेक्यादिविपर्यये पुरुषे त्रैगुण्याभावात्। अथ वा व्यक्ताव्यक्ते पक्षीकृत्याऽन्वयाभावेनाऽवीत एव हेतुस्त्रैगुण्यादिति वक्तव्यः।

(५) स्यादेतत्—अव्यक्तसिद्धौ सत्यां तस्याऽविवेकित्वादयो धर्माः

---

आह—त्रैगुण्यादिति। तथा चेदमनुमानं फलितम्—प्रधानम् अविवेकित्वादियोगि त्रैगुण्यात् घटपटादिवत्, इत्यत्रानुमानप्रयोगेऽन्वयव्याप्तिं प्रदर्शयितुमाह—**यद्यत्सुखदुःखमोहात्मकमिति**। उदाहरणमाह—**यथेदमिति**।

(४) व्यतिरेकमाह—**तद्विपर्ययाभावादिति**। यन्नाविवेकि तन्न त्रिगुणं, यथा पुरुषः (आत्मा)। तदुक्तम्—**अविवेक्यादिविपर्यये पुरुषे इति**। अविवेकित्वादिधर्माभाववति। पुरुषे=आत्मनीत्यर्थः।

'त्रैगुण्यम्' इति च नेदानीमपि सिद्धं कथन्तर्हि अन्वयव्याप्तिमुखेनाऽविवेकित्वादिसिद्धिः स्यादित्याशङ्क्य व्यतिरेकव्याप्तिमुखेनैव व्यक्ताव्यक्तयोः सिद्धिर्भविष्यतीत्याह—**अथवेति**। **व्यक्ताव्यक्ते इति**। महदादिपृथिव्यन्तं व्यक्तम्, अव्यक्तञ्च प्रकृतेरपरपर्यायभूतं प्रधानम्। पक्षीकृत्य=व्यक्ताव्यक्तात्मकं सर्वं जडवर्गं पक्षीकृत्येत्यर्थः। अन्वयाभावेन=अन्वयव्याप्तिविशिष्टदृष्टान्ताभावेन। अवीतः=व्यतिरेकव्याप्तिविशिष्टः, व्यतिरेकसहचारवानित्यर्थः। तथा च व्यक्ताव्यक्तरूपस्य सकलजडवर्गस्य पक्षत्वे पक्षातिरिक्ताऽन्वयसहचारोदाहरणाभावेन तदानीं त्रैगुण्यादिति हेतुर्व्यतिरेकी वक्तव्यः नान्वयीति तु निष्कर्षः।

(५) इदानीं 'कारणगुणात्मकत्वात्' इति कारिकांशमवतारयितुं शङ्कते—**स्यादेतदिति**। अव्यक्तसिद्धौ सत्याम्—प्रथमम् अव्यक्तस्य=प्रधानस्य सिद्धौ सत्यामेव,

---

उत्तर—'**त्रैगुण्यात्**' अर्थात् त्रैगुण्य हेतु से अविवेकित्व आदि धर्मों की सिद्धि=अनुमिति होती है। अर्थात् जो-जो पदार्थ त्रिगुणात्मक=सुख-दुःखमोहात्मक होते हैं, वे सभी 'अविवेकित्व' आदि धर्म वाले होते हैं; जैसे कि यह अनुभूयमान=प्रत्यक्षदृष्ट घट-पट आदि पदार्थ। इस प्रकार अन्वयव्याप्ति स्फुट=स्पष्ट होने से नहीं कही।

(४) 'व्यतिरेकमाह'=व्यतिरेक व्याप्ति को बतलाते हैं—**तद्विपर्ययाभावात्**। अर्थात् जो अविवेकित्व आदि धर्मवाला नहीं, वह त्रिगुणत्वादि धर्मवाला भी नहीं; जैसे सांख्यपुरुष। उसे स्पष्ट करते हैं—'**अविवेक्यादिविपर्यये**' इति। अर्थात् 'अविवेकित्व' आदि साध्यस्वरूप धर्मों का अभाव होने से पुरुष में त्रिगुणत्व=त्रैगुण्यहेतु का भी अभाव है। और यदि स्थूल, सूक्ष्म=व्यक्त और अव्यक्त अर्थात् समस्त जडवर्ग को पक्ष करते हैं, तब अन्वयीदृष्टान्त न होने से अवीत=व्यतिरेकी ही हेतु 'त्रैगुण्यात्' इसे कहना होगा, इस दृष्टिकोण से कहते हैं—'**अथवा**' इति।

(५) यह सब कथन ठीक है, परन्तु अव्यक्त की सिद्धि होने पर ही उसमें

सिध्यन्ति, अव्यक्तमेव त्वद्याऽपि न सिध्यति, तत्कथमविवेकित्वादिसिद्धिरत आह—'कारणगुणात्मकत्वात्' इति ।

अयमभिसन्धिः—कार्यं हि कारणगुणात्मकं दृष्टम्, यथा तन्त्वादिगुणात्मकं पटादि । तथा महदादिलक्षणेनाऽपि कार्येण सुखदुःखमोहरूपेण स्वकारणं सुखदुःखमोहात्मकं प्रधानमव्यक्तं सिद्धं भवति ॥ १४ ॥

( १ ) स्यादेतत्—'व्यक्तात् व्यक्तमुत्पद्यते' इति कणभक्षाक्षचरणतनयाः । परमाणवो हि व्यक्ताः, तेभ्यो द्व्यणुकादिक्रमेण पृथिव्यादिलक्षणं कार्यं व्यक्तमारभ्यते । पृथिव्यादिषु च कारणगुणक्रमेण रूपाद्युत्पत्तिः । तस्मात् व्यक्ताद् व्यक्तस्य तद्गुणस्य चोत्पत्तेः कृतमदृष्टचरेणाऽव्यक्तेनेत्यत आह—

---

तत्पश्चात्, तस्य=प्रधानस्य अव्यक्तस्येति यावत् । अविवेकित्वादयो धर्माः सिद्ध्यन्ति इति मिश्रोक्तेरयमाशयः—धर्मस्य सिद्धौ तदाश्रयधर्मिणः सिद्धिः पूर्वमपेक्षते, तथा च अव्यक्तसिद्ध्यभावे कथम् अविवेकित्वादिधर्माणां सिद्धिरत आह—कारणगुणात्मकत्वात् इति ।

अयमभिसन्धिरिति । अयमाशय इत्यर्थः । कार्यम्=पटादिकार्यम् । कारणगुणात्मकम्=तन्त्वादिरूपकारणवृत्तिगुणात्मकमित्यर्थः । तथा महदादिलक्षणेनापीति । महत्तत्त्वादिस्वरूपेणापीत्यर्थः । सुख-दुःखमोहरूपेण=सुख-दुःखमोहगुणकेन लिङ्गेन । स्वकारणम्=महत्तत्त्वादिरूपं कारणम् । सुख-दुःखमोहात्मकम्=सुख-दुःखमोहगुणकम् ॥ १४ ॥

( १ ) व्यक्तेभ्यः परमाणुभ्य एव जगदात्मकप्रपञ्चस्योत्पत्तिर्भविष्यति काऽऽवश्यकताऽव्यक्तस्येत्याशङ्क्य कारिकामवतारयति—स्यादेतदित्यादिना । कणभक्षाक्षचरणतनयाः—कणभक्षः=कणादः, अक्षचरणः=गोतमः, तनयाः=तयोर्मतानुयायिनः शिष्या इत्यर्थः । कृतम्=अलम् । अदृष्टचरेण=अप्रामाणिकेन रूपादिविहीनेन । अव्यक्तेन=प्रधानेन । तथा च सर्वथा निष्प्रयोजनं प्रधानं नाऽङ्गीकार्यम् इति भावः ।

---

अविवेकित्व आदि धर्म सिद्ध हो सकते है, परन्तु अभी तक तो अव्यक्त ही सिद्ध नहीं हो पाया है, तब फिर कैसे उसमें अविवेकित्व आदि धर्म सिद्ध हो सकेंगे ? इसके उत्तर में कहते हैं—कारणगुणात्मकत्वात् इति । अर्थात् कारण के गुण जो सुख, दुःख, मोहादि तदात्मक ही कार्य घट-पट, आदि को भी हम पाते हैं, उसी को और स्पष्ट करते हैं—'अयमभिसन्धिः', अभिप्राय यह है कि कार्यमात्र कारण गुणवाला देखा गया है; जैसे तन्तु आदि कारण के गुण वाला पट आदि कार्य । वैसे ही सुख, दुःख, मोहात्मक महत्तत्व आदि कार्यों से सुख, दुःख, मोहरूप तीन गुण वाला अव्यक्त=प्रधान उनका कारण सिद्ध होता है ॥ १४ ॥

( १ ) 'भेदानां परिमाणात्' इत्यादि कारिका के अवतरण के लिए शङ्का करते है—स्यादेतदिति । यह ठीक है कि व्यक्त से व्यक्त की उत्पत्ति होती है, ऐसा कणभक्ष=कणाद तथा अक्षचरण=गोतम मतानुयायी लोगों का कथन है । अर्थात् परमाणु

अत्र कणादगोतममतानुयायिनामयमाशयः यत्—सर्वतः प्राक् संसारस्य प्राणिनां भोगं सम्पादयितुं महेश्वरस्य सृष्टेरिच्छा जायते, अनन्तरं लब्धवृत्तीनि यानि अदृष्टानि तादृशाऽदृष्टविशिष्टाऽऽत्मसंयोगाद् दोधूयमानेषु वाय्वीयपरमाणुषु प्राथमिककर्मोत्पत्तिः, पश्चाद् द्वयोः वाय्वीयपरमाण्वोः संयोगः, तदनन्तरं द्वयणुकोत्पत्तिः, ततस्त्रिषु द्वयणुकेषु कर्मोत्पत्तिः, ततस्तेषां संयोगः, अनन्तरं तादृशसंयोगजन्यत्र्यणुकोत्पत्तिः, इत्थञ्च चतुरणुकाद्युत्पत्तिक्रमेण महावायु उत्पद्य आकाशे अत्यन्तं कम्पमानस्तिष्ठति, ततस्तस्मिन् वायौ जलपरमाणुभ्यो द्वयणुकादिक्रमेण महाजलराशिः ( समुद्रः ) समुत्पन्नः अत्यन्तं प्लवनशीलस्तिष्ठति । ततस्तस्मिन् महोदधौ पृथ्वीपरमाणुतो द्वयणुकादिक्रमेण महापृथ्वी समुत्पद्य घनीभूता कठिना सती अवतिष्ठते । ततस्तस्मिन्नेव जले तैजसेभ्यः परमाणुभ्यो द्वयणुकादिक्रमेण समुत्पन्नो महांस्तेजोराशिर्देदीप्यमानस्तिष्ठति । एवं जायमानेषु चतुर्षु महाभूतेषु महेश्वरस्य इच्छामात्रात् तैजसेभ्योऽणुभ्यः पार्थिवादिपरमाणुसहितेभ्यो महदण्डं जायते । तस्मिंश्च महदण्डे चतुर्वदनकमलं सकललोकपितामहं ब्रह्माणं सकलभुवनसहितम् उत्पाद्य प्रजासृष्टिकार्ये नियुङ्क्ते । स च ब्रह्मा परमेश्वरेण नियुक्तो भूत्वा अतिशयज्ञानवैराग्यैश्वर्यसम्पन्नः सन् सर्वेषां प्राणिनां यानि सन्ति कर्माणि तेषां विविधं पाकं फलोपधानकालं ज्ञात्वा कर्मानुरूपज्ञानवैराग्यभोगायुषः सुतान्, प्रजापतीन्, मानसान् मनून्, देवर्षिपितृगणान्, मुखबाहूरुपादतश्चतुरो वर्णान्, अन्यानि चोच्चावचानि भूतानि सृष्ट्वा पूर्वजन्मसंस्कारानुरूपधर्मज्ञानवैराग्यैश्वर्यैः संयोजयति । इत्येषा कणादगोतमादीनां सृष्टिप्रक्रिया प्रशस्तभाष्ये वर्णिता ।

सर्वत्रेदमेव श्रूयतेऽनुभूयते च यत् सूक्ष्मात् स्थूलपदार्थस्योत्पत्तिर्जायते; यथा तन्तुभ्यः पटः, कपालाभ्यां घट इति । एवमपकर्षापकर्षक्रमेण अपकर्षस्य परां कोटिमाटीकमानं कारणद्रव्यमतिसूक्ष्मं निरवयवमेव सन्तिष्ठते, तदेव परमाणुस्वरूपम् । तत्र परमाणौ अदृष्टवदात्मसंयोगात् ईश्वरीयचिकीर्षावशाद्वा प्रथमं तावत् कर्म समुत्पद्यते । अनन्तरञ्चाऽयमेव परमाणुः परमाण्वन्तरेण संयुज्य द्वयणुकं जनयति । ततश्च त्रीणि द्वयणुकानि परस्परं सम्भूय त्र्यणुकं समुत्पादयन्ति । एवं क्रमेण पुनश्चतुरणुकादिक्रमेण पृथिव्यादिस्थूलमहाभूता जायन्ते । तत्रापि सूक्ष्मद्रव्याणि यथा स्थूलद्रव्यजनका भवन्ति तथैव कारणगुणाः कार्यगतगुणानारभन्ते, इत्यस्ति परमाणुभ्यो जगदुत्पत्तिप्रक्रिया ।

इत्थञ्च रूपादिगुणविशिष्टकार्यदर्शनात् तथाविधजगतः कारणेनापि तथाविधेनैव

---

व्यक्त है, उनसे द्वयणुक आदि क्रम से पृथिवी आदि स्वरूप व्यक्त कार्य का आरम्भ = उत्पत्ति होती है और फिर पृथिवी आदि में कारणगुणक्रम से अर्थात् कारण में जैसे गुण उत्पन्न होते हैं, वैसे ही कार्य में उत्पन्न होते हैं, अर्थात् जैसे सूक्ष्मद्रव्य स्थूलद्रव्यों को उत्पन्न करते हैं, वैसे ही कारणसमवायी गुण कार्य में अपने समान जातीय गुणों को उत्पन्न करते हैं। इस क्रम से ही रूपादि की उत्पत्ति होती है। इसलिए व्यक्त से व्यक्त और उसके गुण की उत्पत्ति होती है, यही कथन ठीक है और अदृष्टचर अव्यक्त = प्रकृति से महदादि क्रम से यह व्यक्त=जगत् उत्पन्न होता है, सांख्यों का यह कहना कृतम्=व्यर्थ है। इसके उत्तर में ईश्वरकृष्ण कहते हैं—'भेदानाम्' इति ।

**भेदानां परिमाणात् समन्वयात् शक्तितः प्रवृत्तेश्च ।**
**कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य ॥ १५ ॥**
**कारणमस्त्यव्यक्तं प्रवर्तते त्रिगुणतः समुदयाच्च ।**
**परिणामतः सलिलवत् प्रतिप्रतिगुणाश्रयविशेषात् ॥ १६ ॥**

---

भवितव्यम्, तथाविधश्च कारणं रूपादिमद् व्यक्तं परमाणुद्रव्यमेव, अव्यक्तस्य साख्य-कारणस्य रूपादिविहीनत्वान्न तादृशत्वत्वमिति भावः ।

अन्वयः—भेदानां कारणम् अव्यक्तम् अस्ति (कुतः) परिमाणात् शक्तितः प्रवृत्तेश्च कारणकार्यविभागात् वैश्वरूपस्य अविभागात् ( तच्च अव्यक्तम् ) त्रिगुणतः समुदायाच्च प्रवर्तते प्रतिप्रतिगुणाश्रयविशेषात् परिणामतः सलिलवत् ।

---

कारिकार्थ—महदादिकार्यस्वरूप भेदों का उपादानकारण अव्यक्त है। इसे पाँच हेतुओं से सिद्ध करते है। जैसे—१. परिमाणात्=महदादि कार्य परिमित है=अव्यापी है, अतः इन्हें व्याप्त करके रहने वाला कोई व्यापक कारण अवश्य है, वही अव्यक्त है। २. समन्वयात्=महदादिकार्य सुख, दुःख, मोहात्मक समानरूप वाले है, जिसके समानरूपवाले ये है, वही इनका कारण अव्यक्त है। ३. शक्तितः प्रवृत्तेश्च=कारण शक्ति से कार्य की प्रवृत्ति=प्रादुर्भाव होती है और वह कारणशक्ति कार्य की अव्यक्तत्वरूपा शक्ति है, तादृशशक्तिमत् कारण ही अव्यक्त है। ४. कारणकार्यविभागात्=जिस परम अव्यक्त कारण से महदादिभूम्यन्त ( विश्वरूप ) कार्य का विभाग=आविर्भाव होता है, वही कारण अव्यक्त है। ५. वैश्वरूप्यस्याऽविभागात्=विश्वरूप अर्थात् जगदात्मक कार्य का अविभाग=तिरोभाव जिस कारण में होता है, वही कारण अव्यक्त है।

प्रश्न—यह प्रधानापरपर्यायभूत अव्यक्त इस विश्वरूप कार्य के आविर्भाव=उत्पादन में कैसे प्रवृत्तिशील होता है ?

उत्तर—'प्रवर्तते त्रिगुणतः, समुदयाच्च' इति। अर्थात् अव्यक्त=प्रकृति की प्रवृत्ति दो प्रकार की है—एक प्रलयकालीन और दूसरी सृष्टिकालीन। प्रलयकालीन प्रवृत्ति वह है जब तीनों गुण आपस मे पृथक्-पृथक् होकर अपने-अपने स्वरूप से प्रवृत्तिशील होते हैं और सृष्टिकालीन प्रवृत्ति वह है जब सृष्टिकाल में ये तीनों गुण ( सत्त्व, रज, तम ) गौण, प्रधानभाव से आपस में मिल-जुल कर ही किसी भी कार्य के उत्पादन में प्रवृत्तिशील बनते हैं।

प्रश्न—एक-एक रूप वाले गुणों की यह अनेक रूप वाली प्रवृत्ति कैसे होती है ?

उत्तर—'प्रतिप्रतिगुणाश्रयविशेषात्' इत्यादि। प्रत्येक गुण की नाना, विभिन्न आश्रयों को प्राप्त कर लेने के पश्चात् अनेकरूपात्मिका प्रवृत्ति स्वाभाविक है। जैसे—जल का नारियल, ताल, बेल आदि विभिन्न आश्रयों को प्राप्त कर मधुर, अम्ल, तिक्त आदि विभिन्न रस वाला हो जाना स्वाभाविक है।

( २ ) 'भेदानाम्' इति। भेदानां विशेषाणां महदादीनां भूम्यन्तानां कार्याणां कारणं मूलकारणमस्त्यव्यक्तम्। कुतः? 'कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य'। कारणे सत् कार्यमिति स्थितम्। तथा च यथा कूर्मशरीरे सन्त्येवाऽङ्गानि निःसरन्ति विभज्यन्ते—'इदं कूर्मशरीरम्, एतान्येतस्याऽङ्गानि' इति।

( ३ ) एवं निविशमानानि तस्मिन् अव्यक्तीभवन्ति। एवं कारणान्मृ-

---

( २ ) इदं प्रागुक्तं सर्वं निरस्यति—'**भेदानाम्**' इत्यादिकारिकया। भिद्यन्ते=परस्परं व्यावृत्ताः=भिन्ना ज्ञायन्ते कार्याणि महत्तत्त्वादीनि। तेषां 'कारणमव्यक्तमस्ती'त्यग्रिमेणान्वयः। भेदानाम्=महदादिकार्याणाम्। कारणम् अव्यक्तमस्ति। कस्मात्? कारणकार्यविभागात्=कारणे उत्पत्तिपूर्वकालत एव कार्यस्य विद्यमानत्वात् कारणसान्निध्यात्तस्याऽऽविर्भावदर्शनात् प्रतिसर्गे अविभागाद् वैश्वरूप्यस्येति। वैश्वरूप्यस्य=जगतः, अविभागात्=तिरोभावात्। 'कारणे सत्कार्यम्'। इति स्थितम्=अधस्तात् सिद्धान्तितम्। एवञ्च यत्र महादादीनां तिरोभावस्तदेवाऽव्यक्तं प्रधानम्। तत्र दृष्टान्तमाह—**तथा च यथा इति**। सन्त्येव=विद्यमानान्येव। अङ्गानि=हस्तपादादीनि। निःसरन्ति=बहिरागच्छन्ति। विभज्यन्ते=विभक्ता भवन्ति=आविर्भूय विभक्तत्वेन प्रतीयन्ते इत्यर्थः। विभागप्रतीतिं दर्शयति—'**इदं कूर्मशरीरम् एतान्यस्याऽङ्गानि इति**'। अस्य=कूर्मस्य।

( ३ ) निविशमानानि=अन्तःप्रवेशं लभमानानि। तस्मिन्=कूर्मशरीरे। अव्यक्तीभवन्ति=अव्यक्तावस्थां गच्छन्ति=स्वीयसूक्ष्मावस्थावसानं प्राप्नुवन्ति।

---

( २ ) '**भेदानामि'ति**। अर्थात् भिद्यन्ते=परस्परं व्यावृत्ताः सन्तः प्रतीयन्ते इति भेदास्तेषामित्यर्थः। अर्थात् जो परस्पर में भेदावच्छिन्न होकर प्रतीयमान हों, वे महत्तत्त्व से लेकर भूमि=पृथिवी पर्यन्त समस्त तत्त्व विशेष कहलाते हैं, उन सभी का मूल उपादानकारण अव्यक्त है।

प्रश्न—कुतः=मूल उपादानकारण अव्यक्त क्यों है?

उत्तर—'**कारणकार्यविभागात्' इति**। सृष्टिक्रम में जिस कारण से ही कार्य का विभाग=प्रादुर्भाव होता है। अतः जिस कारण से कार्य का विभाग होता है, वही कारण अव्यक्त=प्रकृति=प्रधान है।

एवं जिस कारण में प्रलयकाल में समस्त कार्य तिरोहित हो जाते हैं, वही कारण अव्यक्त है। इससे यह सिद्ध है कि कारण में कार्य पहिले ही सत्=विद्यमान है। इसी बात को दृष्टान्त द्वारा स्पष्ट करते हैं—**तथा च यथा कूर्मशरीरे इति**। जैसे कूर्मशरीर में विद्यमान उसके अंग, हस्त, पादादि जब बाहर निकलते हैं तब विभक्त होते हैं। विभागकाल में यह प्रतीति होती है कि 'यह कूर्म शरीर है और ये इसके हस्त, पादादि अंग हैं, इस प्रकार वे पृथक् प्रतीत होते हैं।

( ३ ) इसी प्रकार जब कूर्म=कछुवे के शरीर में वे अङ्ग निविशमान हो जाते हैं, तब वे अव्यक्तावस्था को प्राप्त हो जाते हैं।

त्पिण्डाद्धेमपिण्डाद्वा कार्याणि घटमुकुटादीनि सन्त्येवाऽऽविर्भवन्ति विभज्यन्ते। सन्त्येव पृथिव्यादीनि कारणात्तन्मात्रादाविर्भवन्ति विभज्यन्ते, सन्त्येव च तन्मात्राण्यहङ्कारात् कारणात्, सन्नेवाऽहङ्कारः कारणान्महतः, सन्नेव च महान् परमाव्यक्तात्। सोऽयं कारणात् परमाव्यक्तात् साक्षाद् पारम्पर्येणान्वितस्य विश्वस्य कार्यस्य विभागः।

---

दृष्टान्तगतं विषयं प्रदर्श्य दार्ष्टान्तेऽपि तद् दर्शयति—एवं कारणान्मृत्पिण्डादित्यादिना। हेमपिण्डात्=सुवर्णपिण्डात्। कार्याणि=मृत्पिण्डकार्याणि घटादीनि, हेमपिण्डकार्याणि मुकुटादीनि। सन्त्येव=स्वस्वकारणे मृत्पिण्डादौ वर्तमानान्येव। सन्त्येव च पृथिव्यादीनि=पृथिवीजलतेजोवाय्वाकाशादीनि। कारणात्=उपादानकारणात्। तन्मात्रात् =स्वीयसूक्ष्मावस्थागतगन्धरसरूपस्पर्शशब्दस्वरूपात्। 'आविर्भवन्ति-विभज्यन्ते' इति पूर्वसम्बन्धो बोध्यः। एवमेवाऽग्रेऽपि बोध्यम्—अहङ्कारात् कारणादित्यादिना। तन्मात्राणि च स्वकारणात् अहङ्कारात् आविर्भवन्ति विभज्यन्ते च। एवमहङ्कारः स्वकारणान्महतः। महांश्च स्वकारणात् परमाव्यक्तात्। उपसंहरति—सोऽयमिति। इदञ्च 'विभाग' इत्यग्रिमेणान्वयः। अर्थाद् दर्शितोऽयं विभागः। कारणात्=जगत्कारणात्। परमाव्यक्तात्=मूलप्रकृतेः। साक्षात्=तत्र च महत्तत्त्वरूपं कार्यं परमाव्यक्ताख्येन मूलप्रकृत्या सह साक्षादन्वेति। पारम्पर्येण=घट-पटादीनि च कार्याणि परम्परयाऽन्वितानि भवन्ति। अन्वितस्य=सम्बद्धस्य। सम्बन्धश्च साक्षात्स्थले तादात्म्यं, परम्परास्थले च तादात्म्यतादात्म्यादिरूपं विज्ञेयम्। इत्थञ्च मूलकारणे परमाव्यक्ते सत एव कार्यस्य महदादिस्वरूपस्य घटपटादिरूपस्य च आविर्भावरूपनिःसरणरूपो विभागो जायते, स च विभागोऽव्यक्तादेव भवतीति प्रथमहेतुना परमाव्यक्तं मूलकारणं जगतः सिद्धयतीति भावः।

---

इसी प्रकार घट के कारण मृत्तिकापिण्ड में और मुकुट आदि स्वर्णाभूषण के कारण हेम=स्वर्णपिण्ड में विद्यमान होते हुए ही क्रमशः घट, मुकुट आदि कार्य उन मृत्पिण्ड आदि कारणों से आविर्भूत होते हैं और विभक्त हो जाते हैं।

ऐसे ही पृथिवी आदि महाभूत अपने कारणतन्मात्राओं में पूर्वकाल से विद्यमान होते हुए ही उन्हीं अपने-अपने कारणतन्मात्राओं से आविर्भूत होकर विभक्त होते हुए से प्रतीत होते हैं। अन्त में ( प्रलयकाल में ) उन्हीं अपने अपने कारणों में लीन हो जाते हैं।

इसी प्रकार तन्मात्राएँ भी अपने कारण अहङ्कार में पूर्वकाल से विद्यमान होती हुई उसी से आविर्भूत होकर विभक्त हो जाती हैं। वैसे ही अहङ्कार अपने कारण महत्तत्त्व में विद्यमान रहता हुआ उसी से आविर्भूत होकर विभक्त हो जाता है। ऐसे ही महत्तत्त्व अपने कारण अव्यक्त=प्रकृति में पूर्व से विद्यमान होता हुआ अव्यक्त से आविर्भूत होता है और फिर उससे=अव्यक्त से विभक्त होकर पृथक् प्रतीयमान लगता है। इस प्रकार परम अव्यक्त मूलकारण प्रकृति से ही साक्षात् तथा रया सम्बद्ध सम्पूर्ण यह कार्यवर्ग आविर्भूत एवं विभक्त होता है।

( ४ ) प्रतिसर्गे तु मृत्पिण्डं सुवर्णपिण्डं वा घटमुकुटादयो विशन्तोऽव्यक्तीभवन्ति। तत्कारणरूपमेवाऽनभिव्यक्तं कार्यमपेक्ष्याऽव्यक्तं भवति। एवं पृथिव्यादयस्तन्मात्राणि विशन्तः स्वापेक्षया तन्मात्राण्यव्यक्तयन्ति। एवं तन्मात्राण्यहङ्कारं विशन्त्यहङ्कारमव्यक्तयन्ति, एवमहङ्कारो महान्तमाविशन् महान्तमव्यक्तयति, महान् प्रकृतिं स्वकारणं विशन् प्रकृतिमव्यक्तयति।

---

( ४ ) इदानीं 'वैश्वरूप्यस्याऽविभागात्' इत्यनेन द्वितीयहेतुनापि अव्यक्तस्य जगत्कारणत्वं साधयति—**प्रतिसर्गे तु मृत्पिण्डमिति**। प्रतिसर्गे=संहारकाले। तत्तत्कार्याणि स्वस्वकारणं विशन्ति तत्रैवाऽव्यक्तीभवन्ति। यथा घटः मृत्पिण्डरूपकारणं प्रविशन् तत्रैवाऽव्यक्तीभवति, एवं मुकुटादयश्च सुवर्णपिण्डरूपकारणं विशन्तस्तत्रैवाऽव्यक्तीभवन्ति। तदुक्तं—**मृत्पिण्डं सुवर्णपिण्डं वेति**। विशन्तः=तिरोभवन्तः। अव्यक्तीभवन्ति=स्वीयां कार्यावस्थां विहाय मृदादिरूपकारणात्मना अव्यक्ता भवन्तीत्यर्थः। तन्मात्राणि=तन्मात्रासु। विशन्तः=तिरोभवन्तः। स्वापेक्षया=स्वं=कार्यं पृथिव्यादिरूपम्, स्वीयाऽनभिव्यक्ततावस्थापेक्षयेत्यर्थः। अव्यक्तयन्ति=अव्यक्तानि कुर्वन्ति, तन्मात्राणि इति शेषः। अर्थात् तन्मात्राणामव्यक्तत्वं सम्पादयन्तीत्यर्थः। अतो गन्धादितन्मात्राणामव्यक्तत्वं सर्वथा औपचारिकमेवेति मन्तव्यम्। एवम् 'अह-

---

( ४ ) समस्त कार्यवर्ग का मूल उपादानकारण अव्यक्त ही है। इसके लिए द्वितीय हेतु की व्याख्या करते हैं—**'प्रतिसर्गे तु'** इत्यादि। प्रलयकाल में घट, मुकुट आदि कार्य-क्रम से अपने-अपने कारण मृत्पिण्ड तथा सुवर्णपिण्ड में प्रविष्ट=तिरोभूत हो जाते हैं, वही उनकी अव्यक्तावस्था है। अर्थात् घट, मुकुटादि कार्य अपनी कार्यावस्था को छोड़कर मिट्टी आदि स्वरूप में अपने-अपने कारण में अव्यक्त होकर विद्यमान रहते हैं। इस प्रकार जिन-जिन कार्यों का जिन-जिन अपने-अपने कारणों में तिरोभाव होता है, तिरोभूत, विद्यमान तथा अनभिव्यक्ति को प्राप्त हुए उन-उन कार्य की अपेक्षा वे मृत्पिण्ड, हेमपिण्ड तन्मात्रा आदि कारण 'अव्यक्त' कहे जाते हैं, न कि प्रकृति=प्रधान के समान वे अव्यक्त हैं। वही कहा है—'तत्कारणमेवानभिव्यक्तं कार्यमपेक्ष्याव्यक्तं भवति'। सारांश यह है कि जो-जो कार्य जिन-जिन कारणों में तिरोभाव तथा अनभिव्यक्ति को प्राप्त होते हैं, वे-वे सब तिरोभाव के आधारभूत मृत्पिण्ड, तन्मात्रा आदि कारण तत्तत्कार्यों की अपेक्षा 'अव्यक्त' अवश्य कहलाते हैं, परन्तु उन-उन कारणों में अव्यक्तत्व औपचारिक है, वास्तविक नहीं। वास्तविक अव्यक्तत्व प्रकृति=प्रधान में ही है, क्योंकि उसी में समस्त कार्य तथा उन कार्यों के मृत्पिण्ड, हेमपिण्ड, तन्मात्रा, अहङ्कार आदि सब कारणों का तिरोभाव होता है। अतः प्रकृति ही सब कार्यों की अपेक्षा अव्यक्त है एवं उसी में मुख्य अव्यक्तत्व है।

**'एवं पृथिव्यादयः'** इति। इसी प्रकार पृथिवी आदि भूत प्रलयकाल में अपने कारणतन्मात्राओं में प्रविष्ट=तिरोभूत, हो जाते हैं, अतः वे अपनी अपेक्षा तन्मात्राओं को अव्यक्त बना देते हैं। इसी प्रकार तन्मात्राएँ अपने कारण अहङ्कार में तिरोभूत

( ५ ) प्रकृतेस्तु न क्वचिन्निवेश इति सा सर्वकार्याणामव्यक्तमेव । सोऽयमविभागः प्रकृतौ वैश्वरूपस्य नानारूपस्य कार्यस्य, स्वार्थिकः ष्यञ्, तस्मात् कारणे कार्यस्य सत एव विभागाविभागाभ्यामव्यक्तं कारणमस्ति ।

( ६ ) इतश्चाऽव्यक्तमस्तीत्यत आह—'शक्तितः प्रवृत्तेश्च' इति । कारण-

---

ङ्कारमव्यक्तयन्ति' इत्यत्र अहङ्कारेऽप्यव्यक्तत्वमौपचारिकमेव । एवमेव महान्तमव्यक्तयतीत्यत्रापि अव्यक्तत्वमौपचारिकमेव बोध्यम् । इतः पश्चात् 'प्रकृतिमव्यक्तयति' इत्यनेन प्रकृतौ याऽव्यक्तता सैव वास्तविकी ।

( ५ ) प्रकृतेस्तु स्वाभाविकमव्यक्तत्वमस्तीत्येव युक्त्या साधयति—**'प्रकृतेस्तु न क्वचिन्निवेश इति सा सर्वकार्याणामव्यक्तमेव'** । अर्थात् प्रकृतेः कारणाभावान्न कुत्रापि तिरोभावो भवितुमर्हति, तिरोभावाभावाच्च सा प्रकृतिः सर्वकार्याणामव्यक्तमेवास्ति इति तु परमार्थः ।

उपसंहरति—**सोयऽमिति** । अविभागः = कारणे लयः = तिरोभावः । 'वैश्वरूप्यस्ये'त्यस्यार्थमाह—नानारूपस्य कार्यस्य, विश्वरूपमेव वैश्यरूप्यम् इत्यत्र स्वार्थिकः ष्यञ् भवति ।

अयमेवाभिप्रायो निगमनरूपेण स्फुटीक्रियते—**तस्मादिति** । कारणे = उपादानकारणे । सतः = कारणव्यापारात्प्रागपि विद्यमानस्य । विभागाविभागाभ्याम् = आविर्भावतिरोभावाभ्याम् । अव्यक्तं कारणमस्ति = सर्वेषामेव कार्याणां साक्षात् परम्परया वा कारणमव्यक्तमेवास्तीत्यर्थः । इत्यत्र गीताप्रमाणमप्याह—

'अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥' ( गीता २।२८ )

( ६ ) अव्यक्तकारणत्वसिद्धौ हेत्वन्तरमप्याह—**शक्तितः प्रवृत्तेश्चेति** । कार्यं

---

होती हुई अहङ्कार को अव्यक्त सिद्ध कर देती है । ऐसे ही अहङ्कार महत्तत्त्व में तिरोभूत होता हुआ महत्तत्त्व को अव्यक्त बना देता है । एवं महत्तत्त्व अपने कारण प्रकृति में प्रविष्ट = तिरोभूत होता हुआ प्रकृति में अव्यक्तता ला देता है ।

( ५ ) **'प्रकृतेस्तु न क्वचिन्निवेशः'** इति । अर्थात् प्रकृति का कहीं भी निवेश = प्रवेश = तिरोभाव नहीं है, क्योंकि उसका कोई कारण नहीं है, इसलिए वह प्रकृति सभी कार्यों की अव्यक्त है । अर्थात् प्रकृति में वास्तविक अव्यक्तत्व है । इसीलिए प्रकृति को जगत् का मूलकारण माना है ।

**'सोऽयमविभागः प्रकृतौ'** इति । अर्थात् यही प्रकृति मे वैश्वरूप्य = नानारूपात्मक कार्य का अविभाग = तिरोभाव है । 'वैश्वरूप्य' यहाँ पर अपने अर्थ = विश्वरूप अर्थ, में 'ष्यञ्' प्रत्यय होकर 'वैश्वरूप्य' बना है । इसलिए कारण में कारण व्यापार से पूर्व विद्यमान कार्य का ही विभाग = आविर्भाव अविभाग = तिरोभाव होने से अव्यक्त = प्रकृति, कार्यमात्र की मूलकारण है, यह सांख्य-सिद्धान्त है ।

( ६ ) **'इतश्चाऽव्यक्तमस्ति'** इति । अर्थात् 'शक्तितः प्रवृत्तेश्च' इस हेतु से भी

शक्तितः कार्यं प्रवर्तत इति सिद्धम्, अशक्तात् कारणात् कार्यस्याऽनुपपत्तेः, शक्तिश्च कारणगता न कार्यस्याऽव्यक्तत्वादन्या। न हि सत्कार्यपक्षे कार्यस्याऽव्यक्ततताया अन्यस्यां शक्तौ प्रमाणमस्ति, अयमेव हि सिकताभ्यस्तिलानां तैलोपादानानां भेदो यदेतेष्वेव तैलमस्त्यनागतावस्थं न सिकतास्विति।

( ७ ) स्यादेतत्—शक्तितः प्रवृत्तिः कारणकार्यविभागाविभागौ च महत

---

कार्यं प्रवर्तते=जायते। अशक्तात्=शक्तिरहितात्। अर्थात् कार्यप्रयोजकीभूतशक्तिरहितात् उपादानकारणादपि कार्योत्पत्तिर्न भवतीति भावः। न कार्यस्याऽव्यक्तत्वादन्या—कार्यस्य=महदादिरूपकार्यस्य, या कारणावस्थारूपा अव्यक्तावस्था=प्रधानावस्था, न ततोऽन्या। कारणगता शक्तिरिति शेषः। अर्थात् कार्यस्याऽनागतावस्थारूपाऽव्यक्ततातोऽन्या नास्ति काचित्कारणगता शक्तिरित्यर्थः। तत्र हेतुमाह—**न हीति**। सा शक्तिः प्राग् दर्शिता—**शक्तस्य शक्यकरणादित्यादिना**।

कार्यस्याऽव्यक्तावस्थारूपां कारणशक्तिमेव पुनरुदाहरणद्वारा विशेषरूपेण दृढयति—**अयमेवेति**। अस्य 'भेदः' इत्यग्रेतनेनान्वयः। सिकताभ्यः=बालुकाभ्यः। अयमेव=अनागतावस्थारूप एव। भेदः=विशेषः। यद्, एतेष्वेव=तिलेष्वेव। अनागतावस्थं तैलमस्ति न सिकतासु, तथा चायमेवास्ति विशेषः।

( ७ ) 'परिमाणात्' इति हेतोरवतारणाय शङ्कते—**स्यादेतदिति**। तथा च 'शक्तितः प्रवृत्तिः' 'कारणकार्यविभागाविभागौ' इत्यनेन हेतुत्रयेण महत एव परमाव्यक्तत्वं स्वीक्रियतां काऽऽवश्यकता तत्र प्रधानस्य=प्रकृतेः परमाव्यक्तत्वस्वीकारेण ? ततः=मह-

---

'अव्यक्त है' यह सिद्ध करते हैं; अर्थात् कारणशक्ति से कार्य उत्पन्न होता है, यह सिद्ध है। क्योंकि अशक्त=शक्तिविहीन कारण से कार्य की कदापि उत्पत्ति नहीं होती है, अतएव शक्ति से विशिष्ट होकर ही कारण कार्य को उत्पन्न कर सकता है।

प्रश्न—वह कौन-सी शक्ति है, जिससे विशिष्ट होकर कारण कार्य को उत्पन्न करता है ?

उत्तर—'**शक्तिश्च कारणगता**' इति। अर्थात् कार्य की जो अव्यक्तावस्था अर्थात् कार्य की जो कारणात्मना स्थितिरूप कारणावस्था है, वही कारण=उपादानकारण गता शक्ति है और वह शक्ति कार्य का जो अव्यक्तत्व=अव्यक्तावस्था=कारणावस्था, उससे अन्य=भिन्न नहीं है। क्योंकि सत्कार्यवादपक्ष में 'शक्तस्य शक्यकरणात्' नवीं कारिका के इस हेत्वंशप्रकरण में कार्य की अव्यक्तता को ही 'कारणगता शक्ति' माना है, उससे अन्य शक्ति में कोई प्रमाण नहीं है। इसी पक्ष को दृष्टान्त द्वारा सुदृढ़ करते हैं—'**अयमेव हि**' इति। अर्थात् तैल के उपादानकारण जो तैल है, उनका सिकता=बालुकाओं, से यही भेद है कि तिलों में अनागत अवस्था में तैल है और बालुओं में नहीं है; इसमें अनुभव ही प्रमाण है।

( ७ ) प्रश्न—'**स्यादेतत्**' इति। यह सब ठीक है, परन्तु 'शक्तितः प्रवृत्तेश्च', 'कारणकार्यविभागात्' एवं 'अविभागाद् वैश्वरूप्यस्य' इन हेतुओं से कार्यमात्र का अन्तिम परमकारण अव्यक्त है यही सिद्ध होता है। किन्तु इससे वह अव्यक्त

एव परमाव्यक्तत्वं साधयिष्यतः, कृतं ततः परेणाऽव्यक्तेनेत्यत आह—'परिमाणात्' इति। परिमितत्वात्, अव्यापित्वादिति यावत्।

( ८ ) विवादाध्यासिता महदादिभेदा अव्यक्तकारणवन्तः, परिमितत्वात्, घटादिवत्। घटादयो हि परिमिताः मृदाद्यव्यक्तकारणका दृष्टाः। उक्तमेतद्यथा कार्यस्याऽव्यक्तावस्था कारणमेवेति, यन्महतः कारणं तत् परमाव्यक्तम्, ततः परतराव्यकल्पनायां प्रमाणाभावात्।

---

तत्त्वत, परेणः=भिन्नेन कारणत्वाभिमतेन। अव्यक्तेन=प्रकृत्यपरपर्यायभूतेन प्रधानेन। कृतम्=व्यर्थम्। इत्याशङ्कानिराकरणायाह—**'परिमाणात्'** इति। परिमाणादित्यस्यार्थमाह-**परिमितत्वादिति**। परिच्छिन्नत्वादित्यर्थः। अस्याप्यर्थमाह—**अव्यापित्वादिति**। स्वकारणं परिणामिनं न व्याप्नोतीत्यव्यापि, तस्य भावस्तत्त्वं तस्मात्, व्याप्यत्वादित्यर्थः। तथा च महत्तत्त्वस्याऽव्यापित्वात् न तस्याऽव्यक्तत्वं=परमाव्यक्तत्वं स्वीकर्तुमुचितमिति न तत्राऽव्यक्तत्वधाराविश्राम आवश्यकः।

( ८ ) तथा चेदमनुमानं निष्पन्नं—**'विवादाध्यासिता महदादिभेदाः'** इत्यादि। विवादाध्यासिता इत्यस्य विवादास्पदीभूता इत्यर्थः। महदादिभेदा इत्यस्य प्रागुक्त एव 'महत्तत्त्वादिपृथिव्यन्ताः पदार्थाः' अयमेवार्थो बोध्यः। पूर्वोक्तानुमाने दृष्टान्ते साध्यसमन्वयं दर्शयति—**घटादय इति**। हि=निश्चये। परिमिताः=स्वकारणसत्तातिरिक्तसत्ताशून्याः। मृदाद्यव्यक्तकारणकाः=मृदादि अव्यक्तं कारणं येषान्ते, एतादृशा दृष्टाः। तद्वदेव हि महत्तत्त्वमपि अव्यक्तकारणकं दृष्टम्। सर्वत्र महदादिकार्यमात्रेऽव्यक्तकारणकत्वस्य दार्ढ्यार्थं प्रागुक्तं पुनः स्मारयति— **उक्तमेतद् यथेति**। उक्तम्='तत्कार-

---

कारण प्रकृति ही है, यह तो सिद्ध नहीं हो रहा है। ऐसी परिस्थिति में महत्तत्त्व को ही वह परम अव्यक्त तत्त्व क्यों नही मान लिया ? क्या आवश्यकता है महत्तत्त्व से पर=भिन्न परम अव्यक्त प्रकृति को स्वीकार करने की। वाचस्पति मिश्र ने वही कहा है—**'महत एव परमाव्यक्तत्वं साधयिष्यतः'** इत्यादि।

उत्तर—'परिमाणात्=परिमितत्वात्=व्याप्यत्वात्' अर्थात् अव्यापी होने से महत्तत्त्व को परम अव्यक्त तत्त्व नहीं माना जा सकता है। अर्थात् परिणामशील अपने कारण को जो व्याप्त नहीं कर पाता है, वह अव्यापी तत्त्व कार्यमात्र का मूलभूत उपादानकारण कदापि नहीं हो सकता है, इसीलिए परम अव्यक्त मूलोपादानकारण प्रकृति को ही मानना होगा, यह सांख्य का कथन है।

( ८ ) **'विवादाध्यासिता महदादिभेदाः'** इति। इसी पक्ष को अनुमान से पुष्ट करते हैं—विवादविषयीभूत महदादिभेद=महत्तत्त्व से लेकर पृथिवीपर्यन्त समस्त पदार्थ अव्यक्त कारण वाले है, घटादि की तरह परिमित=व्याप्य होने से। घटादि दृष्टान्त परिमित=व्याप्य हैं, उन्हें व्याप्त करके रहने वाले जैसे मृदात्मक=मिट्टी रूप, अव्यक्त कारण देखने में आते हैं, क्योंकि मिट्टी ही घट-कार्य की अव्यक्तावस्था है अथवा तिरोभावावस्था है अथवा उभयावस्था है।

( ९ ) इतश्च विवादाध्यासिता भेदाः अव्यक्तकारणवन्तः 'समन्वयात्' । भिन्नानां समानरूपता समन्वयः सुखदुःखमोहसमन्विता हि बुद्ध्यादयोऽध्य-

णरूपमेवानभिव्यक्तं कार्यमपेक्ष्याऽव्यक्तं भवति' इत्यनेन ग्रन्थेन कार्यस्याऽनागतावस्थारूपाऽनभिव्यक्ततामपेक्ष्य तत्तत्कारणरूपमव्यक्तमिति यत् प्रागुक्तं तदादाय न दृष्टान्ते साध्यवैकल्यम् ।'

फलितार्थमाह—**यन्महत इति** । कार्यस्य=महदादिरूपकार्यस्य । अव्यक्तावस्था=तिरोभावरूपा सूक्ष्मावस्था एव कारणम्=उपादानम् । तथा च यन्महत्कारणत्वेन स्वीकृतमस्ति तदेवाऽस्माकं परमाव्यक्तं प्रधानमभिमतमस्तीति भावः । ततः=प्रधानात् परमाव्यक्तात् प्रकृतेरित्यर्थः ।

ननु 'प्रधानमपि यत्किञ्चिदव्यक्तकारणकं भवितुमर्हति अव्यक्तत्वात् महदादिवत्, इत्यनुमानेन प्रधानादपि अन्यदेव किमपि परतरमव्यक्तं कल्पनीयम् ? समाधत्ते—**प्रमाणाभावादिति** । इदञ्चाऽनुपदमेव प्रागुक्तमनुमानमव्यापित्वोपाधिग्रस्तत्वान्न प्रमाणं भवितुमर्हति । तत्रोपाधेः 'साध्यव्यापकत्वे सति साधनाव्यापकत्वरूपोपाधेः' महदादौ साध्यव्यापकत्वं, प्रधाने च साधनाव्यापकत्वं बोध्यम् । अतः प्रधानं प्रकृतिरेव परमाव्यक्तमस्ति, ततः परतरं किमपि अव्यक्तं नास्तीत्यर्थः, प्रमाणाभावादिति बोध्यम् ।

( ९ ) ननु तथापि अव्यक्तनामकं ब्रह्मैव कारणमस्ति चराचरस्य जगत इत्येव कथन्न कल्प्यते, तथा च कृतं प्रधानकारणतयेत्याशङ्क्य हेत्वन्तरमाह—**'समन्वयात्' इति** । इतश्च=च अप्यर्थे, वक्ष्यमाणहेतोरपीत्यर्थः । समन्वयादित्यस्यार्थमाह—**भिन्नानामिति** । बुद्ध्यादयः=इत्यत्र आदिपदेन अहङ्कारमनसोः परिग्रहः, बुद्ध्यहङ्कारमनांसीत्यर्थः । अध्यवसायादिलक्षणाः=अत्रापि आदिपदेन अभिमानसङ्कल्पादिविशेषधर्माणां परिग्रहः, अध्यवसायाभिमानसङ्कल्पादिस्वरूपा इत्यर्थः । तथा च अध्यवसायादिस्वरूपतत्तदसाधारणधर्मवत्त्वेन परस्परं भिन्नानां बुद्ध्यादीनां या सुखादिस्वरूपसाधारणधर्मवत्तया समानरूपता=एकरूपता, सः समन्वयस्तस्मादित्यर्थः । एतदेवोद्भावयन्

'उक्तमेतत्' इति । कार्य की अव्यक्तावस्था कारण ही है, यह इसी कारिका में कहा जा चुका है—'तत्कारणमेवानभिव्यक्तं कार्यमपेक्ष्य अव्यक्तं भवति' । उसी प्रकार महदादि कार्य की जो अव्यक्तावस्था है, वह भी महत्तत्त्व का जो उपादानकारण परम अव्यक्ततत्त्व प्रकृति है, वही है । इसके पश्चात् उस परमाव्यक्त प्रकृति से परतर=भिन्न=अतिरिक्त किसी और परमाव्यक्त की कल्पना में कोई अनुमानादि प्रमाण नहीं है, अन्यथा अनवस्था हो जायेगी ।

( ९ ) 'इतश्च' इति । अर्थात् 'विवादाध्यासिता भेदाः' इस अनुमानान्तर्गत 'समन्वयात्' इस हेतु से भी महदादि से लेकर भूम्यन्त जितने भी पदार्थ हैं, वे सब सकारण हैं अथवा निष्कारण हैं, इस मतभेद से=विवाद से अध्यासित=ग्रस्त हैं, अतः वे सब अव्यक्त कारण वाले हैं, समन्वयात्=सुख-दुःख-मोहरूप साधारणधर्म वाले होने से ।

वसायादिलक्षणाः प्रतीयन्ते। यानि च यद्रूपसमनुगतानि, तानि तत्स्वभावाव्यक्तकारणानि, यथा मृद्धेमपिण्डसमनुगता घटमुकुटादयो मृद्धेमपिण्डाव्यक्तकारणका इति कारणमस्त्यव्यक्तं भेदानामिति सिद्धम्।

( १० ) अव्यक्तं साधयित्वा अस्य प्रवृत्तिप्रकारमाह—'प्रवर्तते त्रिगुणतः' इति। प्रतिसर्गावस्थायां सत्त्वं रजस्तमश्च सदृशपरिणामानि भवन्ति। परिणा-

---

'समन्वयात्' इति हेतोः पक्षधर्मतामाह—**'सुखदुःखमोहसमन्विताः'** इति। अर्थात् सुखदुःखमोहादिसाधारणधर्मावच्छिन्ना एव बुद्ध्यादय अध्यवसायाभिमानसङ्कल्पाद्यसाधारणधर्मवन्तो ज्ञायन्ते न तु सामान्यधर्मं परित्यज्य विशेषधर्मवत्तयापीत्यतः 'समन्वयात्' इति हेतोः बुद्ध्यादिरूपे पक्षे वृत्तित्वं सुस्पष्टमेवेति बोध्यम्। तत्र सामान्यव्याप्तिं दर्शयति—**यानि चेति**। यानि=घटपटादीनि। यद्रूपसमनुगतानि=यत्स्पर्शादिमन्मृत्सामान्यरूपसमन्वितानि, तानि तत्स्पर्शादिस्वभावमृदात्मसामान्याऽव्यक्तोपादानकानि। तदनुसृत्यैवोदाहरणमप्याह—**यथा मृद्धेमपिण्डसमनुगता इति**। निगमनमाह—**इति कारणमिति**। इति=इत्येवम्, पूर्वोक्तहेतोर्वा इत्यर्थः। भेदानाम्=महदादिकार्याणाम्। एतेनाऽनुमानेन यत् सुख-दुःखमोहाद्यात्मकम् अव्यक्तं कारणं सिद्ध्यति तादृक् सुखदुःखमोहाद्यात्मकं तत् त्रिगुणम् अव्यक्तं प्रधानमेव अर्थात् प्रकृतिरेव न तु ब्रह्म, तस्य निर्गुणत्वेन त्रिगुणत्वाभावाद् इति न ब्रह्मणोऽव्यक्तत्वं स्वीकार्यम्।

( १० ) इदानीं तस्य प्रधानस्य स्थितया प्रवृत्तिं दर्शयितुमाह—अव्यक्तं साधयित्वाऽस्य प्रवृत्तिप्रकारमाह—**प्रवर्तते त्रिगुणत इति**। अस्य=प्रधानस्य। प्रतिसर्गावस्थायाम्=प्रलयावस्थायाम्। सत्त्वादीनि गुणानि सदृशपरिणामानि=अन्यूनानति-

---

**'भिन्नानाम्'** इति। अध्यवसाय, अभिमान तथा संकल्प-विकल्पादि धर्मों से युक्त होने के कारण जो बुद्धि, अहङ्कार और मन ये विभिन्न पदार्थ है, इनका जो सुख, दुःख, मोह रूप समानरूपता, वही समन्वय है। इसलिए अध्यवसाय, अभिमान, सकल्पविकल्पस्वभाव वाले बुद्धि, अहङ्कार, मन, ये सुख, दुःख, मोह से सर्वथा समन्वित होकर ही प्रतीत होते है। क्योंकि जो वस्तुएँ=पदार्थ जिसके सदृश अथवा सदृशधर्म वाली होती है, वे वस्तुएँ ठीक अपने स्वभावानुकूल जो अव्यक्तोपादानकारण, उस कारण वाली अर्थात् उस अव्यक्त कारण से तादात्म्यापन्न होने के कारण तत्स्वरूप वाली होती है। जैसे मृत्पिण्ड=मृत्तिकापिण्ड, हेमपिण्ड=सुवर्णपिण्ड में समनुगत=समवेत जो क्रमशः घट और मुकुट आदि है, वे सब मृत्पिण्ड तथा हेमपिण्डस्वरूप सूक्ष्मतर अव्यक्तोपादानकारण वाले होते हैं, इससे भेदों का=महदादि से लेकर भूम्यन्त विशेपात्मक भेदों का कारण=उपादानकारण अव्यक्त है, यह निर्विवाद सिद्ध हो गया।

( १० ) **'अव्यक्तं साधयित्वा'** इति। अत्र अव्यक्त को सिद्ध करके उसके प्रवृत्तिप्रकार को बतलाते हैं—**'प्रवर्तते त्रिगुणतः'** इति। अर्थात् प्रतिसर्ग=प्रलय की अवस्था में ये तीनों गुण सत्त्व, रज, तम समान परिणाम वाले होते हैं। कारण कि ये तीनों

मस्वभावा हि गुणानाऽपरिणम्य क्षणमप्यवतिष्ठन्ते। तस्मात् सत्त्वं सत्त्वरूपतया, रजो रजोरूपतया, तमस्तमोरूपतया प्रतिसर्गावस्थायामपि प्रवर्तते। तदिदमुक्तं—'त्रिगुणतः' इति।

( ११ ) प्रवृत्त्यन्तरमाह—'समुदयाच्च' इति। समेत्य उदयः—'समुदयः' समवायः। समुदयश्च गुणानां न गुणप्रधानभावमन्तरेण सम्भवति, न च गुणप्रधानभावौ वैषम्यं विना, न च वैषम्यमुपमर्द्योपमर्दकभावादृते, इति महदादिभावेन प्रवृत्तिर्द्वितीया।

---

रिक्तपरिणामशीलानि जायन्ते, न तु सृष्ट्यारम्भकाले इव विजातीयतत्तन्महदहङ्कारादिरूपेण परिणामवन्ति भवन्ति। एतदेव सुस्पष्टयति—**सत्त्वं सत्त्वरूपतयेत्यादिना**। अर्थात् प्रलयावस्थायां सत्त्वं लघुत्वादिरूपस्वानुरूपपरिणामेनैव प्रवर्तते। तथा रजोऽपि उपष्टम्भकत्वादिरूपपरिणामेन तत्र प्रलये प्रवर्तते। तथैव च तमोऽपि गुरुत्ववरणकत्वरूपेण परिणामेन प्रवर्तमानं भवति। इत्थञ्चेमे त्रयो गुणाः स्वस्वानुरूपपरिणामेनैव प्रवृत्तिशीला भवन्ति, न तु केनचिदन्येन गुणेन संयुक्तो भूत्वा कोऽपि गुणः विलक्षणतत्तत्कार्यरूपेण परिणमते इति भावः।

किमस्य परिणामस्य प्रयोजनमत आह—**परिणामस्वभावा** इति। हि=यतः। अपरिणम्य=परिणाममप्राप्य, विना परिणामम् इति यावत्। क्षणमपि। नावतिष्ठन्ते। तस्मात्=गुणानां परिणामस्वभाववत्त्वात्। सत्त्वं सत्त्वरूपतयेत्यादिकं सर्व पूर्वोक्तं वेदितव्यम्।

( ११ ) इदानीं गत्यात्मिकां प्रवृत्तिमाह—**प्रवृत्त्यन्तरमाह—समुदयाच्चेत्यादिना**। समेत्य=परस्परं मिलित्वा। उदयः=आविर्भावः। समुदयशब्दस्य पर्यायमाह—**समवाय** इति। परस्परसम्मिश्रणम्। न तु नैयायिकाभितः सम्बन्धविशेषः समवायः प्रकृतेऽभिप्रेतोऽस्तीत्यर्थः। तथा च सांख्यसूत्रम्—'न समवायोऽस्ति प्रमाणाभावात्' ( ५।९९ ) विस्तरस्तु भाष्ये द्रष्टव्यः।

**समुदयश्च गुणानामिति**। गुणानाम्=परस्परविरुद्धानां समबलानां च गुणानाम्। समुदयः=समवायः गुणप्रधानभावमन्तरेण=उपकार्योपकारकभावं विना। वैषम्यम्=

---

गुण अपने-अपने स्वरूप से परिणत होते रहते हैं, अतः परिणाम ही इन तीनों गुणों का स्वभाव हो गया है। विना परिणाम के अर्थात् विना परिणत हुए ये तीनों गुण एक क्षण भी नहीं रह सकते हैं। इस कारण प्रलयावस्था में सत्त्व सत्त्वरूप से, रज रजोरूप से और तम तमोरूप से प्रवृत्तिशील बने रहते हैं। वही इस कारिका में कहा है—**'त्रिगुणतः'**। अर्थात् तीनों गुण अपने-अपने रूप से प्रवृत्त होते रहते हैं, जैसा कि पूर्व में अभी ऊपर कह चुके हैं। यह प्रथमा प्रवृत्ति है।

( ११ ) प्रवृत्त्यन्तरमाह—**'समुदयाच्च'** इति। यह गुणों की द्वितीया प्रवृत्ति 'समुदयात्' इस हेतु से बतलाते हैं। समेत्य=परस्पर में मिलकर जो उदय=आविर्भाव, वही गुणों का समुदय है; समुदय नाम समवाय का है अर्थात् गुणों का

**सङ्घातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात् ।**
**पुरुषोऽस्ति भोक्तृभावाद् कैवल्यार्थं प्रवृत्तेश्च ॥ १७ ॥**

( २ ) 'सङ्घातपरार्थत्वात्' इति । पुरुषोऽस्ति अव्यक्तादेर्व्यतिरिक्तः ।

---

तन्मात्रास्वरूपेन्द्रियाणि वा, भूतानि वोपासते, एवं शरीरपातानन्तरं तेष्वेव प्रकृतिमहत्तत्त्वादिषु लयमेष्यन्ति, एतानेवाधिकृत्योक्तम्—

'दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः ।
भौतिकास्तु शतं पूर्णं सहस्रं त्वाभिमानिकाः ॥
बौद्धा दशसहस्राणि तिष्ठन्ति विगतज्वराः ।
निर्गुणं पुरुषं प्राप्य कालसंख्या न विद्यते ॥' ( मार्कण्डेयपुराणः )

**अन्वयः**—पुरुषः अस्ति सङ्घातपरार्थत्वात् त्रिगुणादिविपर्याद् अधिष्ठानात् भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च ।

तान् प्रत्याह—**'सङ्घातपरार्थत्वात्'** इति । 'पुरुषोऽस्ती'त्यनेन पुरुषं पक्षीकृत्य तदीयमस्तित्वं साध्यते कारिकास्थेन हेतुपञ्चकेन ।

१. **सङ्घातपरार्थत्वात्**—सङ्घातानाम्=जडवर्गाणाम्, स्वार्थक्रियायामपरसापेक्षाणाम् इत्यर्थः, परार्थत्वात्=परप्रयोजनकत्वात्=परस्य भोगापवर्गफलकत्वात्, फलं प्रयोजनापरपर्यायम् ।

२. **'त्रिगुणादिविपर्ययात्'** इति द्वितीयो हेतुः । अर्थात् त्रिगुणादेर्विपर्ययः=अभावो यत्रापि वर्तते स एव पुरुषोऽस्ति ।

३. 'अधिष्ठानात्'—इति तृतीयो हेतुः, अर्थात् सुख-दुःखमोहस्वरूपो जडपदार्थो यत्राऽधिष्ठितो वर्तते स एव यत्पदार्थः पुरुषः ( आत्मा ) अस्ति ।

४. **'भोक्तृभावादि'ति** चतुर्थो हेतुः, भोक्तृत्वात्, साक्षित्वादित्यर्थः ।

५. **'कैवल्यार्थं प्रवृत्तेश्च'** इति च पञ्चमो हेतुः, विदुषां ज्ञानशीलानां मोक्षाय प्रवृत्तिदर्शनात्, इत्यनेनापि हेतुना मोक्षाय प्रवृत्तिपरायणो योऽस्ति ज्ञानशीलश्चेतनः स एव पुरुषः ( आत्मा ) अस्तीति सिद्ध्यति ।

( २ ) कारिकां कौमुदीटीकासहितां व्याख्यातुमुपक्रमते—सङ्घातपरार्थत्वादिति । संहन्यन्ते=एकत्रीभवन्ति, अनेके विशेषाः सुख-दुःखमोहादयो यत्राऽसौ सङ्घातः=प्रधानादिजडसमूहस्तस्य परार्थत्वात्—परः=सङ्घातभिन्नः, योऽस्ति आत्मा पुरुषस्वरूप-

---

उपासना करते है, उनसे हमारा कहना है कि यह उनका विचार ठीक नही है । उसी को खण्डन की दृष्टि से दिखलाते है—**'सङ्घातपरार्थत्वात्'** इस कारिका से ।

**कारिकार्थ**—सङ्घातपरार्थत्व, त्रिगुणादिविपर्यय, अधिष्ठान, भोक्तृभाव, एवं कैवल्यार्थप्रवृत्ति—इन पाँच हेतुओं से 'पुरुष का अस्तित्व' अर्थात् 'पुरुष है' यह सिद्ध करते हैं ।

( २ ) 'सङ्घातपरार्थत्वात्'—यह प्रथम हेतु है । 'अहम्' इत्याकारक प्रतीति का विषय होने के कारण 'पुरुषोऽस्ति' पुरुष का अस्तित्व सिद्ध है और वह पुरुष अव्यक्त आदि जडवर्ग से सर्वथा भिन्न है ।

कुतः ? 'सङ्घातपरार्थत्वात्' इति। अव्यक्तमहदहङ्कारादयः परार्थाः, सङ्घातत्वात्, शयनासनाभ्यङ्गादिवत्, सुखदुःखमोहात्मकतयाऽव्यक्तादयः सर्वे सङ्घाताः।

( ३ ) स्यादेतत्—शयनासनादयः सङ्घाताः संहतशरीराद्यर्था दृष्टाः, न

---

स्तस्य कृते एव भोगापवर्गरूपार्थत्वात्, भोगाऽपवर्गयोश्च जडे बाधात् चेतनपुरुषस्याऽऽत्मनोऽस्तित्वं सिद्ध्यतीति भावः। तथा च सर्वेषामेव पुरुषातिरिक्तानां सङ्घातत्वात् सङ्घातरूपत्वात्। तत्र दृष्टान्तमाह—**शयनासनेति**। इति दृष्टान्तबलेनापि सङ्घातभिन्न एव पुरुष अनुमेयः। अनुमानप्रकारमाह—**अव्यक्तमहदहङ्कारादय** इति। अस्मिन्ननुमानेऽव्यक्तमहदहङ्कारादीन् पक्षीकृत्य तत्रैव पक्षे सङ्घातत्वेन हेतुना परार्थत्वं साध्यते। ननु यथा—शयन-आसन-तूलिका-उपधान-प्रच्छादन-वसनादीनामनेकात्मकत्वात् सङ्घातत्वमनुभूयते, तथा अव्क्तादीनामनेकात्मकत्वविरहात् सङ्घातत्वं नानुभूयते इति विपरीतज्ञानेऽव्यक्तादीनां सङ्घातत्वं दर्शयन् हेतोः पक्षधर्मत्वमाह—**सुख-दुःख-मोहात्मकतयेति**। अर्थात् सुख-दुःख-मोहात्मकत्वात् अव्यक्तादयः सङ्घाता भवन्तीत्यर्थः। एवञ्च—अव्यक्तादयः परोपभोगजनकाः सुख-दुःख-मोहात्मकत्वात् इत्यनुमानं फलितम्।

( ३ ) इदानीं दृष्टान्तमाश्रित्याऽर्थान्तरत्वं शङ्कते—**स्यादेतदिति**। तथा च शयनासनादिदृष्टान्तबलेन सङ्घातान्तरस्यैव शरीरादेरनुमानं कर्तुमुक्तं न तु असंहतपुरुषस्येत्याशङ्कते—**शयनासनादय इति**। सङ्घाताः=सुख-दुःखाद्यात्मकाः सङ्घाताः।

---

प्रश्न—क्यों भिन्न है ?

उत्तर—'सङ्घातपरार्थत्वात्' इति। अर्थात् समस्त जड़वर्ग रूप जो संघात है, वह सब 'परार्थ' पर=चेतन=आत्मा=पुरुष के अर्थ=भोगरूप प्रयोजन के लिए है। अनुमान यह है—'अव्यक्तमहदहङ्कारादयः, परार्थाः, सङ्घातत्वात्, शयनासनाभ्यङ्गादिवत्'। यहाँ 'परार्थाः' यह साध्य है, अव्यक्तमहदादि पक्ष हैं, शयनासनाऽभ्यङ्ग आदि दृष्टान्त हैं, जैसे शयन=शय्या, आसन=विस्तरा आदि जडपदार्थ किसी चेतन पुरुष के उपभोगात्मक प्रयोजन के लिए देखने में आते हैं, उसी प्रकार अव्यक्त, महत्, अहङ्कार आदि भी जड़ होने के कारण चेतन=पुरुष के सुख-दुःख इन दोनों में से एक के उपभोगरूप साक्षात्कार के लिए ही हैं। 'संघात' नाम जड़ का है।

'सुखदुःखमोहात्मकतया' इति। अर्थात् पक्षीभूत अव्यक्त आदि सुख-दुःख-मोहरूप होने के कारण चेतन=आत्मा=पुरुष के ही तादृश साक्षात्कार रूप उपभोग के लिए हैं, जड़ में वह उपभोग बाधित है, अतः प्रथम हेतु से पुरुष का अस्तित्व सिद्ध हुआ।

( ३ ) प्रश्न—शयन, आसन आदि दृष्टान्तबल से संघात पदार्थ संहत शरीर के लिए देखने में आते हैं, न कि अव्यक्त आदि से अतिरिक्त आत्मा=पुरुष के लिए, क्योंकि लोग ऐसा कहते सुने जाते हैं—भाई शरीर बहुत थक गया, अब इसे खटिया

त्वात्मानमव्यक्ताद्यतिरिक्तं प्रति परार्थाः। तस्मात् सङ्घातान्तरमेव परं गमयेयुः, न त्वसंहतमात्मानमित्यत आह— 'त्रिगुणादिविपर्ययात्' इति।

अयमभिप्रायः—सङ्घातान्तरार्थत्वे हि तस्याऽपि सङ्घातत्वात् तेनाऽपि सङ्घातान्तरार्थेन भवितव्यम्; एवं तेन तेनेत्यनवस्था स्यात्।

( ४ ) न च व्यवस्थायां सत्यामनवस्था युक्ता, कल्पनागौरवप्रसङ्गात्।

---

संहतशरीरार्थाः—संहतं=सुख-दुःखाद्यात्मकं यच्छरीरं, तदर्थं दृष्टाः=दृश्यन्ते, न तु अव्यक्ताद्यतिरिक्तमानं ( पुरुषं ) प्रति परार्थाः=स्वातिरिक्ताऽऽत्मार्थाः, तस्मात् सङ्घातान्तरमेव परं=शरीरादिकम्। गमयेयुः=अनुमापयेयुः। इत्याशङ्कां निराकर्तुं हेत्वन्तरमाह—**त्रिगुणादिविपर्ययादिति**। 'त्रिगुणादि' इत्यत्र आदिना 'त्रिगुणमविवेकि' इत्यादिकारिकोक्ताऽविवेकित्वादिधर्माः सङ्गृहीतव्याः। तथा च आत्मा (पुरुषः) असंहतः त्रिगुणादिविपर्ययात् यन्नैवं तन्नैवं यथा महदादिकम्, इत्यनुमानं सम्पन्नम्, तदेव स्फुटयति—**अयमभिप्राय इति**। एकस्य शयनाऽऽसनादिरूपसङ्घातस्य शरीरादिरूपसङ्घातान्तरार्थत्वे=सङ्घातान्तरप्रयोजनकत्वे, तस्यापि=सङ्घातान्तरस्यापि, सङ्घातरूपतया तेनापि=सङ्घातान्तरत्वेनाऽभिमतेन शरीरादिनापि, सङ्घातान्तरार्थत्वेन=अन्यसङ्घातप्रयोजनवता। एवं तेन=सङ्घातभिन्नसङ्घातेन, अन्यतृतीयसङ्घातार्थ भवितव्यम्। एवं तेनापि अन्यतृतीयसङ्घातेन अन्यचतुर्थसङ्घातार्थं भवितव्यम्। एवं क्रमेण अप्रामाणिकरूपेणाऽनन्तसङ्घातानां परिकल्पनेनाऽसमाप्तिपर्यवसायिनीऽनवस्था स्यादिति भावः।

( ४ ) ननु गत्यन्तराभावादस्या अनवस्थाया बीजाङ्कुरवत् प्रामाणिकत्वमेव स्वीक्रियतामित्यत्राह—**न च व्यवस्थायां सत्यामिति**। 'सङ्घातत्वात्' इति हेतुर्हि पारार्थ्यमात्रं साधयित्वा कृतकृत्यतां गत इत्यतः पुनस्तस्य सङ्घातान्तरार्थत्वसाधने स्याद् व्यर्थः

---

पर कुछ समय आराम करने दो इत्यादि। **'तस्मात्'** इति। इसलिए अव्यक्त आदि समस्त जड़वर्ग रूप संघात—सङ्घातान्तर=दूसरे संघात रूप शरीर के उपभोगात्मक प्रयोजन के लिए है, अतः 'संघातपरार्थत्व' लिङ्गक अनुमान से तो 'सङ्घातान्तर' शरीर की ही सिद्धि हो रही है, न कि असंहत आत्मा=पुरुष की।

उत्तर—**'त्रिगुणादि विपर्ययात्'** इति। अर्थात् जिसमें त्रिगुण का विपर्यय=अभाव हो वही पुरुष=आत्मा=चेतन है। इस द्वितीय हेतु से भी असंहत आत्मा=पुरुष का अस्तित्व सिद्ध होता है। अभिप्राय यह है कि तस्यापि=अव्यक्त आदि संघात को सङ्घातान्तरार्थत्वे=किसी दूसरे सङ्घात के प्रयोजनार्थ यदि माना जाता है तो वह भी दूसरा संघात, संघात होने के कारण किसी तीसरे संघात के लिए होगा। वह तीसरा संघात भी किसी और चतुर्थ संघात के प्रयोजनार्थ होगा। इस प्रकार अनवस्था हो जायेगी।

( ४ ) **'न च व्यवस्थायाम्'** इति। अर्थात् व्यवस्था के होने पर अनवस्था युक्त=उचित नहीं है, क्योंकि कल्पनागौरवप्रसङ्ग हो जायेगा, अर्थात् पारार्थ्यमात्र साधन

न च 'प्रमाणवलेन कल्पनागौरवमपि मृष्यते' इति युक्तम्, संहतत्वस्य पारार्थ्यमात्रेणाऽन्वयात् ।

( ५ ) दृष्टान्तदृष्टसर्वधर्मानुरोधेन त्वनुमानमिच्छतः सर्वानुमानोच्छेदप्रसङ्ग इत्युपपादितं न्यायवार्तिकतात्पर्यटीकायामस्माभिः । तस्मादनवस्था-

---

प्रयासः, परार्थत्वमात्रसाधने च परस्य ( आत्मनः=पुरुषस्य ) परार्थत्वाभावान्नऽनवस्था युक्तियुक्तेत्यर्थः । अयुक्तत्वे हेतुमाह—कल्पनागौरवप्रसङ्गादिति । पारार्थ्यमात्रसाधनापेक्षया संहतपारार्थ्यसाधने शरीरकृतं गौरवं स्यादिति भावः ।

ननु दृष्टान्ते सङ्घातत्वस्य सङ्घातान्तरार्थेन व्याप्तिदर्शनात् संहतपारार्थ्यकल्पनं प्रामाणिकमेवेत्याशङ्क्य निराकरोति—न च प्रमाणवत्त्वेनेति । मृष्यते=सह्यते । युक्तम् =न चेति पूर्वेणाऽन्वयात् न च युक्तमित्यर्थः । समाधत्ते—संहतत्वस्येति । संहतत्वस्य =सङ्घातत्वस्य । पारार्थ्यमात्रेण=पारार्थ्यमात्रसाध्येन सह । अन्वयात्=व्याप्तिरूपसम्वन्धान्वयदर्शनात् । न तु सङ्घातत्वस्य हेतोः साध्यत्वेनाभिमतेन सङ्घातपारार्थ्येन सह व्याप्तिसम्वन्धसत्त्वमनुभूयते, अस्ति चेयं व्याप्तिः—"यद्यत् संहतं तत्तत् परार्थम्, यथा शयनासनादि, न तु 'संहतपरार्थम्' तत्र संहतत्वविशेषणस्य व्यर्थत्वात्" ।

( ५ ) ननु यदि पारार्थ्यमात्रं साध्यते तदा शयनासनादिदृष्टान्तदृष्टस्य सङ्घातान्तरार्थत्वरूपधर्मस्याऽलाभाद् दृष्टान्ते साध्यवैकल्यं स्याद् येन प्रागुक्तमनुमानमेव भज्येत, यतः दृष्टान्तदृष्टसर्वधर्मानुरोधेनैव अनुमानप्रामाण्याऽभ्युपगमात्—इत्याशङ्क्य समाधत्ते—दृष्टान्तदृष्टसर्वधर्मानुरोधेनेति । दृष्टान्तदृष्टा विधेयभूतास्तदतिरिक्ताश्च ये

---

की अपेक्षा संहतपारार्थ्यसाधन गौरवग्रस्त है । अर्थात् परार्थत्वरूप साध्यापेक्षया संघातपरार्थत्वरूपसाध्य गुरु है ।

शङ्का—यदि कल्पनागौरव प्रामाणिक है तो वह दोपावह नही है । दूसरी वात यह है कि वीजाङ्कुरवत् इस अनवस्था को यदि प्रामाणिक ही मान लिया जाय तव भी कल्पनागौरव दोप नहीं है ।

समाधान—पूर्व में की गई शङ्का ठीक नहीं । **'संहतत्वस्य पारार्थ्यमात्रेणान्वयात्'** इति । अर्थात् 'अव्यक्तादयः परार्थाः सङ्घातत्वात् शयनासनादिवत्' इस अनुमान में सङ्घातत्वहेतुनिरूपिता अन्वयव्याप्ति अथवा साध्यसामानाधिकरण्य पारार्थ्यरूप साध्यमात्र के साथ है, न कि संहतपारार्थ्य के साथ । अतः सङ्घातत्वहेतु पारार्थ्यमात्रसाध्य को अव्यक्त, अहङ्कारादि रूप पक्ष में सिद्ध कर कृतकृत्य हो जाता है । फिर सङ्घातान्तर शरीरादि को सिद्ध करने के लिए सर्वथा व्यापारशून्य है । तदनन्तर 'तस्मात् सङ्घातान्तरमेव परं गमयेयुः' इस रूप से अनवस्था का उल्लेख या प्रदर्शन सर्वथा निराधार है ।

( ५ ) दूसरी वात यह है—**'दृष्टान्तदृष्टसर्वधर्मानुरोधेन'** इति । अर्थात् 'शयनासनादयः सङ्घाताः संहतशरीरार्था दृष्टा न त्वात्मानमव्यक्ताद्यतिरिक्तं प्रति परार्थाः' इस ग्रन्थ से दृष्टान्तदृष्टविधेयशून्य साध्यसमानाधिकरण सङ्घातान्तरार्थत्वरूप धर्मों का विधेय के साथ जो संग्रह किया है, उससे अनुमान मात्र का विलोप हो जायेगा ।

भियाऽस्य असङ्घातत्वमिच्छताऽत्रिगुणत्वं विवेकित्वमविषयत्वमसामान्यत्वं चेतनत्वमप्रसवधर्मित्वञ्चाऽभ्युपेयम् ।

त्रिगुणत्वादयो हि धर्माः संहतत्वेन व्याप्ताः, तत्संहतत्वमस्मिन् परे व्यावर्तमानं त्रैगुण्यादि व्यावर्तयति, ब्राह्मणत्वमिव व्यावर्तमानं कठत्वादिकम्।

---

सर्वधर्मास्तेषां सर्वेषामेव पक्षेऽस्तित्वस्वीकारानुरोधेनेत्यर्थः । सर्वानुमानोच्छेदप्रसङ्गः= सर्वानुमानाऽनुत्थानापत्तिः । 'परार्थाश्चक्षुरादयः सङ्घातत्वात् शयनासनादिवत्' इत्यादिकम्, उपपादितम् = साधितम् । **न्यायवार्तिकतात्पर्यटीकायामिति** । वाचस्पतिमिश्रेणेति शेषः । ( द्रष्टव्यम् —न्या० द० अ० ४, आ० १, सू० २१ ) पर्वतो वह्निमान् धूमाद् यथा महानसम् इत्यत्रैव प्रसिद्धस्थले पश्यन्तु, यदि दृष्टान्तदृष्टाः सर्वेऽपि धर्माः पक्षे सम्भवेयुस्तदा दृष्टान्तदृष्टमहानसत्वादि धर्मा अपि पर्वते साधनीया भविष्यन्ति। तथा सति सर्वानुमानोच्छेदप्रसङ्गः स्यादिति भावः । 'त्रिगुणादिविपर्ययादि'ति हेतुं योजयितुं स्फुटार्थमाह—**तस्मादनवस्थेति** । तस्मात् = परस्याऽऽत्मनः पुरुषस्याऽसंहतत्वानङ्गीकारेऽनवस्थारूपो दोष. सर्वथा गले पतित एवास्तीति हेतोरित्यर्थः । अस्य= आत्मनः=पुरुषस्य । असङ्घातत्वमिच्छता । 'भवता' इति शेषः । अत्रिगुणत्वमिति । 'त्रिगुणमविवेकि' इत्यादिकारिकोक्तधर्मवैपरीत्यम् अत्रिगुणत्वम्, विवेकित्वम्, अविषयत्वमित्यादयो धर्मा अवश्यमेवाऽभ्युपेयाः । अभ्युपेयत्वे हेतुं ब्रूते—**त्रिगुणत्वादयो हीति** । 'त्रिगुणमविवेकि' इत्यादिकारिकोक्ता त्रिगुणत्वादयो धर्मा इत्यर्थ. । संहतत्वेन व्याप्ताः = यत्र-यत्र त्रिगुणत्वादयो धर्मास्तत्र तत्र संहतत्वमिति साहचर्यनियमरूपा व्याप्तिर्महदादौ दृष्टेत्यर्थः । ततः किमिति जिज्ञासायामाह—तत्संहतत्वम् = व्यापकीभूतं तत् संहतत्वम् । अस्मिन् परे=साध्यान्तर्गतैकदेशपरशब्दार्थे आत्मनि ( पुरुषे )। व्यावर्तमानम्=स्वयमसन्तिष्ठमानम् । व्यावर्तयति = स्वव्याप्यं त्रिगुणत्वादिकमपि निवर्तयति । उदाहरति—**ब्राह्मणत्वमिवेति** । यथा कठत्वं ब्राह्मणत्वव्याप्यं ब्राह्मणनिष्ठो

---

जैसे—'पर्वतो वह्निमान् धूमात्' यहाँ पर वह्निरूप विधेय से शून्य तथा वह्निरूप साध्य समानाधिकरण जो महानसत्व एवं चूल्हा आदि धर्म है, उनका भी पर्वत में अनुमान करना होगा और वह बाधित है, क्योंकि महानसत्व, चूल्हा आदि धर्मों का पर्वत ( पक्ष ) में अभाव है । इससे सर्वानुमानों का उच्छेद हो जायेगा । वही कहा है— 'दृष्टान्तदृष्टसर्वधर्मानुरोधेन' इति । इस विषय का हमने न्यायवार्तिक तात्पर्यटीका में उपपादन किया है ।

**'तस्मादनवस्थाभिया'** इति । इसलिए अनवस्था के भय से इस 'पर' आत्मा= पुरुष को यदि आप=नैयायिक आदि लोग असंघात=जड़वर्ग से भिन्न स्वीकार करना चाहते हैं तो उसे=पुरुष को, आपको अत्रिगुण=निर्गुण, विवेकी, अविषय, असामान्य, चेतन तथा अप्रसवधर्मी=अपरिणामी स्वीकार करना चाहिए । कारण कि त्रिगुणत्वादि धर्म संघातत्व के व्याप्य है, इसलिये इस पर=पुरुष में व्यापक= त्रिगुणत्वादि का व्यापक, जो संघातत्व उसकी व्यावृत्ति=अभाव होने से व्याप्य जो

तस्मादाचार्येण 'त्रिगुणादिविपर्ययात्' इति वदताऽसंहतः परो विवक्षितः, स चाऽऽत्मेति सिद्धम् ।

( ६ ) इतश्च परः पुरुषोऽस्ति—'अधिष्ठानात्' । त्रिगुणात्मकानामधिष्ठीयमानत्वात् । यद्यत्सुखदुःखमोहात्मकं तत्सर्वं परेणाऽधिष्ठीयमानं दृष्टम्, यथा रथादि यन्त्रादिभिः । सुख-दुःखमोहात्मकं चेदं बुद्ध्यादि, तस्मादेतदपि परेणाऽधिष्ठातव्यम् । स च परस्त्रैगुण्यादन्य आत्मेति ।

---

धर्मविशेषः, ब्राह्मणश्च यजुर्वेदीयकठशाखाध्ययनकर्ता, तथा च क्षत्रियादौ यथा ब्राह्मणत्वं निवर्तमानं स्वव्याप्यं कठत्वमपि निवर्तयति तद्वदित्यर्थः । उपसंहरति—**तस्मादिति** । आचार्येण = ईश्वरकृष्णेन ।

( ६ ) अधिष्ठानादिति हेत्वन्तरं तृतीयं हेतुमवतारयति—त्रिगुणात्मकानाम् = सुखदुःखमोहस्वरूपाणां महदादीनाम् । अधिष्ठीयमानत्वात् = परेण केनचित् चेतनेन प्रेर्यमाणत्वात् । महदादयो जडपदार्थाश्चेतनेनाऽधिष्ठीयमाना एव दृश्यन्ते । अत्रानुमानम्—महदादयो जडपदार्थाः केनचिच्चेतनेनैवाऽधिष्ठीयमाना भवितुमर्हन्ति सुखाद्यात्मकत्वात् । अत्र व्याप्तिं दर्शयति—**यद्यत् सुख-दुःखमोहात्मकमिति** । उदाहरणमाह—**यथा रथादीति** । यन्त्रादिभिः = सारथ्यादिभिः । यन्ताऽश्वानां सञ्चालकः सारथिः । उपनयप्रयोगमाह—**सुख-दुःखमोहात्मकमिति** । निगमनमाह—**तस्मादिति** । एतदपि = जडभूतं बुद्ध्यादि । परेण = केनचिच्चेतनेन । अधिष्ठातव्यम् = प्रेरितव्यं, भवितुमर्हतीति शेषः । स च = अधिष्ठाता च । परः = परत्वेनाभिमतः ।

ननु स चाधिष्ठाता महदादिष्वेव कश्चिद् अन्यतमो भवतु काऽऽवश्यकता तद्भिन्नस्याऽऽत्मनः स्वीकारेणेत्याशङ्कां निरस्यति—**त्रैगुण्यादन्य इति** । महदादीनां तदन्तर्गतानां वा केषामपि अधिष्ठातृत्वं नैव स्वीकर्तुं शक्यते, यतः स्वस्य स्वाधिष्ठानासम्भवात्, स्वस्य स्वाधिष्ठानरूपत्वेऽनुभवापलापापत्तिः स्यात्, नहि नटवटुः स्वस्कन्धमारोहतीत्युक्तेः प्रामाण्योपपत्तिश्च स्यात् ।

---

त्रिगुणत्वादि हैं, उनकी भी व्यावृत्ति हो जाती है, व्यापकाभाव से व्याप्याभाव की सिद्धि स्वाभाविक है । जैसे ब्राह्मणत्व व्यावृत्ति से कठशाखावृत्ति कठत्व की भी व्यावृत्ति हो जाती है, अर्थात् जो ब्राह्मण ही नहीं है, वहाँ यह कठशाखा वाला है या अन्य प्रश्न ही नहीं उठता । इसलिए आचार्य = ईश्वरकृष्ण ने 'त्रिगुणादिविपर्ययात्' इस हेतु का उल्लेख करते हुए इस हेतु से असंहत पर = पुरुष विवक्षित है और वही आत्मा है, यह सिद्ध हुआ ।

( ६ ) **'इतश्च परः पुरुषोऽस्ति'** इति । अर्थात् 'अधिष्ठानात्' इस हेतु से भी पर पुरुष का 'अस्तित्व' सिद्ध है । 'अधिष्ठानात्' का अर्थ है—**'त्रिगुणात्मकानाम्'** इति । अर्थात् ये त्रिगुणात्मक = सुख-दुःख-मोहात्मक महदादि जिस किसी भी पर = चेतन तत्त्व के द्वारा अधिष्ठीयमान = प्रेर्यमाण हैं, वही आत्मा = पुरुष है । क्योंकि 'यद्यत् सुखदुःखमोहात्मकम्' अर्थात् जो-जो भी सुख-दुःख-मोहात्मक देखा गया है, वह सब

( ७ ) इतश्चाऽस्ति पुरुषः—'भोक्तृभावात्' । भोक्तृभावेन भोग्ये सुखदुःखे उपलक्षयति । भोग्ये हि सुखदुःखे अनुकूलप्रतिकूलवेनीये प्रत्यात्ममनुभूयेते । तेनाऽनयोरनुकूलनीयेन प्रतिकूलनीयेन च केनचिदप्यन्येन भवितव्यम् । न चाऽनुकूलनीयाः प्रतिकूलनीया वा बुद्ध्यादयः, तेषां सुखदुःखाद्यात्मकत्वेन स्वात्म-

---

ननु आत्मनः ( सांख्यपुरुषस्य ) निर्गुणत्वात् निष्क्रियत्वाच्च तस्याऽधिष्ठातृत्वं नैव सम्भवति, व्यापारवत एवाऽधिष्ठातृत्वदर्शनात् व्यापारावच्छिन्नस्य सारथ्यादेर्यथाऽधिष्ठातृत्वं दृश्यते इति चेन्न । व्यापारशून्यस्यापि सांख्यपुरुषस्याऽयस्कान्तमणेरिव प्रकृतेः सन्निधानमात्रेणैवाऽधिष्ठातृत्वोपपत्तिसम्भवात् । व्यापारवत एवास्ति अधिष्ठातृत्वमिति च नास्ति कश्चन नियमः, सत्त्वेऽपि तस्याऽनभ्युपगमात् । तथा च पारमर्ष सूत्रम्—'तत्सन्निधानादधिष्ठातृत्वं मणिवत्' । अतः सांख्यपुरुषे आत्मनि कर्तृत्वमकर्तृत्वञ्च सर्वमेव केवलं सन्निधिमात्रतो विज्ञेयम् ।

( ७ ) चतुर्थं हेतुमाह—**भोक्तृभावादिति** । भोक्तृत्वात् । इतो हेतोरपि असंहतः पुरुषोऽस्तीति सिद्ध्यति । **भोक्तृभावेनेति** । भोक्तृत्वेन धर्मेण । भोग्ये=भोगविषयीभूते । उपलक्षयति=उपलक्षणविधया बोधयति । उपलक्षणत्वाऽभ्युपगमे यदायातं तद् दर्शयति—**भोग्ये हीति** । प्रत्यात्मम्=प्रतिपुरुषम् ।

भवतु प्रत्यात्मं सुख-दुःखानुभवस्तेन किञ्जातमिति जिज्ञासायामाह—**तेनाऽनयोरिति** । तेन=तेन हेतुना । अनयोः=सुख-दुःखयोः । अनुकूलनीयेन=इदं मेऽनुकूलमिति ज्ञानविषयीभूतेनेत्यर्थः । प्रतिकूलवेदनीयेन=इदं मे प्रतिकूलमिति ज्ञानविषयीभूतेनेत्यर्थः । अन्येन=महदाद्यन्येन चेतनेन आत्मना ( पुरुषेण ) । भवितव्यम्==भवितुं शक्येत । ननु महदादय एवाऽनुकूलतया प्रतिकूलतया वाऽनुभवितारो भवन्त्वत आह—**न चाऽनुकूलनीया इति** । अनुकूलतयाऽनुभवकर्तारः । प्रतिकूलतया=प्रतिकूलतयाऽनुभवशीलाः । बुद्ध्यादयः=आत्मातिरिक्ता जडभूता महदादयः, नैव भवितुमर्हन्तीति भावः । कथमिति जिज्ञासायामाह—**तेषामिति** । महादादीनाम् । सुख-

---

जड़ होने के कारण किसी पर=चेतनतत्त्व से ही साक्षात् परम्परया अधिष्ठीयमान देखा गया है । जैसे यन्त्रादि से अधिष्ठित रथ आदि । इसलिए यह बुद्धि=महदादि भी सुख-दुःख-मोहात्मक हैं, अतः ये भी पर=पुरुष से अधिष्ठीयमान होने चाहिए । और वह पर=पुरुष त्रैगुण्य से अन्य है, वही आत्मा=चेतन है ।

( ७ ) **'इतश्चास्ति पुरुषः'** इति । त्रिगुणात्मक समस्त भोग्य पदार्थों का कोई भोक्ता चेतनतत्त्व अवश्य है । अतः 'भोक्तृभावात्' इस हेतु से भी असंघात पर पुरुष का अस्तित्व सिद्ध है । कारण कि भोक्तृत्व=भोक्तृभाव हेतु से भोग्य जो सुख-दुःखादि, उनका ज्ञान अवश्य होता है । हि=यतः=क्योंकि, भोग्य सुख-दुःख 'अनुकूलं मे सुखम्, प्रतिकूलं मे दुःखम्' इत्यादि रूप से प्रत्यात्म=प्रत्येक आत्मा में अनुभूयमान है । इससे इन दोनों सुख-दुःखों का अनुकूलनीयेन=अनुकूलरूप से अनुभव करने वाला तथा प्रतिकूलनीयेन=प्रतिकूलरूप से अनुभव करने वाला कोई अन्य ही पर=

निवृत्तिविरोधात्। तस्माद् योऽसुखाद्यात्मा सोऽनुकूलनीयः प्रतिकूलनीयो वा, स चात्मेति।

(८) अन्ये त्वाहुः। भोग्या दृश्या बुद्धयादयः। न च द्रष्टारमन्तरेण दृश्यता युक्ता तेषाम्। तस्मादस्ति द्रष्टा दृश्यबुद्धयाद्यतिरिक्तः, स चाऽऽत्मेति।

---

दुःखाद्यात्मकत्वेन = सुख-दुःखादिस्वरूपत्वेन। स्वात्मनि वृत्तिविरोधात् = स्वस्मिन् स्वव्यापाराऽसम्भवात्। अर्थात् महदादयः (बुद्धयादयः) स्वयं सन्ति सुख-दुःखादि-स्वरूपाः, अतस्ते स्वयं स्वेनैव स्वस्य अनुकूलवेदनीयाः प्रतिकूलवेदनीया वा नहि भवितुमर्हन्ति, यतः स्वस्मिन् स्वविषयतायाः सर्वथाऽनुभवविरुद्धत्वात्। एकमेव वस्तु स्वयमेव कर्मापि भवतु कर्तापि चेत्यस्ति अनुभवविरोधः। अयमेव चास्ति कर्मकर्तृविरोधश्च। नहि असितीक्ष्णधाराऽऽत्मानं छिनत्ति छेत्तुं वा प्रभवति, नापि च भगवान् भास्करः, महानसीय-पर्वतीयादिर्वा वह्निरात्मानं दग्धुं शक्नोति।

अपि च सुखी जायमानत्वमेव अनुकूलवेदनीयशब्दार्थः, दुःखी जायमानत्वञ्च प्रतिकूलवेदनीयशब्दार्थः, इत्यञ्च महदादीनां (बुद्धयादीनां) स्वयमेव सुख-दुःखस्वरूपत्वात् कथं स्वयमेव ते महदादयः सुख-दुःखयोरनुभवकर्तारोऽपि भवितुमर्हन्तीति तेभ्यो भिन्न एव कश्चित् चेतनपदनिरूपितां वाच्यतां भजमान आत्मा भवितुं प्रभवतीति स एव सांख्यपुरुष इति सिद्धम्। तदेवोक्तम्—'तस्माद् योऽसुखाद्यात्मेति'। तथा चेदमनुमानं निष्पन्नम्—सुख-दुःखादिस्वरूपं महदादिकं स्वभिन्नेन चेतनपदाभिधेयेन केनचिद् भोक्त्राऽनुभवनीयम्, समुपभोग्यत्वाद् भोजनादिवत् शयनासनादिवद्वा। स च भोक्ता आत्मा (सांख्यपुरुषः) अस्तीति भावः।

(८) निर्गुणस्य निष्क्रियस्याऽसङ्गस्याऽऽत्मनः (सांख्यपुरुषस्य) भोक्तृत्वं कथमिति स्वीकुर्वाणानां मतमाह—**अन्ये त्वाहुरिति**। भोग्या इत्यस्यार्थमाह—**दृश्या इति**। द्रष्टृ-दृश्ययोरविनाभावसम्बन्ध इत्यत आह—**न च द्रष्टारमन्तरेणेति**। द्रष्टारं

---

चेतनतत्त्व होना चाहिए। और बुद्धि = महत् आदि अनुकूलरूप से सुख का और प्रतिकूलरूप से दुःख का अनुभव करने वाले नहीं हैं, क्योंकि वे स्वयं सुख-दुःखस्वरूप हैं, अतः—'स्वात्मनि वृत्तिनिरोधात्' स्वयं अपने में = सुख-दुःखस्वरूप बुद्धि आदि में, स्वयं अपना वृत्ति = व्यापार नहीं हो सकता है। तलवार की धारा स्वयं अपने को नहीं छेद सकती। एवम् अग्नि स्वयं अपने को नहीं जला सकती है। कहा भी है—'नह्यसिधाराऽऽत्मानं छिनत्ति वह्निर्वाऽऽत्मानं दहति'।

अतः जो = असुखाद्यात्मा = सुख-दुःखादिस्वरूप नहीं है, वही सुख-दुःख का अनुभव करने वाला हो सकता है और वही आत्मा = पुरुष = चेतनतत्त्व है।

(८) 'अन्ये त्वाहुः' इति। अन्य आचार्यों का कथन है कि बुद्धि आदि भोग्य = दृश्य है। विना किसी द्रष्टा के इन बुद्धि आदि की दृश्यता युक्त = संभव नहीं है, इसलिए इनका जो भी द्रष्टा है, वह दृश्य = बुद्धि आदि से अतिरिक्त = भिन्न है, और वही आत्मा = पुरुष है।

भोक्तृभावाद् द्रष्टृभावाद्, दृश्येन द्रष्टुरनुमानादित्यर्थः। दृश्यत्वं च बुद्ध्यादीनां सुखाद्यात्मकतया पृथिव्यादिवदनुमितम्।

( ९ ) इतश्चाऽस्ति पुरुष इत्याह—'कैवल्यार्थं प्रवृत्तेश्च' इति। शास्त्राणां महर्षीणां च दिव्यलोचनानाम्। कैवल्यमात्यन्तिकदुःखत्रयप्रशमलक्षणं न बुद्ध्या-

---

विनेत्यर्थः। द्रष्टा च सर्वथा चेतन एव भवितुमर्हति, स एव आत्मा ( साख्यपुरुषः )। तेषाम् = बुद्ध्यादीनाम्। तस्मादिति। द्रष्टृदृश्ययोः परस्परं सापेक्षत्वात्, अविनाभावसम्बन्धवत्त्वाच्च। द्रष्टा=आत्मा। दृश्यबुद्ध्याद्यतिरिक्त एव = दृश्यमहदादिभिन्न एव। अस्तीति शेषः। एतेषां नये भोक्तृभावादित्यस्य द्रष्टृभावादित्यर्थो बोध्यः, तदर्थश्च—दृश्यत्वेन द्रष्टुरनुमानादिति। अनुमानश्च—महदादयः ( आत्मातिरिक्ताः सर्वेऽपि द्रष्टृपूर्वकाः सन्ति दृश्याद् घट-पटादिवत् इति। पक्षधर्मतामाह—दृश्यत्वञ्चेति। सुखाद्यात्मकतया = सुखादिस्वरूपतया। अनुमितम्=बुद्ध्यादयो दृश्याः सुखाद्यात्मकत्वात् पृथिव्यादिवत् इत्यस्ति अनुमानम्।

इदमत्राऽवधेयम्—आत्मनः सांख्यपुरुषस्य यद् दर्शनकर्तृत्वरूपं द्रष्टृत्वं, भोक्तृत्वञ्च निरूपितश्चास्ति सांख्यशास्त्रे तत् सर्वमौपाधिकमेवाऽस्तीति विज्ञेयम्।

( ९ ) हेत्वन्तरं पञ्चमं हेतुमवतारयति—कैवल्यार्थं प्रवृत्तेश्चेति। ननु प्रवृत्तेः प्रयत्नरूपत्वात् अचेतनशास्त्रेषु जडभूतेषु तस्याः प्रवृत्तेः सर्वथा भवितुमशक्यत्वात्, कैवल्यबुद्ध्युत्पादकत्वेन प्रवृत्तिशब्दस्य प्रवृत्तिप्रयोजकत्वमेवाऽर्थो विधेयः। यतः प्रयोजकत्वस्य कारणतावच्छेदक-तदवच्छेदकसाधारणतया न कश्चिद् दोषः। अत एव मुख्यार्थपरत्वानुरोधेन सम्बन्ध्यन्तरमप्युल्लिखति—महर्षीणाञ्चेति। सांसारिकाः खलु चक्षुषा बाह्यानेव विषयान् द्रष्टुं शक्नुवन्ति अतस्ते चर्मचक्षुषः कथ्यन्ते। परन्तु महर्षयः स्वीयतपोबलप्रभावेणाऽतिदूरस्थं सूक्ष्ममतिसूक्ष्मं व्यवहितमपि वा वस्तु द्रष्टुं प्रभवन्तीत्यतस्ते दिव्यचक्षुषो भवन्ति। एवञ्च शास्त्राणां प्रेरणा प्रभावः दिव्यदृष्टिमहर्षीणाञ्च

---

**'भोक्तृभावात्, द्रष्टृभावात्'** इति। इसीलिए इस मत में 'भोक्तृभावात्' का अर्थ है 'द्रष्टृभावात्' और इसका भी अर्थ है—'दृश्यत्व हेतु से द्रष्टा का अनुमान होना'। अनुमान यह है—'बुद्ध्यादयः द्रष्टृपूर्वका दृश्यत्वात् घटादिवत्'। एवं बुद्धि = महत्तत्व आदि का दृश्यत्व क्या वस्तु है—सुख-दुःखमोहस्वरूप होना। जो भी पदार्थ सुख-दुःखमोहस्वरूप = त्रिगुणात्मक है वह सब दृश्य होता है, घट-पट आदि की तरह। अनुमान यह है—'महत्तत्वादयो दृश्याः सुखदुःखमोहात्मकत्वात् पृथिव्यादिवत्'। वही कहा है—'दृश्यत्वञ्च बुद्ध्यादीना सुखाद्यात्मकतया पृथिव्यादिवदनुमितम्'।

( ९ ) **'इतश्चास्ति पुरुष इत्याह'** इति। अर्थात् कैवल्य = मोक्ष = ऐकान्तिकाऽऽत्यन्तिकदुःखनिवृत्ति के लिए 'प्रवृत्ति' होना रूप हेतु से भी पुरुष का 'अस्तित्व' सिद्ध होता है। इसी पञ्चम हेतु 'कैवल्यार्थं प्रवृत्तेश्च' का उपपादन करते है—**'शास्त्राणाम्'** इति। अर्थात् शास्त्र तथा दिव्यलोचन = दिव्यदृष्टि। महर्षि लोगों की प्रवृत्ति ही आत्यन्तिक एवं ऐकान्तिकदुःखत्रयनिवृत्ति लक्षणकैवल्य के लिए होती है, जो बुद्धि

दीनां सम्भवति । ते हि दुःखाद्यात्मकाः कथं स्वभावाद्वियोजयितुं शक्यन्ते । तदतिरिक्तस्य त्वतदात्मनस्ततो वियोगः शक्यसम्पादः । तस्मात् कैवल्यार्थं प्रवृत्तेरागमानां महाधियां चाऽस्ति बुद्धयादिव्यतिरिक्त आत्मेति सिद्धम् ॥१७॥

( १ ) तदेवं पुरुषास्तित्वं प्रतिपाद्य, स किं सर्वशरीरेष्वेकः किमनेकः प्रतिक्षेत्रमिति संशये, तस्य प्रतिक्षेत्रमनेकत्वमुपपादयति—

---

प्रवृत्तिः स्वयं कैवल्योन्मुखमेव गच्छतीति नास्ति प्रच्छन्नोऽयं विषयः, अपि तु सर्वेषामेव विदितः । तथा च शास्त्राणां, महाधियां महात्मनां, तपोवलशालिनां सर्वज्ञकल्पनाञ्च महर्षीणां प्रवृत्तेर्दर्शनात् महदादिव्यतिरिक्त आत्मा सिद्धयतीति न कश्चिद् दोषः । कैवल्य-लक्षणमाह—**आत्यन्तिकेति** । बुद्धयादिभ्यः कैवल्यवैकल्यमप्याह—**न बुद्धयादीनां सम्भवतीति** । कथमिति जिज्ञासायामाह—**ते हीति** । हि=यतः । ते=बुद्धयादयः ।

आत्मनि कैवल्यसम्भवं मन्यमान आह—**तदतिरिक्तस्येति** । बुद्धयाभिन्नस्य । अत-दात्मनः=सुख-दुःखमोहानात्मकस्य आत्मनः । ततः=दुःखादितः । वियोगः । ऐकान्तिकाऽऽत्यन्तिकदुःखनिवृत्तिः । शक्यसम्पादः=सम्पादयितुं शक्यते । उपसंहरति—**तस्मादिति** । बुद्धयादिव्यतिरिक्तस्यैवाऽऽत्मनः दुःखादिवियोगः सम्पादयितुं शक्यते इति हेतोरित्यर्थः । कैवल्यार्थम्=ऐकान्तिकाऽऽत्यन्तिकदुःखनिवृत्तिरूपमोक्षार्थम् । आगमानाम्=शास्त्राणाम् । महाधियाम्=सर्वज्ञकल्पानाम् ( महर्षीणाम् ) । प्रवृत्तेः=प्रवृत्तिदर्शनात् । बुद्धयादिव्यतिरिक्तः । आत्मा=सांख्यपुरुषः ॥ १७ ॥

### पुरुषबहुत्वम्

( १ ) इदानीं जन्ममरणादीत्यादिकारिकामवतारयितुमाह—**तदेवमिति** । सप्तदश-कारिकोक्तप्रकारेणेत्यर्थः । पुरुषास्तित्वम्=प्रकृत्यादिभिन्नत्वेन पुरुषस्याऽस्तित्वम् । प्रतिपाद्य=संसाध्य । सः=आत्मा । किम्=किमिति प्रश्ने । प्रतिक्षेत्रम्=प्रतिशरीरम् । तस्य=पुरुषस्य । तत्र वेदान्तिनः खलु आत्मन एकत्वं वदन्ति । उक्तञ्च—

'नित्यः सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः ।
एकः स भिद्यते शक्त्या मायया न स्वभावतः ॥'

---

आदि के विषय में कदापि संभव नहीं है । क्योंकि वे बुद्धि आदि स्वयं दुःखरूप हैं अर्थात् उनका स्वभाव ही दुःख है, अतः वे कैसे अपने स्वभाव से वियोजित हो सकते हैं, अर्थात् अपने दुःखात्मक स्वभाव को वे=बुद्धि आदि तत्त्व कैसे छोड़ सकते हैं । अतः उन बुद्धि आदि तत्त्वों से अतिरिक्त तथा जो तत्त्व दुःखादिस्वरूप नहीं है, उसी का दुःखादि से आत्यन्तिकनिवृत्तिरूप वियोग हो सकता है । **'तस्मात्'** इति । इसलिए आगम=शास्त्रों की तथा महाबुद्धिमान् महर्षियों की प्रवृत्ति ही कैवल्य के लिए होने से स्पष्ट है कि बुद्धि आदि से अतिरिक्त आत्मा है, वही पुरुष है ॥ १७ ॥

( १ ) **'तदेवं पुरुषास्तित्वम्'** इति । इस प्रकार पूर्वकारिका में पुरुष के अस्तित्व का प्रतिपादन कर वह पुरुष समस्त शरीरों में एक है अथवा प्रतिक्षेत्र=प्रत्येक शरीर में अनेक=भिन्न-भिन्न है, ऐसा संशय हो जाने पर उस पुरुष को प्रतिक्षेत्र में अनेक है, यह प्रतिपादन करते हैं—**'जननमरण'** इत्यादि कारिका से ।

**जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च ।**
**पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव ॥ १८ ॥**

( २ ) 'जनन' इत्यादिना । 'पुरुषबहुत्वं सिद्धम्' । कस्मात् ? 'जननमरणकरणानां प्रतिनियमात्' । निकायविशिष्टाभिरपूर्वाभिर्देहेन्द्रियमनोऽहङ्कारबुद्धिवेदनाभिः पुरुषस्याऽभिसम्बन्धो जन्म, न तु पुरुषस्य परिणामः, तस्या-

---

अन्वयः—पुरुषबहुत्व सिद्धं ( कुतः ) जननमरणकरणाना प्रतिनियमाद् अयुगपत्प्रवृत्तेः त्रैगुण्यविपर्ययाच्च ।

इति वेदान्तमतं दूषयितुमेवाह—**तदेवमित्यादि** । तस्याऽऽत्मनः प्रतिक्षेत्रमनेकत्वमुपपादयति—**जननमरणकरणानां प्रतिनियमादिति** । 'पुरुषबहुत्वम्' इत्यस्ति प्रतिज्ञावाक्यम्, अन्ये च हेतवः ।

( २ ) पुरुषः ( आत्मा ) प्रतिशरीरं भिन्न इत्यत्र हेतुमाह—**जननमरणेत्यादिः** । एकस्य कस्यचिज् जननं=जन्म भवति, अपरस्य च तस्मिन्नेव कालेऽपरस्मिन् वा काले मरणं भवतीति प्रतिशरीरं नियमो दृश्यते, एवं करणानां=चक्षुरादीन्द्रियरूपकरणानाम्, अन्त.करणानाञ्च प्रतिशरीरं भिन्नत्वनियमदर्शनात् प्रतिशरीरमात्मा भिन्न इति ज्ञायते । स्फुटीभविष्यत्यग्रे ।

जन्मपदार्थमाह—**निकायेति** । देव-मनुष्य-तिर्यक्प्रभृतितत्तदात्मनां ये सन्ति अदृष्टास्तत्प्रयोज्यो यो भाविभोगाऽनुकूलो विजातीयः समुदायः परस्परसापेक्षसम्बन्धरूपः, स एव निकायशब्देनोच्यते, तद्विशिष्टाभिः=प्रागुक्तभाविभोगकारणीभूतविजातीयसमुदायविशिष्टाभिरित्यर्थः । **देहेन्द्रियमनोऽहङ्कारबुद्धिवेदनाभिरिति** । देहः=रोम-लोहित-मांस-स्नायु-अस्थि-मज्जारूपं पाट्कौशिकं पाञ्चभौतिकं स्थूलशरीरमित्यर्थः, इन्द्रियाणि=ज्ञानेन्द्रिय-कर्मेन्द्रियरूपाणि बाह्यानि, तानि च श्रोत्र-चक्षु.-त्वग्-रसना-घ्राणरूपाणि

---

कारिकार्थ—प्रत्येक शरीर मे पुरुष-भेद सिद्ध है, क्योकि जन्म-मरण तथा इन्द्रियो की प्रतिनियत व्यवस्था होने के कारण धर्मादियों के विषय में विभिन्न प्रवृत्ति के होने से भी और गुणत्रय के परिणाम-भेद से भी यह सिद्ध है कि प्रतिशरीर मे भिन्न-भिन्न पुरुष ( आत्मा ) है ।

( २ ) **'पुरुषबहुत्वं सिद्धम्'** इति । इस १८वी कारिका के अन्तर्गत तीन हेतुओं से पुरुष का बहुत्व बतलाते है । उन तीन हेतुओ में प्रथम हेतु है—'जननमरणकरणानां प्रतिनियमात्' ।

प्रश्न—पुरुष=आत्मा बहुत कैसे है ?

उत्तर—जनन-मरण-करण—इनकी व्यवस्था से । निकायविशिष्ट=समुदित=मिलित तथा अपूर्व=जो पूर्व में नहीं थे अर्थात् अभिनव, शरीर, इन्द्रिय, मन, अहङ्कार, बुद्धि, वेदनाओं के साथ जो पुरुष=चेतनतत्त्व=आत्मा का सम्बन्ध होना, वही जनन=जन्म है, नकि पुरुष का शरीर-इन्द्रिय आदि के रूप में परिणत हो जाना

ऽपरिणामित्वात्। तेषामेव च देहादीनामुपात्तानां परित्यागो मरणम्, न त्वात्मनो विनाशः, तस्य कूटस्थनित्यत्वात्। करणानि बुद्ध्यादीनि त्रयोदश। तेषां जन्ममरणकरणानां प्रतिनियमो व्यवस्था। सा खल्वियं सर्वशरीरेष्वेकस्मिन् पुरुषे नोपपद्यते।

---

ज्ञानेन्द्रियाणि, वाक्पाणिपादपायूपस्थरूपाणि कर्मेन्द्रियाणि बाह्यानि, मनोऽहङ्कारबुद्धयश्चैतान्यन्तःकरणानि, वेदना च सुख-दुःखाद्यनुभवरूपा, स्फूर्तिरूपा वा चेतना, ताभिः=तादृशभोगकारणीभूतविजातीयसमुदायभावं प्रापितैर्देहादिभिः सहेत्यर्थः। पुरुषस्य=आत्मनः। अभिसम्बन्धः=विजातीयसंयोगात्मकसम्बन्धः। जन्म=जननापरपर्यायभूतम्। इत्थञ्चाऽऽत्मनो नित्यत्वेऽपि शरीरेन्द्रियादिरूपं यज्जननाऽपरपर्यायभूतं जन्म तत् सर्वदाऽक्षतमेवास्ति।

आत्मनो व्यापकत्वेन मरणकालेऽपि शरीरादिभिः सह तस्य सम्बन्धोऽस्त्येवेति तस्मिन्नपि काले जन्मव्यवहारापत्तिः स्यादात्मन इति तद्वारणाय निकायविशिष्टाभिरित्युक्तं मिश्रैः। तथा च मरणकाले निकायवैशिष्ट्याभावान्न जन्मव्यवहारापत्तिरिति भावः।

पूर्वकालीनशरीरेन्द्रियमनोऽहङ्कारादिभिः सह पुरुषीयाऽभिसम्बन्धस्य प्रतिक्षणमेव जायमानत्वाद् विद्यमानत्वाच्च तत्रापि जन्मव्यवहारापत्तिः स्यादतस्तद्वारणाय—'अपूर्वाभिरि'त्युक्तं श्रीमिश्रचरणैः। स्वसजातीयनिकायानुत्तराभिरिति च तदर्थः।

परिणामः=विकारभेदः=तात्त्विकोऽन्यथाभावः। 'न जन्म' इति च पूर्वेणाऽन्वयः। कस्मात्? तस्य=पुरुषस्य। अपरिणामित्वात्=परिणामरहितत्वात्। पुरुषस्य परिणामित्वे सत्येव तद्रूपजन्मवत्त्वमापद्येत परन्तु तदेव तस्य नास्तीति तु परमार्थः।

मरणपदार्थमाह—**तेषामेव चेति**। पूर्वं गृहीतानामेव चेत्यर्थः। देहादीनाम्=शरीरादीनाम्। उपात्तानाम्=आत्मना सह सम्बद्धानाम्। परित्यागः=प्रागुक्तविजातीयसंयोगनाशः। मरणम्=प्राणोपलक्षितशरीरादीनां त्यागरूपम्, 'मृङ् प्राणत्यागे' इत्यादिनाऽपि त्यागरूपमेव मरणं पुष्टीकृतम्, न तु घटादीनामिव विनाशरूपं मरणमत्र विज्ञेयमित्यभिप्रायेणाह—**न तु आत्मनो विनाश इति**। आत्मनः=पुरुषस्य। विनाशः=ध्वंसः=तिरोभावो वा मरणम्। कथम्? तस्य=आत्मनः। कूटस्थनित्यत्वात्=निर्विकारत्वात्, कूटः=लोहकाराऽऽपणस्था लोहानां कुट्टनार्थिका लोही च ऐरिणी,

---

जनन है, क्योंकि पुरुष अपरिणामी है और उपात्त=गृहीत=धारण किये हुए शरीरादि का परित्याग कर देना मरण है, न कि आत्मा=पुरुष का विनाश मरण है, क्योंकि वह पुरुष कूटस्थ=एकरूपतया कालव्यापी और नित्य है, अतः उसके मरण=विनाश का कोई प्रश्न ही नहीं है। तथा करण त्रयोदश विध हैं—पाँच ज्ञानेन्द्रिय, पाँच कर्मेन्द्रिय तथा बुद्धि आदि तीन। उन जनन-मरण-करणों का जो प्रतिनियम=व्यवस्था है, वह सब शरीरों में एक आत्मा=पुरुष के स्वीकार करने पर कदापि नहीं उपपन्न हो सकेगी।

( ३ ) तदा खल्वेकस्मिन् पुरुषे जायमाने सर्वे जायरेन्, म्रियमाणे च म्रियेरन्; अन्धादौ चैकस्मिन् सर्वे एव अन्धादयः, विचित्ते चैकस्मिन् सर्व एव विचित्ताः स्युरित्यव्यवस्था ।

---

तद्वत् सर्वदा तिष्ठतीति कूटस्थः=सर्वदा एकरूपः, एकरसः, निश्चलः, संसर्गिविनाशेऽपि स्वयमनष्टः, अत एव कालव्यापी, एतादृशकूटस्थनिष्ठनित्यत्वात्=तिरोभावाऽप्रतियोगित्वात्, ध्वंसाऽप्रतियोगित्वाद्वा । 'स वा अयं पुरुषः जायमानः शरीरमभिसम्पद्यमानः, स उत्क्रामन् म्रियमाणः' एवम्प्रकारेण देहादिना संयुक्तत्वमेवाऽऽत्मनो जायमानत्वम्, शरीरादुत्क्रमणमेव च तस्य मरणशीलत्वम् इति कथ्यते । 'स वा अयं पुरुषो जायमानः' इत्यादिश्रुतयः शरीरसम्बन्धासम्बन्धनिमित्ते जन्ममरणे जीवात्मनो दर्शयति न स्वरूपतः । तस्मादयं जन्ममरणव्यपदेशो लौकिको व्यावहारिक औपाधिको भाक्तस्तावदात्मनि । अत्र श्रुतेः प्रामाण्यमप्याह—'जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते' ( छां० ६।११।३ ) ।

करणानि दर्शयति—**बुद्ध्यादीनि त्रयोदशेति** । वाक्पाणिपादपायूपस्थेति कर्मेन्द्रियसहितं श्रोत्र-त्वक्-चक्षू-रसना-घ्राणेति संज्ञकं दशविधं ज्ञानेन्द्रियम्; मनोबुद्ध्यहङ्काराश्चेति त्रीणि अन्तःकरणानि चेति त्रयोदशविधानि करणानि भवन्ति । एतेषां जन्ममरण-त्रयोदशविधकरणानाम्, प्रतिनियमात्=व्यवस्थातः, पुरुषबहुत्वं सिद्ध्यति ।

प्रतिनियमशब्दार्थमाह—**व्यवस्थेति** । व्यवस्था=वैयधिकरण्येनाऽवस्थानम् । खलु=निश्चयेन । इयम्=व्यवस्था । एकस्मिन् पुरुषे स्वीकृते सति अर्थात् पुरुषबहुत्वानङ्गीकारे इति शेषः, अस्य च नोपपद्यते इत्यनेनाऽन्वयः ।

( ३ ) कुतः ? इत्याकाङ्क्षायामाह—**तदा खल्वेकस्मिन्निति** । तदा=आत्मन एकत्वे, पुरुषबहुत्वाऽसत्त्वे इत्यर्थः । तथा च जननमरणादिव्यवस्थाऽनुपपद्यमाना सती आत्मनो बहुत्वमापादयतीति सूचितं भवति ।

आत्मनः ( पुरुषस्य ) एकत्वे जननमरणादिव्यवस्थानुपपत्तिमभिधाय करणव्यवस्थानुपपत्तिं दर्शयति—**अन्धादौ चेति** । अन्धत्वं दर्शनशक्तिविहीनत्वम्, आदिना बधिरत्वादिकमपि ग्राह्यम् ।

यद्यपि—अन्धत्वादिकमिन्द्रियधर्मस्तथापि करणाश्रयीभूतसङ्घाताभिमानिनि पुरुषे

---

( ३ ) प्रश्न—क्यों एक पुरुष के अङ्गीकार करने पर व्यवस्था नहीं बन सकेगी ?

उत्तर—'तदा खल्वेकस्मिन्' इति । अर्थात् एक पुरुष=आत्मा के स्वीकार करने पर आपत्ति यह लग जायेगी कि एक पुरुष के जायमान=शरीरादि के साथ सम्बन्ध होने पर अर्थात् एक पुरुष के उत्पन्न होने पर सभी उत्पन्न होने लग जायें, एक के मरण होने पर सभी म्रियमाण होने लग जायें । इसी प्रकार एक पुरुष के अन्धे हो जाने पर=दर्शनशक्ति के तिरोभाव हो जाने पर सब शरीरों में दर्शनशक्ति का अभाव हो जाय, क्योंकि शरीरों में रहकर एक मात्र देखने-सुनने वाला तो पुरुष ही है ।

( ४ ) न च 'एकस्याऽपि पुरुषस्य देहोपधानभेदाद्व्यवस्था' इति युक्तम्, पाणिस्तनाद्युपाधिभेदेनाऽपि जन्ममरणादिव्यवस्थाप्रसङ्गात् । न हि पाणौ वृक्णे जाते वा स्तनादौ महत्यवयवे युवतिर्मृता जाता वा भवतीति ।

---

तदारोप्यते । एवञ्चैकस्यैवाऽऽत्मनः ( पुरुषस्य ) सकलशरीरवृत्तित्वस्वीकारे कस्याप्येकस्य शरीरस्य दुष्टेन्द्रियावच्छिन्नत्वे दुष्टेन्द्रियानवच्छिन्नशरीरनिष्ठस्यापि पुरुषस्याऽभिन्नतयाऽन्धादिशब्दव्यपदेश्यता नितान्तमावश्यकी, दोषावच्छिन्नेन्द्रियविशिष्टशरीरवर्तित्वधर्मसद्भावादिति भावः ।

पुरुषस्यैकत्वस्वीकारे दोषान्तरमप्याह—**विचित्ते चैकस्मिन्निति** । विचित्ते=विगतम्—शान्तवृत्तिकं, वृत्तिरहितं वा चित्तं यस्य स विचित्तस्तस्मिन्=सुषुप्ते=योगयुक्ते वेत्यर्थः । एवञ्च एकस्मिन् सुषुप्ते योगयुक्ते वा जायमाने सर्वे एव प्राणिनो योगिनः चित्तसुषुप्तिमन्तो वा भवन्तु इत्यापद्येत । एवमेवाऽऽत्मन एकत्वस्वीकारे बन्धमोक्षयोर्व्यवस्थाऽनुपपत्तिरनुसन्धेया । यतः—'य एतद् विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवोपयन्ति' इति श्रुतेः प्रामाण्यावधारणात् ।

वेदान्तमतसिद्धाऽऽत्मैक्यस्वीकारे जननमरणकरणानां व्यवस्थाया अनुपपत्ति प्रदर्श्य इदानीं स्वमतेन तेषां व्यवस्थाया उपपत्तिं दर्शयति—**प्रतिक्षेत्रमिति** । प्रतिशरीरमित्यर्थः । एवञ्च यावन्ति सन्ति शरीराणि तावत एव तत्तच्छरीरावच्छिन्नाऽऽत्मनः ( पुरुषान् ) प्रकल्प्य प्रागुक्ताऽव्यवस्था वारणीया । पुरुषभेदे=आत्मनो भेदे, आत्मनोऽनेकत्वे इत्यर्थः ।

( ४ ) ननु शरीराद्युपाधिभेदादेव जनन-मरणादिव्यवस्था स्यादित्याशङ्क्य निरस्यति—**न चैकस्यापीति** । पुरुषस्य=आत्मनः । देहोपधानभेदात्=शरीरोपाधिभेदात् ।

उपाधिभेदेन व्यवस्थाया आपत्तिरूपम् अनौचित्यं दर्शयति—**पाणिस्तनाद्युपाधिभेदेनेति** । पाणिः=हस्तः । स्तनः=कुचः । शरीरावयवभूत इत्यर्थः ।

अत्रेदमस्ति मिश्राणां तात्पर्यं यदि शरीरस्योपाधिरूपतया जनन-मरणादिव्यवस्थाहेतुत्वं स्वीक्रियेत तदा शरीरस्यैवोपाधित्वं न तु तदवयवानामित्यत्र नियामकाभावेन

---

**'विचित्ते चेति'** । और एक पुरुष के विचित्त=सुप्त अथवा योगयुक्त हो जाने पर सभी विचित्त हो जायें अर्थात् चित्तवृत्ति रहित हो जायें, यह अव्यवस्था हो जायेगी, यदि पुरुष को एक माना जायेगा । और यदि प्रतिक्षेत्र=प्रत्येक शरीर में उसे भिन्न-भिन्न माना जाता है; तो कोई भी अव्यवस्था न होकर पूर्णरूप से व्यवस्था बनी हुई है ।

( ४ ) **'न चैकस्यापि पुरुषस्य'** इति । अद्वैतवेदान्ती कहता है कि आत्मा=पुरुष सब शरीरों में एक ही है । शरीररूप उपाधि के भेद से ही जन्म, मरण आदि की व्यवस्था हो जायेगी । पूर्वोक्त 'एकस्मिन् जायमाने सर्वे जायेरन्' इत्यादि जो दोष थे, इन समस्त दोषों के निरस्त हो जाने से व्यवस्था ठीक हो जायेगी । अर्थात् जनन-

( ५ ) इतश्च प्रतिक्षेत्रं पुरुषभेद इत्याह—'अयुगपत्प्रवृत्तेश्च' इति । प्रवृत्तिः प्रयत्नलक्षणा यद्यप्यन्तःकरणवर्तिनी, तथापि पुरुष उपचर्यते । तथा च तस्मि-

---

विनिगमनाविरहात् शरीरवत्तदवयवानां हस्त-पादादीनामपि उपाधित्वेन जन्मादि-व्यवस्थापकत्वं स्वीक्रियताम् । तथात्वे का हानिरिति चेत्तर्हि व्यवहारविरोधेन परि-हरति—नहीति । व्रणे=छिन्ने । युवतिर्मृता, इति न केनापि व्यवह्रियते । वा= अथवा । महत्त्ववयवे स्तनादौ—महति=स्थूले, अवयवे=शरीरावयवे, स्तनादौ= कुचादौ । जाते=जायमाने, युवतिः=यौवनावस्थासम्पन्ना नारी । जाता=समुत्पन्ना, इत्यपि न केनापि कथ्यते ।

यद्यपि शरीरावयवभूते स्तनादौ जायमाने शैशवं विहाय तारुण्यप्राप्तिर्युवत्याः प्रत्यक्षेणाऽनुभूयते, तथापि तत्र युवतिर्जाता इति न केनाप्यनुभूयते नापि व्यवह्रियते, सैवेयं युवतिरिति प्रत्यभिज्ञादर्शनात् । वेदान्तिमते तु देहोपाधिमादायाऽऽत्मनि यथा समुत्पन्नत्वव्यवहारः प्रमाणत्वेन कल्पितो वर्तते तथैव देहावयवस्तनादिजन्मनापि आत्मनि जायमानत्वव्यवहारो भवेत्, उपाधित्वाविशेषात्, न च भवति, तस्मान्नोपाधि-भेदाद् भेदव्यवस्था भवितुमर्हति अपि तु आत्मभेदादेवेति पुरुषबहुत्वं सिद्धम् ।

( ५ ) पुरुषबहुत्वसाधकं हेत्वन्तरमप्याह—अयुगपत्प्रवृत्तेश्चेति । प्रतिक्षेत्रम्= प्रतिशरीरम् । हेतुघटकीभूता प्रवृत्तिः प्रयत्नरूपा, प्रयत्नश्चेच्छाजन्यो गुणः प्रवर्तनारूप-श्चालनात्मकश्चेतनधर्मः, तस्य चाऽयौगपद्यदर्शनेनाऽनैक्यमिति । तथा च प्रयत्नाऽयोग-

---

मरण आदि सब शरीर के धर्म है और अन्धत्वादि इन्द्रियों के धर्म हैं, इन्द्रिय और शरीरादि उपाधि होने के कारण भिन्न-भिन्न हैं । अतः पुरुष के एक होने पर भी उपाधि-भेद से ही 'एकस्मिन् पुरुषे जायमाने सर्वे जायेरन्, म्रियमाणे च म्रियेरन्, अन्धादौ चैकस्मिन् सर्वे एव अन्धाः स्युः'—ये सभी पूर्वोक्त आपत्तियाँ निरस्त हो जाती है ।

'इति न च युक्तम्, पाणिस्तनाद्युपाधौ'ति । सांख्याचार्य का कथन है—'इति न च युक्तम्' अर्थात् उपाधि-भेद से पूर्वोक्त जन्म-मरणादि की व्यवस्था उपपन्न करना युक्त=उचित नहीं है, क्योंकि यदि उपाधि के भेद से ही जन्म-मरणादि की व्यवस्था बन सकती हो, तब तो शरीर के अवयव पाणि=हाथ, स्तन आदि भी उपाधि हैं, इनके भेद से भी जन्म-मरणादि की व्यवस्था होनी चाहिए । परन्तु ऐसा होता नही है, कारण कि हाथ के व्रण=भग्न हो जाने पर युवति मर गई, यह कोई नहीं कहता है तथा स्तन आदि अवयवों के उत्पन्न होने पर युवति उत्पन्न हुई यह भी कोई नही कहता है । अतः उपाधि भेद से पुरुष=आत्मा भिन्न नहीं है, बल्कि पुरुष स्वतः ही भिन्न है और उसके भेद से ही जन्म-मरणादि की व्यवस्था होती है ।

( ५ ) 'इतश्च प्रतिक्षेत्रं पुरुषभेदः' इति । अर्थात् अयुगपत् प्रवृत्ति=एक साथ प्रवृत्ति न होने से भी प्रत्येक शरीर में पुरुष=आत्मा, भिन्न-भिन्न है । प्रवृत्ति नाम

न्नेकत्र शरीरे प्रयतमाने, स एव सर्वशरीरेष्वेक इति सर्वत्र प्रयतेत, ततश्च सर्वाण्येव शरीराणि युगपच्चालयेत् । नानात्वे तु नायं दोष इति ।

( ६ ) इतश्च पुरुषभेद इत्याह—'त्रैगुण्यविपर्ययाच्चैव' इति । एवकारो

---

प्रद्यदर्शनात् तदाश्रयस्याऽऽत्मनो भेदः सिद्धयति । **प्रवृत्तिश्चेति** । प्रयत्नलक्षणा=प्रयत्नस्वरूपा ।

ननु प्रयत्नरूपस्य परिणामस्य बुद्धिधर्मत्वादपरिणमनशीलस्याऽऽत्मनो धर्मत्वाभावात् कुतोऽन्यधर्माऽयौगपद्येन पुरुषबहुत्वसाधकमनुमानं भवितुमर्हतीत्याशङ्कायामाह–**यद्यपीति** । अर्थात् प्रयत्नस्वरूपा प्रवृत्तिर्यद्यपि अन्तःकरणे=बुद्धौ, वर्तते । तथापि अन्तःकरणवर्तिनी सा प्रवृत्तिः, पुरुषे=आत्मनि, उपचर्यते=उपचारेण पुरुषसम्बन्धितया व्यवह्रियते, अविवेकशीलानामात्माऽन्तःकरणयोरभेदग्रहनिबन्धनजन्याऽन्तःकरणधर्मात्मिका प्रवृत्तिः पुरुषे ( आत्मनि ) उपचर्यते=आरोप्यते, इति । उपचारश्च कुतश्चिन्निमित्तादतस्मिस्तद्व्यवहाररूपः । प्रकृते बुद्धया सह स्वस्वामिभावसम्बन्ध एव निमित्तो वर्तते प्रवृत्तौ पुरुषसम्बन्धित्वव्यवहारसम्पादने । यथा सेनास्थेषु समष्टिरूपेषु योद्धृजनेषु वर्तमानो जयः पराजयो वा स्वामिनि ( राज्ञि ) आरोप्यते, यथा वा जले कम्पमाने सति जलप्रतिबिम्बिते चन्द्रेऽपि तत्कम्पनं प्रतीयमानं भवति, तथैव बुद्धौ वर्तमाना प्रवृत्तिरपि पुरुषे प्रतीयमाना भवतीति भावः ।

आत्मन एकत्वस्वीकारपक्षे युगपत्प्रवृत्त्यापत्तिं दर्शयति—**तथा चेति** । आत्मन एकत्वे चेत्यर्थः । तस्मिन्=आत्मनि । एकत्र शरीरे=एकशरीरावच्छेदेन, एकस्मिन् शरीरे इत्यर्थः । प्रयतमाने=चलमाने सतीत्यर्थः । सर्वत्र=सर्वशरीरावच्छेदेन, सर्वेषु शरीरेषु इत्यर्थः । प्रयतेत=प्रयत्नं कुर्यात्, चालनं विदध्यादित्यर्थः । कथमित्याकाङ्क्षायामाह–**स एव सर्वशरीरेष्वेक इति** ।

एकस्याऽऽत्मनः सर्वशरीरावच्छिन्नत्वे दोषमाह—**ततश्चेति** । युगपच्चालनाच्चेत्यर्थः । युगपत्=एककालावच्छेदेन, एकस्मिन्नेव काले इत्यर्थः । चालयेत्=प्रवर्तयेत् । नानात्वे=आत्मनो नानात्वे, पुरुष-बहुत्वे इत्यर्थः । नाऽयं दोषः=नास्ति युगपच्चालनापत्तिरूपो दोष इत्यर्थः ।

( ६ ) पुरुषबहुत्वसाधकं हेत्वन्तरमाह—**'त्रैगुण्यविपर्ययाच्चैव' इति** । तथा च अनेनापि हेतुना पुरुषबहुत्वमेव सिद्धं भवति न तु तस्यैक्यम् । तस्य=त्रैगुण्यस्य=

---

है 'प्रयत्न' का । यद्यपि वह सांख्यमत से अन्तःकरण का धर्म है; तथापि पुरुष में प्रयत्न=प्रवृत्ति का औपचारिक प्रयोग होता है 'मञ्चाः क्रोशन्ति' की तरह । अतः सारांश यह निकला कि यदि एक पुरुष है तो उसके किसी एक शरीर में प्रयत्नशील होने पर एक होने के कारण पुरुष को समस्त शरीरों में प्रयत्नशील होना चाहिए । अर्थात् सभी शरीरों की किसी एक कार्य को करने में एक साथ ही प्रवृत्ति होनी चाहिए; यह आपत्ति एकपुरुषवादपक्ष में है । नानात्वे=पुरुष के नानात्वपक्ष में यह दोष नहीं है ।

( ६ ) **'इतश्च पुरुषभेदः'** इति । अर्थात् त्रैगुण्य के विपर्यय से भी प्रतिक्षेत्र में पुरुष

भिन्नक्रमः 'सिद्धम्' इत्यस्यानन्तरं द्रष्टव्यः। सिद्धमेव नासिद्धम्। त्रयो गुणास्त्रैगुण्यं, तस्य विपर्ययोऽन्यथात्वम्।

केचित्खलु सत्त्वनिकायाः सत्त्वबहुलाः, यथोर्ध्वस्त्रोतसः; केचिद्रजोबहुलाः, यथा मनुष्याः; केचित्तमोबहुलाः, यथा तिर्यग्योनयः। सोऽयमीदृशस्त्रैगुण्यविपर्ययोऽन्यथाभावस्तेषु तेषु सत्त्वनिकायेषु न भवेद्, यद्येकः पुरुषः स्यात्, पुरुषभेदे त्वयमदोष इति ॥ १८ ॥

( १ ) एवं पुरुषबहुत्वं प्रसाध्य विवेकज्ञानोपयोगितया तस्य धर्मानाह—

---

सत्त्वरजस्तमस्त्वावच्छिन्नान्यतमस्येत्यर्थः। विपर्ययः= अन्यथात्वम्, अर्थात् सात्त्विक-राजस-तामसभेदेन उत्तममध्यमभावात्मकं प्राणिवैजात्यम्। तदेव स्फुटयति—केचित् खल्विति। सत्त्वनिकायाः=प्राणिसमूहाः। सत्त्वबहुलाः=सत्त्वगुणप्रधानाः। ऊर्ध्व-स्रोतसः=जितेन्द्रियाः, देवादयः सत्पुरुषाश्च भीष्मप्रभृतयः। रजोबहुलाः= रजोगुण-प्रधानाः। तमोबहुलाः=तमोगुणप्रधानाः।

सर्वेषु शरीरेष्वात्मैक्यपक्षेऽयं त्रैगुण्यविपर्ययो न स्यादित्येव सुस्पष्टयति—**सोऽयमीदृश** इत्यादिना। तेषु तेषु=प्रागुक्तेषु। सत्त्वनिकायेषु=प्राणिसमूहेषु। अन्यथाभावः=वैचित्र्यम्। तथा च आत्मन एकत्वे प्रागुक्तनानाविधप्राणभृत्प्रपञ्चो न स्यात्। भेदे तु=पुरुषबहुत्वे तु। अयम्=प्रागुक्त उत्तममध्यमाधमभावः ॥ १८ ॥

( १ ) तस्माच्च विपर्यासादित्यादिकारिकामवतारयति—**एवं पुरुषबहुत्वमिति**।

---

भिन्न है, यह सिद्ध होता है। 'त्रैगुण्यविपर्ययाच्चैव' यह 'एवकार' भिन्न क्रम को बतलाने वाला है, इस का अन्वय 'सिद्धम्' इसके बाद करके सिद्धमेव अर्थात् पुरुष का बहुत्व=भेद सिद्ध ही है, असिद्ध नही है। 'त्रैगुण्यविपर्यय' का अर्थ है—'त्रयो गुणा एव त्रैगुण्यम्', त्रैगुण्य का विपर्यय=अन्यथाभाव=अन्यथात्व=वैलक्षण्य=वैचित्र्य—ये सभी 'विपर्यय' शब्द के अर्थ हैं, प्रकृत में 'विपर्यय' का अभाव अर्थ नही है। क्योंकि अभाव अर्थ करने से पुरुष का भेद अथवा उसका बहुत्व सिद्ध नही हो सकेगा, अतः विपर्यय के अन्यथात्व=वैचित्र्य आदि अर्थ ही ठीक है। उन्ही अर्थो को स्पष्ट करते हैं—कुछ प्राणी लोग सत्त्वनिकाय=सत्त्वबहुल=सत्त्वगुणप्रधान होते हैं, जैसे ऊर्ध्वस्रोता=जितेन्द्रिय, देवता-प्रभृति लोग। कुछ प्राणी रजोबहुल= रजोगुण-प्रधान होते हैं, जैसे हम मनुष्य लोग तथा कुछ तमोबहुल=तमोगुण-प्रधान होते हैं, जैसे पशु-पक्षी आदि। इस कारण से यह त्रैगुण्यविपर्यय=त्रिगुणों का अन्यथाभाव= वैचित्र्य=वैलक्षण्य, उन सत्त्वनिकायों=प्राणियों में न होता अर्थात् न देखने में आता, यदि एक ही पुरुष होता। और 'भेदे त्वयम्' इति। पुरुषों को प्रत्येक शरीर में यदि भिन्न-भिन्न मानते है तब पूर्वोक्त अन्यथात्वरूप वैचित्र्य बन जाता है, कोई दोष नही आ सकेगा ॥ १८ ॥

( १ ) इस प्रकार पुरुष का बहुत्व सिद्ध करके विवेकज्ञान के उपयोगी होने से उस पुरुष के साक्षित्व आदि धर्मों को बतलाते हैं—'**तस्माच्च विपर्यासात्**' इत्यादि कारिका से।

**तस्माच्च विपर्यासात्सिद्धं साक्षित्वमस्य पुरुषस्य ।**
**कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च ॥ १९ ॥**

( २ ) 'तस्माच्च' इति । 'च'शब्दः पुरुषस्य बहुत्वेन सह धर्मान्तराणि समुच्चिनोति । 'विपर्यासादस्मात्' इत्युक्ते 'त्रैगुण्यविपर्ययात्' इत्यनन्तरोक्तं सम्बध्येत, अतस्तन्निरासाय 'तस्मात्' इत्युक्तम् । अनन्तरोक्तं हि सन्निधानादि-

---

प्रसाध्य = प्रागुक्तकारिकया हेतुत्रयेण साधयित्वा । विवेकज्ञानोपयोगितया = विवेक-ज्ञानसहकारितया । तस्य = पुरुषस्य । धर्मान् = तस्माच्च विपर्यासादित्यादिकारि-कोल्लिखितसाक्षित्व-कैवल्यादिधर्मान् । आह = कथयति—

अन्वयः—च यस्मात् विपर्यासात् अस्य पुरुषस्य साक्षित्वं कैवल्यं माध्यस्थ्यं, द्रष्टृत्वम्, अकर्तृभावश्च सिद्धम् ( भवति ) ।

**तस्माच्च विपर्यासादिति** । तस्मात् = 'त्रिगुणमविवेकि' इत्यादिकारिकोक्तधर्मेभ्यः । विपर्यासात् = विपरीतात्, अर्थात् अत्रिगुणत्वात्, विवेकित्वात्, अविषयत्वात्, असाधारणत्वात्, चेतनत्वात् अप्रसवधर्मित्वाच्च । अस्य = सांख्यमतसिद्धस्य । पुरुषस्य = आत्मनः । साक्षित्वम् = ज्ञानरूपत्वम् । कैवल्यम् = ऐकान्तिकात्यन्तिकदुःखत्रय-राहित्यम् । माध्यस्थम् = स्वपक्षपरपक्षशून्यत्वम्, उपकारापकारराहित्यं वा । द्रष्टृत्वम् = केवलं विषयस्वरूपवस्तूनां दर्शनकर्तृत्वम् । अकर्तृभावश्च = कर्तृत्वशून्यत्वम् ।

( २ ) तस्माच्चेत्यत्र 'च' शब्दः, पुरुषस्य = आत्मनः । बहुत्वेन सह = जनन-मरणेत्यादिकारिकया साधितं यत् पुरुषस्य बहुत्वम् = प्रतिशरीरं भिन्नत्वम् अनेकत्वं वा, तेन सह इत्यर्थः । धर्मान्तराणि = तस्माच्चेत्यादिकारिकोक्तानि साक्षित्वादीनि उपर्युक्तानि । समुच्चिनोति = सङ्गृह्णाति ।

ननु 'तस्माच्च विपर्यासात्' इत्यादिकारिकायामीश्वरकृष्णेन 'अस्मात्' इत्यनु-क्त्वा 'तस्मात्' इति कथमुक्तमतस्तत्तात्पर्यमुद्घाटयति मिश्रः—विपर्यासादस्मादिति ।

---

**कारिकार्थ**—तस्मात् = 'त्रिगुणमविवेकि' इत्यादि ग्यारहवीं कारिका में कथित त्रिगुणत्व, अविवेकित्व आदि धर्मों के 'विपर्यास' = विपरीत जो अत्रिगुणत्व, विवे-कित्व, अविषयत्वादि धर्म हैं, उनसे 'अस्य पुरुषस्य' इस पुरुष का साक्षित्व, कैवल्य, माध्यस्थ्य, द्रष्टृत्व और अकर्तृत्व सिद्ध हो जाता है ।

( २ ) **'तस्माच्च' इति** । यहाँ तस्माच्च इस वाक्य में आये हुए 'च' शब्द से पुरुष के बहुत्व के साथ-साथ पुरुष में और दूसरे धर्मों का अर्थात् साक्षित्व, कैवल्य, माध्यस्थ्य आदि धर्मों का भी समुच्चय कर लेना चाहिए ।

**'विपर्यासादस्मात्' इति** । यहाँ प्रश्न होता है कि 'तस्माच्च विपर्यासात्' के स्थान पर 'अस्माच्च विपर्यासात्' यही क्यों नहीं कह दिया ? इसका उत्तर यही दिया गया कि 'तस्मात्' इसके स्थान में यदि 'अस्मात्' का उल्लेख होता तो 'त्रिगुणमविवेकि इत्यादि ११वीं कारिका के अनन्तर तथा प्रस्तुत कारिका के अव्यवहित पूर्वकारिक

दमो विषयो, विप्रकृष्टश्च तद इति विप्रकृष्टं 'त्रिगुणमविवेकि' इत्यादि सम्बध्यते। तस्मात् त्रिगुणत्वादेर्यो विपर्यासः स पुरुषस्यात्रिगुणत्वं विवेकित्वमविषयत्वमसाधारणत्वं चेतनत्वमप्रसवधर्मित्वं च।

( ३ ) तत्र चेतनत्वेनाऽविषयत्वेन च साक्षित्वद्रष्टृत्वे दर्शिते, चेतनो हि द्रष्टा भवति नाचेतनः; साक्षी च दर्शितविषयो भवति, यस्मै प्रदर्श्यते विषयः स साक्षी। यथा हि लोकेऽर्थिप्रत्यर्थिनौ विवादविषयं साक्षिणे दर्शयतः।

---

इत्युक्ते=तस्माच्चेत्यस्य स्थाने 'अस्मात्' इत्युक्ते सतीत्यर्थः। अर्थात् 'अस्माच्च विपर्यासात्' इत्युक्ते सतीति यावत्। एवं कथिते च सति 'त्रैगुण्यविपर्ययाच्चैवे'ति यत्, अनन्तरोक्तम्=जन्ममरणकरणानामित्यादिपूर्वोक्ताऽष्टादशकारिकोक्तम्। सम्बध्येत=सम्बन्धं लभेत। एवञ्च सति 'अत्रैगुण्यात्' कैवल्यं, माध्यस्थ्यं सेत्स्यति न तु साक्षित्वद्रष्टृत्वादिकमपि। अतः=साक्षित्वादिधर्माद्यसिद्धिरूपकारणभयात्। तन्निरासाय=अनन्तरोक्तस्य 'त्रैगुण्यविपर्यात्' इत्यस्याऽसम्बन्धाय, बुद्धिस्थव्यवहिताभिमतपरामर्शाय च, 'तस्मात्' इत्युक्तमीश्वरकृष्णेन।

ननु अस्मादित्युक्तेऽनन्तरोक्तं सम्बध्येत तस्मादित्युक्ते च व्यवहितमपि ( परोक्षमपि ) सम्बध्येतेति कथमवगम्यते इति वक्तव्यं, तत्राह—अनन्तरोक्तं हीति। सन्निधानात्=सन्निकृष्टत्वात्। इदमो विषयः=इदं-शब्दजन्यबोधविषयः। विप्रकृष्टश्च=व्यवहितश्च। तदः=तच्छब्दजन्यबोधविषयः। इति=इत्यतः। विप्रकृष्टम्=दूरस्थं, व्यवहितम्=११—इत्यार्यास्थमित्यर्थः, त्रिगुणमविवेकि इत्यादि सम्बध्यते। तस्मात्=त्रिगुणत्वादेः। यः। विपर्यासः=अभावः, अत्रिगुणत्वम्। एवमविवेकित्वस्य विपर्यासः विवेकित्वम्, एवमग्रेऽपि बोध्यम्।

( ३ ) तत्रेति। तत्र=तेष्वत्रिगुणत्वादिषु। चेतनत्वेन द्रष्टृत्वं दर्शितम् अविषयत्वेन च साक्षित्वम्। चेतनो हीति=चेतनः पुरुषः। द्रष्टा=दर्शकः। न अचेतनः=

---

में कथित 'त्रैगुण्यविपर्ययात्' का ही अन्वय-लाभ हो पाता, तब इससे पुरुष में कैवल्य, माध्यस्थ्य, ये दो धर्म ही सिद्ध हो पाते, न कि साक्षित्व, द्रष्टृत्व आदि भी। अतः 'त्रैगुण्यविपर्यासात्' के निरास के लिए तथा बुद्धिस्थ, व्यवहित और स्वाभिमत के लाभ लिए 'तस्मात्' यह कहा। क्योंकि ठीक अव्यवहितपूर्व में कथित अर्थ सन्निहित=समीपस्थ होने से 'इदम्' का विषय होता है और विप्रकृष्ट=व्यवहित, अर्थ 'तत्' का विषय होता है। अतः 'तस्मात्' यह कहकर 'तत्' शब्द से 'त्रिगुणमविवेकि' इस कारिका में कथित जो विप्रकृष्ट=व्यवहित त्रिगुणत्वादि धर्म है, उनका परामर्श करके उनके विपर्यासस्वरूप अत्रिगुणत्व, विवेकित्व, अविषयत्व, असाधारणत्व, चेतनत्व, और अप्रसवधर्मित्व, ये पुरुष के धर्म सिद्ध हो जाते हैं।

( ३ ) 'तत्र चेतनत्वेन' इति। तत्र=उन अत्रिगुणत्वादि पुरुष के छः धर्मों में से चेतनत्व से पुरुष का द्रष्टृत्व धर्म दिखला दिया, क्योंकि जो चेतन होता है, वही द्रष्टा भी हो सकता है और अविषयत्व से पुरुष का साक्षित्व धर्म बतला दिया है। क्यों

( ४ ) एवं प्रकृतिरपि स्वचरितं विषयं पुरुषाय दर्शयतीति पुरुषः साक्षी। न चाऽचेतनो विषयो वा शक्यो विषयं दर्शयितुमिति चैतन्यादविषयत्वाच्च भवति साक्षी, अत एव द्रष्टापि भवति।

---

न जडः। दर्शितविषयः=दर्शितो विषयो यस्मै सः। स एवार्थः प्रकारान्तरेण कथ्यते—यस्मै इति। एतदेव दृष्टान्तेन स्पष्टयति—यथाहीति। लोके=जगति। अर्थिप्रत्यर्थिनौ—अर्थ्यते इति—अर्थः=साध्यः=इष्टवस्तु, सोऽस्यास्तीति अर्थी=वादी, तत्प्रतिपक्षः=प्रत्यर्थी=प्रतिपक्षी=प्रतिवादी। तौ वादिप्रतिवादिनौ, विवादविषयम्=विजिगीषुकथाविषयम्। साक्षिणे=साक्षाद्द्रष्ट्रे=प्रत्यक्षदर्शिने मध्यस्थाय।

( ४ ) एवं प्रकृतिरपि बुद्धिरूपेण परिणामं प्राप्ता प्रकृतिरपीत्यर्थः। स्वचरितम्=स्वचेष्टितम्। विषयम्। पुरुषाय=स्वस्यां ( प्रकृतौ ) प्रतिबिम्बिताय स्वस्वामिने पुरुषाय। दर्शयति=समर्पयति। उक्तञ्च—

'गृहीतानिन्द्रियैरर्थानात्मने यः प्रयच्छति।
अन्तःकरणरूपाय तस्मै विश्वात्मने नमः॥' ( विष्णुपुराण )

जडवर्गभूते महदादौ साक्षित्वं निराकुरुते—न चाऽचेतन इति। अचेतनः=महदादिः। वा=अथवा। विषयः=भोग्यो घटादिः। विषयम्=स्वचरितम्। दर्शयितुं=प्रदर्शयितुं=समर्पयितुं वा। न च, शक्यः=समर्थः। अतः पुरुष एव [1]चैतन्याद-विषयत्वाच्च[2], साक्षी[3]। भवति=भवितुमर्हति। अत एव=साक्षित्वादेव। साक्षित्वादेव चाऽन्येषां जडवर्गीयविषयाणां द्रष्टापि भवति पुरुषः।

अयमाशयः—इन्द्रियरूपनालिकया बुद्धौ तत्तद्विषयाकारेण परिणतायां पुरुषेण च

---

चेतन ही द्रष्टा होता है, अचेतन=जड कदापि द्रष्टा नहीं हो सकता है। और साक्षी वह होता है, जिसे विषय दिखलाया गया हो अथवा जिसे विषय दिखलाया जाता है, वही दर्शित विषय वाला पुरुष साक्षित्वधर्म वाला होता है। क्योंकि जैसे लोक में भी अर्थी=वादी, प्रत्यर्थी=प्रतिवादी, ये दोनों अपने वाद=झगड़े के विषय को साक्षी को दिखलाते हैं। अथवा यह भी कह सकते हैं कि 'विजिगीषुकथा वादः' अर्थात् विजिगीषुकथास्वरूप वाद को वादी एवं प्रतिवादी दोनों साक्षी को बतलाते हैं।

( ४ ) 'एवं प्रकृतिरपि' इति। इसी प्रकार बुद्धिरूप से परिणत हुई प्रकृति भी अपने चरित्रस्वरूप विषय को अथवा अपने से चेष्टित विषय को अपने सन्निहित तथा अपने में प्रतिबिम्बित हुए पुरुष को भोग के लिए समर्पित करती है, अतः पुरुष साक्षी है और साक्षित्व पुरुष का धर्म है।

---

१. स्वतःप्रकाशरूपत्वात्।

२. भोग्यत्वानाश्रयतया च।

३. 'जाग्रत् स्वप्नः सुषुप्तं च गुणतो बुद्धिवृत्तयः।
तासां विलक्षणो जीवः साक्षित्वेन व्यवस्थितः॥' ( सां० प्र० भा० १।१४८ )

( ५ ) अत्रैगुण्याच्चास्य कैवल्यम् । आत्यन्तिको दुःखत्रयाऽभावः कैवल्यं, तच्च तस्य स्वाभाविकादेवात्रैगुण्यात् सुखदुःखमोहरहितत्वात् सिद्धम् ।

( ६ ) अत एवाऽत्रैगुण्यान्माध्यस्थ्यम् । सुखी सुखेन तृप्यन् दुःखी हि दुःखं द्विषन् मध्यस्थो न भवति । तदुभयरहितस्तु 'मध्यस्थ' इति 'उदासीन' इति चाख्यायते । विवेकित्वाद् अप्रसवधर्मित्वाच्चाकर्तेति सिद्धम् ॥ १९ ॥

---

दृश्यायां बुद्धौ तदारूढाः पदार्था अपि दृश्या जायन्ते इति तेषां पदार्थानां द्रष्टा पुरुषो भवतीति तु परमार्थः । तदेवोक्तम् —**अत एव द्रष्टापि भवतीति** । तदुक्तम्—

'द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः' । ( यो० सू० )

शुद्धोऽपि=अपरिणाम्यपि । दृशिमात्रः=चिन्मात्रः=ज्ञानरूपः पुरुषः । प्रत्ययानुपश्यः=बुद्धिवृत्तिमनुपश्यन्, सन् द्रष्टा भवतीत्यर्थः ।

( ५ ) अत्रैगुण्यात्=त्रैगुण्यरहितत्वात् । अस्य=पुरुषस्य । कैवल्यम्=मोक्षः, तच्च कीदृशमिति जिज्ञासायामाह—**आत्यन्तिको दुःखेति** । तच्च=कैवल्यञ्च । तस्य=पुरुषस्य स्वाभाविकादेव=स्वरूपतः सिद्धादेव । अत्रैगुण्यादित्यस्यार्थमाह—सुखदुःखमोहरहितत्वात्=सुखदुःखमोहगुणत्रयशून्यत्वात् । सिद्धम्=स्वत एव सिद्धम् ।

( ६ ) अत एवेत्यादिपङ्क्तिः सुस्पष्टैव, यतस्त्रैगुण्यरहितस्य पुरुषस्य माध्यस्थ्यं सुदृढमेव, तस्य सर्वथा निष्पक्षपातित्वात्, सुखादिरहितत्वेन रागद्वेषशून्यत्वम् । एतदेव सुस्पष्टीक्रियते=सुखी सुखेनेति । तदुभयरहितः=रागद्वेषरहितः । उदासीनः=उपेक्षकः । आख्यायते=कथ्यते । पुरुषस्याऽकर्तृत्वं साधयति—विवेकित्वात्=सम्भूय-

---

**'नचाऽचेतनः'** इति । *अर्थात् जो स्वभाव से ही अचेतन और विषय होता है उसे विषय का प्रदर्शन शक्य नहीं होता है, अतः चेतन ही अविषय होने के कारण साक्षी होता है और इसीलिये चेतन होने के कारण वह द्रष्टा भी होता है ।*

( ५ ) **'अत्रैगुण्याऽस्य'** इति । और पुरुष के अत्रैगुण्य से पुरुष का 'कैवल्य' सिद्ध हो जाता है । आत्यन्तिक=सार्वकालिक दुःखत्रयाऽभाव ही कैवल्य है । अर्थात् आध्यात्मिक, आधिभौतिक, आधिदैविक दुःखत्रय की आत्यन्तिक रूप से निवृत्ति होना ही 'कैवल्य' है और वह 'कैवल्य' पुरुष के स्वाभाविक अत्रैगुण्य=सुख-दुःख-मोह से रहित होने के कारण सुतरां सिद्ध है ।

( ६ ) 'अत एव' इति । इसीलिए अर्थात् पुरुष स्वभाव से ही त्रैगुण्य रहित होने के कारण मध्यस्थ भी है, इससे 'माध्यस्थ्य' भी उसका धर्मान्तर सिद्ध हो जाता है । क्योंकि सुखी व्यक्ति सुख से तृप्त होने के कारण सुख का अनुभव करता है, और दुःखी प्राणी दुःख से परेशान होने के कारण दुःख को दूर करने के प्रयास में लगा रहता है, अतः वह मध्यस्थ नहीं हो सकता है, किन्तु सुख-दुःख उभय से रहित यह पुरुष ही 'मध्यस्थ' अथवा 'उदासीन' होता है, यह कहा जा सकता है ।

और विवेकी होने से तथा अप्रसवधर्मी=अपरिणामी होने के कारण पुरुष अकर्ता है, अतः 'अकर्तृत्व भी उसका धर्म सिद्ध हो जाता है ॥ १९ ॥

(१) स्यादेतत्, प्रमाणेन कर्तव्यमर्थमवगम्य चेतनोऽहं चिकीर्षन् करोमि इति कृतिचैतन्ययोः सामानाधिकरण्यमनुभवसिद्धम्। तदेतस्मिन् मते नावकल्पते, चेतनस्याकर्तृत्वात् कर्तुश्चाऽचैतन्यात्, इत्यत आह—

**तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम्।**
**गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीनः ॥ २० ॥**

---

कारित्वरहितत्वात्। अप्रसवधर्मित्वात् = प्रसवरूपधर्मशून्यत्वात्। च। अकर्तृत्वम् = अकारणत्वात्, पुष्करपलासवन्निर्लेपत्वात् अकारणत्वं पुरुषस्य ॥ २० ॥

(१) स्यादेतदिति। प्रमाणेन = प्रत्यक्षादिप्रमाणेन। कर्तव्यम् = कर्तुं योग्यम्। अर्थम् = घटादिकम्। अवगम्य = निश्चित्य। 'चिकीर्षन्' इत्यनेन इच्छा दर्शिता, करोमीत्यनेन च कर्तृत्वं ( कृतिः ) दर्शितम्। 'चेतनोऽहं चिकीर्षन् करोमि' इत्यनेन च ज्ञानेच्छा कृतीनां सामानाधिकरण्यं दर्शितम्। तच्चानुभवसिद्धम्। तत् = सामानाधिकरण्यम्। एतस्मिन् मते = सांख्यमते। नावकल्पते = न घटते। चेतनस्य = पुरुषस्य। अकर्तृत्वात्। कर्तुश्च = बुद्धेः = प्रकृतिपरिणामभूतायाः। अचैतन्यात् = जडत्वात्।

'अहं जानामि, अहं करोमि' इति प्रतीतौ द्रष्टृत्व-कर्तृत्वयोः सामानाधिकरण्यमनुभवसिद्धमिति 'द्रष्टृत्वमकर्तृभावश्च' इति यदुक्तम्, अर्थात् आत्मनो द्रष्टृत्वे सति अकर्तृत्वं यदुक्तम् १९ कारिकायां, तन्न समीचीनं प्रतिभाति, इत्याशङ्कते—स्यादेतदित्यादिना। प्रमाणेन = प्रत्यक्षेण, अनुमानेन, शब्देन वा प्रमाणेन। अर्थम् = घटपटादिरूपम्। अवगम्य = निश्चित्य, इत्यनेन आत्मनि ( पुरुषे ) ज्ञानं दर्शितम्। चिकीर्षन् = कर्तुमिच्छन्, इत्यनेन च आत्मनि इच्छा दर्शिता। करोमीत्यनेन च कृतिस्तत्र दर्शिता। तथा च कृतिचैतन्ययोः = ज्ञानेच्छाकृतीनाम्। सामानाधिकरण्यम्। अनुभवसिद्धम् = सर्वमतसिद्धमित्यर्थः। तत् = सामानाधिकरण्यम्। एतस्मिन् मते = सांख्यमते। नावकल्पते = न सिद्ध्यति। तत्र हेतुमाह—चेतनस्य = पुरुषस्य। अकर्तृत्वात्। कर्तुश्च = प्रधानस्य ( प्रकृतेः )। अचैतन्यात् = जडत्वात्।

अन्वयः—तस्मात् तत्संयोगात् अचेतनं लिङ्गं चेतनावदिव ( भवति ), तथा गुणकर्तृत्वेऽपि उदासीनः कर्ता इव भवति।

---

(१) 'स्यादेतत्' इति। यह सब ठीक है, कोई भी प्रमाता व्यक्ति किसी भी प्रत्यक्ष एवं अनुमानादि प्रमाण के द्वारा करने योग्य = कृतिसाध्य घट-पटादि रूप अर्थ को जान लेने के पश्चात् ही 'चेतनोऽहं चिकीर्षन् करोमि' अर्थात् चेतन मैं कर्तव्य अर्थ को करने की इच्छा होने पर अब उसे कर रहा हूँ या करने जा रहा हूँ, ऐसा स्वयं अनुभव करता है। इस अनुभव से कृति, चैतन्य=ज्ञान, इच्छा, इन सभी का सामानाधिकरण्य=एक अधिकरण में रहना सुतरां सिद्ध है। परन्तु यह सामानाधिकरण्य सांख्यमत में अवकल्पित = उपपन्न नहीं हो रहा है, क्योंकि जो चेतन है पुरुष वह अकर्ता है और जो कर्ता है प्रकृति वह अचेतन = जड है, । 'इत्यत आह' इति। इसके समाधानार्थ कहते हैं—'तस्मात्तत्संयोगात्' इति।

( २ ) 'तस्मात्' इति। यतश्चैतन्यकर्तृत्वे भिन्नाधिकरणे युक्तितः सिद्धे, तस्माद् भ्रान्तिरियमित्यर्थः। 'लिङ्गम्' महदादिसूक्ष्मपर्यन्तं वक्ष्यति (का० ४०)। भ्रान्तिबीजं 'तत्संयोगः' तत्सन्निधानम्। अतिरोहितार्थमन्यत् ॥ २० ॥

( १ ) 'तत्संयोगात्' इत्युक्तम्, न च भिन्नयोः संयोगोऽपेक्षां विना, न चेयमुपकार्योपकारकभावं विनेत्यपेक्षाहेतुमुपकारमाह—

---

( २ ) तथा च कृतिचैतन्ययोर्भिन्नाधिकरणवृत्तित्वात् नैकत्र समावेशो भवितुमर्हतीत्यर्थ इत्याशङ्कां निराकर्तुमाह ईश्वरकृष्णः—**तस्मादिति**। यतः=यस्माद्धेतोश्चैतन्यकर्तृत्वयोर्भिन्नाधिकरणवृत्तित्वं प्रागुक्तयुक्त्या सिद्धयति, तस्मात् 'चेतनोऽहं करोमि' इति सामानाधिकरण्यविषयिणी प्रतीतिर्भ्रान्तिरेव। भ्रान्तिबीजमाह—**तत्संयोगादिति**। तस्य=चेतनस्य=पुरुषस्याऽऽत्मनः, बुद्धया सह ( प्रकृत्या सह ), संयोगात्=सन्निधानात्। लिङ्गम्=महदादिसूक्ष्मपर्यन्तम्, अर्थात् महत्तत्वाहङ्कारमनइन्द्रियतन्मात्रात्मकाऽष्टादशतत्त्वसमुदायस्वरूपमित्यर्थः। वक्ष्यति=महदादिसूक्ष्मपर्यन्तं ( ४० ) कारिकायां कथयिष्यति।

**अयम्भावः**—अचेतनमपि लिङ्गं बुद्धयादिकं चेतनपुरुषसन्निधानरूपसंयोगात्, चेतनावदिव=चेतनमिव भवति, अत एव 'जानामि' इति प्रतीतिः सङ्गच्छते। एवं गुणकर्तृत्वेऽपि—बुद्धयादिरूपेण परिणतानां सत्त्वादिगुणानां, कर्तृत्वेऽपि=कृतिमत्त्वेऽपि। तथा=बुद्धौ प्रतिबिम्बितत्वात्। उदासीनोऽपि पुरुषः कर्ता इव भवति, इत्यनेन करोमि इति प्रत्ययः सूपपन्नो भवति। अतिरोहितार्थम्=स्पष्टार्थम् ॥ २० ॥

( १ ) एकविंशतिकारिकाया अवतरणमाह—**'न च भिन्नयोः संयोग'** इत्यादिना। भिन्नयोः=बुद्धिपुरुषयोः, प्रकृतिपुरुषयोरिति यावत्। संयोगः=सन्निधानम्, बुद्धौ

---

**कारिकार्थ**—तस्मात्=जिस कारण से पूर्वविवेचन से चैतन्य और कर्तृत्व ये दोनों भिन्नाधिकरणक हैं, यह सिद्ध हो चुका है तब फिर ज्ञान, इच्छा, कृति=कर्तृत्व, इन तीनों का सामानाधिकरण्य बनेगा कैसे ? इसी कारण से। तत्संयोगात्=प्रकृति पुरुष इन दोनों के संयोग=सम्पर्क हो जाने से। अचेतन लिङ्ग=बुद्धि चेतन की तरह हो जाती है और प्रकृति के सत्त्वादि गुणों के वास्तव में कर्ता होने पर भी उदासीन पुरुष संयोग से ही कर्ता की तरह हो जाता है, इससे भ्रमात्मिका सामानाधिकरण्य प्रतीति उपपन्न हो जाती है।

( २ ) **'यतश्चैतन्यकर्तृत्वे'** इति। जिस कारण से चैतन्य और कर्तृत्व ये दोनों भिन्नाधिकरणक है, इस कारण से 'चेतनोऽहं करोमि' यह प्रतीति भ्रम=भ्रान्ति है। भ्रान्तिवीज=भ्रान्ति का कारण प्रकृति और पुरुष का संयोग है। लिङ्ग=बुद्धितत्त्व से लेकर तन्मात्रा पर्यन्त सूक्ष्मतत्त्व हैं। इसे ४०वी कारिका में आगे बतलायेंगे। और सब स्पष्ट है ॥ २० ॥

( १ ) **'तत्संयोगात् इत्युक्तम्' इति**। अर्थात् प्रकृति एवं पुरुष के संयोग से ही सब कुछ होता है, यह कह चुके हैं, परन्तु दो भिन्न पदार्थों का संयोग अर्थात् सम्पर्क विना

**पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य ।**
**पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः ॥ २१ ॥**

पुरुषप्रतिबिम्ब इत्यर्थः । अपेक्षाम् = परस्पराकाङ्क्षाम् । इयम् = अपेक्षा । उपकार्योपकारकभावम् = उपकार्यः—उपकारयोग्यः, उपकारकः = उपकारकर्ता । तथा च उपकार्योपकारकभावेनैव भवति तयोः परस्परमपेक्षा । यद्यपि सामान्यतः 'तस्य हेतुरविद्या' ( यो० सू० २।२४ ) इति पातञ्जलसूत्रोक्ताऽनादिकालीनाऽविद्यैव तस्य=प्रकृतिपुरुषसंयोगस्य कारणं सिद्ध्यति । तथापि अवान्तरं संयोगहेतुभूतं परस्परोपकारमाह—**पुरुषस्य दर्शनार्थमित्यादिना ।**

**अन्वयः**—पुरुषस्य दर्शनार्थम्, तथा प्रधानस्य कैवल्यार्थम्, उभयोरपि संयोगः ( भवति ), पङ्ग्वन्धवत्, तत्कृतश्च सर्गः ।

परस्पर की अपेक्षा के नहीं होता है और यह अपेक्षा=परस्पर का अनुराग, उपकार्य-उपकारकभाव के विना नहीं होती है । इसलिए अपेक्षा के कारण उपकार को सूचित करने वाली कारिका को अवतरित करते हैं—'पुरुषस्य' इति ।

**कारिकार्थ**—उभयोः = पुरुष और प्रधान इन दोनों का जो संयोग है वह देखने के लिए तथा कैवल्य के लिए होता है । प्रधान अपने दर्शन के लिए = अपने में भोग्यता सिद्ध करने के लिए, अर्थात् सुख-दुःख-मोहात्मक जो प्रधान का स्वरूप, उसका जो साक्षात्काररूप भोग तादृशभोगात्मकदर्शनार्थं ही पुरुष की अपेक्षा प्रधान = प्रकृति करता है और पुरुष अपने कैवल्य के लिए अर्थात् कैवल्य का कारण जो विवेकज्ञान—तत्स्वरूप जो प्रकृति का परिणाम—तादृश परिणामस्वरूप कैवल्य के लिए प्रधान की अपेक्षा करता है । इस प्रकार दोनों को परस्पर में अपेक्षा होने के कारण दोनों का संयोग होता है ।

इस संयोग के अनुरूप दृष्टान्त पंगु और अन्ध हैं । पंगुस्थानीय पुरुष है, क्योंकि दोनों निष्क्रिय हैं और अन्धस्थानीय प्रधान है, क्योंकि दोनों दर्शनशक्ति-विहीन हैं । जैसे गमनाशक्त पंगु स्वाभीष्टदेशरूप लक्ष्य-प्राप्ति के लिए गमनशक्ति सहित अन्धे की अपेक्षा करता है और दर्शनशक्तिशून्य अन्धा ठीक मार्ग से ले चलने के लिए दर्शनशक्तिसम्पन्न पंगु की अपेक्षा रखता है और अपेक्षा से ही पंगु एवं अन्ध का संयोग होता है और संयोग से फिर यह लिङ्गाख्य और भावाख्य दो प्रकार का सर्ग होता है । एवं ये दोनों जब कृतार्थ हो जाते हैं अर्थात् अपने-अपने अर्थ = स्वाभीष्ट देश प्राप्तिरूप मतलब को सम्पन्न कर लेते हैं, तब पंगु एवं अन्ध का विभाग हो जाता है ।

इसी प्रकार पुरुष तथा प्रधान की भी स्थिति है । पुरुष जब गुणवती भार्यास्वरूप प्रकृति को देखकर कृतकृत्य = कृतार्थ हो लेता है, तब कैवल्य को प्राप्त हो जाता है और प्रधान पुरुष को मुक्त करके निवृत्त हो जाती है । इस प्रकार कृतार्थ हुए दोनों का विभाग हो जाता है ।

( २ ) 'पुरुषस्य' इति। प्रधानस्येति कर्मणि षष्ठी। प्रधानस्य सर्वकारणस्य यद्दर्शनं पुरुषेण तदर्थम्। तदनेन भोग्यता प्रधानस्य दर्शिता। ततश्च भोग्यं प्रधानं भोक्तारमन्तरेण न सम्भवतीति युक्ताऽस्य भोक्त्रपेक्षा।

---

( २ ) कारिकायां पुरुषस्य प्रधानस्येत्युभयत्र कर्मणि षष्ठीविभक्तिर्विज्ञेया। उभयोः=पुरुषस्य प्रधानस्य च, यः संयोगः स उभयोरेव दर्शनार्थम्, कैवल्यार्थञ्च जायते इति भावः। तत्र प्रधानेन दर्शनार्थम्=स्वदर्शनार्थम्=सुखदुःखात्मकस्व-स्वरूपानुभवरूपभोगार्थं पुरुषोऽपेक्ष्यते, पुरुषेण च स्वकैवल्यार्थम्=कैवल्यकारणीभूतविवेकज्ञानरूपप्रकृतिपरिणामार्थं प्रधानमपेक्ष्यते।

तत्र 'पङ्ग्वन्धवत्' इत्यस्ति दृष्टान्तः, तत्रापि च निष्क्रियः पुरुषः पङ्गूपमः अचेतनञ्च प्रधानमन्धसम इति विज्ञेयम्।

**अयम्भावः**—यथा गतिशक्तिविहीनेन पङ्गुनाऽभीष्टदेशप्राप्त्यर्थं गतिशक्त्यवच्छिन्नोऽन्धोऽपेक्ष्यते, यथा वा दर्शनशक्तिविहीनेन चान्धेन मार्गदर्शनार्थं दर्शनशक्त्यवच्छिन्नः पङ्गुरपेक्ष्यते, तथैव प्रकृतेऽपि बोध्यम्। अर्थात् अन्धस्कन्धारूढो हि पङ्गुर्यथाऽन्धस्य कृते मार्गं दर्शयति अर्थात् मार्गे गन्तुं प्रवर्तयति तथा प्रधानारूढो हि पुरुषः प्रधानं सृष्टिसंविधाने प्रवर्तयति। यथा चान्धः पङ्गुं स्वाभीष्टदेशं प्रापयति नयति वा तथैव प्रधानं प्रधानगतसुखदुःखमोहात्मकधर्मानभिमन्यमानस्य पुरुषस्य कृते कैवल्यं प्रापयति।

कर्माकाङ्क्षितां दर्शनात्मिकां क्रियां दर्शयति—**प्रधानस्य सर्वकारणस्य यद्दर्शनमिति**। प्रधानस्य=प्रकृतेः, सर्वकारणस्य=संसारोपादानस्य, यद्दर्शनमिति कर्तृकर्मणोः सत्त्वे एव कर्मणि षष्ठीप्रवृत्तेर्दर्शनात्तत्र कर्तृपदमध्याहार्यं भवति, एवं स्थिते 'केन दर्शनम्' इत्याकाङ्क्षायां जायमानायामाह—**पुरुषेणेति**। पुरुषकर्तृकं दर्शनमित्यर्थः। तदर्थम्। स्वदर्शनार्थम्=स्वभोग्यतार्थं पुरुषः प्रकृत्याऽपेक्ष्यते। तदेवाह—**तदनेनेति**। तेन अनेन=पुरुषकर्तृकदर्शनकर्मविषयत्वकथनेन। भोग्यता=सुखदुःखान्यतरसाक्षात्कारीयविषयता। ततश्च=भोग्यतासिद्धौ। युक्ता=उचिता। अस्य=प्रधानस्य। भोक्त्रपेक्षा—भोक्तुः=चेतनस्य पुरुषस्य, अपेक्षा=सर्वथैवोचितेति भावः।

इदमत्र तत्त्वम्—सुखदुःखान्यतरसाक्षात्कारो हि भोगः, नहि सुखदुःखमोहात्मकं प्रधानं स्वयं स्वमनुभवितुं शक्नोति, स्वात्मनि वृत्तिविरोधात्, जडत्वाच्च स्वातिरिक्तो भोक्ताऽपेक्ष्यते प्रधानेनेति तु निष्कर्षः।

---

( २ ) 'प्रधानस्य' इति। 'प्रधानस्य' यह कर्म मे षष्ठी विभक्ति है। समस्त चराचर विश्व का कारण जो प्रधान, उसका जो दर्शन=पुरुषकर्तृक दर्शन, उस दर्शन के लिए अर्थात् सुख-दुःख, अन्यतरसाक्षात्काररूप उपभोगात्मक दर्शन के लिए प्रधान पुरुष की अपेक्षा करती है। क्योंकि चेतन=पुरुष के बिना प्रधान का दर्शनात्मक उपभोग करेगा कौन? इससे प्रधान की भोग्यता दिखलाई गई है और भोग्यता सिद्ध हो जाने पर भोग्यता का आश्रय जो भोग्य प्रधान है, उसका भोक्ता=पुरुष के बिना रहना कदापि संभव नही, इसलिए प्रधान को भोक्ता=चेतन=पुरुष की अपेक्षा होना युक्त=उचित ही है।

( ३ ) पुरुषस्याऽपेक्षां दर्शयति—'पुरुषस्य कैवल्यार्थम्' इति। तथा हि योग्येन प्रधानेन सम्भिन्नः पुरुषस्तद्गतं दुःखत्रयं स्वात्मन्यभिमन्यमानः कैवल्यं प्रार्थयते। तच्च सत्त्वपुरुषान्यताख्यातिनिबन्धनम्।

( ४ ) न च सत्त्वपुरुषान्यताख्यातिः प्रधानमन्तरेणेति कैवल्यार्थं पुरुषः प्रधानमपेक्षते। अनादित्वाच्च संयोगपरम्परायाः भोगाय संयुक्तोऽपि कैवल्याय पुनः संयुज्यत इति युक्तम्।

---

( ३ ) **पुरुषस्यापेक्षामिति**। प्रकृतेरिति शेषः। पुरुषेण प्रधानं कथमपेक्ष्यते इत्याकाङ्क्षायां पुरुषस्य प्रकृत्यपेक्षां दर्शयति—**कैवल्यार्थमिति**। प्रधानेन=प्रकृत्या, ( सह ) सम्भिन्नः=तादात्म्यमिवापन्नः, एकतात्मतामिवापन्नः, स्वस्य प्रकृतेः पार्थक्यमजानान इत्यर्थः। तद्गतम्=प्रकृतिगतम्। स्वात्मनि=स्वस्मिन्। अभिमन्यमानः='अहं दुःखी'ति साभिमानं निश्चिन्वानः। कैवल्यम्=ऐकान्तिकाऽऽत्यन्तिकदुःखत्रयनिवृत्तिरूपम्। तच्च=कैवल्यञ्च। सत्त्वपुरुषान्यताख्यातिनिबन्धनम्—सत्त्वं=प्रधानम्, पुरुषः=चेतन आत्मा, तयोरन्यताख्यातिः=भेदज्ञानम्, तन्निबन्धनम्=तादृशभेदज्ञानद्वारकमित्यर्थः।

( ४ ) सत्त्वपुरुषाऽन्यताख्यातिः=सत्त्वपुरुषभेदज्ञानम्। प्रधानमन्तरेण=प्रकृतिं विना। तथा च बुद्धिरूपेण परिणतस्य प्रधानस्यैव परिणामो भेदज्ञानमतो न प्रधानं

---

( ३ ) **'पुरुषस्याऽपेक्षाम्'** इति। पुरुष को प्रधान की अपेक्षा है—यह दिखलाते हैं—**'पुरुषस्य कैवल्यार्थम्'** अर्थात् जैसे प्रधान को स्वोपभोगात्मकदर्शनार्थं भोक्ता पुरुष की अपेक्षा है, वैसे ही पुरुष को अपने कैवल्य=मोक्ष के लिए प्रधान की अपेक्षा है। उसी को दिखलाते हैं—**'तथाहि'** इति। जो प्रधान=प्रकृति, उससे सम्भिन्न=अभेदभावना से प्रभावित पुरुष अर्थात् प्रधान से अपने को भिन्न न समझने वाला पुरुष प्रधानगत दुःखत्रय को अपने में ही मानता हुआ दुःखत्रयनिवृत्तिरूप 'कैवल्य' की इच्छा करता है और वह कैवल्य सत्त्व=प्रकृति तथा पुरुष=चेतन इन दोनों के अन्यताख्याति=भेदज्ञान, निबन्धन=द्वारक=भेदज्ञानद्वारक होता है। अर्थात् कैवल्य प्रकृति पुरुष के भेदज्ञान से अथवा भेदज्ञान के द्वारा होता है। और प्रकृति एवं पुरुष का भेदज्ञान प्रधान के बिना नहीं हो सकता है। 'पुरुषः प्रकृतिभिन्नः' अथवा 'अहं प्रकृतिभिन्नः' इत्याकारक पुरुष को होने वाला भेदज्ञान प्रकृतिरूप प्रतियोगिज्ञानाधीन है, अतः प्रधान से सापेक्ष जो विवेकज्ञान, उससे सम्पन्न होने वाले कैवल्य=मोक्ष के लिए पुरुष प्रधान की अपेक्षा करता है। यही पुरुष की अपेक्षा है, अर्थात् पुरुष को प्रधान की अपेक्षा है और परस्पर की अपेक्षा से ही प्रकृति एवं पुरुष इन दोनों का संयोग होता है।

( ४ ) प्रश्न—यदि पुरुष भोग के लिए एक बार प्रकृति से संयुक्त हो चुका, तब फिर कैवल्य के लिए उस प्रकृति से क्यों संयुक्त होता है ?

उत्तर—'अनादित्वाच्च' इति। संयोगपरम्परा अनादि है, इसी दृष्टिकोण से

( ५ ) ननु भवत्वनयोः संयोगः, महदादिसर्गस्तु कुतः ? इत्यत आह—'तत्कृतः सर्गः' इति। संयोगो हि न महदादिसर्गमन्तरेण भोगाय कैवल्याय च पर्याप्त इति संयोग एव भोगापवर्गार्थं सर्ग करोतीत्यर्थः ॥ २१ ॥

सर्गक्रममाह—

**प्रकृतेर्महाँस्ततोऽहङ्कारस्तस्माद् गणश्च षोडशकः।**
**तस्मादपि षोडशकात्पञ्चभ्यः पञ्च भूतानि ॥ २२ ॥**

---

विना तादृशभेदज्ञानसम्भवः। इदमत्र तत्त्वम्—प्रवृत्तिमात्रे इष्टसाधनताज्ञानस्य कारणतया चेतनः पुरुषः स्वस्मिन् अनुभूयमानं दुःखत्रयं यदा परित्यक्तुमिच्छति तदा तत्परिहारसाधनं चेष्टते कामयते वा, प्रागुक्तदुःखत्रयनिवृत्तिश्च प्रकृतिपुरुषयोर्भेदज्ञानाधीन इति प्रधानमन्तरा कथं चेतनः पुरुषस्तादृशं भेदं स्वात्मनि विजानीयात् इत्यतो दुःखत्रयनिवृत्त्यर्थमपेक्षणीयतादृशभेदज्ञानसाधनत्वेन चेतनस्य पुरुषस्यास्ति प्रधानापेक्षा।

ननु भोगाय यद्यस्ति संयुक्तः पुरुषस्तदा किमर्थं खलु पुनः कैवल्याय संयुज्यते ? इत्यत्राह—अनादित्वादिति। संयोगपरम्पराया अविच्छिन्नत्वात्।

( ५ ) 'तत्कृतः सर्गः' इति चरमकारिकांशावतरणमाह—ननु भवत्वनयोरिति। अनयोः=प्रकृतिपुरुषयोः। तत्कृतः=प्रकृतिपुरुषसंयोगकृतः। सर्गः=भोगापवर्गद्वारभूतो महदादिरूपः संसारः। पर्याप्तः=समर्थः। संयोगः=प्रकृतिपुरुषयोः संयोगः। भोगापवर्गार्थम्=भोगापवर्गनिष्पत्तये। सर्गम्=सृष्टिम्।

**अन्वयः**—प्रकृतेः महान् अहङ्कारः, तस्मात् षोडशकः गणः ( जायते ), तस्मादपि षोडशकात् पञ्चभ्यः पञ्च भूतानि ( उत्पद्यन्ते )।

---

याचितमणिमण्डनन्याय से संयोग का भी वही अनादित्व चला आ रहा है, अर्थात् प्रकृति एवं पुरुष के संयोग को सांख्य अनादि और नित्य कहता है।

इसके अतिरिक्त प्रकृति एवं पुरुष का वह संयोग आपेक्षिक दृष्टि से भिन्न-भिन्न भी है अर्थात् पुरुष के भोग का सम्पादक संयोग जैसे भिन्न है, वैसे ही पुरुष के कैवल्य का सम्पादक संयोग भिन्न है, उभय का सम्पादक संयोग एक नहीं है।

( ५ ) प्रश्न—'ननु भवत्वनयोः' इति। इन प्रकृति एवं पुरुष का संयोग भोगापेक्षिक तथा कैवल्यापेक्षिक भले ही हो, अनादि तथा नित्य भी हो, परन्तु यह लिंगाख्य, भावाख्य, भूताख्य विविध सर्ग कैसे होता है ?

उत्तर—'तत्कृतः सर्गः' इति। अर्थात् उस प्रकृति एवं पुरुष के संयोग से कृत ही यह समस्त सर्ग=सृष्टि है, क्योकि संयोग महदादि की सृष्टि के किये बिना पुरुष के भोग और कैवल्य के लिए समर्थ नही हो सकता है, अतः प्रकृति एवं पुरुष का संयोग ही पुरुष के भोगापवर्ग के लिए सृष्टि करता है ॥ २१ ॥

अब महदादि क्रम से होने वाले सृष्टिक्रम को बतलाते हैं—

**कारिकार्थ**—प्रकृति और पुरुष के परस्पर संयोग होने पर प्रकृति से महत्तत्व

( १ ) 'प्रकृतेः' इति। प्रकृतिः—अव्यक्तम्। महदहङ्कारौ वक्ष्यमाणलक्षणौ। एकादशेन्द्रियाणि—वक्ष्यमाणानि, तन्मात्राणि च पञ्च; सोऽयं षोडशसङ्ख्यापरिमितो गणः षोडशकः। तस्मादपि षोडशकादपकृष्टेभ्यः पञ्चभ्यस्तन्मात्रेभ्यः पञ्च भूतान्याकाशादीनि।

( २ ) तत्र शब्दतन्मात्रादाकाशं शब्दगुणम्, शब्दतन्मात्रसहितात् स्पर्शतन्मात्राद्वायुः शब्दस्पर्शगुणः, शब्दस्पर्शतन्मात्रसहिताद्रूपतन्मात्रात्तेजः शब्दस्पर्शरूपगुणम्, शब्दस्पर्शरूपतन्मात्रसहिताद्रसतन्मात्रादापः शब्दस्पर्शरूपरसगुणाः, शब्दस्पर्शरूपरसतन्मात्रसहिताद् गन्धतन्मात्राच्छब्दस्पर्शरूपरसगन्धगुणा पृथिवी जायते इत्यर्थः॥ २२॥

---

( १ ) अव्यक्तमिति। समस्तचराचरविश्वकारणीभूतं प्रधानम्, मूलप्रकृतिरित्यर्थः। वक्ष्यमाणलक्षणौ='अध्यवसायो बुद्धिः' 'अभिमानोऽहङ्कारः' इत्यादिकारिकाभ्यां विहितलक्षणौ। एकादशेन्द्रियाणि=पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, मनश्च। वक्ष्यमाणानि=२६-२७ कारिकोक्तानि। तन्मात्राणि=३८ कारिकोक्तानि। अपकृष्टेभ्यः=सूक्ष्मेभ्यः। भूतानि आकाशादीनि=गगनपवनाऽनलसलिलाऽवनयः। जायन्ते इति शेषः।

( २ ) क्रममाह—तत्र शब्दतन्मात्रादिति। सुस्पष्टोऽयं ग्रन्थः॥ २२॥

---

आविर्भूत होता है और महत्तत्त्व से अहंकार की उत्पत्ति होती है और अहंकार से षोडश गण ( पाँच ज्ञानेन्द्रियाँ, पाँच कर्मेन्द्रियाँ, एक मन तथा पञ्चतन्मात्रा ) उत्पन्न होता है; उस षोडशगण में भी पञ्चतन्मात्रा से पञ्चमहाभूत उत्पन्न होते हैं।

( १ ) 'प्रकृतेः' इति। प्रकृति नाम है अव्यक्त का। महत् और अहङ्कार का लक्षण =स्वरूप आगे कहेंगें। एकादश इन्द्रियाँ भी वक्ष्यमाण है और पाँच तन्मात्रा भी। पदार्थों की सोलह संख्या से परिमित=यथार्थरूप से ज्ञात जो गण=समुदाय, वह षोडशक है और इन सोलह पदार्थों के समुदाय के अन्तर्गत जो पञ्चतन्मात्राएँ हैं, अपकृष्ट=पृथक्कृत उन पांच तन्मात्राओं से आकाशादि पाँच महाभूत उत्पन्न होते हैं।

( २ ) 'तत्र शब्दतन्मात्रात्' इति। अर्थात् उन पाँच महाभूतों में शब्दतन्मात्रा=सूक्ष्म आकाश से आकाश=महाकाश=स्थूल आकाश, शब्द गुणवाला उत्पन्न होता है, शब्दतन्मात्रा सहित स्पर्शतन्मात्रा से शब्द एवं स्पर्श इन दो गुणवाला वायु उत्पन्न होता है। फिर शब्द-स्पर्शतन्मात्रा सहित रूपतन्मात्रा से शब्द, स्पर्श एवं रूप गुणवाला 'तेज़' उत्पन्न होता है; और शब्द-स्पर्शरूपतन्मात्रा सहित रसतन्मात्रा से शब्द-स्पर्शरूप रस गुणवाला स्थूल जल उत्पन्न होता है; फिर शब्द, स्पर्श, रूप, रसतन्मात्रा सहित गन्धतन्मात्रा से शब्द, स्पर्श, रूप, रस एवं गन्ध गुणवाली स्थूल पृथिवी उत्पन्न होती है॥ २२॥

( १ ) अव्यक्तं सामान्यतो लक्षितं 'तद्विपरीतम्' इत्यनेन विशेषतश्च 'सत्त्वं लघु प्रकाशकम्' इत्यादिना, व्यक्तमपि सामान्यतो लक्षितं 'हेतुमद्' इत्यादिना, सम्प्रति विवेकज्ञानोपयोगितया व्यक्तविशेषं बुद्धिं लक्षयति—

**अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्यम् ।**
**सात्त्विकमेतद्रूपं तामसमस्माद्विपर्यस्तम् ॥ २३ ॥**

( २ ) 'अध्यवसाय:' इति । 'अध्यवसायो बुद्धि:' क्रियाक्रियावतोरभेद-विवक्षया । सर्वो व्यवहर्ताऽऽलोच्य मत्वा 'अहमत्राऽधिकृत:' इत्यभिमत्य

---

( १ ) अव्यक्तम्=मूलप्रकृति: । सामान्यत:=अहेतुमत्त्व-नित्यत्व-व्यापकत्वादि-सामान्यधर्मै: अवच्छिन्नम् । अर्थात् सांख्यनयेऽहेतुमत्त्वादिसकलधर्मा ये विपरीतक्रमेणोल्लिखिता: सन्ति तादृशधर्मावच्छिन्नं भवति अव्यक्तम् । विशेषत:=सत्त्व-लघुत्व-प्रकाशकत्वादिविशेषधर्मैरवच्छिन्नम् । व्यक्तमपि=महदादिमहाभूतपर्यन्तं सर्वमेव व्यक्तम् । अव्यक्तवदेव सामान्यविशेषधर्मावच्छिन्नं बोध्यम् । विवेकज्ञानोपयोगितया=विवेकज्ञानप्रयोजकतया । व्यक्तविशेषम्=व्यक्तपदार्थान्तर्गतप्रथमपदार्थम् । बुद्धिम्=महत्तत्त्वम् ।

**अन्वय:**—अध्यवसाय: बुद्धि: धर्म: ज्ञानं विराग: ऐश्वर्यं सात्त्विकम् एतद्रूपम्, ( च ) अस्मात् विपर्यस्तम् ।

( २ ) **अध्यवसाय इति** । 'ममेदं कर्तव्यम्' 'मयेदं कर्तव्यम्' इत्यादि कर्तव्यत्व-प्रकारेण, एवं 'अयं घट:' 'अयं पट:' इत्यादिरूपेण घटत्व-पटत्वादिप्रकारेण पदार्थान् याऽध्यवस्यति=निश्चिनोति सा बुद्धि: । अत एव निश्चयरूपाऽध्यवसायो बुद्धेर्लक्षणं

---

( १ ) **'अव्यक्तं सामान्यत' इत** । सामान्यरूप से 'तद्विपरीतमव्यक्तम्' इस १०वीं कारिका से अव्यक्त का लक्षण किया जा चुका है, और विशेषरूप से 'सत्त्वं लघु प्रकाशकम्' इस १३वीं कारिका के द्वारा भी अव्यक्त का लक्षण किया जा चुका है । और सामान्यत: 'हेतुमत्' इस १०वीं कारिका से व्यक्त का भी लक्षण कहा जा चुका है । अब विवेकज्ञान के उपयोगी होने से व्यक्तविशेष बुद्धि का लक्षण करते हैं— **'अध्यवसाय:'** इत्यादि अग्रिम कारिका से ।

**कारिकार्थ**—अध्यवसाय ( निश्चय ) करना बुद्धि असाधारण धर्म है । धर्म, ज्ञान, वैराग्य तथा ऐश्वर्य—ये चार बुद्धि के सात्त्विक रूप हैं । इन चार धर्मों के ठीक विपरीत अधर्म, अज्ञान, अवैराग्य और अनैश्वर्य—ये चार बुद्धि के तामस रूप हैं ।

( २ ) बुद्धि का लक्षण है—'अध्यवसाय' अर्थात् घट-पट-मठ आदि विषयों का अर्थात् यह घट है, यह पट है, यह मठ है इत्यादि रूप से निश्चय करने वाले व्यक्त विशेष को 'बुद्धि' कहते हैं ।

प्रश्न—'क्रियाक्रियावतो:' इति । 'अध्यवसायो बुद्धि:'—इस बुद्धि के लक्षण में अध्यवसाय=निश्चयात्मक क्रिया होने के कारण धर्म है और इस क्रिया का आश्रय

'कर्तव्यमेतन्मया' इत्यध्यवस्यति, ततश्च प्रवर्तत इति लोकसिद्धम्। तत्र योऽयं कर्त्तव्यमिति विनिश्चयश्चितिसन्निधानादापन्नचैतन्याया बुद्धेः सोऽध्यवसायः

---

सुसम्पन्नं भवति। ननु 'अध्यवसायो बुद्धिरि'ति बुद्धेर्लक्षणं सर्वथाऽसमीचीनम्, अपि तु अध्यवसायवती बुद्धिरित्येव बुद्धि लक्षणं समीचीनं प्रतिभाति, 'गन्धवती पृथिवी' इतिवत्, नहि गन्धो पृथिवीति केनाप्युच्यते, अतोऽध्यवसायवती बुद्धिः अर्थात् अध्यवसायवत्त्वमेव बुद्धेर्लक्षणं समीचीनं प्रतिभाति इत्यत्राह—**क्रियाक्रियावतोरिति**। व्यापारव्यापारिणोरित्यर्थः। धर्मधर्मिणोरिति यावत्। अध्यवसायः क्रिया, अध्यवसायरूपक्रियावती बुद्धिः। एवं स्थिते 'अध्यवसायो बुद्धिरि'ति कथनं कथं सङ्गच्छते ? इत्यत्राह—**अभेदविवक्षयेति**। अभेदस्तादात्म्यम्, तद्विवक्षया, अर्थात् क्रिया=परिणामरूपा, अध्यवसायश्च निश्चयः, तद्वान् महत्त्वापर्यायभूतो बुद्धिरूपो धर्मी, तयोरभेदविवक्षया 'अध्यवसायो बुद्धिः' इति लक्षणं साधु सङ्गच्छते इति विज्ञेयम्। इन्द्रियान्तरजन्यक्रियात्मकव्यापारेभ्यो विविच्य बुद्धेर्व्यापारं कथयितुं प्रवृत्तो खलु व्यापाराणां क्रममाह—**'सर्वो व्यवहर्ता'** इति। गमनाऽऽगमनादिव्यवहारं सम्पादयितुं कामयमानाः सर्वेऽपि जनाः पूर्वमालोच्य=सर्वतः प्राक् चक्षुरादीन्द्रियाणां संयोगाद्यात्मकव्यापारैः पुरोवर्ति वस्तु प्रत्यक्षीकृत्य। तदनन्तरं, मत्वा=इदमेवं नैवं वेति मनसा विचार्य। पुनः अहमत्राऽधिकृतः=एतस्मिन् विषये सर्वथाऽधिकारसम्पन्नोऽस्मीति, अभिमत्य=अहङ्कारं कृत्वा। तदनन्तरं 'कर्तव्यमेतत्' इति अध्यवस्यति=निश्चिनोति। ततश्च=आलोचनमननाभिमानाऽवधारणानन्तरम्। प्रवर्तते=तादृशकार्यकरणे प्रवृत्तो भवति। तत्र बुद्धेः कीदृशो व्यापारः ? इत्याकाङ्क्षायामाह—**तत्रेति**। तत्र=आलोचनमननाभिमानाऽवधारणेषु। योऽयं कर्तव्यमिति विनिश्चयः=कर्तव्यमेतन्मयेति बुद्धेर्निश्चयः स एवाऽध्यवसायो बुद्धेरसाधारणो व्यापारः।

---

बुद्धि धर्मी है। धर्म और धर्मी में भेद स्पष्ट है। जैसे गन्ध और गन्ध की आश्रयीभूता पृथिवी में धर्मधर्मिभाव होने के कारण जैसे वहाँ 'गन्धवती पृथिवी' होता है, न कि 'गन्धः पृथिवी'। ऐसे ही बुद्धि-लक्षण में भी 'अध्यवसायवती बुद्धिः' यही होना चाहिए था न कि 'अध्यवसायो बुद्धिः'।

उत्तर—'क्रियाक्रियावतोः' इति। पृथिवीलक्षण-स्थल में भेदविवक्षा से 'गन्धवती पृथिवी' यह लक्षण किया गया है; और प्रकृत में अध्यवसाय क्रिया और क्रियावती बुद्धि में अभेद विवक्षित है, अतः अभेदविवक्षा से ही वहाँ अध्यवसाय को ही बुद्धि मानकर 'अध्यवसायो बुद्धिः' यह लक्षण किया गया है।

प्रश्न—बुद्धि का व्यापार क्या है ?

उत्तर—'सर्वोऽपि व्यवहर्ता' इति। यह अनुभवसिद्ध है कि सभी व्यवहार करने वाले लोग सर्वप्रथम बाह्येन्द्रिय अर्थात् ज्ञानेन्द्रियों के व्यापारों के आधार पर किसी भी विषय का प्रत्यक्ष करते हैं, उसके बाद मन से उसका मनन अर्थात् संकल्प-विकल्पात्मक विचार कर इस विषय में 'मैं सर्वथा अधिकार-सम्पन्न हूँ' ऐसा अभिमान

बुद्धेरसाधारणो व्यापारः, तदभेदा बुद्धिः। स च बुद्धेर्लक्षणं, समानासमानजातीयव्यवच्छेदकत्वात्।

( ३ ) तदेवं बुद्धि लक्षयित्वा विवेकज्ञानोपयोगिनस्तस्या धर्मान्

---

ननु जडभूताया बुद्धेः कथमयं निश्चयो जायते ? इत्यत आह—**चितिसन्निधानादिति**। चितेः=चेतनपुरुषस्य, सन्निधानात्=संसर्गात्=चेतनस्य पुरुषस्य प्रतिबिम्बादित्यर्थः। आपन्नचैतन्यायाः—आपन्नं=प्राप्तं, चैतन्यं, पुरुषतो यया तस्याः इत्यर्थः। यथा एकस्मिन्नधिकरणे वर्तमानयोः स्फटिकमणिजपाकुसुमयोर्मध्ये स्फटिकमणिर्जपाकुसुमसन्निधानात् लौहित्यमापन्ना भवति, तथैव प्रकृतेऽपि चेतनपुरुषसन्निधानाद् बुद्धिरपि चैतन्यमापन्ना भवतीति भावः। **असाधारण इति**। असाधारणत्वञ्च स्वेतरावृत्तित्वे सति स्ववृत्तित्वम्। तदभेदा=तस्माद्=अध्यवसायरूपात् क्रियात्मकव्यापाराद्, अभेदो यस्याः सा, अध्यवसायाऽभिन्ना—क्रियाक्रियावतोरभेदविवक्षयाऽध्यवसायाभिन्नत्वं प्रोट्टङ्कितं बुद्धेः। स च=अध्यवसायश्च। लक्षणम्=अध्यवसायत्वं बुद्धेर्लक्षणम्। **समानासमानेति**। समानजातीयेभ्यः=मनःप्रभृतीन्द्रियान्तरेभ्यः, असमानजातीयेभ्यः=पञ्चतन्मात्रादिभ्यः, व्यवच्छेदकत्वात्=व्यावर्तकत्वात्, भवति अध्यवसायत्वं बुद्धेर्निर्दुष्टं लक्षणम्।

( ३ ) विवेकज्ञानोपयोगिनः=आत्मा पुरुषः प्रकृत्यादिभ्यो भिन्न इत्येतादृशविवेकज्ञानप्रयोजकीभूतान्। तस्याः=बुद्धेः। धर्मान्=बुद्ध्याश्रितपदार्थान्। सात्त्विक-

---

करके तदनन्तर 'मैं इस विषय को सम्पन्न करने में सर्वथा समर्थ हूँ' ऐसा अभिमान कर फिर बुद्धि से यह अध्यवसाय=निश्चय करता है कि 'मुझे अब इस विषय को अवश्य ही सम्पन्न करना चाहिए' ऐसा निश्चय कर उस विषय को सम्पन्न करने में प्रवृत्तिशील बनता है, यह लोकसिद्ध है।

**'तत्र योऽयम्' इति**। अर्थात् उन आलोचन, मनन, अभिमान तथा अध्यवसाय रूप व्यापारों के मध्य में जो यह 'कर्तव्यमेतन्मया' अर्थात् यह मुझे करना ही चाहिए, इत्याकारक जो बुद्धि का विनिश्चय=विशेष निश्चय है, वह चिति=चेतनपुरुष के सन्निधान=सम्पर्क होने से आपन्नचैतन्यायाः=चैतन्य प्राप्त हुई बुद्धि को होता है, और वही विशेष निश्चय अध्यवसाय=बुद्धि का असाधारण व्यापार है; और उस अध्यवसाय से अभिन्न बुद्धि है, क्योंकि क्रिया एवं क्रियावान् में सांख्य के यहाँ अभेद है और वह अध्यवसाय बुद्धि का लक्षण है। क्योंकि लक्षण वही होता है, जो लक्ष्य को इतरों=समानजातीयों तथा असमानजातीयों से व्यवच्छिन्न अर्थात् व्यावृत्त=भिन्न कर दें। प्रकृत में 'अध्यवसाय' यह लक्षण लक्ष्य बुद्धि का समानजातीय मन एवं अहङ्कार से असमानजातीय घट-पटादि से व्यवच्छेदक होने से अव्याप्ति, अतिव्याप्ति, असंभव—योपत्रय शून्य होने के कारण निर्दुष्ट लक्षण हो जाता है।

**( ३ ) 'तदेवं बुद्धि लक्षयित्वा' इति**। इस प्रकार बुद्धि का लक्षण करके विवेकज्ञान में उपयुक्त=सहायक जो उस बुद्धि के सात्त्विक और तामस धर्म हैं, उनको

सात्त्विकतामसानाह—'धर्मो ज्ञानं विराग ऐश्वर्यम् । सात्त्विकमेतद्रूपं तामसमस्माद्विपर्यस्तम्' इति ।

### धर्मनिरूपणम्

(४) धर्मः—अभ्युदयनिःश्रेयसहेतुः । तत्र यागदानाद्यनुष्ठानजनितो धर्मोऽभ्युदयहेतुः । अष्टाङ्गयोगानुष्ठानजनितश्च निःश्रेयसहेतुः । गुणपुरुषान्यताख्यातिर्ज्ञानम् । विरागः—वैराग्यं रागाभावः ।

---

तामसान्=सत्त्वगुण-तमोगुणविशिष्टान् । आह । धर्मः='अभ्युदयनिःश्रेयससाधको धर्मः' अनेनैव जगद्धार्यते । ज्ञानम्=ज्ञायते विषयोऽनेनेति वृत्तिरूपं ज्ञानम्, अथवा विषयीभूता भवन्ति घट-पटादयो यस्य तज्ज्ञानम्, अनेनापि वृत्तिरूपं ज्ञानं विवक्षितम् । विरागः—रज्यते इति रागः=आसक्तिविशेषः, पुनः पुनर्विषयानुरञ्जनेच्छा रागः, विगतो रागो विरागः=रागाभाव इत्यर्थः । ऐश्वर्यम्—ईष्टे इतीश्वरस्तस्य भावो धर्म ऐश्वर्यम्=सामर्थ्यं=शक्तिः, तच्चाष्टविधं वक्ष्यमाणम् । एतत्=एतच्चतुष्टयम् । सात्त्विकं रूपम्=सात्त्विको बुद्धिधर्मः । तामसम्=तामसबुद्धिधर्मः । अस्मात्=सात्त्विकरूपात् । विपर्यस्तम्=विरुद्धम् ।

(४) धर्मं लक्षयति—**अभ्युदयेति** । तत्राऽभ्युदयः स्वाराज्यसाम्राज्याद्यैश्वर्यविशेषः, निश्चितं श्रेयः=कल्याणं, निःश्रेयसं=कैवल्यं=मोक्षः, तयोर्हेतुर्धर्मः । एकस्य धर्मस्याऽभ्युदयनिःश्रेयसोभयहेतुत्वासम्भवात्तत्र व्यवस्थया अभ्युदयहेतुभूतं धर्मं कथयति—**तत्रेति** । अभ्युदयनिःश्रेयसहेतुभूतधर्मयोर्मध्ये । **यागदानादीति** । अत्र आदिपदेन कर्मकाण्डवेदविहितकर्मकाण्डमात्रपरिग्रहो बोध्यः । यागश्च कामपि देवतामुद्दिश्य तत्प्रसन्नतानिमित्तभूतो हविःप्रक्षेपात्मको व्यापारः । 'दा'धात्वर्थो दानम्, तच्च स्व-स्वत्वनिवृत्तिपूर्वकपर-स्वत्वोत्पादनम् । अनुष्ठानञ्च=यथाविधि सम्पादनम् । **अष्टाङ्गयोगेति** । यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिरूपाणि अष्टौ अङ्गानि । तत्रापि यमनियमासनप्राणायामप्रत्याहारेति पञ्च बहिरङ्गानि सन्ति, इतराणि च धारणाध्यानसमाधिरूपाणि अन्तरङ्गाणि भवन्ति इत्यपि बोध्यम् । **योगेति** । योगश्चित्तवृत्ति-

---

बतलाते हैं । धर्म, ज्ञान, वैराग्य, ऐश्वर्य—ये बुद्धि के सात्त्विक धर्म हैं; और बुद्धि के जो तामस धर्म हैं, वे इनसे विपरीत अर्थात् अधर्म, अज्ञान, अवैराग्य तथा अनैश्वर्य रूप हैं ।

(४) धर्मोऽभ्युदयनिःश्रेसहेतुः' इति । चार प्रकार के सात्त्विक धर्मों में सर्वप्रथम जो धर्म है उसका लक्षण है—जिससे अभ्युदय और निःश्रेयस की प्राप्ति हो । उनमें भी याग-दानादि के अनुष्ठान से जनित धर्म अभ्युदय का हेतु है । स्वराज्य, साम्राज्य आदि ऐश्वर्यविशेष को 'अभ्युदय' कहते हैं ।

और यम, नियम, आसन, प्राणायाम आदि योग के जो आठ अङ्ग हैं, उनके अनुष्ठान से जनित धर्म निःश्रेयस=कैवल्य का हेतु है ।

त्रिगुण=प्रकृति और पुरुष के भेदज्ञान को द्वितीय सात्त्विक धर्म 'ज्ञान' कहते हैं ।

## वैराग्यविभाग:

तस्य—यतमानसंज्ञा, व्यतिरेकसंज्ञा, एकेन्द्रियसंज्ञा, वशीकारसंज्ञा इति चतस्रः संज्ञाः। रागादयः कषायाश्चित्तवर्त्तिनः, तैरिन्द्रियाणि यथास्वं विषयेषु प्रवर्त्यन्ते। तन्माऽत्र प्रवर्तिषत विषयेष्विन्द्रियाणीति तत्परिपाचनायारम्भः प्रयत्नो यतमानसंज्ञा।

( ५ ) परिपाचने चाऽनुष्ठीयमाने केचित्कषायाः पक्वाः, पक्ष्यन्ते च

---

निरोधः, स च योग एभिरष्टाङ्गैरेव सम्पन्नो भवति। अष्टाङ्गयोगानुष्ठानजनितश्च धर्मविशेषो निःश्रेयसहेतुर्भवतीति विज्ञेयम्। **गुणेति**। गुणश्चात्र प्रकृते बुद्धितत्त्वम्, अन्यता = भेदः, अर्थाद् बुद्धिपुरुषयोर्यो भेदेन या ख्यातिः = विनिश्चयः, तदेव ज्ञानम्, तच्च पुरुषः प्रकृत्यादिभिन्न इत्याकारकं पुरुषानुयोगिकं ग्राह्यम्। वैराग्यं लक्षयति—**रागाभाव इति**। तस्य = वैराग्यस्य। स च वैराग्यापरपर्यायभूतो विरागो यतमानेत्यादिचतुःसंज्ञको भवति। तत्राद्यां संज्ञां लक्षयति—**रागादय इति**। अविद्यास्मितारागद्वेषाभिनिवेशापरनामधेया रागादयः, कषायाः = मलाः, रागादिषु कषायत्वं न वास्तविकमपि तु औपचारिकम्। सांसारिकविषयेच्छारूपरागादिभिश्चित्ते वारमेकं समुत्पद्य विनाशं गतैरपि तैस्तत्तद्विषयाकारा वासनापरनामधेयाः संस्कारा आधीयन्ते इति कषायसादृश्यावच्छिन्नत्वात्तेऽपि रागादयः कषायशब्देनाभिधीयन्ते। **चित्तवर्तिन इति**। चित्तगता इत्यर्थः। तैः = कषायैः। यथास्वं = स्वीयमनतिक्रम्य वर्तते इति यथास्वं, स्वेषु स्वेषु = स्वकीयस्वकीयेषु। विषयेषु = रूप-स्पर्शादिषु। इन्द्रियाणि = चक्षुरादीनि। प्रवर्त्यन्ते = प्रवृत्तिशीलानि भवन्ति। यादृशविषयग्रहणे, यदिन्द्रियं समर्थं भवति तदिन्द्रियं तत्रैव प्रवृत्तं भवति, यथा शब्दे श्रोत्रमित्यादि। तत्परिपाचनाय = तेषां रागादीनां प्रक्षालनाय। आरम्भः = '*मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम्*' इति यो योगसूत्रोक्तानुष्ठानरूपः प्रयत्नः स यतमानसंज्ञको वैराग्यः।

( ५ ) द्वितीयां संज्ञामाह – **परिपाचने चेति**। रागादिमलदूरीकरणाय मैत्र्यादिभावनायां समनुष्ठीयमानायां सत्याम्। केचित्कषायाः = केचित् मलाः। पक्वाः =

---

बार-बार विषयों के अनुरञ्जन की इच्छा ही राग है और राग के अभाव को विराग = वैराग्य कहते हैं तथा उस वैराग्य की चार संज्ञाएँ हैं—यतमानसंज्ञा, व्यतिरेकसंज्ञा, एकेन्द्रियसंज्ञा तथा वशीकारसंज्ञा।

**'रागादय' इति**। राग-द्वेष आदि चित्त के अन्दर रहने वाले कषाय को ही 'मल' कहते हैं। उन रागादियों से अथवा रागादियों के द्वारा इन्द्रियाँ अपने-अपने विषयों में प्रवृत्त होती हैं। ये इन्द्रियाँ विषयों में प्रवृत्त न हों, इसलिए इन राग-द्वेषादि मलों के परिपाचन = प्रक्षालन = नष्ट करने के लिए जो आरम्भ = प्रयत्न, वही यतमानसंज्ञक वैराग्य कहलाता है।

( ५ ) **'परिपाचने' इति**। अर्थात् रागादि मलों के परिपाचन = प्रक्षालन = चित्त से उन्हें सर्वथा दूर करने के लिए मैत्री आदि भावना के आधार पर प्रयत्नानुष्ठान

केचित्, तत्रैवं पूर्वापरीभावे सति पक्ष्यमाणेभ्यः कषायेभ्यः पक्वानां व्यतिरेकेणावधारणं व्यतिरेकसंज्ञा ।

( ६ ) इन्द्रियप्रवर्तनासमर्थतया पक्वानामौत्सुक्यमात्रेण मनसि व्यवस्थापनमेकेन्द्रियसंज्ञा । औत्सुक्यमात्रस्याऽपि निवृत्तिरुपस्थितेष्वपि दृष्टानुश्रविक-

---

नष्टा जाताः । पक्ष्यन्ते = नङ्क्ष्यन्ति = निवर्तिष्यन्ते । तत्र = तेषु नष्टेषु अविनष्टेषु च । एवं पूर्वापरीभावे सति = एते च मलाः उपशान्ता जाता एते भविष्यन्तीति यद् विवेचनम्, तदुत्तरञ्चाऽवशिष्टानामुपशमाय प्रयत्नानुष्ठानं तद् व्यतिरेकवैराग्यम् । पक्ष्यमाणेभ्यः = उपशमयितव्येभ्यः । पक्वानाम्=उपशान्तानाम् । व्यतिरेकेण = भेदेन । अवधारणम् = निश्चयः = व्यतिरेकनिश्चयः, अर्थात् पक्वापक्वमलानां व्यतिरेकनिश्चय इत्यर्थः । अर्थात् एतावन्तश्चित्तमला मैत्र्यादिभावनानुष्ठानेन निवृत्तिं गताः, कियन्तश्च निवृत्तिं गमिष्यन्ति, कियन्तश्च निवर्तमानाः सन्ति, एवञ्च निवृत्तविद्यमानकषायाणां यत् पार्थक्येन ज्ञानं तदुत्तरञ्चाऽवशिष्टानां निराकरणाय यद् यत्नानुष्ठानं तद् व्यतिरेकसंज्ञकं वैराग्यम् ।

( ६ ) तृतीयामेकेन्द्रियसंज्ञां लक्षयति—इन्द्रियेति । इन्द्रियाणां = दशविधेन्द्रियाणाम्, प्रवर्तनासमर्थतया = विषयं विषयं प्रति गमनाशक्ततया । पक्वानां = शिथिलीकृतानां, रागादीनाम् । औत्सुक्यमात्रेण = तृष्णामात्रेण । मनसि । व्यवस्थानम् = अवस्थानम् ( एव ) एकेन्द्रियसंज्ञकवैराग्यम्, तथा चैतस्यास्तृष्णावस्थाया अपि समाप्तये यः प्रयत्न स एव एकेन्द्रियवैराग्यमित्यर्थः ।

चतुर्थीं संज्ञां लक्षयति—औत्सुक्यमात्रस्यापीति । तृष्णाया अपीत्यर्थः । दृष्टानुश्रविकविषयेषु—दृष्टाः = स्रक्चन्दनवनितादिरूपाः, भोजनजलपानादिरूपाश्च ये सन्ति दृष्टविषयाः, आनुश्रविकाः—अनुश्रवो = वेदः, तस्मादधिगता ये स्वर्गादिरूपा विष-

---

करते रहने पर कुछ कषाय = मल शान्त हो चुके हैं और कुछ भविष्य में शान्त होने जा रहे हैं; उन विनष्ट तथा अविनष्ट दोनों प्रकार के मलों में 'तत्रैवम्' इस प्रकार अर्थात् ये-ये मल शान्त हो चुके हैं, इन-इन को और शान्त करना अवशिष्ट रह गया है, ये भी कुछ काल बाद अवश्य ही शान्त = समाप्त हो जायेंगे। इस प्रकार पूर्वापरीभाव से आलोचनात्मक विचार करने पर इस अवशिष्ट मलों की शान्ति = समाप्ति के लिए किया जाने वाला प्रयत्न व्यतिरेकसंज्ञक वैराग्य कहलाता है ।

( ६ ) 'इन्द्रियप्रवर्तनासमर्थतये'ति । कुण्ठीकृत दशविध इन्द्रियाँ अपने-अपने विषयों के प्रति वृत्तिप्रसारण में जब सर्वथा असमर्थ हो जाती हैं, अर्थात् उन इन्द्रियों की विषयाकार वृत्ति समाप्त हो जाती है; केवल पक्व रागादि मलों की जो मन में औत्सुक्यमात्र से अर्थात् तृष्णामात्र के रूप में स्थिति बनी रह जाती है, फिर उस स्थिति को न उभड़ने देने के लिए जो प्रयत्न है, वही एकेन्द्रियसंज्ञक वैराग्य है ।

'औत्सुक्यमात्रस्यापि' इति । एवम् उपस्थित स्रक्, चन्दन, विलेपन, वनिता, आदि दृष्ट = लौकिक विषयों से तथा स्वर्गादि स्वरूप आनुश्रविक=वेदोक्त = अलौकिक

विषयेषु या संज्ञात्रयात्पराचीना सा वशीकारसंज्ञा। यामत्र भवान् पतञ्जलिर्वर्णयाञ्चकार—'दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्' इति ( यो० सू० १।१६ )। सोऽयं बुद्धिधर्मो विराग इति।

( ७ ) ऐश्वर्यमपि बुद्धिधर्मः, यतोऽणिमादिप्रादुर्भावः। १. अत्राऽणिमा—अणुभावः, यतः शिलामपि प्रविशति। २. लघिमा—लघुभावः, यतः सूर्यमरी-

यास्तेष्वित्यर्थः। निवृत्तिः=उपेक्षाबुद्धिः। संज्ञात्रयात् =यतमानव्यतिरेकैकेन्द्रियेति संज्ञात्रयात्। पराचीना=प्राचीना=पश्चाद्भाविनी। या संज्ञा सा वशीकारसंज्ञा, तत्संज्ञकञ्चेदं वैराग्यमित्यर्थः। याम्=चतुर्थी=वशीकारसंज्ञाम्, अर्थात् वशीकारसंज्ञकं वैराग्यमित्यर्थः। अत्र=हेमचन्द्रकोशे। भवान्=पूज्यः। पतञ्जलिः=पतञ्जलिनामा महर्षिः, शेषावतार इत्यर्थः। वर्णयाञ्चकार=सूत्रयाञ्चकार। तथा च सूत्रम्—दृष्टानुश्रविकेति। सोऽयं=चतुर्विधः। बुद्धिधर्मो विरागः।

( ७ ) 'अणिमा-गरिमा' इत्यादिशब्दग्राह्याणि ऐश्वर्याणि विवेचयन् तानि व्याख्यातुमुपक्रमते—ऐश्वर्यमपीति। यतः=यस्मादैश्वर्याख्याद् बुद्धिधर्मात्। अणिमादिप्रादुर्भावः=अणिमादिसिद्धीनां प्रादुर्भावो भवतीत्यर्थः।

१. तत्रेति। तत्र=अणिमादिसिद्धिषु मध्ये। अणिमा=अणिमापदार्थः। अणुभावः=गुरुतरशरीरोऽपि परमाणुवत् अणुर्भवतीति भावः। समस्तानामपि वस्तूनां सूक्ष्मसूक्ष्मांशैर्विभागो विधीयते तत्राऽन्ततो गत्वा यस्य सूक्ष्मस्य वस्तुनो विभागो न कथमपि भवेत् स एवाऽणुः। तस्य फलमाह—यत इति। यतः=अणिमाप्रभावात्, अणुभावाद्वा। शिलामपि=छिद्ररहितं पाषाणमपि। प्रविशति=शिलाऽन्तःप्रवेशं करोतीत्यर्थः। २. द्वितीयमैश्वर्यमाह— लघिमेति। लघिमापदार्थमाह—लघुभावः इति। यतः=लघुभावप्रभावात्, लघिमाप्रभावाद्वा। सूर्यमरीचीन्=सूर्यरश्मीन्=सूर्यकिरणान्।

विषयों से अर्थात् दृष्टादृष्ट विषय मात्र से निवृत्ति हो जाना, वह यतमान, व्यतिरेक, एकेन्द्रिय, इन संज्ञात्रय से पराचीन=पीछे होने वाली वशीकार संज्ञा है, अर्थात् वही वशीकारसंज्ञक तुरीय वैराग्य है।

इस वशीकार संज्ञा=वशीकारसंज्ञक वैराग्य का यहाँ भगवान् पतञ्जलि ने भी सूत्र के रूप में इस प्रकार वर्णन किया है—'**दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्**' इति ( यो० सू० १।१५ ) अर्थात् दृष्ट तथा आनुश्रविक विषयों में सर्वथा वितृष्ण=औत्सुक्यविहीन साधक के वैराग्य की संज्ञा 'वशीकार' संज्ञा है। यह चतुर्विध विराग=वैराग्य भी बुद्धिधर्म है।

( ७ ) '**ऐश्वर्यमपि**' इति। यह चतुर्थ सात्त्विक बुद्धिधर्म है। इससे 'अणिमा' आदि सिद्धियों का प्रादुर्भाव=उत्पत्ति होता है। इनमें—१. **अणिमा**—अणुभाव=सूक्ष्मता रूप है; जिस अणिमासिद्धि के आधार पर योगी छिद्ररहित पाषाणरूप शिला में भी प्रवेश कर जाता है। २. '**लघिमा**'—लघुभाव=लघुता=एकदम हलका हो जाना; जिससे योगी सूर्य की किरणों को हाथों से पकड़ कर सूर्यलोक में चला जाता

चीनालम्ब्य सूर्यलोकं याति। ३. गरिमा—गुरुभावः, यतो गुरुर्भवति। ४. महिमा—महतो भावः, यतो महान् भवति। ५. प्राप्तिः—यतोऽङ्गुल्यग्रेण स्पृशति चन्द्रमसम्। ६. प्राकाम्यम्—इच्छानभिघातः, यतो भूमावुन्मज्जति निमज्जति च, यथोदके। ७. वशित्वम्—यतो भूतभौतिकं वशीभवत्यवश्यम्। ८. ईशित्वम्—यतो भूतभौतिकानां प्रभवस्थितिलयानामीष्टे।

---

आलम्ब्य=आश्रित्य=हस्ताभ्यां सूर्यकिरणान् गृहीत्वेत्यर्थः। सूर्यलोकं=स्वर्गम्। याति=गच्छति। ३. तृतीयमैश्वर्यमाह—**गरिमेति**। गरिमापदार्थमाह—**गुरुभावः इति**। यतः=गरिमाप्रभावात्। ४. चतुर्थमैश्वर्यमाह—**महिमेति**। महिमापदार्थमाह—**महतो भावः इति**। यतः=यत्प्रभावात्। महान् भवति=तनुपरिमाणोऽपि पर्वतादिसमशरीरो भवति। ५. पञ्चममैश्वर्यमाह—**प्राप्तिरिति**। सर्वेषां भावभूतपदार्थानां सन्निधानं प्राप्तिः। यतः='प्राप्ति'रूपैश्वर्यप्रभावात्। अङ्गुल्यग्रेण=अङ्गुल्या अग्रभागेन। चन्द्रमसं=चन्द्रम्। स्पृशति=भूमिष्ठोऽपि द्विलक्षयोजनान्तरितचन्द्रस्पर्शं करोति। ६. षष्ठमैश्वर्यमाह—**प्राकाम्यमिति**। प्राकाम्यपदार्थमाह—**इच्छानभिघातः इति**। इच्छाया अनभिघातः=अभिघाताभावः। यतः=प्राकाम्यप्रभावात्। यथोदके=जले इव। भूमौ निमज्जति=भूमौ प्रवेशं करोति, भूमावन्तः प्रविशतीत्यर्थः। उन्मज्जति=निःसरति च। ७. सप्तममैश्वर्यमाह—**वशित्वमिति**। यतः=वशित्वप्रभावात्। भूतभौतिकम्—भूतानि=तन्मात्राणि महाभूतानि च, भौतिकानि=स्थावरजङ्गमादीनि। अवश्यं वशीभवति=भूतभौतिकं सर्वमस्य वशमायाति। ८. अष्टममैश्वर्यमाह—**ईशित्वमिति**। यतः=ईशित्वप्रभावात्। भूतभौतिकानां=भूतानां=पृथिव्यादीनां, भौतिकानां=भूतविनिर्मितमानवीयादि-

---

हैं। ३. **'गरिमा'**—गुरुभाव=गुरुत्व=भारीपन है; जिससे योगी बहुत ही वजनदार हो जाता है। जिस गरिमासिद्धि को प्राप्त हुए योगी को झञ्झावात अर्थात् बड़े से बड़ा वायु भी नहीं हिला सकता है। ४. **'महिमा'**—महतो भाव=महत्त्व; जिस सिद्धि के प्रभाव से छोटे परिमाण वाला योगी भी पर्वतादि के समान शरीर वाला हो जाता है। ५. **'प्राप्तिः'** वह सिद्धि, जिसके प्रभाव से योगी दूर, अत्यन्त दूर में स्थित पदार्थों को भी अपने पास ही ले आता है। जैसे यहीं पृथिवी के ऊपर बैठा हुआ योगी अपने हाथ की अंगुलि के अग्रभाग से २ दो लाख योजन अर्थात् आठ लाख कोस ( एक योजन में चार कोस होता है ) की दूरी पर स्थित चन्द्रमा को छू लेता है। अतः दूरस्थ, अत्यन्त दूरस्थ सभी पदार्थों को समीप में लाने की 'सिद्धिरूपा' शक्ति ही 'प्राप्ति' है। ६. **'प्राकाम्य'**—वह सिद्धि है, जिस सिद्धि को प्राप्त करके योगी जो चाहता है वही होता है। उसकी इच्छा का कभी भी अभिघात=अवरोध=रुकावट नहीं होता है। इस सिद्धि को प्राप्त योगी अत्यन्त कठिन से कठिन भूमि में भी जल के समान उन्मज्जन=प्रवेश तथा निमज्जन=निःसरण=निर्गमन अनायास कर लेता है। ७. **'वशित्वम्'**—वह सिद्धि है, जिसके

( ८ ) यच्च कामवसायित्वं, सा सत्यसङ्कल्पता, येन यथाऽस्य सङ्कल्पो भवति भूतेषु, तथैव भूतानि भवन्ति । अन्येषां मनुष्याणां निश्चयाः निश्चेतव्यमनुविधीयन्ते, योगिनस्तु निश्चेतव्याः पदार्थाः निश्चयम्—इति चत्वारः सात्त्विका बुद्धिधर्माः । तामसास्तु तद्विपरीता बुद्धिधर्माः । अधर्माज्ञानावैराग्यानैश्वर्याभिधानाश्चत्वार इत्यर्थः ॥ २३ ॥

---

शरीराणां, घट-पटादिविकाराणाम् । ईष्टे=उत्पत्तिस्थितिविनाशानां सामर्थ्यवान् भवतीत्यर्थः ।

( ८ ) ईशित्वस्य नामान्तरमप्याह—**यच्च कामावसायित्वमिति** । कामावसायिता एव सत्यसङ्कल्पता । यथाऽस्य='ईशित्व'-ऐश्वर्यावच्छिन्नस्य, योगिन इत्यर्थः । भूतेषु=भूतप्रकृतिकेषु । यथा सङ्कल्पो भवति=यद् वस्तु यदर्थतया सङ्कल्पयतीत्यर्थः, विषमप्यमृतत्वेन सङ्कल्प्य भोजयन् जीवयतीत्यर्थः । तथैव भूतानि भवन्ति=जायन्ते । मनुष्याणां, निश्चयाः=ज्ञानानि । निश्चेतव्यं=निश्चयविषयीभूतपदार्थम् । अनुविधीयन्ते=अनुगच्छन्ति । योगिनस्तु । निश्चेतव्याः पदार्थाः=ज्ञेयपदार्थाः=ज्ञानविषयीभूताः पदार्थाः । निश्चयम्=ज्ञानम् । अनुसृता भवन्ति, एतावानेव विशेषः । मनुष्ययोगिनोरयमस्ति पदार्थस्वभाववैपरीत्यक्रमः—यत् मनुष्यस्य ज्ञानानि ज्ञेयपदार्थस्याऽनुसरणं कुर्वन्ति, तेन यादृशं ज्ञेयं भवति तादृशमेव ज्ञानं तस्य जायते । योगिनस्तु ज्ञेयपदार्था ज्ञानानुसारिणो भवन्ति, यथा ते योगिनो विज्ञातुं विधातुं वा वाञ्छन्ति तथैव ज्ञेयं भवति ।

इदमत्रावधेयम्—लोके यद् यद् वस्तु यादृशरूपावच्छिन्नमस्ति प्राकृतसत्यवादिनो मानवास्तद् वस्तु तदेव कथयन्ति न तु तेषां वाक्यतो वस्त्वन्तरमुत्पद्यते । योगिनस्तु यद् यद् वदन्ति तत्तदेवाऽसदपि समुत्पद्यते । तथा चोक्तम्—

---

प्रभाव से योगी समस्त भूत तथा भौतिक पदार्थों को अपने वश में कर लेता है, जो कि दूसरों के अधीन नहीं हो सकते है । ८. **'ईशित्वम्'**—इस सिद्धि के प्रभाव से योगी समस्त भूत तथा भौतिक पदार्थों के प्रभव=उत्पत्ति, स्थिति=संरक्षण, लय=विनाश में सर्वथा-सामर्थ्य सम्पन्न रहता है ।

( ८ ) ईशित्व का ही प्रकारान्तर से विवेचन करते हैं—**'यच्च कामावसायित्वम्' इति** । अर्थात् ईशित्व कामवसायित्वरूप है और वह सत्यसंकल्पतारूप है । इस सिद्धि को प्राप्त योगी इस सिद्धि के प्रभाव से समस्त सत्यसंकल्प हो जाता है । इच्छा के अनुसार सभी पदार्थ उसे प्राप्त हो जाते है । यदि उस योगी की यह इच्छा हो जाती है कि विष भी अमृत हो जाय, अथवा अमृत विष हो जाय तो वैसा ही हो जायेगा, यह ध्रुव है । योगी के सङ्कल्पानुसार ही प्राणी हो जाते हैं ।

**'अन्येषाम्' इति** । योगी से अन्य मनुष्यों के निश्चय निश्चेतव्य विषयों का अनुविधान करते है, परन्तु योगी के निश्चेतव्य विषय अथवा पदार्थ ही उसके निश्चय का अनुसरण करते है । अर्थात् योगी का ज्ञान जैसा होता है, विषय उसी रूप में परिवर्तित हो जाते हैं । अर्थात् योगी के विषय ज्ञानाधीन होते हैं, योगी से भिन्न

( १ ) अहङ्कारस्य लक्षणमाह—

**अभिमानोऽहङ्कारस्तस्माद् द्विविधः प्रवर्तते सर्गः ।**
**एकादशकश्च　　गणस्तन्मात्रपञ्चकश्चैव ॥ २४ ॥**

( २ ) 'अभिमानः' इति । 'अभिमानोऽहङ्कारः' । यत् खल्वालोचितं मतं च तत्र अहमधिकृतः । 'शक्तः खल्वहमत्र' 'मदर्था एवाऽमी विषयाः' 'मत्तो नाऽन्यो-

---

'लौकिकानां हि साधूनामर्थं वागनुवर्तते ।
ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति ॥' ( रा० च० भवभूतिः )

धर्मज्ञानवैराग्यैश्वर्येति चत्वारः सात्त्विका बुद्धिधर्मा उक्ताः, सम्प्रति तामसांस्तानाह—**तामसास्तु तद्विपरीता** इति । अधर्माऽज्ञानेत्यादयः—धर्मादिविपरीतास्ते बोध्याः ॥ २३ ॥

( १ ) अहङ्कारघटितां कारिकामवतारयति—**अभिमान** इति । 'अहमस्मी'ति प्रत्ययः, अहङ्कार इत्युच्यते । तत्र 'अभिमान' इति लक्षणं, शेपस्तु लक्ष्य इति ।

**अन्वयः**—अभिमानः अहङ्कारः च तस्माद् द्विविधः सर्गः प्रवर्तते, एकादशकः गणः च तन्मात्रः पञ्चकः एव ।

( २ ) अहङ्कारादेव जायमाना द्विविधा सृष्टिः अनुपदमेव विवेचयिष्यते । **यत् खल्वालोचितमिति** । यद्=वस्तु । आलोचितं=प्रत्यक्षीकृतम् ( वाह्येन्द्रियैः ) । मनसा च—मतम्=विशेपतः कल्पितञ्च । तत्र=तस्मिन् वस्तुनि, अहमधिकृतः=एतद्वस्तुनि ममैवास्त्यधिकारः, अत एतस्मिन् वस्तुनि अहमेवास्मि सर्वथाऽधिकारसम्पन्नः । 'अधिकृतः' इत्यस्यैव पर्यायवाचीशब्दः 'शक्तः' इति । मदर्थाः=मदुपकारकाः । अत्राधिकृतः=अत्र=वस्तुनि, कार्ये वा, अधिकारसम्पन्नः । मत्तो नान्योऽस्ति कश्चित् ।

---

लोगों के ज्ञान विपयाधीन होते हैं । ये चारों धर्म, ज्ञान, वैराग्य एवं ऐश्वर्य सात्त्विक वुद्धिधर्म हैं और तामस वुद्धिधर्म सर्वथा इनके विपरीत—अधर्म, अज्ञान, अवैराग्य, अनैश्वर्यरूप होते हैं ॥ २३ ॥

( १ ) **अहङ्कारस्य इति** । अहङ्कार का लक्षण वतलाते हैं—**'अभिमानोऽहङ्कारः'** इस कारिका से—

· **कारिकार्थ**—अभिमान ( अहमत्राधिकृतः ) इत्याकारक धर्मवाला अहंकार है । इसी अहंकार से दो प्रकार की सृष्टि होती है । एकादश ऐन्द्रियगण ( श्रोत्रादि से लेकर मन तक ) और पांच तन्मात्राएँ ।

( २ ) अहङ्कार का लक्षण है—'अभिमान' । जिस घट-पटादि रूप वस्तु को सर्वप्रथम चक्षुरादि इन्द्रियों के द्वारा देखा और वाद में मनन=विशेपरूप से विचारा कि मैं ही इस विपय का अधिकार प्राप्त हूँ, इसलिए मैं इस विपय को सम्पन्न करने में सर्वथा शक्त=समर्थ हूँ । ये विपय मेरे ही लिए हैं; मेरे से अन्य किसी को भी इस विपय को सम्पन्न करने का अधिकार नहीं प्राप्त है । इस रूप से होने वाला जो किसी भी विपय

ऽत्राऽधिकृतः कश्चिदस्ति', 'अतोऽहमस्मि' इति योऽभिमानः सोऽसाधारणव्यापारत्वादहङ्कारः। तमुपजीव्य हि बुद्धिरध्यवस्यति 'कर्तव्यमेतन्मया' इति।

( ३ ) तस्य कार्यभेदमाह—'तस्माद् द्विविधः प्रवर्त्तते सर्गः' इति। प्रकारद्वयमाह—'एकादशकश्च गणः' इन्द्रियाह्वः, तन्मात्रपञ्चकश्चैव। द्विविध एव सर्गोऽहङ्कारात्, न त्वन्य इति 'एव'कारेणाऽवधारयति ॥ २४ ॥

( १ ) स्यादेतत्—अहङ्कारादेकरूपात् कथं जडप्रकाशकौ गणौ विलक्षणौ भवत इत्यत आह—

---

अतोऽहमस्मि=अत एतस्मिन् वस्तुनि अहमेवाऽस्मि अधिकारसम्पन्नः। **योऽभिमान इति**। इति=इत्येवंस्वरूपः। योऽभिमानः=ज्ञानभेदः, अहङ्कारस्य वृत्तिविशेषरूपः। **असाधारणेति**। व्यापारेऽसाधारणत्वञ्च स्ववृत्तित्वे सति स्वेतरावृत्तित्वरूपम्। तमुपजीव्य=तम्=अहङ्कारम्, उपजीव्य=आश्रित्य। अध्यवस्यति=निश्चिनोति।

( ३ ) तस्य=अहङ्कारस्य। कार्यभेदम्=सृष्टिभेदम्, आह—**तस्माद्** इत्यादि। प्रकारद्वयम्=सृष्टिरूपकार्यद्वैविध्यम्, आह—'**एकादशकश्च गणः**'। इन्द्रियाह्वः=इन्द्रियनामा=इन्द्रियजातीयः, पञ्चतन्मात्रजातीयश्च। अहङ्कारात्=महत्तत्त्वकार्यात्। द्विविधः सर्गः=द्विप्रकारिकैव सृष्टिर्जायते, इति एवकारेण निश्चीयते इत्यर्थः ॥ २४ ॥

( १ ) 'सात्त्विक एकादशकः' इत्यादिकारिकावतारणार्थमाशङ्कते—**स्यादेतदिति**। एतत्='अहङ्कारादेकरूपादि'त्यादिना वक्ष्यमाणमाशङ्कनम्। स्यात्=सोपपन्नतां यातु। परन्तु एकरूपात्=अहङ्कारत्वरूपैकधर्मावच्छिन्नात्। विलक्षणौ=विजातीयौ=विरुद्धधर्मावच्छिन्नौ। जडप्रकाशकौ=जडत्व-प्रकाशत्वधर्मावच्छिन्नौ, तत्र जडत्वधर्मावच्छिन्नानि पञ्चतन्मात्राणि, प्रकाशकत्वधर्मावच्छिन्नानि चेन्द्रियाणि। गणौ=गणद्वयम्। कथम्। भवतः=जायेते ?

---

या कार्य का अभिमान, वही अभिमान अहङ्कार का असाधारण व्यापार=कार्य होने से अहङ्कार है। यहाँ भी 'अध्यवसायो बुद्धिः' के समान अभेद की विवक्षा है। इसी अहङ्कार का आश्रय प्राप्त कर बुद्धि—'यह कार्य या विषय मुझे अवश्य करना चाहिए', यह निश्चय करती है।

( ३ ) '**तस्य कार्यभेदमाह**' इति। उस अहङ्कार के सृष्टिरूप कार्यभेद को बतलाते हैं—'तस्माद् द्विविधः प्रवर्तते सर्गः' अर्थात् उस अहङ्कार से दो प्रकार की सृष्टि उत्पन्न होती है—१. एकादश जो इन्द्रियगण तदात्मिका एवं २. पञ्चतन्मात्रात्मिका। यह दोनों प्रकार की सृष्टि अहङ्कार से ही होती है, अन्य से नहीं; यह एवकार से अवधारित=निश्चित होता है ॥ २४ ॥

( १ ) प्रश्न—'**स्यादेतत्**' इति। अहङ्कार से दो प्रकार की सृष्टि होती है, यह हमने माना; परन्तु एकरूप=एक प्रकार के अहङ्कार से यह विलक्षण=विरोधी जड़ एवं प्रकाशक गणात्मिका दो प्रकार की सृष्टि कैसे हुई ?

**सात्त्विक एकादशकः प्रवर्त्तते वैकृतादहङ्कारात् ।**
**भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम् ।। २५ ।।**

( २ ) 'सात्त्विकः' इति। प्रकाशलाघवाभ्यामेकादशक इन्द्रियगणः सात्त्विको वैकृतात् सात्त्विकादहङ्कारात्प्रवर्तते। भूतादेस्त्वहङ्कारात् तामसात् तन्मात्रो गणः प्रवर्तते। कस्मात् ? यतः 'स तामसः'। एतदुक्तम्भवति—यद्यप्येकोऽहङ्कारस्तथाऽपि गुणभेदोद्भवाभिभवाभ्यां भिन्नं कार्यं करोतीति।

---

अन्वयः—वैकृतात् अहङ्कारात् सात्त्विकः एकादशकः प्रवर्तते भूतादेः तन्मात्रः ( प्रवर्तते ), ( यतः ) स तामसः तैजसात् उभयम् ।

( २ ) सामग्रीभेदमाश्रित्य समाधत्ते—सात्त्विक इति। एकादशेन्द्रियगणः सात्त्विक इत्यर्थः, तस्य सात्त्विकत्वे हेतुमाह—**प्रकाशलाघवाभ्यामिति**। अनेन इन्द्रियगणस्य सात्त्विकत्वे उपपत्तिर्दर्शिता। प्रकाशः=कार्यावभासने वृत्तिरूपाऽऽलोकः, लाघवम्=करणपटुत्वम्, ताभ्यामित्यर्थः। अहङ्कारस्य सात्त्विकत्वं विना तत्कार्यभूतस्येन्द्रियगणस्य सात्त्विकत्वं नोपपन्नं भवितुमर्हतीति तदेवाह—**वैकृतादिति**। सात्त्विकाहङ्कारो 'वैकृत'शब्देनोच्यते। तथा च 'वैकृतात्' इत्यस्य सात्त्विकादित्यर्थः। तत्रापि उत्कटसत्त्वगुणप्रधानादहङ्कारान्मनो जायते, मध्यमसत्त्वप्रधानात् चाऽहङ्कारात् ज्ञानेन्द्रियाणि, निकृष्टसत्त्वप्रधानाच्च कर्मेन्द्रियाणि भवन्तीत्यपि बोध्यम्। भूतादेः=

---

उत्तर—'सात्त्विक एकादशकः' इति। अर्थात् वैकृत=सात्त्विक अहङ्कार से सात्त्विक एकादश गणात्मिका—पाँच ज्ञानेन्द्रियाँ, पाँच कर्मेन्द्रियाँ और मन एतद्रूपा सृष्टि होती है और भूतादेः=तामसात्=तमोगुणविशिष्ट अहङ्कार से तन्मात्रः=तन्मात्रात्मिका—शब्द, स्पर्श, रूप, रस, गन्धात्मिका सृष्टि होती है।

प्रश्न—तामस अहङ्कार से ही तन्मात्रात्मिका सृष्टि क्यों होती है, सात्त्विक अहङ्कार से क्यों नहीं ?

उत्तर—'स तामसः' अर्थात् वह तन्मात्रगण स्वयं तामस है, इसलिए तामसतन्मात्रगणात्मककार्य का कारण भी तामस अहङ्कार ही हो सकता है।

और तैजस=राजस अहङ्कार से एकादश गणात्मिका तथा तन्मात्रगणात्मिका, प्रकाशजडात्मिका=उभयात्मिका सृष्टि होती है।

( २ ) 'सात्त्विकः' इति। प्रकाश तथा लाघवगुणगण से विशिष्ट होने के कारण एकादश इन्द्रियों का गण—पाँच ज्ञानेन्द्रियाँ, पाँच कर्मेन्द्रियाँ तथा मन, ये प्रकाशक होने के कारण सात्त्विक हैं, अतः वैकृत=सात्त्विक अहङ्कार से उत्पन्न होते हैं और 'भूतादेस्त्वहङ्कारात्' अर्थात् तामस अहङ्कार से तन्मात्रगणस्वरूपा सृष्टि उत्पन्न होती है।

प्रश्न—'कस्मात्'=क्यों ? अर्थात् तामस अहङ्कार से ही तन्मात्रगणात्मिका सृष्टि क्यों उत्पन्न होती है ?

( ३ ) ननु यदि सत्त्वतमोभ्यामेव सर्वं कार्यं जन्यते, तदा कृतमकिञ्चित्करेण रजसेत्यत आह—'तैजसादुभयम्' इति। तैजसाद् राजसादुभयं गणद्वयं भवति।

---

तामसादहङ्कारात्। तामसाहङ्कारस्य भूतादिसंज्ञा कृता सांख्याचार्यैः। तन्मात्रो गणः=पञ्चतन्मात्राणि शब्दस्पर्शरूपरसगन्धात्मकानीत्यर्थः। पृच्छति—कस्मादिति। अर्थात्तामसादहङ्कारात् तन्मात्रगणः कथं जायते? समाधत्ते—यतः स तामस इति। यस्मात् कारणाद् गुरुत्वाऽऽवरणकत्वादिरूपतमोगुणवृत्तिधर्मवान् तन्मात्रो गणः, अतः सोऽपि तामस इत्यर्थः। फलितार्थमाह—एतदुक्तं भवतीति। अहङ्कार एकः=अहङ्कारत्वजातिरेका तद्वान्, तथा च तादृशजात्यवच्छिन्न एकोऽहङ्कारः कथं विभिन्नजातीयं कार्यं ( सृष्टिरूपं ) करिष्यति? उत्तरमाह—तथापीति। गुणभेदोद्भवाभिभवाभ्याम्—गुणभेदः=सत्त्वादिगुणविशेषः, तस्योद्भवेन तमोगुणस्याभिभवो भवति, इत्थं तमोगुणमभिभूय सत्त्वगुणः स्वीयं सात्त्विकमेकादशेन्द्रियसमुत्पत्तिरूपं कार्यं करोति, एवं गुणभेदस्य=तमोगुणविशेषस्य चोद्भवेन सत्त्वगुणस्याभिभवो यदा जायते तदा स स्वीयं तामसं तन्मात्रगणात्मकं कार्यं कुरुते, इत्थमेकस्मादेवाऽहङ्काराद् भिन्नं भिन्नं कार्यं जायते इति भावः।

( ३ ) एवं स्थिते रजोगुणस्य काऽऽवश्यकता? इत्यत आह—तैजसादुभयम् इति। तैजसात्=राजसात्, अत्र तेजः शब्दश्चालकत्वेन उत्तेजकं रजोगुणं कथयति। उभयम्=एकादशेन्द्रियगणः, तन्मात्रगणश्च, प्रवर्तते इति शेषः।

---

उत्तर—'यतः स तामसः' इति। जिस कारण से तन्मात्रगण गुरुत्व तथा आवरणकत्व धर्मवाला है, अतः वह तामस है, इसलिए तामस अहङ्कार से ही उसकी उत्पत्ति भी है।

शङ्का—'एतदुक्तम्भवति' इति। ऐसा कहा जाता है कि एक प्रकार के अहङ्कार से सात्त्विक, तामस, जड, प्रकाशक यह विभिन्न कार्य कैसे होता है?

समाधान—'यद्यपि एकोऽहङ्कार' इति। यद्यपि अहङ्कार एक है, तथापि गुणभेद=गुणविशेष के उद्भव=आविर्भाव एवं अभिभव=तिरोभाव से कारणीभूत उसी एक अहङ्कार से जड-प्रकाशात्मिका, सात्त्विक-तामसात्मिका, षोडशगणात्मिका विभिन्न कार्यरूपा सृष्टि होती है।

( ३ ) प्रश्न—'ननु यदि' इति। यदि सत्त्वगुण तथा तमोगुण इन दो गुणों से ही सब कार्य उत्पन्न हो जाता है तो अकिञ्चित्कर=कुछ न करने वाले रजोगुण से क्या प्रयोजन? वह सर्वथा व्यर्थ है?

उत्तर—'तैजसादुभयम्' इति। अर्थात् तैजस=राजस अहङ्कार से उभय=गणद्वयात्मिका अर्थात्—१. एकादशेन्द्रियात्मिका तथा २. तन्मात्रगणात्मिका, यह दोनों प्रकार की सृष्टि होती है।

( ४ ) यद्यपि रजसो न कार्यान्तरमस्ति, तथाऽपि सत्त्वतमसी स्वयमक्रिये समर्थे अपि न स्वस्वकार्यं कुरुत:, रजस्तु चलतया ते यदा चालयति तदा स्व-स्वकार्यं कुरुत इति । तदुभयस्मिन्नपि कार्ये सत्त्वतमसोः क्रियोत्पादनद्वारेणाऽस्ति रजसः कारणत्वमिति न व्यर्थं रज इति ॥ २५ ॥

( १ ) सात्त्विकमेकादशमाख्यातुं बाह्येन्द्रियदशकं तावदाह—

**बुद्धीन्द्रियाणि चक्षुः श्रोत्रघ्राणरसनत्वगाख्यानि ।**
**वाक्पाणिपादपायूपस्थानि कर्मेन्द्रियाण्याहुः ॥ २६ ॥**

---

( ४ ) यद्यपि रजोगुणस्य स्वातन्त्र्येण स्वीयकार्यजनकत्वाभावेऽपि गणद्वयस्य ( एकादशेन्द्रियगणस्य तन्मात्रगणस्य ) चोत्पत्तौ प्रयोजकत्वान्नान्यथासिद्धिर्विज्ञेया तस्येत्येव दर्शयति—यद्यपि रजस इति । स्वयमक्रिये = स्वयं क्रियोत्पादनेऽसमर्थे । समर्थेऽपि = स्वस्वकार्यजननशक्तिशालित्वेऽपि । रजसः साहाय्यमन्तरा । न । स्वस्वकार्यं, कुरुतः = सम्पादयतः । चलतया = क्रियाशीलतया । ते = सत्त्वतमसी । यथा—दण्डचक्रचीवरादिकं घटकार्यजनने शक्तमपि स्वयं निष्क्रियत्वान्नैव घटकार्यं जनयितुं शक्ष्यति, चालनक्रियाशक्तिसम्पन्नकुलालरूपसहायक( सहकारिकारण )समवधाने तु घटकार्यं सुतरामुत्पादयतीति दण्डचक्रादेर्भ्रमिरूपव्यापारोत्पादनद्वारेण घटकार्यं प्रति कुलालस्य सहकारिकारणत्वं बोध्यम्, प्रकृतेऽपि ईदृश्येव गतिर्विज्ञेयेति भावः । इति=यतः । तदुभयस्मिन्= तत् = तस्मात्, उभयस्मिन् = सात्त्विके तामसे च । कार्ये = इन्द्रियतन्मात्ररूपे । सत्त्वतमसोः = सत्त्वगुणतमोगुणयोः । क्रियोत्पादनद्वारेण—क्रिया = प्रवृत्तिरूपा, तदुत्पादनद्वारा । कारणत्वं = प्रयोजकत्वम् । इति न व्यर्थम् = अन्यथासिद्धम् । रजः । यथा वैशेषिकनये मानवीयशरीरं पार्थिवमपि तत्त्वान्तराऽऽकाशादिभिरुपष्टभ्यते, एवं सुवर्णं तैजसमपि पार्थिवभागेनोपष्टभ्यते, तथैव रजोऽपि उपष्टम्भकम्, 'उपष्टम्भकं चलञ्च रजः' ॥ २५ ॥

( १ ) प्रागुक्तेषु एकादशेन्द्रियेषु बाह्येन्द्रियदशकं साम्प्रतमाह—

---

( ४ ) **'यद्यपि रजसो न'** इति । यद्यपि रजोगुण का सात्त्विक तथा तामस से भिन्न अपना कोई भी स्वतन्त्र कार्य नहीं है । तथापि सत्त्वगुण तथा तमोगुण स्वयम् अक्रिय अर्थात् प्रवृत्तिशील न होने के कारण समर्थ होने पर भी अपना-अपना कार्य नहीं कर पाते हैं । परन्तु रजोगुण चल स्वभाव वाला होने के कारण जब सत्त्व और तम को चलाता है अर्थात् उन्हें प्रेरित करता है, तब वे अपना-अपना सात्त्विक तथा तामस कार्य करते हैं । इस प्रकार रजोगुण सात्त्विक तथा तामस दोनों कार्यों को सम्पन्न करने में सत्त्व और तम की क्रियोत्पादन द्वारा अर्थात् प्रवृत्ति कराने के कारण रजोगुण भी कारण = प्रयोजक है, अतः रजोगुण व्यर्थ नहीं है ॥ २५ ॥

( १ ) **'सात्त्विकमेकादशम्'** इति । सात्त्विक अहङ्कार का कार्य जो सात्त्विक एकादश इन्द्रियाँ हैं, उनमें से दशविध बाह्य इन्द्रियों को बतलाते हैं—**'बुद्धीन्द्रियाणि'** इत्यादि कारिका से—

( २ ) 'बुद्धीन्द्रियाणि' इति। सात्त्विकाहङ्कारोपादानकत्वमिन्द्रियत्वम्। तच्च द्विविधम्—बुद्धीन्द्रियं कर्मेन्द्रियञ्च। उभयमप्येतद् इन्द्रस्याऽऽत्मनश्चिह्नत्वादिन्द्रियमुच्यते। तानि च स्वसंज्ञानिरुक्तानि। तत्र रूपग्रहणलिङ्गं चक्षुः, शब्दग्रहणलिङ्गं श्रोत्रम्, गन्धग्रहणलिङ्गं घ्राणम्, रसग्रहणलिङ्गं रसनम्, स्पर्शग्रहणलिङ्गं त्वक्, इति ( ज्ञानेन्द्रियाणां संज्ञा )। एवं वागादीनां कार्यं वक्ष्यति ( का० २८ इति ) ॥ २६ ॥

---

अन्वयः—चक्षुः-श्रोत्र-घ्राण-रसन-त्वगाख्यानि बुद्धीन्द्रियाणि आहुः वाक्पाणिपाद-पायु-उपस्थानि कर्मेन्द्रियाणि आहुः।

( २ ) बुद्धीन्द्रियाणीति। ज्ञानेन्द्रियाणि, ज्ञानोत्पादकेन्द्रियाणीत्यर्थः। ज्ञानञ्च वृत्तिरूपं घटादिज्ञानं रूपादिज्ञानञ्च, तत्साधनानि बुद्धीन्द्रियाणि। इन्द्रियसामान्य-लक्षणमाह—सात्त्विकेति। सात्त्विकोऽहङ्कार उपादानं यस्य तत्तथा तस्य भावस्तत्त्वम्। तच्च = इन्द्रियञ्च।

ज्ञानेन्द्रिय-कर्मेन्द्रियाणामेवेन्द्रियशब्दार्थत्वे कारणं निर्वक्तुमिन्द्रियशब्दस्य व्युत्पत्ति-माह—उभयमपीति। 'इन्द्रो मायाभिः पुरुरूप ईयते' इत्यादिश्रुतौ 'इन्द्र'-शब्दस्य आत्मनः, पुरुषस्य, स्वामिनः। चिह्नत्वात् = लिङ्गत्वात् = अनुमापकत्वात्, भोगस्य साधनत्वादिन्द्रियमुच्यते। तानि च = दशेन्द्रियाणि च। स्वसंज्ञाभि. = चक्षुः-श्रोत्रा-दिभिः। उक्तानि = कथितानि, पूर्वमेवेति भावः।

एतेषां दशेन्द्रियाणां कार्यमाह—तत्रेति। तत्र = दशविधेन्द्रियाणां मध्ये। रूपग्रहण-लिङ्गम् = रूपप्रत्यक्षकारणम्। शब्दग्रहणलिङ्गम् = शब्दोपलब्धिजनकम्। इत्येवं क्रमेणाऽग्रेऽपि व्याख्या कार्या।

इन्द्रियाणां व्युत्पत्तिरेवंरीत्या कार्या—चष्टे—पश्यत्यनेनेति। चक्षुः, शृणोत्यनेनेति श्रोत्रम्, जिघ्रत्यनेनेति घ्राणम्, रसयत्यनेनेति रसनम्, स्पृशत्यनेनेति स्पर्शनं

---

**कारिकार्थ**—श्रोत्र, त्वक्, चक्षु, रसना तथा नासिका—ये पाँच ज्ञानेन्द्रियाँ हैं और वाक् ( वाणी ), पाणि, पाद, पायु तथा उपस्थ—ये पाँच कर्मेन्द्रियाँ है।

( २ ) **'सात्त्विक' इति**। अर्थात् सात्त्विक अहङ्कार है उपादानकारण जिसका, वही 'इन्द्रिय' है और उस इन्द्रिय के दो भेद हैं—बुद्धीन्द्रिय = ज्ञानेन्द्रिय तथा कर्मेन्द्रिय = आदान-प्रदानादि क्रियाओं को सम्पन्न करने वाली इन्द्रियाँ। इन दोनों प्रकार की इन्द्रियों को अर्थात् चक्षुरादि ज्ञानेन्द्रियों को और 'वाक्' आदि कर्मेन्द्रियों को इन्द्रिय इसलिए कहते हैं कि ये इन्द्र = स्वामी आत्मा = पुरुष = चेतनतत्त्व के चिह्न = अनुमापक लिङ्ग हैं।

**'तानि च स्वसंज्ञाभिः' इति**। और उन इन्द्रियों को उनकी अपनी-अपनी संज्ञाएँ जो चक्षु आदि हैं, उनसे कहा है। उन चक्षु आदि इन्द्रियों के लक्षण क्रमशः ये हैं—रूपग्रहणलिङ्गत्व, यह चक्षु इन्द्रिय लक्षण है, अर्थात् रूपज्ञान का कारणीभूत इन्द्रिय चक्षु है। शब्दज्ञान का कारणीभूत इन्द्रिय श्रोत्र है। गन्धो-

( १ ) एकादशमिन्द्रियमाह—

**उभयात्मकमत्र मनः सङ्कल्पकमिन्द्रियं च साधर्म्यात् ।**
**गुणपरिणामविशेषान्नानात्वं　　बाह्यभेदाश्च ॥ २७ ॥**

( २ ) 'उभयात्मकम्' इति । एकादशस्विन्द्रियेषु मध्ये मन उभयात्मकम्, बुद्धीन्द्रियं कर्मेन्द्रियञ्च, चक्षुरादीनां वागादीनां च मनोऽधिष्ठितानामेव स्वस्वविषयेषु प्रवृत्तेः ।

---

त्वक् । वागादीनां = कर्मेन्द्रियाणाम् । कार्यं, व्युत्पत्तिञ्च ( का० २८ ) निरूपणावसरे वक्ष्यति ॥ २६ ॥

अन्वयः—अत्र सङ्कल्पकं मनः ( तच्च ) उभयात्मकं च इन्द्रियं ( मनसः ) साधर्म्यात् ( तेषाञ्च ) गुणपरिणामविशेषात् नानात्वं बाह्यभेदाश्च ।

( १-२ ) **उभयात्मकमिति** । अत्र = एकादशेन्द्रियमध्ये । मनः उभयात्मकम् = ज्ञानेन्द्रियस्वरूपं कर्मेन्द्रियस्वरूपम् । अर्थात् ज्ञानेन्द्रियाणां प्रवर्तकत्वाज्ज्ञानेन्द्रियरूपम्, कर्मेन्द्रियाणां प्रवर्तकत्वात् कर्मेन्द्रियरूपम् । इत्थञ्च सहकारिकारणत्वेन मनस उभयविधेन्द्रियकार्यजनकत्वादुभयात्मकत्वमिति तु परमार्थः । एतदेव सुस्पष्टयति वाचस्पतिमिश्रः—**चक्षुरादीनां वागादीनामित्यादि** । मनोऽधिष्ठितानां = मनःसम्बद्धानाम् । आलोकादीनामपि तथाविधत्वात्तत्राऽतिव्याप्तिवारणाय सात्त्विकाऽहङ्कारकार्यत्वे सति ज्ञान-कर्मोभयविधेन्द्रियत्वावच्छिन्नकार्यतानिरूपितकारणताशालित्वेन मनस उभयेन्द्रियत्वं बोध्यम् ।

---

पलब्धि का कारण घ्राणेन्द्रिय है । रसोपलब्धि का कारण रसनेन्द्रिय है । स्पर्शविषयक-स्पार्शन प्रत्यक्ष का कारण त्वगिन्द्रिय है; यही ज्ञानेन्द्रियों की संज्ञाएँ हैं । इसी प्रकार वागादि इन्द्रियों के कार्यों का भी विवेचन २८वीं कारिका में किया जायेगा ॥ २६ ॥

( १ ) **'एकादशमिन्द्रियम्'** इति । पाँच चक्षुरादि ज्ञानेन्द्रियों तथा पाँच 'वाक्' आदि कर्मेन्द्रियों से भिन्न जो इन्द्रिय, वही एकादश = ग्यारहवीं इन्द्रिय मन है ।

**कारिकार्थ**—अत्र = एकादश इन्द्रियों में मन उभयात्मक=पञ्चज्ञानेन्द्रिय एवं पञ्चकर्मेन्द्रिय उभयस्वरूप है । लक्षण है 'संकल्पकम्'—'सङ्कल्पविकल्पजनकत्वं, सङ्कल्पवत्त्वं वा मनसो लक्षणम्' । इन्द्रियों के समानधर्म = इन्द्रियत्व वाला होने से मन भी इन्द्रिय है ।

**गुणपरिणामविशेषात्'** इति । सत्त्व, रज एवं तमःस्वरूप गुणों का जो धर्माधर्म परिणाम, उस परिणाम के विशेष = भेद से एकादश इन्द्रियरूप कार्य में भेद हो जाता है । जैसे घट-पट आदि बाह्य पदार्थों का अदृष्ट भेद से भेदानुभव होता है एवं एक ही पिता के भाग्यभेद से पुत्र-पौत्र आदि का भेद अनुभव में आता है ।

( २ ) **'उभयात्मकम्' इति** । एकादश इन्द्रियों में मन ज्ञानेन्द्रिय तथा कर्मेन्द्रिय उभयरूप है, क्योंकि चक्षुरादि ज्ञानेन्द्रियों की तथा 'वाक्' आदि कर्मेन्द्रियों की अपने-अपने ग्राह्य विषयों में प्रवृत्ति मन से सम्बद्ध होने पर होती है ।

( ३ ) तदसाधारणेन रूपेण लक्षयति—'सङ्कल्पकमत्र मनः' इति। सङ्कल्पेन रूपेण मनो लक्ष्यते। आलोचितमिन्द्रियेण वस्तु 'इदम्' इति सम्मुग्धम् 'इदमेवं, नैवम्' इति सम्यक्कल्पयति विशेषणविशेष्यभावेन विवेचयतीति यावत्। यदाहुः—

( ४ ) 'सम्मुग्धं वस्तुमात्रं तु प्राग्गृह्णन्त्यविकल्पितम्।
तत् सामान्यविशेषाभ्यां कल्पयन्ति मनीषिणः ॥' इति।

---

( ३ ) **तदसाधारणेनेति**। तत्=मनः। असाधारणेन=करणान्तरातिरिक्तेन, मनोमात्रवृत्तिधर्मेण। सङ्कल्पेन रूपेण=सङ्कल्पात्मकधर्मेण। अत एव सङ्कल्पवत्त्वं मनोलक्षणम्। सङ्कल्पात्मकेन धर्मेण=मनसोऽसाधारणव्यापारेण। लक्ष्यते=अनुमीयते, अनुमितिश्च—मनः स्वेतरभिन्नं सङ्कल्पवत्त्वात्। तदेव सुस्पष्टीक्रियते—**आलोचितमिन्द्रियेणेति**। आलोचितं=प्रत्यक्षीकृतम्, इन्द्रियेण=चक्षुरादिना, तद्व्यापारेण वा। तदपि सामान्यरूपेण गृहीतं न तु विशेषतः। 'इदम्' वस्तु=घटपटादिपदार्थजातम्। सम्मुग्धम्=इदमेवेति विशेषतोऽगृहीतम्=विशेषणविशेष्यभावरहितम्। पश्चात् 'इदमेवं नैवम्'=इदं=घटादिवस्तु, एवं=घटत्ववान्, नैवम्=घटत्ववान्न, अर्थात् सम्मुग्धावस्थानन्तरं 'घटम्' अयं घट एवेति सम्यक् कल्पयति=निश्चिनोति न तु 'पट' इति। विशेष्यविशेषणभावेन=धर्मधर्मिभावेन। विवेचयति=सविकल्पकज्ञानविषयीकरोति। **यदाहुरिति**।

( ४ ) **सम्मुग्धं वस्तुमात्रं त्विति**। सम्मुग्धं=सामान्यविशेषरूपेण अपृथक्कृतम्, वस्तुमात्रं=घटपटादिकम्। प्राक्=मनोव्यापारात् पूर्वम्। अविकल्पितं=निर्विकल्पकमेव, सामान्यविशेषधर्मानवच्छिन्नम्। गृह्णाति=अनाकलितत्वेन रूपेण ज्ञानविष-

---

( ३ ) अब मन के असाधारण रूप के द्वारा मन का लक्षण करते हैं—'**सङ्कल्पकमत्र मनः' इति**। अत्र=एकादश इन्द्रियों के मध्य में संकल्प-विकल्प करना ही मन का लक्षण है। इसी संकल्पात्मक लक्षण का अर्थ स्पष्ट करते हैं—'**सङ्कल्पेन रूपेण**' इत्यादि। सर्वप्रथम जब मनुष्य चक्षुरूप इन्द्रिय से किसी भी वस्तु को देखता है, तब उसे प्रथम क्षण में उस वस्तु का 'इदं किञ्चिदस्ति' यह कोई वस्तु है, इस प्रकार सम्मुग्ध=सामान्यविशेषधर्मविच्छिन्न अर्थात् विशेष्यविशेषणभावरहित निर्विकल्पक ज्ञान कर पाता है। तदनन्तर द्वितीय क्षण में 'इदमेवम्' यह ऐसा है, अर्थात् 'छत्री कुण्डली वासस्वी देवदत्तः' छाता लिये हुए है और कुण्डल तथा वस्त्र धारण करने के कारण उनसे विशिष्ट है। 'इदं नैवम्' अर्थात् यज्ञदत्त ऐसा नहीं है, इस प्रकार का विशेष्यविशेषणभावागाहि, सामान्यविशेषधर्मावच्छिन्न सविकल्पक ज्ञान होता है। इस विषय में प्राचीनाचार्यचरणोक्ति प्रमाण है—'यदाहुः'।

( ४ ) '**सम्मुग्धं वस्तुमात्रम्' इति**। अर्थात् सर्वप्रथम अविकल्पित=सामान्यविशेषात्मक विकल्पशून्य अथवा विशेषणविशेष्यभावात्मक विकल्प रहित सम्मुग्ध=

तथा हि--

'अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्विकल्पकम् ।
बालमूकादिविज्ञानसदृशं मुग्धवस्तुजम् ॥' इति ।
'ततः परं पुनर्वस्तुधर्मैर्जात्यादिभिर्यया ।
बुद्धयाऽवसीयते साऽपि प्रत्यक्षत्वेन सम्मता ॥'
( पूर्वमी० १।१।४; श्लोकवा० प्रत्यक्षसूत्रम् १७२, १२० )

सोऽयं सङ्कल्पलक्षणो व्यापारो मनसः समानासमानजातीयाभ्यां व्यवच्छिन्दन् मनो लक्षयति ।

---

यीकरोतीत्यर्थः । पुनश्च = मनोव्यापारानन्तरम् । तत् = वस्तु । सामान्यविशेषाभ्यां = सामान्यविशेषरूपेण । कल्पयन्ति = निश्चिन्वन्ति ।

एतदेव विशदयितुं श्लोकवार्तिकेऽप्युक्तम्—अस्ति ह्यालोचनं ज्ञानमित्यादि । अस्ति = जायते । प्रथमं = चक्षुःसंयोगानन्तरं प्रथमक्षणे । मुग्धवस्तुजम् = सामान्यविशेषधर्मानवच्छिन्नं वस्तुविषयकम् । आलोचनज्ञानं = प्रत्यक्षात्मकं यज्ज्ञानम् । तत् निर्विकल्पकं = प्रकारताविशेष्यतासंसर्गतानवगाहि । तत्र दृष्टान्तमाह—बालेति । न्यूनाऽऽयुष्मतो नवीनबालस्य, जन्मत एव बधिरमूकस्य वज्रमूर्खस्य यथा विशेष्यविशेषणभावरहितं विज्ञानं जायते तद्वत् । ततः परम् = निर्विकल्पकज्ञानानन्तरम् । जात्यादिभिः = जातिगुणक्रियाभिः । वस्तुधर्मैः = वस्तुविशेषधर्मैः । यया बुद्धया = विशिष्टबुद्धया, विशेषणविशेष्यसंसर्गान्यतमविशिष्टबुद्धिवृत्त्या । वस्तु = पदार्थः । अवसीयते = प्रमीयते । सापि = विशिष्टबुद्धिवृत्तिरपि । प्रत्यक्षत्वेन = प्रत्यक्षप्रमाणत्वेन । सम्मता = स्वीकृता ।

मनोलक्षणं निरुच्येदानीं तत्समन्वयमाह—सोऽयमिति । अयं = प्रागुक्तो यः । सङ्कल्पलक्षणो व्यापारः = सम्यग्निश्चयात्मको व्यापारः । मनसः । समानासमानेति । समानजातीयात् = बुद्धयादेः, असमानजातीयात् = श्रोत्रादेः । व्यवच्छिन्दन् = व्यावर्तयन् सन् । मनः । लक्षयति = अनुमापयति । अनुमानाकारश्च पूर्वं दर्शितः ।

---

अविविक्त = केवल 'इदम्' इत्याकारक उस वस्तुमात्र को ही जान पाते हैं, यह ज्ञान ही निर्विकल्पक प्रत्यक्षात्मक ज्ञान है । इसके पश्चात् मनीषी लोग, तत् = उस वस्तु की सामान्य-विशेषरूप से कल्पना करते हैं, यही कल्पित ज्ञान सविकल्पक ज्ञान है । इसी आशय को दर्शाते हैं—'अस्ति ह्यालोचनम्' इति । प्रथम = सर्वप्रथम जो आलोचन ज्ञान = इन्द्रियसन्निकर्षजन्य ज्ञान होता है, वही निर्विकल्पक ज्ञान है और यह ज्ञान बाल, मूक आदि पदग्राह्य वज्रमूर्ख व्यक्ति के सदृश धर्मधर्मिभावरहित होता है । 'ततः परम्' इस निर्विकल्पक ज्ञान के बाद द्वितीय क्षण में, यया बुद्धया = जिस विशिष्ट प्रत्यक्षात्मक बुद्धिवृत्ति के आधार पर जात्यादिधर्मैः = जाति, गुण, क्रिया, इन विशेषणस्वरूप धर्मों से विशिष्ट अर्थात् विशेषणविशेष्यसंसर्गावगाही जो भी विशिष्टबुद्धिवृत्तिरूपप्रत्यक्षत्वेन सम्मत ज्ञान है, वही सविकल्पकप्रत्यक्षात्मक ज्ञान है । इस प्रकार यह मन का संकल्पलक्षणात्मक व्यापार मन को सजातीय बुद्धि आदि से और विजातीय चक्षुरादि से भिन्न सिद्ध करने के कारण निर्दुष्ट लक्षण बन जाता है ।

( ५ ) स्यादेतत्—असाधारणव्यापारयोगिनौ यथा महदहङ्कारौ नेन्द्रियम्, एवं मनोऽप्यसाधारणव्यापारयोगि नेन्द्रियं भवितुमर्हतीत्यत आह—'इन्द्रियञ्च' इति। कुतः? 'साधर्म्यात्' इन्द्रियान्तरैः। सात्त्विकाहङ्कारोपादानत्वं च साधर्म्यम्, न त्विन्द्रलिङ्गत्वम्, महदहङ्कारयोरप्यात्मलिङ्गत्वेनेन्द्रियत्वप्रसङ्गात्। तस्माद् व्युत्पत्तिमात्रमिन्द्रलिङ्गत्वम्, न तु प्रवृत्तिनिमित्तम्।

---

( ५ ) नेन्द्रियं मन इति शङ्कते—**स्यादेतदिति**। यथा महदहङ्कारौ नेद्रियं तथैव मनोऽपि नेन्द्रियं भवितुमर्हतीत्यत आह—**इन्द्रियञ्चेति**। कुतः? **साधर्म्यादिति**। साधर्म्यं =समानधर्मकत्वम्। इन्द्रियान्तरैः कीदृशं तत् साधर्म्यं मनसः? इत्याशङ्कायामाह—**सात्त्विकेति**। प्रकृते इदमेव साधर्म्यमादरणीयं न पुनः इन्द्रलिङ्गमिति। इन्द्रलिङ्गत्वं नेन्द्रियत्वसाधकं भवितुमर्हतीत्याह—**महदहङ्कारयोरिति**। इन्द्रियत्वप्रसङ्गात्=इन्द्रलिङ्गत्वरूपेन्द्रियलक्षणस्य महदङ्कारयोरतिव्याप्तिः स्यादिति नेन्द्रलिङ्गत्वमिन्द्रियलक्षणं निर्दुष्टलक्षणमिति भावः।

ननु कथमितः प्राक् पुरुषस्य ( आत्मनः ) चिह्नत्वादुभयमिन्द्रियमित्युक्तमित्याशङ्कायामाह—**तस्मादिति**। यस्माद्धेतोः 'इन्द्रलिङ्गत्वम्' इति लक्षणस्याऽतिव्याप्तिदोपग्रस्तत्वाद् व्यभिचारित्वं तस्माद् इदमिन्द्रलिङ्गत्वमिति नास्ति लक्षणमिन्द्रियस्य, अपि तु—व्युत्पत्तिमात्रम्=प्रकृतिप्रत्ययार्थयोर्निर्वचनमात्रम्। न तु प्रवृत्तिनिमित्तम्=शक्यतावच्छेदकम्, इन्द्रलिङ्गत्वम्। प्रवृत्तिनिमित्तत्वञ्च वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितिप्रकारत्वरूपं, यथा घटस्य प्रवृत्तिनिमित्तं ( शक्यतावच्छेदकं ) घटत्वमिति। घटत्वस्य घटपदवाच्यत्वमप्यस्ति घटपदवाच्यघटवृत्तित्वमप्यस्ति घटपदवाच्योपस्थितीया प्रकारताऽपि वर्ततेऽतः सात्त्विकाऽहङ्कारोपादानकत्वमेवेन्द्रियलक्षणं सर्वथा निर्दुष्टम्।

---

( ५ ) शङ्का—'स्यादेतत्' इति। यह सब तो ठीक है, परन्तु अध्यवसाय तथा अभिमानस्वरूप असाधारण व्यापार वाले महत् एवं अहङ्कार जैसे इन्द्रिय नहीं हैं, इसी प्रकार मन भी 'संकल्प' रूप असाधारण व्यापार योगी है, अतः वह भी इन्द्रिय नहीं हो सकता है।

समाधान—'इन्द्रियं च' इति। कुतः? 'साधर्म्यात्'। अर्थात् मन इन्द्रिय कैसे है? इन्द्रियान्तरों के साथ=चक्षुरादि इन्द्रियों के साथ मन का जो सात्त्विक अहङ्कारोपादानकत्वरूप साधर्म्य है, उससे ही मन का इन्द्रियत्व निर्विवाद है। कारण कि सात्त्विक अहङ्कार एकादश इन्द्रियों का उपादान कारण है। अतः इस साधर्म्य से स्पष्ट सिद्ध है कि मन इन्द्रिय है। 'इन्द्रलिङ्गत्व' यह मन के इन्द्रियत्व का साधक साधर्म्य नहीं हो सकता है। क्योंकि महत्, अहङ्कार भी इन्द्र=आत्मा के लिङ्ग हैं, तब तो उन्हें भी इन्द्रियत्व का प्रसङ्ग हो जायेगा। अतः इन्द्रलिङ्गत्व यह प्रकृतिप्रत्यय के अर्थ का अन्वाख्यानमात्र होने से व्युत्पत्तिमात्र है, न कि 'इन्द्रलिङ्गत्व' इन्द्रिय का प्रवृत्तिनिमित्त=शक्यतावच्छेदक है। जैसे घट का प्रवृत्तिनिमित्त घटत्व होता है।

( ६ ) अथ कथं सात्त्विकाहङ्कारादेकस्मादेकादशेन्द्रियाणीत्यत आह—'गुणपरिणामविशेषान्नानात्वं बाह्यभेदाश्च' इति। शब्दाद्युपभोगसम्प्रवर्तका-

---

( ६ ) शङ्कते—अथ कथं सात्त्विकादिति। समाधत्ते—गुणपरिणामविशेषादिति। गुणानां=सत्त्वादिगुणानां, यः परिणामः=धर्माधर्मरूपः=पुण्यपापरूपः, तस्य यो विशेषः=वैलक्षण्यं=वैचित्र्यं, तस्मादित्यर्थः। अर्थात् धर्माधर्मसमन्वितसत्त्वादिगुण-विमर्दवैचित्र्यादेवाऽहङ्कारस्य तत्कार्याणाञ्चेन्द्रियादीनां वैचित्र्यमनेकत्वरूपं नानात्वं दृष्टिगोचरतां यातीत्येव मूलार्थं हृदये स्थिरीकृत्योक्तं मिश्रपादैः—शब्दाद्युपभोगे-त्यादि। आत्मनः पुरुषस्योपभोगनिमित्ता हि सत्त्वादिगुणानां प्रवृत्तिरिति चास्ति वस्तु-स्थितिः। तथा च शब्दस्पर्शादिविषयाणां य उपभोगः=सुख-दुःखान्यतरसाक्षात्कारः, तस्य=उपभोगस्य, प्रवर्तकम्=प्रवृत्तिकारणीभूतं, यत्, अदृष्टरूपं सहकारिकारणं, तद्भेदादित्यर्थः। अत्रेदं तत्त्वम्—यद् धर्माधर्मरूपाऽदृष्टसाहाय्येनेन्द्रियाद्युपस्थापित-शब्दादिद्वारा विषयाणां साक्षात्काररूपोऽनुभवो जायते तत्रैकेनेन्द्रियेण नहि सर्वेऽपि विषया उपस्थापयितुं शक्यन्ते इत्यवगत्यैवाऽनुभवबलादिन्द्रियनानात्वमङ्गीकरणीयम्, तथा सति च कारणवैचित्र्यं विना कार्यवैचित्र्यस्य सर्वथाऽसम्भवादिति अहङ्कारस्याऽनेकत्व-मर्थादेव सिद्ध्यतीति भावः। तथा च शब्दोपभोगसम्पादकाऽदृष्टजन्यगुणविमर्दवैचित्र्या-वच्छिन्नाऽहङ्कारस्य श्रोत्रेन्द्रियजनकत्वम्। एवं रूपोपभोगसम्पादकाऽदृष्टजन्यगुण-विमर्दवैचित्र्यावच्छिन्नाऽहङ्कारस्य चक्षुरिन्द्रियजनकत्वं चास्तीत्येवंरीत्या सर्वत्रैवोह्यम्। इत्थञ्च सर्वेषामेवेन्द्रियाणां विशिष्टकारणभेदाद् भेदः।

---

( ६ ) प्रश्न—'अथ कथम्' इति। सात्त्विक एकविध अहङ्कार से ये एकादश इन्द्रियाँ=पाँच ज्ञानेन्द्रियाँ, पाँच कर्मेन्द्रियाँ और मन, ये कैसे उत्पन्न हुईं? क्योंकि कारण के भेद से कार्य में भिन्नता आती है।

उत्तर—'गुणपरिणामविशेषात्' इति। अर्थात् सत्त्वगुण, रजोगुण, तमोगुण—इन गुणों के धर्माधर्मरूप अदृष्टस्वरूप परिणामविशेष=भेद से ही इन्द्रियों की भिन्नता सिद्ध है। इसी को स्पष्ट करते हैं—'शब्दाद्युपभोगसम्प्रवर्तक' इत्यादि ग्रन्थ से। अर्थात् शब्द-स्पर्शादि विषयों के सुख-दुःख के साक्षात्काररूप उपभोग के सम्पादक जो कार्य-मात्र के प्रति सहकारिकारण प्राणियों के विभिन्न अदृष्ट हैं, उस अदृष्ट के भेद से कार्य=इन्द्रियों को भिन्न-भिन्न माना गया है। अर्थात् शब्दोपभोग-सम्प्रवर्तक जो अदृष्ट, उन अदृष्ट से प्रयोज्य जो सत्त्वादि गुणों के विमर्द से जन्य जो भेद, उस भेद से विशिष्ट अहङ्कार से श्रोत्रेन्द्रिय उत्पन्न होती है। इसी प्रकार स्पर्शोपभोग का सम्पादक जो अदृष्ट, उस अदृष्ट प्रयोज्य सत्त्वादिगुणविमर्दजन्य भेदविशिष्ट अहङ्कार से स्पर्शनेन्द्रिय उत्पन्न होती है। ऐसे ही रूप के सुख-दुःखान्यतर साक्षात्कार में प्रवृत्तिकारणीभूत जो अदृष्ट, उस अदृष्ट से जायमान सत्त्वादिगुणविमर्दजन्य भेद-विशिष्ट अहङ्कार से रूपग्राहक चक्षुरिन्द्रिय की उत्पत्ति होती है। इसी प्रकार आगे रस एवं गन्ध स्थल में भी तादृश अदृष्टरूप सहकारी कारण के भेद से कार्य-भेद जो तत्तत् इन्द्रियों का भेद है, उसे समझ लेना चाहिए।

दृष्टसहकारिभेदात्कार्यभेदः। अदृष्टभेदोऽपि गुणपरिणाम एव। 'वाह्यभेदाश्च' इति दृष्टान्तार्थम्, यथा वाह्यभेदास्तथैतदपीत्यर्थः ॥ २७ ॥

( १ ) तदेवमेकादशेन्द्रियाणि स्वरूपत उक्त्वा दशानामप्यसाधारणीर्वृत्तीराह—

**शब्दादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः।**
**वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम् ॥ २८ ॥**

---

ननु गुणानां परिणामः—गुणानां न्यूनाधिक्यरूपस्तथासति तु तद्भेदादेव कार्यभेद इत्येव कथनं समुचितमासीत् अदृष्टरूपसहकारिकारणभेदात्कार्यभेद इति कथनं कथं सङ्गच्छते ? इत्याशङ्कां निराकर्तुमाह—**अदृष्टभेदोऽपीति**। तथा चाऽत्र गुणपरिणामशब्देन अदृष्टरूपं सहकारिकारणमेव ग्राह्यं, तथा सति न कश्चिद् दोष इति तु निष्कर्षः। तत्र दृष्टान्तमाह—**वाह्यभेदाश्चेति**। यथा एकैव पृथिवी निमित्तभेदाद् घट-पटादिस्वरूपान् विभिन्नपदार्थान् जनयति, यथा वा एकमेव जलं स्वाश्रयीभूतभूमिविकारानासाद्य विल्व-निम्बु-नारिकेलप्रभृतिफलरसत्वेन मधुर-आम्लादिभेदाद् भिद्यते, तथैव प्रकृतेऽपि एकस्मादेव सात्त्विकाहङ्कारात् तामसाच्चाऽहङ्कारादिन्द्रियाणां तत्कार्याणाञ्च भेदा जायन्ते इति भावः ॥ २७ ॥

( १ ) इदानीमेकादशेन्द्रियाणां मध्ये दशानां ज्ञानकर्मेन्द्रियाणामसाधारणव्यापारमाह—**शब्दादिष्विति**।

---

**'अदृष्टभेदोऽपि गुणपरिणाम एव'** इति। अदृष्ट भेद भी गुणों का परिणाम ही है। प्रकृत में सत्त्वादि गुणों के परिणाम से अदृष्ट का ही ग्रहण है। अतः धर्माधर्मरूप अदृष्टरूप सहकारी कारण के भेद से कार्यमात्र का भेद होना स्पष्ट है; क्योंकि अदृष्ट कार्यमात्र के प्रति कारण होता है।

**'वाह्यभेदाश्च'** इति। यह दृष्टान्त है। अर्थात् जैसे पृथिवी एक ही है, परन्तु निमित्तभेद के कारण उस एक ही पृथिवी से उत्पन्न होने वाले तथा अनुभवविषयीभूत घट, पट, मठ आदि समस्त वाह्य पदार्थ पृथक्-पृथक् उत्पन्न हुए देखे जाते हैं। इसी प्रकार वर्षा का जल सर्वत्र एक होता हुआ भी भूमिविकारस्वरूप निमित्तभेद के कारण नारिकेल, वेल तथा नीम्बू आदि फलों के रस में परिणत हुआ कहीं मधुर एवं कहीं खट्टा इत्यादि भेदभाव से भिन्न-भिन्न हो जाता है।

**'तथैतदपि'** इति। वैसे ही प्रकृत में भी तत्तत् शब्दस्पर्शरूपरसादिविषयोपभोगसम्प्रवर्तक जो विभिन्न अदृष्टरूप सहकारी कारण हैं, उनसे सत्त्वादि गुणों के विमर्द द्वारा जायमान जो विभिन्न जगदात्मक कार्य है, उसके वल पर अहङ्कार के परिणामभेद से एकादश इन्द्रियाँ तथा पञ्च तन्मात्राएँ—ये षोडशगण उत्पन्न होते हैं ॥२७॥

( १ ) **'तदेवमेकादशेन्द्रियाणि'** इति। इस प्रकार एकादश इन्द्रियों को स्वरूपतः वतलाकर अब दश वाह्येन्द्रियों के असाधारण व्यापारों को वतलाते हैं—**'शब्दादिषु पञ्चानाम्'** इत्यादि कारिका से।

( २ ) बुद्धीन्द्रियाणां सम्मुग्धवस्तुदर्शनमालोचनमुक्तम्। 'वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम्' कर्मेन्द्रियाणाम्।

( ३ ) कण्ठताल्वादिस्थानमिन्द्रियं वाक्, तस्या वृत्तिर्व्यापारो वचनम्, ज्ञानेन्द्रियाणां वृत्तयः स्पष्टाः ॥ २८ ॥

( १ ) अन्तःकरणत्रयस्य वृत्तिमाह—

**स्वालक्षण्यं वृत्तिस्त्रयस्य सैषा भवत्यसामान्या।**
**सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च ॥ २९ ॥**

---

**अन्वयः**—पञ्चानां शब्दादिषु आलोचनमात्रं वृत्तिः इष्यते, पञ्चानां वचनादानविहरणोत्सर्गानन्दाश्च ( वृत्तयः इष्यन्ते )।

( २ ) बुद्धीन्द्रियाणां=चक्षुरादिज्ञानेन्द्रियाणाम्। **सम्मुग्धवस्तुमात्रदर्शनमिति।** मात्रपदेन धर्माणां व्यवच्छेदः। तथा च सम्मुग्धं=सामान्यतो वस्तुमात्रविषयकज्ञानमित्यर्थः। अर्थाद् धर्मधर्मिभावशून्यस्य पदार्थस्य यद् दर्शनं=निर्विकल्पकज्ञानम्, तदेव आलोचनम्। उक्तम्='अस्ति ह्यालोचनम्' इत्यादिकारिकया कथितम्, इत्थञ्च रूपग्रहणं चक्षुषो व्यापारः, शब्दग्रहणं श्रोत्रेन्द्रियस्य व्यापारः, इत्यादिरूपेण रूपशब्दादिविषयग्रहणमेव तत्तद्बुद्धीन्द्रियाणां व्यापारः। कर्मेन्द्रियाणां व्यापारानाह—**वचनादानेत्यादि।**

( ३ ) **कण्ठताल्वादीति।** कण्ठताल्वादीनि स्थानानि यस्येन्द्रियस्य तत् कण्ठताल्वादिस्थानम् इन्द्रियं वाक्। तस्याः=वागिन्द्रियस्य ( वृत्तिः=व्यापारः )।

( १ ) इदानीमवसरसङ्गत्याऽन्तःकरणस्य वृत्तिमाह—**अन्तःकरणत्रयस्येति।**

**अन्वयः**—त्रयस्य स्वालक्षण्यं वृत्तिः, सा एषा असामान्या भवति, सामान्यकरणवृत्तिः प्राणाद्याः पञ्च वायवः ( भवन्ति )।

---

**कारिकार्थ**—रूप-रसादि पाँच विषयों में पञ्च ज्ञानेन्द्रियों का अपने-अपने विषय का आलोचन ( ग्रहण ) करना असाधारण व्यापार है और पाँचों कर्मेन्द्रियों का भी वचन ( बोलना ), आदान ( ग्रहण करना ), विहरण ( चलना ), उत्सर्ग( मलत्याग करना ) और आनन्द ( रति ) करना असाधारण व्यापार है।

( २ ) अर्थात् बुद्धीन्द्रियों=ज्ञानेन्द्रियों का शब्दादि विषयों का सुनना एवं देखना =आलोचन मात्र ही वृत्ति=व्यापार बतलाया गया है और पाँच जो वागादि कर्मेन्द्रियाँ हैं उनके व्यापार हैं—वचन, आदान, विहरण उत्सर्ग और आनन्द।

( ३ ) 'कण्ठताल्वादिस्थानम्' इति। कण्ठ एवं तालु आदि स्थानों में रहने वाली इन्द्रिय 'वाक्'=वाणी है। उस 'वाक्' इन्द्रिय का व्यापार है—वचन अर्थात् बोलना। ज्ञानेन्द्रियाँ जो चक्षुरादि हैं, उनके व्यापार तो स्पष्ट हैं ॥ २८ ॥

( १ ) 'अन्तःकरणत्रयस्य' इति। तीनों अन्तःकरणों के व्यापार को बतलाते हैं—'स्वालक्षण्यं वृत्तिस्त्रयस्य' इत्यादि कारिका से—

( २ ) 'स्वालक्षण्यम्' इति। स्वालक्षण्यं वृत्तिस्त्रयस्य। स्वमसाधारणं लक्षणं येषां तानि स्वलक्षणानि—महदहङ्कारमनांसि, तेषां भावः स्वालक्षण्यम्, तच्च स्वानि स्वानि लक्षणान्येव। तद्यथा—महतोऽध्यवसायः, अहङ्कारस्याऽभिमानः, सङ्कल्पो मनसो वृत्तिर्व्यापारः।

( ३ ) वृत्तिद्वैविध्यं, साधारणासाधारणत्वाभ्यामाह—'सैषा भवत्यसामान्या'। असाधारणी। 'सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च'। सामान्या

---

( २ ) महदहङ्कारमनसां साधारणीं वृत्तिमाह—**स्वालक्षण्यमिति**। त्रयस्य=अन्तःकरणत्रयस्य=महदहङ्कारमनसामित्यर्थः। स्वालक्षण्यम्=स्वकीयानि स्वकीयानि लक्षणान्येव=स्वानि स्वानि लक्षणान्येव। असामान्या=असाधारणी। वृत्तिर्भवतीति पूरणीयम्। तदुक्तं—**तद् यथा—महतोऽध्यवसाय इति**। **अहङ्कारस्याभिमान** इत्यादि। अर्थात् महतो=बुद्धितत्त्वस्य, अध्यवसायः=निश्चय एव लक्षणमतो महतोऽध्यवसायरूपं लक्षणमेवाऽसाधारणी वृत्तिर्जाता। एवमग्रेऽपि मनोऽहङ्कारयोर्यानि यानि सन्ति लक्षणानि तान्येव असाधारणी वृत्तिर्विज्ञेयेति भावः।

( ३ ) वृत्तेर्द्वैविध्यमाह—**साधारणाऽसाधारणत्वाभ्यामिति**। तथा च वृत्तिर्द्विविधा—साधारणी असाधारणी च। सैषा=स्वालक्षण्यरूपा वृत्तिः। इदानीमसाधारणीं वृत्तिमुक्त्वा साधारणीं वृत्तिमाह—**सामान्यकरणवृत्तिरिति**। करणानां=महदहङ्कारमनसां, वृत्तिरिति करणवृत्तिः, सामान्या=साधारणी चासौ करणवृत्तिरिति सामान्यकरणवृत्तिरिति व्युत्पत्तिर्बोध्या। तथा चाऽन्तःकरणत्रयस्य प्राणाऽपानोदानव्यानसमानरूपा साधारणी वृत्तिर्विज्ञेयेति भावः। तदुक्तं कौमुद्यां मिश्रपादैरपि—'प्राणाद्या वायवः

---

**कारिकार्थ**—बुद्धि, अहंकार और मन, इन तीनों का अपना-अपना लक्षण ही इनका व्यापार है। जैसे बुद्धि का निश्चय करना, अहंकार का अभिमान करना और मन का संकल्प करना असाधारण व्यापार है, परन्तु प्राणादि पञ्च वायु के द्वारा ( शरीर धारण रूप ) जीवनादि व्यापार समस्त अन्तःकरण का सामान्य व्यापार है।

( २ ) महत्, अहङ्कार, मन, इन तीनों अन्तःकरणों के स्वालक्षण्य=अपने-अपने लक्षण ही वृत्तिः=व्यापार होते है। 'स्वालक्षण्य' शब्द की व्युत्पत्ति है कि 'स्वम्' अर्थात् अपने-अपने असाधारण धर्म ही है लक्षण जिनके, वे हुए स्वलक्षण=महत्, अहङ्कार, मन, और उनका भाव=धर्म, उसे स्वालक्षण्य कहते हैं। तथा वह स्वालक्षण्य अपने-अपने लक्षण ही हैं। वह जैसे महत् का अध्यवसाय, अहङ्कार का अभिमान और मन का संकल्प होना ही वृत्ति=व्यापार हैं।

( ३ ) वृत्ति=व्यापार दो प्रकार की है—साधारण और असाधारण। अतः साधारणत्व और असाधारणत्व रूप से वृत्ति के द्वैविध्य को बतलाते हैं—'**सैषा**' इति। अर्थात् यह स्वालक्षण्यरूपा वृत्ति=व्यापार असाधारण है। 'सामान्यकरणवृत्तिः' इति। अर्थात् प्राण-अपान आदि पांच वायु तीनों समुदित अन्तःकरणों की साधारण

चाऽसौ करणवृत्तिश्चेति। त्रयाणामपि करणानां पञ्च वायवो जीवनं वृत्तिः, तद्भावे भावात् तदभावे चाभावात्।

( ४ ) तत्र प्राणो नासाग्रहृन्नाभिपादाङ्गुष्ठवृत्तिः, अपानः कृकाटिका-पृष्ठपादपायूपस्थपार्श्ववृत्तिः, समानोहृन्नाभिसर्वसन्धिवृत्तिः, उदानो हृत्कण्ठ-तालुमूर्धभ्रूमध्यवृत्तिः, व्यानस्त्वग्वृत्तिरिति पञ्च वायवः ॥ २९ ॥

---

पञ्च'। पञ्च वायवो जीवनमिति। पञ्च वायव अर्थात् जीवनधारणमेव त्रयाणामन्तः-करणानां साधारणो व्यापारः। यथा पञ्जरचालनरूपो व्यापारः संहतानां (समुदितानां) पक्षिणां साधारणो व्यापारस्तथा कलेवरधारणरूपो यो जीवनाख्यः प्राणनादिव्यापारः स मिलितानामन्तःकरणानामपि साधारणो व्यापारः। ( वि० तो० पृ० २६३ ) तदेव सुस्पष्टयति— यथा नाना पक्षिणः परस्परं मिलित्वा एकं पञ्जरं चालयन्ति, तथा मिलित्वा व्यापारशीलानि त्रीणि अन्तःकरणानि एकं पाञ्चभौतिकं शरीरमिदं धारयन्ति चालयन्ति वेति। तत्राऽन्वयव्यतिरेकौ दर्शयति—**तद्भावे भावात् इति**। अर्थात् जीवच्छरीरेऽन्तःकरणसद्भावे प्राणादिपञ्चवायुव्यापारसद्भावः इत्यन्वयः, अन्तःकरणा-सत्त्वे च घटादौ प्राणनादिव्यापाराभाव इति व्यतिरेकः।

( ४ ) प्राणस्यैकत्वेऽपि स्थानभेदेन पञ्चविधत्वं दर्शयति— **तत्र प्राण इति**। तत्र= प्राणादिपञ्चवायुमध्ये। प्राणः=प्राणनात्=अन्नभक्षणादिना शरीरधारणात् प्राणः। स च प्राणो नासाग्रभागे, हृदि, नाभौ, पादयोः, अङ्गुष्ठेपु च वर्तते इति वृत्तिः। अपानः =मूत्रपुरीषादीनाम्, अपनयनात्=अधोनयनात्, अपानः, स च कृकाटिका=घाटा= ग्रीवाभागे समुन्नतप्रदेशे=हिन्द्यां 'घंटी' इति प्रसिद्धा तत्र; पृष्ठे, पादयोः, पायौ,

---

वृत्ति=व्यापार होती है। अर्थात् तीनों करणों की ये पाँचों प्राणवायु आदि जीव-नात्मिका वृत्ति=जीवनाख्य व्यापार है। अतः तीनों सम्मिलित अन्तःकरणों के साथ अन्वयव्यतिरेक बतलाते हैं—'तद्भावे तद्भावात्' इति। अर्थात् अन्तःकरण के सद्भाव रहने पर ही जीवित शरीर में प्राणन आदि व्यापार देखने में आता है और जहाँ अन्तःकरण सद्भाव नहीं है, जैसे पाषाण आदि में, वहाँ प्राणन आदि व्यापार भी देखने में नहीं आता है।

( ४ ) 'तत्र प्राणः' इति। इस ग्रन्थ से स्थान-भेद से जीवनात्मिका वृत्ति पाँच प्रकार की है, यह बतलाते हैं कि उन प्राणादि पञ्चवायुओं के मध्य में प्राणवायु नासिका के अग्रभाग में, हृदय-प्रदेश में, नाभि-देश में, पैरों में तथा अंगुष्ठ में रहती है। 'प्राण' की व्युत्पत्ति है—'प्राणनात्'=अन्नभक्षण आदि के द्वारा शरीरधारण करने से उसे प्राण कहते हैं।

'अपानः' इति। मल-मूत्र आदि के निःसारण से अर्थात् मलादि के अधोनयन से इस अपानवायु को 'अपान' कहते हैं और यह वायु कृकाटिका=घंटी रूप प्रदेश में, पृष्ठभाग में, दोनों पैरों में, पायु तथा उपस्थ प्रदेश में तथा दोनों पार्श्वभागों में रहती है।

( १ ) चतुर्विधकरणस्याऽसाधारणीषु वृत्तिषु क्रमाक्रमौ सप्रकारावाह—

**युगपच्चतुष्टयस्य तु वृत्तिः क्रमशश्च तस्य निर्दिष्टा ।**
**दृष्टे तथाऽप्यदृष्टे त्रयस्य तत्पूर्विका वृत्तिः ॥ ३० ॥**

---

उपस्थे, पार्श्वयोश्च वर्तते । समानः समम्=अनुरूपं, नाडीषु रसानां नयनात् समान इत्युच्यते, स च हृदि, नाभौ, सर्वसन्धिषु च वर्तते । रसादीनामूर्ध्वंनयनाद् उदानः, स च हृदि, कण्ठे, तालौ, मूर्ध्नि, भ्रूमध्यभागे च वर्तते । बलवत्कर्महेतुत्वात् सर्वशरीरव्यापित्वाच्च व्यानः, स च त्वचि वर्तते । इत्थं स्थानभेदाद् व्यापारभेदाच्च प्राणस्य वायोः पञ्च संज्ञा जायन्ते ॥ २९ ॥

( १ ) युगपच्चतुष्टयस्येति कारिकामवतारयति—**चतुर्विधकरणस्येति** । बाह्येन्द्रियाणि दशविधेन्द्रियाणि एककोटौ परिगणनसहितान्तःकरणत्रयस्येत्यर्थः । अर्थाद् बाह्यदशविधकरणसमूहत्वेन एकं करणम्, मनोऽहङ्कारबुद्धयश्चेति त्रीणि अन्तःकरणानीत्येवं मिलित्वा चतुर्विधकरणानि भवन्ति, इत्याशयेन चतुर्विधकरणस्येत्युक्तम् । असाधारणीषु वृत्तिषु=प्रागुक्तसङ्कल्पाभिमानाध्यवसायादिरूपव्यापारेषु । **क्रमाक्रमौ**—क्रमः =पौर्वापर्यम्, क्रमेण वृत्त्युत्पादनमिति यावत्, अक्रमः=यौगपद्यम्=क्रमं विहाय युगपद् वृत्तिजननम् । सप्रकारौ=पौर्वापर्यप्रकारेण यौगपद्यप्रकारेण च सहेति यावत्, इत्येव दर्शयति—**युगपच्चतुष्टस्ये**त्यादिकारिकया ।

---

**'समानः'** इति । खाये तथा पीये हुए पदार्थों के समस्त रसों को समस्त नाडियों में समान रूप से ले जाने के कारण यह समानवायु कहलाता है । और यह हृत्=हृदय-प्रदेश में एवं नाभि तथा समस्त सन्धि भागों में रहती है ।

**'उदानः'** इति । उन समस्त रसों को यह ऊपर के समस्त भागों में पहुँचाने के कारण 'उदान' कहलाता है और यह हृदय-प्रदेश में, कण्ठ, तालु तथा मूर्धा भाग में एवं भ्रूमध्य प्रदेश में रहती है ।

**'व्यानः'** इति । यह वायु बलवान् कर्म का कारण होने से तथा समस्त शरीर में व्याप्त होने के कारण 'व्यान' कहलाता है और यह त्वचा में रहता है ।

इसी प्रकार कुछ विद्वानों ने नाग, कूर्म, कृकल, देवदत्त एवं धनञ्जय—ये पाँच और भी अधिक वायु माने हैं । इनका विशद विवेचन टीकाकार की वेदान्तसार की व्याख्या मे देखें ॥ २९ ॥

( १ ) **'चतुर्विधकरणस्य'** इति । मन, बुद्धि, अहङ्कार ये तीन अन्तःकरण हैं । और दशविध बाह्येन्द्रियों का समूहात्मक एक करण है । इस तरह कुल मिला करके ये चार करण हो जाते हैं । इन चतुर्विध करणों के जो देखना-सुनना आदि एवं संकल्प, अभिमान, अध्यवसाय स्वरूप असाधारण व्यापार हैं, उन व्यापारों के क्रम=पौर्वापर्य एवं अक्रम=यौगपद्य=एककालिक समस्त व्यापारों के एककाल में हो जाने को उनके भेद के सहित बतलाते हैं—**'युगपच्चतुष्टयस्य'** कारिका से ।

( २ ) 'युगपत्' इति । दृष्टे यथा—यदा सन्तमसान्धकारे विद्युत्सम्पातमात्राद्व्याघ्रमभिमुखमतिसन्निहितं पश्यति, तदा खल्वस्याऽऽलोचनसङ्कल्पाभिमानाध्यवसाया युगपदेव प्रादुर्भवन्ति, यतस्तत उत्प्लुत्य तत्स्थानादेकपदेऽपसरति ।

---

अन्वयः--दृष्टे चतुष्टयस्य तु वृत्तिः युगपत् क्रमशश्च निर्दिष्टा; तथा अदृष्टे अपि तत्पूर्विका त्रयस्य वृत्तिः युगपत् क्रमशश्च निर्दिष्टा ।

दृष्टे=प्रत्यक्षस्थले । चतुष्टयस्य=प्रागुक्तचतुर्विधकरणस्य । वृत्तिः=व्यापारः । युगपत्=एककालावच्छेदेन अक्रमेण । क्रमशश्च=क्रमेण च । वृत्तिः । निर्दिष्टा=कथिता । सांख्याचार्यचरणैः । सा च वृत्तिः प्रत्यक्षस्थले दशविधवाह्येन्द्रियसाहाय्यमन्तरेणान्तःकरणत्रयस्य कदापि भवितुमर्हतीत्यतः चतुष्टस्येति कथनं साधु सङ्गच्छते । तथा, अदृष्टे=अप्रत्यक्षस्थले=अनुमानादिस्थले, अपि, त्रयस्य=अन्तःकरणत्रयस्य । वृत्तिः । तत्पूर्विका=प्रत्यक्षपूर्विका । यतोऽनुमानादीनां प्रत्यक्षमाश्रित्यैव प्रवर्तमानत्वादिति कारिकार्थः ।



( २ ) दृष्टे=प्रत्यक्षे, करणचतुष्टयस्य वृत्तिः कदाचित् युगपद् भवति, कदाचित् क्रमशः इति क्रमाक्रमवती वृत्तिः पूर्वं कथिता । इदानीं युगपज्जायमानां वृत्तिमाह—यदा सन्तमसान्धकारे इति । सन्तमसान्धकारे=सर्वत्र व्याप्तघनान्धकारे । विद्युत्सम्पातमात्रात्—विद्युत्=सौदामिनी='विजली' इति हिन्दी, तस्याः, सम्पातमात्रात्=सम्पातः=प्रादुर्भावस्तन्मात्रात् प्रकाशमात्राद्वा । व्याघ्रम् । अभिसम्मुखं=सम्मुखम् । अतिसन्निहितम्=अत्यन्तमेव समीपस्थम् । तदा=तस्मिन् काले । खलु=निश्चयेन । अस्य=दर्शकस्य । आलोचनसङ्कल्पाभिमानाध्यवसायाः—आलोचनं=वहिरिन्द्रियेण चक्षुपा सामान्यतो वस्तुदर्शनम्, 'किञ्चिदि'ति, इयञ्च वहिरिन्द्रियचक्षुपो वृत्तिः । सङ्कल्पः=अयं खलु सिंहः मां प्रत्येति, इयञ्चाऽन्तःकरणस्य मनसो वृत्तिः । अभिमानः

---

कारिकार्थ—प्रत्यक्षस्थल में चक्षु और अन्तःकरण ( मन, बुद्धि और अहंकार ) की वृत्तियाँ एक साथ और क्रमशः भी होती हैं । अप्रत्यक्षस्थल में ( अर्थात् अनुमानादिस्थल में ) अन्तःकरण की वृत्तियाँ प्रत्यक्षपूर्वक क्रमशः तथा एक साथ भी होती हैं ।

दृष्ट=प्रत्यक्षदृष्ट पदार्थों में चारों करणों की वृत्ति=व्यापार युगपत्=एककाल में भी होते है और क्रम से भी होते हैं; ऐसा निर्देश इसी कारिका में वाचस्पति मिश्र ने अपनी कौमुदी टीका में किया है । तथा उसी प्रकार अदृष्ट पदार्थों में दशविध वाह्यकरणों के व्यापार न होकर तीन अन्तःकरणों के ही व्यापार होते हैं और वह तीन अन्तःकरणों के व्यापार भी प्रत्यक्षपूर्वक ही होते हैं । अर्थात् पूर्व में जिस रूप में देखना-सुनना सम्पन्न हुआ था, उसी रूप से संकल्प आदि भी व्यापार होते हैं ।

( २ ) 'दृष्टे यथा' इति । दृष्ट=प्रत्यक्षस्थल में तथा अदृष्ट=अप्रत्यक्ष स्थल में ज्ञानेन्द्रिय-कर्मेन्द्रियरूप वाह्यकरण एक और तीन अन्तःकरण, इस प्रकार चार प्रकार के अन्तःकरणों के असाधारण व्यापार युगपत्=एककाल में तथा क्रम से भी होते हैं ।

प्रत्यक्षस्थलीय पदार्थों के विषय में एककाल में होने वाले जो चतुर्विध करणों के व्यापार हैं, उन्हें सदृष्टान्त वतलाते हैं—'यदा सन्तमसान्धकारे' इत्यादि ग्रन्थ से ।

( ३ ) 'क्रमशश्च'—यदा मन्दालोके प्रथमं तावद्वस्तुमात्रं सम्मुग्धमालोचयति, अथ प्रणिहितमनाः 'कर्णान्ताकृष्टसशरशिञ्जितमण्डलीकृतकोदण्डः प्रचण्डतरः पाटच्चरोऽयम्' इति निश्चिनोति, अथ च 'मां प्रत्येति' इत्यभिमन्यते अथाऽध्यवस्यति—'अपसरामीतः स्थानात्' इति ।

---

=अस्मत्सम्मुखम्=अस्मत्पुरोवर्ती चायमस्तीत्यभिमन्यतेऽहङ्कारवृत्तिरियम् । अध्यवसायः=झटिति इतः स्थानाद् दूरं गच्छामीति निश्चयः, सा चेयं बुद्धिवृत्तिः। एतच्च आलोचनसङ्कल्पाभिमानाध्यवसायात्मकं वृत्तिचतुष्टयम् । युगपदेव=एककालावच्छेदेनैव । प्रादुर्भवन्ति=जायन्ते । यतस्ततः=यत्र कुत्रापि । तत्स्थानात् । उत्प्लुत्य=ऊर्ध्वं कूर्दनं कृत्वा । एकपदे=तत्क्षणमेव । अपसरति=स्थानान्तरं पलायते । इमे चाऽऽलोचनसङ्कल्पाभिमानाध्यवसायाः प्रथमक्षणे निर्विकल्पका एव युगपद् भवन्ति । द्वितीयक्षणे च इमे एव सविककल्पका जायन्ते । तृतीयक्षणे तु स मण्डूकवत् उत्प्लुत्य स्थानान्तरमेव गच्छति ।

( ३ ) इदानीं प्रत्यक्षस्थलीयां क्रमवर्तीं वृत्तिमाह—क्रमशश्चेति । यदा मन्दालोके=मन्दप्रकाशे । प्रथमं=प्रथमक्षणे । वस्तुमात्रम् । सम्मुग्धं=विशेष्यविशेषणभावानवच्छिन्नम् । आलोचयति=पश्यति । अथ=आलोचनानन्तरं द्वितीयक्षणे । प्रणिहितमनाः—प्रकर्षेण सावहितं कृतं मनो येन सः=सावधानमनस्कः सन् । कर्णान्ताकृष्टेति । कर्णान्तं=कर्णपर्यन्तम्, आकृष्टम्=आतानितम्, सशरशिञ्जितम्=आरोपितवाणम्, मण्डलीकृतं=ताननेन मण्डलाकारवत् कृतम्, कोदण्डं धनुर्येन स एवम्भूतः । प्रचण्डतरः=अतीव भयङ्करः । पाटच्चरोऽयम्=चोरोऽयम् । निश्चिनोति=मनसा सम्यक् कल्पयतीति मनोवृत्तिरियम् । आहङ्कारिकीं वृत्तिं दर्शयति—अथ च मां प्रत्ये-

---

अर्थात् जब सन्तमस=घन अन्धकार में विद्युत्=बिजली के सम्पातमात्र=चमकने मात्र स्वरूप प्रकाश के आधार पर कोई मनुष्य व्याघ्र को अपने सामने अत्यन्त समीप में देखता है, तब उस मनुष्य के बाह्यकरणजन्य आलोचन आदि समस्त व्यापार, तथा अन्तःकरण-त्रयजन्य संकल्प, अभिमान तथा अध्यवसाय—ये सभी व्यापार युगपद् =एककाल में ही हो जाते हैं, इसी कारण से उस स्थान से वह कूदकर एक पद में =एक क्षण में ही अपसरति=बहुत दूर भाग जाता है ।

( ३ ) 'क्रमशश्च' इति । अदृष्ट=प्रत्यक्षविषयीभूत पदार्थों के विषय में क्रम से होने वाले असाधारण व्यापारों को सदृष्टान्त बतलाते हैं—जब कोई व्यक्ति मन्द आलोक=प्रकाश में प्रथम क्षण में केवल वस्तुमात्र को अर्थात् धर्मधर्मिभावापन्न वस्तुमात्र को सम्मुग्ध=अविविक्त रूप से अस्पष्ट देखता है, यह देखनारूप प्रथमक्षणावच्छिन्न ज्ञान है । इसके बाद=द्वितीय क्षण में प्रणिहित=सावधान एवं मनस्क होकर वह व्यक्ति यह निश्चय करता है कि यह कोई कर्णपर्यन्त खींचे हुए तथा वाण सहित शिञ्जित=प्रत्यञ्चा के तानने से शब्द करने वाला मण्डलीकृत=गोलाकार हुए कोदण्ड=धनुष को लिये हुए क्रूरतर चोर है । इसके बाद वह यह अभिमान करता

(४) परोक्षे त्वन्तःकरणत्रयस्य वाह्येन्द्रियवर्जं वृत्तिरित्याह—'अदृष्टे त्रयस्य तत्पूर्विका वृत्तिः' इति। अन्तःकरणत्रयस्य युगपत्क्रमेण च वृत्तिर्दृष्टपूर्विकेति। अनुमानागमस्मृतयो हि परोक्षेऽर्थे दर्शनपूर्वाः प्रवर्तन्ते नाऽन्यथा। यथा दृष्टे तथाऽदृष्टेऽपीति योजना॥ ३०॥

---

तीति। स्पष्टमेतत्। बुद्धिवृत्तिमाह—अथाध्यवस्यतीति। इतः स्थानात्। अपसरामि =स्थानान्तरं गच्छामि।

(४) परोक्षे त्विति। अनुमानादिस्थले तु। अन्तःकरणत्रयस्य =मनोऽहङ्कारबुद्धीनाम्। वाह्येन्द्रियवर्जम् =वाह्येन्द्रियाणि चक्षुरादीनि वर्जयित्वा। अर्थात् वाह्येन्द्रियसहयोगमन्तरेणैव। अर्थात् अप्रत्यक्षज्ञाने वाह्येन्द्रियवृत्तेरसम्भवादित्यत आह—अदृष्टे त्रयस्येति। 'अदृष्टे' इत्युपलक्षणम्, तत्र अदृष्टपदेन अनुमेयपदार्थवह्न्यादीनां, शाब्दस्य, स्वर्गाऽपूर्वदेवतादीनाञ्च एवं स्मृतिविषयीभूतपित्रादीनामपि परिग्रहो वोध्यः, इत्यत्र सर्वत्राऽन्तःकरणत्रयस्य प्रत्यक्षपूर्विका वृत्तिरेव जायते। अन्तःकरणत्रयस्येति। युगपत् =एककालावच्छेदेन। क्रमेण =क्रमवती चापि। दृष्टपूर्विका =प्रत्यक्षपूर्विका। दृष्टपूर्वकत्वं साधयति—अनुमानागमेत्यादिना। परोक्षेऽर्थे =अदृष्टेऽर्थे वह्न्यादौ। दर्शनपूर्वाः =आलोचनपूर्वाः =प्रत्यक्षपूर्वाः। प्रवर्तन्ते =जायन्ते। यथा—अनुमानस्थलेऽनुमेयपदार्थज्ञानाय व्याप्तिज्ञानं प्रत्यक्षसापेक्षम्। शाब्दवोधेऽपेक्षितं शक्तिज्ञानं शब्दस्य श्रावणप्रत्यक्षमन्तरा नोपपद्यते। स्मृतिविषयीभूतेषु पदार्थेषु संस्काराय प्रत्यक्षापेक्षा, यतोऽनुभवजन्या एव संस्कारा भवन्ति। नान्यथेति। प्रत्यक्षमन्तरा परोक्षेऽर्थेऽनुमानादयो न प्रवर्तन्ते इति भावः। यथा दृष्टे तथाऽदृष्टेऽपीति। अर्थात् यथा दृष्टे पदार्थे घटपटादौ चतुर्विधकरणानां युगपत् क्रमेण व्यापारा जायन्ते, तथाऽदृष्टेऽपि पदार्थे पर्वतवृत्तिवह्न्यादौ वाह्यकरणसहयोगजन्यवृत्तिसाहाय्येनैवाऽन्तःकरणत्रयस्य युगपत् क्रमशश्च वृत्तयो जायन्ते इति तु निष्कर्षः॥ ३०॥

---

है कि यह चोर मेरी तरफ आ रहा है। फिर चतुर्थ क्षण में वह यह अध्यवसाय= निश्चय करता है कि अब मैं इस स्थान से कहीं भाग निकलूं।

(४) 'परोक्षे' इति। दृष्टविषय में करणों की व्यापार-स्थिति को बतलाकर अब परोक्ष=अदृष्ट विषय में करणों की व्यापार-स्थिति का विवेचन करते हैं कि परोक्ष= अदृष्ट =अप्रत्यक्ष विषय में महत्, अहङ्कार तथा बुद्धि—इन तीनों अन्तःकरणों की बाह्य इन्द्रियरूप करण को छोड़कर अर्थात् उन बाह्य दशविध करणों के सहयोग के बिना ही वृत्ति व्यापार होती है, इसी बात को बतलाते हैं—'अदृष्टे त्रयस्य' इति। अर्थात् अदृष्टस्थलीय पदार्थों के विषय में अन्तःकरणत्रय का व्यापार 'तत्पूर्विका वृत्तिः' दृष्टपूर्वक =आलोचनपूर्वक ही होता है, अर्थात् युगपत् भी होता है और क्रमिक भी होता है। क्योंकि अदृष्ट =परोक्ष विषय का ज्ञान कराने वाले अनुमान, आगम तथा स्मरण ये प्रत्यक्षज्ञानपूर्वक ही उनके विषय में प्रवृत्तिशील बनते हैं, अन्यथा नहीं अर्थात् आलोचन को छोड़कर नहीं। यही कहा है कि जैसे प्रत्यक्षदृष्ट पदार्थ के विषय

( १ ) स्यादेतत्—चतुर्णां त्रयाणां वा वृत्तयो न तावत्तन्मात्राधीनाः, तेषां सदातनत्वेन वृत्तीनां सदोत्पादप्रसङ्गात्, आकस्मिकत्वे तु वृत्तिसङ्कर-प्रसङ्गो नियमहेतोरभावादित्यत आह—

**स्वां स्वां प्रतिपद्यन्ते परस्पराकूतहेतुकां वृत्तिम् ।**
**पुरुषार्थ एव हेतुर्न केनचित्कार्यते करणम् ।। ३१ ।।**

---

( १ ) 'स्वां स्वाम्' इत्यादिकारिकामवतारयितुं शङ्कते—स्यादेतदिति । एतत् = युगपत् क्रमशश्च वृत्तिमत्त्वं 'चतुर्णामि'त्यादिनाऽऽशङ्क्यमानं सोपपन्नं भवेत्, परन्तु चतुर्णां = बाह्येन्द्रियसहितमनोऽहङ्कारबुद्धीनाम् । त्रयाणाम् = अन्तःकरणत्रयाणाम् । वृत्तयः = व्यापाराः = स्वस्वाऽसाधारणव्यापाराः साधारणव्यापाराश्च । न तन्मात्राधीनाः = न तावदितरनिमित्तनिरपेक्षतया बुद्ध्यादिकरणमात्राधीनाः । तत्र कारणं दर्शयति—तेषामिति । करणानामित्यर्थः । सदातनत्वेन = सर्वकालेषु विद्यमानत्वेन । वृत्तीनां = तत्तत्कार्यरूपवृत्तीनाम् । सदोत्पादप्रसङ्गात् = सदोत्पत्त्यापत्तेः, कारणसत्त्वे कार्यसत्त्वावश्यम्भावनियमात् इति भावः । आकस्मिकत्वे इति । अकस्माज्जायमानत्वे= अहेतुकत्वे = करणानां वृत्त्युत्पत्तेरहेतुकत्वे इत्यर्थः । वृत्तिसङ्करप्रसङ्गः = एकेन्द्रिय-वृत्त्युद्भवकाले इन्द्रियान्तरस्य वृत्त्युद्भवप्रसङ्गः, एवं चक्षुः शब्दं गृह्णीयात्, श्रोत्रञ्च रूपमिति, तथाऽहङ्कारो निश्चिनुयात्, बुद्धिश्च सङ्कल्पं कुर्यादित्येवंरूपेण वृत्तीनां परस्परं सङ्करप्रसङ्गः वैपरीत्यप्रसङ्गश्च स्यादिति भावः । कुतः ? इति जिज्ञासायामाह—नियमहेतोरभावादिति । नियमरूपहेतोरभावात् । अर्थात् अस्या वृत्तेरिदमेव कारणमिति कार्यकारणभावरूपनियमात्मकहेतोरभावादित्यर्थः । इत्यत इन्द्रियाणां ( करणानाम् ) स्वस्वविषयग्रहणाय प्रेरकत्वेन नियामकमाह—स्वां स्वां प्रतिपद्यन्ते इत्यादि ।

---

में करण और उनके व्यापार युगपत् तथा क्रम से होते हैं, उसी प्रकार अदृष्ट = अप्रत्यक्ष विषय में भी करण एवं उनके व्यापार युगपत्-क्रम से होते हैं, यह समझना चाहिए ।। ३० ।।

( १ ) अब **'स्वां स्वाम्'** इस कारिका को उठाने की दृष्टि से शङ्का के व्याज से भूमिका की रचना करते हैं—**'स्यादेतत्'** इति । पूर्व कथन ठीक है, अर्थात् करणों का व्यापार युगपत् और क्रमिक दोनों देखा जाता है । परन्तु चारों अथवा तीनों करणों की वृत्तियाँ = व्यापार केवल इन करणो पर ही आधारित नहीं हो सकती है, क्योंकि करणों के सदातन होने के कारण वृत्तियों को भी सदा उत्पाद का प्रसंग = आपत्ति लग जायेगा, अर्थात् करणों के व्यापार हमेशा उत्पन्न होते रहेंगे । और यदि करणों की वृत्तियों को आकस्मिक = अहेतुक मानते हैं, तब किसी भी नियामक के न होने के कारण वृत्तियों के साङ्कर्य की आपत्ति लग जायेगी अर्थात् एक इन्द्रिय से सम्पन्न होने वाले व्यापारकाल में इन्द्रियान्तर से भी व्यापार होने लगेगा । अर्थात् श्रोत्रेन्द्रिय से रूपग्रहण का, चक्षुरिन्द्रिय से शब्दग्रहण का एवम् अहङ्कार से सङ्कल्पात्मक व्यापार होने लग जायेगा । मन से अभिमानात्मक व्यापार होने लगेगा । एवं बाह्य-

( २ ) 'स्वाम्' इति। करणानीति शेषः। यथा हि बहवः पुरुषाः शाक्तीक-याष्टीकधानुष्ककार्पाणिकाः कृतसङ्केताः परावस्कन्दनाय प्रवृत्ताः, तत्रान्यतमस्याकूतमवगम्याऽन्यतमः प्रवर्तते, प्रवर्तमानस्तु शाक्तीकः शक्तिमेवाऽऽदत्ते, न तु यष्ट्यादिकम्, एवं याष्टीकोऽपि यष्टिमेव, न शक्त्यादिकम्। तथाऽन्य-

---

अन्वयः—( करणानि ) परस्पराकूतहेतुकां स्वां स्वां वृत्तिं प्रतिपद्यन्ते, ( अत्र ) पुरुषार्थ एव हेतुः केनचित् करणं न कार्यते।

करणानि इति शेषः। परस्पराकूतहेतुकाम् = पारस्परिकसङ्केतकारणीभूताम्। स्वां, स्वां, वृत्तिं, प्रतिपद्यन्ते = प्राप्नुवन्ति। तत्र तादृशवृत्तिप्रतिपत्तौ पुरुषार्थ एव हेतुर्न केनचित् अन्येन, करणं = करणचतुष्टयम्। कार्यते = प्रेर्यते, इति कारिकार्थः।

( २ ) करणानीति शेषः। बाह्यकरणानि चक्षुरादीनि, अन्तःकरणानि मनोऽहङ्कारादीनि। दृष्टान्तमुखेन प्रागुक्तं विषयं सुस्पष्टयति—यथा हीति। बहवः पुरुषाः = योद्धारः। शाक्तीकेति। शक्तिरेव आयुधं यस्यासौ शाक्तीकः, यष्टिरेव आयुधं यस्यासौ याष्टीकः, धनुरेव आयुधं यस्यासौ धानुष्कः, एवमेव कृपाणमायुधं यस्यासौ कार्पाणिकः। एते शाक्तीकादयो यथा कृतसङ्केताः सन्तः युद्धारम्भसमये स्वीयं स्वीयमस्त्रं शस्त्रं च गृह्णन्ति, यथा शाक्तीकः शक्तिमेवाऽऽदाय शत्रुदमनाय प्रवृत्तिशीलो भवति युद्धे। एवं—याष्टीको यष्टिमेवाऽऽदाय। धानुष्कश्च धनुरादाय। परावस्कन्दाय = शत्रुदमनाय। प्रवृत्ताः = प्रवृत्तिशीलाः। भवन्तीति शेषः। तत्र = तेषां मध्ये अर्थात् शाक्तीक-याष्टीकप्रभृतिषु इत्यर्थः। अन्यतमस्य = कस्यचिदेकस्य। आकूतम् = अभि-

---

करणों का व्यापार अन्तःकरणों से और अन्तःकरणों का व्यापार बाह्यकरणों से उत्पन्न होने लगेगा। इस प्रकार सर्वत्र व्यापारों के आविर्भाव = उत्पादन में व्यतिक्रम की आपत्ति लग जायेगी, क्योंकि कोई भी नियामक हेतु तो है नहीं, कारण कि यह तो आकस्मिक = अहेतुक पक्ष है।

कारिकार्थ—ये इन्द्रियाँ परस्पर एक-दूसरे के संकेत को समझकर अपने-अपने व्यापार में प्रवृत्त होती हैं। इनकी प्रवृत्ति में पुरुषार्थ ही एकमात्र हेतु है। ये किसी के द्वारा प्रेरित नहीं की जातीं।

( २ ) इस शंका के निराकरणार्थ या समाधानार्थ कहते हैं कि—'स्वाम्' इति। 'करणानि' यह शेष है। अर्थात् यहाँ 'प्रतिपद्यन्ते' इस क्रिया की पूर्ति के लिए कर्ता के रूप में 'करणानि' इस पद का अध्याहार नितान्त अवश्यक है। जैसे शाक्तीक = शक्ति = आयुधविशेष को धारण करने वाले, ऐसे ही याष्टीक, धानुष्क तथा कार्पाणिक = कृपाणधारी, ये बहुत से एक पक्ष के योद्धा लोग कृतसंकेत होकर अर्थात् शाक्तीक = शक्ति से लड़ने वाला शक्ति को लेकर तथा याष्टीक यष्टि को लेकर पर = शत्रु का अवस्कन्दन = दमन = पराजय करने के लिए युद्ध में प्रवृत्तिशील बनते हैं।

'तत्रान्यतमस्य' इति। वहाँ युद्ध के लिए इकट्ठे हुए योद्धाओं के द्वारा परस्पर में—अन्यतम = एक योद्धा दूसरे के आकूत = संकेत को जानकर संकेत के अनुसार

तमस्य करणस्याऽऽकूतात् स्वकार्यकरणाभिमुख्यादन्यतमं करणं प्रवर्त्तते। तत्प्रवृत्तेश्च हेतुमत्त्वान्न वृत्तिसङ्करप्रसङ्ग इत्युक्तम्—'स्वां स्वां प्रतिपद्यन्ते' इति।

( ३ ) स्यादेतत्—याष्टीकादयश्चेतनत्वात् परस्पराकूतमवगम्य प्रवर्तन्ते

---

प्रायम्=सङ्केतनियमम्। अवगम्य=ज्ञात्वा। अन्यतमः=कश्चिदेकः। प्रवर्तमानः=प्रवृत्तिशीलः। शाक्तीकः=शक्तियुद्धप्रवीणः। शक्तिमेव=शक्तिरूपमायुधमेव। आदत्ते=गृह्णाति। एवकारव्यवच्छेद्यमाह—**न तु यष्ट्यादिकम्** इति। एवम्=इत्थमेव। याष्टीकोऽपि=यष्टियुद्धप्रवीणोऽपि। यष्टिमेव, आदत्ते इति शेषः। अत्र एवकारव्यवच्छेद्याः यष्ट्यतिरिक्ताः शक्तिधनुरादयः सर्वेऽपि बोध्याः।

इदानीं दार्ष्टान्तिके तमर्थं दृष्टान्तसिद्धं योजयति—**तथाऽन्यतमस्येति**। करणस्याऽऽकूतात्—करणस्य=बुद्ध्यादेः, आकूतात्=अभिप्रायात्, अर्थात् स्वकार्यकरणाभिमुख्यात्—स्वस्य=करणचतुष्टस्य, कार्यं=वृत्तिरूपं कार्यं, तस्य करणं=सम्पादनम्, तस्याऽऽभिमुख्यम्=उन्मुखता, तस्मादित्यर्थः। तथा च तत्तत्करणवृत्त्युन्मुखताया अधीनस्थमेव भूत्वा, अन्यतमं करणं=तेषु किमप्येकं करणम्। प्रवर्तते=वृत्तिं जनयितुं प्रवृत्तिशीलो भवति। फलितार्थमाह—तत्प्रवृत्तेः=करणानां प्रवृत्तेः। हेतुमत्त्वात्=निमित्तवत्त्वात्=कारणवत्त्वान्न वृत्तिसङ्करप्रसङ्गः, नापि वृत्तिव्यतिरेकप्रसङ्गो वेति भावः। अर्थात् वृत्तीनां=करणादिवृत्तीनां, यत् साङ्कर्यं=कारणाऽनियम्योत्पत्तिकत्वं, स्वाभाविकत्वं वा, तस्यापत्तिर्नास्तीति तु परमार्थः। इत्युक्तम्=एतदेवोक्तम्—'**स्वां स्वां प्रतिपद्यन्ते**'।

( ३ ) शङ्कते—**स्यादेतत्** इति। याष्टिकादयः=यष्टिपाणयः। चेतनत्वात्=चैतन्याश्रयत्वात्। परस्पराकूतं=पारस्परिकाभिप्रायम्। अवगम्य=ज्ञात्वा। करणानि=

---

अपने-अपने शस्त्रों को लेकर ही युद्धार्थ प्रवृत्त होता है। युद्धार्थ प्रवर्तमान शाक्तीक शक्तिरूप शस्त्रविशेष को ही लेता है, न कि लाठी आदि को; एवं याष्टीक यष्टि=लाठी को ही लेता है, न कि शक्ति आदि आयुधविशेष को।

**'तथाऽन्यतमस्य'** इति। उसी प्रकार शाक्तीक तथा याष्टीक आदि की तरह अपने-अपने निर्धारित व्यापार को सम्पन्न करने के लिए दूसरे करण के आकूत से अर्थात् करण के व्यापाररूप कार्य की अभिमुखता से अर्थात् तत्तत् करण की तत्तद् वृत्तिरूप व्यापाराभिमुखता के अधीन होकर ही अन्यतम=प्रत्येक करण प्रवृत्तिशील बनते हैं। निष्कर्ष यह निकलता कि करणों की अपने-अपने व्यापार में जो प्रवृत्ति है, वह सर्वथा सहेतुक है; अतः कारणानियन्त्रितोत्पत्तिरूप संकर के आकस्मिकत्व का प्रसङ्ग कदापि नहीं हो सकता है। कहा है—'तत्प्रवृत्तेश्च हेतुमत्त्वात् न वृत्तिसङ्करप्रसङ्गः; इत्युक्तं—**स्वां स्वां प्रतिपद्यन्ते**' इति।

( ३ ) **'स्यादेतद्'** इति। पूर्व कथन ठीक है, परन्तु याष्टीक=यष्टिधारी एवं शक्तिधारी प्रभृति लोग चेतन होने के कारण परस्पर के आकूत=संकेत=अभिप्राय

इति युक्तम्। करणानि त्वचेतनानि, तस्मान्नैवं प्रवर्तितुमुत्सहन्ते। तेनैषामधिष्ठात्रा करणानां स्वरूपसामर्थ्योपयोगाभिज्ञेन भवितव्यमित्यत आह—'पुरुषार्थ एव हेतुः न केनचित्कार्यते करणम्' इति। भोगापवर्गलक्षणः पुरुषार्थ एवाऽनागतावस्थः प्रवर्तयति करणानि, कृतमत्र तत्स्वरूपाभिज्ञेन कर्त्रा। एतच्च 'वत्सविवृद्धिनिमित्तम्' ( का० ५७ ) इत्यत्रोपपादयिष्यते ॥ ३१ ॥

---

चक्षुरादिवाह्येन्द्रियकरणानि, बुद्धयाद्यन्तःकरणानि च। अचेतनानि=जडानि। तस्मात्=जडत्वात्। नैवं=न शाक्तीकादिवत्। उत्सहन्ते=उत्साहसम्पन्ना भवन्ति। तेन=स्वयम्प्रवृत्तावशक्तत्वेन। एषां=करणानाम्। अधिष्ठात्रा=प्रेरकेण केनचिद्। स्वरूपसामर्थ्योपयोगाभिज्ञेन=चक्षुरादिबुद्धयादिकरणानाञ्च, एतद् स्वरूपम् एवंविधश्च सामर्थ्यम्, अत्र चास्त्येतेषां करणानामुपयोगस्तदभिज्ञेन=ज्ञात्रेत्यर्थः। भवितव्यम्। पुरुषस्याधिष्ठातृत्वं प्रयोजकत्वं वा पुष्करपलासवन्निर्लेपत्वात् असङ्गत्वान्न भवितुमर्हति, सांख्यनये ईश्वरस्याऽस्तित्वमेव नास्तीति 'पुरुषार्थ एव हेतुः' इति मन्तव्यम्। **भोगापवर्गलक्षण इति**। भोगः=सुखदुःखान्यतरसाक्षात्कारः, अपवर्गः—अपवृज्यते=केवलीभवत्यनेनेति अपवर्गः=सत्त्वपुरुषान्यताज्ञानम्, आत्यन्तिकदुःखनिवृत्तिर्वा, तल्लक्षणः=तत्स्वरूपः। पुरुषार्थः। अनागतावस्थः=अनागतस्थूलावस्थः। इदन्तु बोध्यं यत्सांख्यनयेऽनागतावस्थामापन्नावपि भोगापवर्गौ अव्यपदेश्यतया गुणेषु वर्तेते, उत्पत्तेः प्राक्कालावच्छेदेन सूक्ष्मावस्थया स्वकारणे वर्तमान एव भावभूतः पदार्थोऽनागतावस्थावान् अव्यपदेश्य इत्युच्यते। तथा च प्रकृतिगतौ अनागतावेव तौ भोगापवर्गौ प्रवर्तकौ, तावदेव हि गुणाः प्रवर्तन्ते न यावद् भोगं वाऽपवर्गं वा समुत्पादयन्ति। अयमेव भोगापवर्गलक्षणः पुरुषार्थः करणानि त्रयोदशविधानि प्रवर्तयति, इत्यतः कृतम्=व्यर्थम्। अत्र=करणानां प्रेरणे। तत्स्वरूपाभिज्ञेन कर्त्रा=भोगापवर्गस्वरूपाभिज्ञेन पुरुषार्थातिरिक्तेन चेतनेन ॥ ३१ ॥

---

को जानकर अपने-अपने युद्धात्मक कार्य में प्रवृत्त होते हैं; यह तो सर्वथा युक्त=उचित है, परन्तु चतुर्विध करण अथवा त्रयोदश करण तो सर्वथा अचेतन=जड हैं। वे परस्पर के आकूत=अभिप्राय=संकेत के अनुसार कैसे अपने-अपने आलोचनादि, अध्यवसायादि कार्यों या व्यापारों को सम्पन्न करने में प्रवृत्त होने के लिए उत्साह करेंगे, अर्थात् कथमपि वे प्रवृत्तिशील नहीं हो सकेंगे। इसलिए इन अचेतन करणों के स्वरूप, सामर्थ्य तथा उपयोग को जानने वाला कोई चेतन ही अधिष्ठाता=प्रेरक होना चाहिए। इसके उत्तर में कहते हैं—'पुरुषार्थ एव हेतुर्न केनचित् कार्यते करणम्'।

'भोगापवर्गलक्षणः' इति। अर्थात् अनागतावस्थ=भविष्यत्कालीन जो पुरुष का भोग तथा अपवर्गरूप अर्थ=प्रयोजन है, वही इन करणों को आलोचनादि एवम् अध्यवसायादि कार्यों में अथवा व्यापारों में प्रवृत्त करता है, करणों के स्वरूपाभिज्ञ=स्वरूप को जानने वाले किसी भी चेतनकर्ता की यहाँ आवश्यकता ही क्या है? यह बात 'वत्सविवृद्धिनिमित्तम्' इस ५७वीं कारिका में स्पष्ट करेंगे ॥ ३१ ॥

( १ ) 'न केनचित् कार्यते करणम्' इत्युक्तम्। तत्र करणं विभजते—

**करणं त्रयोदशविधं तदाहरणधारणप्रकाशकरम्।**
**कार्यञ्च तस्य दशधाऽऽहार्यं धार्यं प्रकाश्यं च॥ ३२॥**

( २ ) 'करणं त्रयोदशविधम्' इति। इन्द्रियाण्येकादश बुद्धिरहङ्कारश्चेति त्रयोदशप्रकारं करणम्। कारकविशेषः करणम्। न च व्यापारावेशं विना कारकत्वमिति व्यापारावेशमाह—'तदाहरणधारणप्रकाशकरम्' इति; यथायथम्।

( ३ ) तत्र कर्मेन्द्रियाणि वागादीन्याहरन्ति— यथास्वमुपाददते, स्वव्या-

---

( १ ) करणं त्रयोदशविधमिति कारिकामवतारयितुमाह—'**न केनचित्कार्यते करणमि**'त्यादिना। केनचित् = ईश्वरेण जीवेन वा, कार्यते = प्रवर्त्यते। करणं = प्रागुक्तं वक्ष्यमाणं वा त्रयोदशविधम्।

( २ ) इदानीं करणभेदानाह—**करणं त्रयोदशविधमिति**। त्रयोदशविधत्वञ्च बुद्धि-अहङ्कारसहित एकादशेन्द्रियवृत्तिबोध्यम्। तदुक्तं मिश्रैः कौमुद्याम्—**इन्द्रियाणि एकादशेति**। श्रोत्रत्वक्चक्षूरसनाघ्राणवाक्पाणिपादपायूपस्थमनांसीत्यर्थः। करणव्याख्यानमाह—**कारकविशेषः**। कारकत्वञ्च = व्यापाराश्रयत्वं, तच्च व्यापारावेशं— व्यापारः = क्रिया, आवेशः = आश्रयस्तं विना न च करणानां कारकत्वं भवितुमर्हतीति व्यापारावेशमाह—**तदाहरणेति**। अर्थात् आहरणकरम्, धारणकरम्, प्रकाशकरञ्चेति। त्रयोदशविधकरणानां त्रिविधक्रियाकरत्वं न भवितुमर्हतीत्यत आह— **यथायथमिति**। यथायोग्यमित्यर्थः।

( ३ ) योग्यतां दर्शयति— **तत्र कर्मेन्द्रियाणी**त्यादिना। अर्थात् प्रत्येकमेव न

---

( १ ) '**न केनचित् कार्यते करणम्**' इति। अर्थात् करणों के व्यापारशील होने मे प्रयोजक कोई चेतनकर्ता नही है। 'इत्युक्तम्' = यह पूर्वकारिका में कह चुके हैं। अब करणों का विभाग करते है—

**कारिकार्थ**—इन्द्रियाँ तेरह प्रकार की है; ये आहरण, धारण और प्रकाश करने वाली है। इस इन्द्रिय समुदाय का कार्य दस प्रकार का है; वह आहार्य, धार्य और प्रकाश है।

( २ ) करण तेरह प्रकार का है—एकादश इन्द्रियाँ = पाँच ज्ञानेन्द्रियाँ, पाँच कर्मेन्द्रियाँ, एक मन और बुद्धि, अहङ्कार। कारकविशेष को करण कहते हैं।

'**न च व्यापारावेशं विना**' इति। अर्थात् व्यापारावेश के विना = क्रिया के साथ सम्बन्ध हुए विना, सर्वत्र सर्वथा कारकत्व अनुपन्न है, क्योंकि व्यापार का आश्रय ही कारक होता है, ऐसा नियम है। इसलिए व्यापारावेश = क्रियाश्रयत्व को बतलाते है—'तत्' = वह त्रयोदशविध करण 'यथायथम्' = यथायोग्य आहरण, धारण तथा प्रकाश करने वाले हैं।

( ३ ) '**तत्र कर्मेन्द्रियाणि**' इति। अर्थात् वागादि कर्मेन्द्रियाँ अपनी-अपनी

पारेण व्याप्नुवन्तीति यावत् । बुद्ध्यहङ्कारमनांसि तु स्ववृत्त्या प्राणादिलक्षणया धारयन्ति । बुद्धीन्द्रियाणि च प्रकाशयन्ति ।

---

आहरणकरं न धारणकरं नापि प्रकाशकरं किन्तु यत्क्रियाकरणयोग्यत्वं यस्य तस्य तत्क्रियाकरत्वं विज्ञेयम्, यथा कर्मेन्द्रियाणि विषयानाहरन्ति, मनःप्रभृतीनि धारयन्ति, चक्षुरादीनीन्द्रियाणि प्रकाशयन्ति इत्याह—**वागादीनीति** । यथास्वं=स्वं=स्वकीयां वृत्तिमनतिक्रम्य वर्तते इति यथास्वम् । उपाददते=स्वस्वविषयान् वचनादीन् गृह्णन्तीत्यर्थः ।

*अयम्भावः—यथास्वमुपाददते इत्यस्य स्वव्यापारेण व्याप्नुवन्तीत्यर्थो बोध्यः*, तथा चात्र व्यापारः क्रिया, प्रकृते यथा वागिन्द्रियम्—उच्चारणात्मिकया क्रियया स्वविषयं वचनं ( शब्दं ) व्याप्नोति, पाणिः—अञ्जलिप्रसारणरूपक्रियात्मकेन व्यापारेण आदानस्वरूपं स्वविषयं गृह्णाति, पादः—गमनात्मिकया स्वक्रियया भ्रमणात्मकं स्वविषयं व्याप्नोति, पायुः—स्वक्रियया पुरीषोत्सर्गरूपं स्वविषयं व्याप्नोति, एवम् उपस्थश्च—स्वक्रिययाऽऽनन्दरूपं स्वविषयं व्याप्नोति ।

अथवा तुल्यवित्तिवेद्यतया इदमपि वक्तुं शक्यते यत् स्वकीयाऽसाधारणशब्दात्मकव्यापारद्वारा वागिन्द्रियं स्ववाच्यमर्थं व्याप्नोति । एवं पाणिधारणात्मकव्यापारद्वारा धार्यं स्वविषयं, स्वविषयीभूतं पदार्थं वा व्याप्नोति । तथा पादोऽपि स्वकीयाऽसाधारणविहरणात्मकव्यापारद्वारा भूतलादिरूपं विषयं व्याप्नोति । पायुश्च पुरीषोत्सर्गरूपाऽसाधारणव्यापारद्वारा मलं व्याप्नोति । इत्थमेव चोपस्थात्मकं कर्मेन्द्रियं स्वकीयेनाऽसाधारणेन व्यापारेणाऽऽनन्देन सुरतजन्यं कामं व्याप्नोति । बुद्ध्यहङ्कारमनांसीति । स्ववृत्त्या=स्वकीयाऽसाधारणप्राणादिलक्षणया वृत्त्या अर्थात् प्राणापानव्यानसमानोदानात्मिकया जीवनवृत्त्या, शरीररूपं स्वविषयं, धारयन्ति=मृत्युकालपर्यन्तं यथेदं शरीरं नीरोगमाधिव्याधिविनिर्मुक्तं सन्तिष्ठेत तथा रक्षयन्तीत्यर्थः । बुद्धीन्द्रियाणीति । चक्षुरादिज्ञानेन्द्रियाणि । प्रकाशयन्ति=प्रकाशं कुर्वन्ति ।

---

योग्यतानुसार विषयों का आहरण या ग्रहण करती हैं, अर्थात् अपने-अपने कार्य अथवा व्यापार से उन्हें व्याप्त करती हैं । जैसे वाग् इन्द्रिय अपनी उच्चारण क्रिया से वचन =शब्द; को व्याप्त कर लेती है .पाणि=हाथ अपनी अञ्जलि-प्रसारण क्रिया से आदान को व्याप्त कर लेता है; पाद=चरण अपनी गमन क्रिया से विहरण को व्याप्त करता है; पायु=गुदा अपनी विकासात्मक क्रिया से मलोत्सर्ग को व्याप्त करती है तथा उपस्थ=जननेन्द्रिय अपनी जाग्रत् क्रिया से आनन्द=विषयानन्द को व्याप्त करती है ।

और बुद्धि, अहंकार, मन ये स्ववृत्ति=अपने जीवनात्मक प्राणादि वृत्तिरूप व्यापार से शरीर को धारण करते हैं तथा इस आवरण शरीर को निरामय= नीरोग रखने के लिए प्रयत्नशील होकर सर्वतोभावेन इसकी रक्षा भी करते हैं । और बुद्धीन्द्रियाँ=श्रोत्रादि ज्ञानेन्द्रियाँ प्रकाश=ज्ञान करती हैं, जैसे श्रोत्रेन्द्रिय शब्द-

( ४ ) आहरणधारणादिक्रियाणां सकर्मकतया किं कर्म कतिविधं चेत्यत आह—'कार्यं च तस्य' इति। कार्यं तस्य त्रयोदशविधस्य करणस्य दशधा, आहार्यं धार्यं प्रकाश्यं च। आहार्यं व्याप्यम्। कर्मेन्द्रियाणां वचनादानविहरणोत्सर्गानन्दाः यथायथं व्याप्याः, ते च यथायथं दिव्यादिव्यतया दशेत्याहार्यं दशधा।

---

( ४ ) अत्रेदं जिज्ञास्यते यद् आहरणधारणादिक्रियाणां सकर्मकतया किन्तत्कार्यात्मकं कर्म कतिविधञ्च यत्कार्यात्मकं कर्म इमानि त्रयोदशविधानि करणानि आहरन्ति धारयन्ति प्रकाशयन्ति च ?

समाधत्ते—**कार्यं च तस्येति**। तस्य=त्रयोदशविधकरणस्य, कार्यम्=कर्म। अर्थात् आहरणादिक्रियाणां सकर्मकतया किं कर्म? कतिविधञ्च? इति प्रश्नद्वयस्येदमेवोत्तरं यत् 'कार्यञ्च तस्य दशधा' अर्थात् त्रयोदशविधकरणस्य यदस्ति कार्यं 'तदेव कर्म' इति प्रथमप्रश्नस्योत्तरं जातम्। 'कतिविधञ्चे'ति द्वितीयप्रश्नस्योत्तरमस्ति 'दशधा'=प्रत्येकं दशविधं=दशप्रकारमित्यर्थः। तच्च दशविधं कार्यम्—'आहार्यं धार्यं प्रकाश्यञ्च'। तत्राहार्यमाह—आहर्तुं=व्याप्तुं योग्यं वचनादिकम्। धार्यमाह—धर्तुं=रक्षितुं योग्यं शरीरम्। प्रकाश्यमाह—प्रकाशितुं=विज्ञातुं योग्याः शब्दादयो विषयाः। आहार्यपदार्थमाह—**व्याप्यमिति**। वागादिव्यापारेण व्याप्यं कर्मेत्यर्थः। तदेव दर्शयति—**कर्मेन्द्रियाणामिति**। वाक्पाणिपादपायूपस्थानां यथायथं=क्रमेण। व्याप्याः=क्रियाविशेषेण प्राप्याः। ते च=व्याप्यभूता वचनादयः। दिव्यादिव्यतया=अलौकिकलौकिकभेदेन। तत्र दिव्याः=अलौकिकाः, दिवि वर्तमानानां देवादीनां भोग्या दिव्याः, अस्मदादीनाञ्च भोग्या वचनादिविषया अदिव्याः। इत्यञ्च मिलित्वा दिव्यादिव्यभेदेन ते वचनादयो विषया दशविधाः भवन्ति।

---

ज्ञानात्मक प्रकाश करती है, इत्यादि रूप से और सब इन्द्रियाँ इसी प्रकार अपने-अपने विषयों का यथायोग्य प्रकाशात्मक ज्ञान प्रदान करती हैं।

( ४ ) **'आहरणधारणादिक्रियाणाम्'** इति। अर्थात् आहरण, धारण आदि क्रियाएँ सकर्मक हैं। अतः यह जिज्ञासा होती है कि इनका कर्म कौन है और वह कर्म कितने प्रकार का है? इस जिज्ञासा की निवृत्ति के लिए कहते हैं—**'कार्यं च तस्य'** इति। अर्थात् उन त्रयोदश करणों के कार्य=कर्म आहार्य-धार्य-प्रकाश्यरूप दस-दस प्रकार के होते हैं।

**'आहार्यं व्याप्यम्'** इति। आहार्य व्याप्य को कहते हैं। उसी को बतलाते हैं—**'कर्मेन्द्रियाणाम्'** इति। कर्मेन्द्रियाँ जो वाक्, पाणि, पाद, पायु तथा उपस्थ हैं, उनके क्रमशः वचन, आदान, विहरण, उत्सर्ग एवम् आनन्द व्याप्य=विषय हैं। अर्थात् वाक् आदि पाँचों कर्मेन्द्रियाँ वचन, आदान आदि क्रमिक कार्यात्मक कर्मों में अपने-अपने व्यापार के रूप में व्याप्त रहती हैं और वे कार्य दिव्य=देवभोग्य तथा अदिव्य=अस्मदादि भोग्य होने के कारण दस प्रकार के हैं। इस प्रकार आहार्य दस प्रकार का है।

( ५ ) एवं धार्यमप्यन्तःकरणत्रयस्य प्राणादिलक्षणया वृत्त्या शरीरम्, तच्च पार्थिवादि पाञ्चभौतिकम् । शब्दादीनां पञ्चानां समूहः पृथिवी, ते च पञ्च दिव्यादिव्यतया दशेति धार्यमपि दशधा ।

एवं बुद्धीन्द्रियाणां शब्दस्पर्शरूपरसगन्धा यथायथं व्याप्याः, ते च यथायथं दिव्यादिव्यतया दशेति प्रकाश्यमपि दशधेति ॥ ३२ ॥

---

( ५ ) धार्यं किमित्यत्राह—**एवं धार्यमपीति** । अन्तःकरणत्रयस्य=मनोबुद्ध्यहङ्काररूपस्य । प्राणादिलक्षणया=प्राणापानसमानोदानव्यानस्वरूपया, वृत्त्या=व्यापारेण, शरीरं धार्यं भवति । तच्च=शरीरञ्च । **पार्थिवादीति** । आदिपदात् जलीयतैजसवायवीयशरीराणामपि सङ्ग्रहो बोध्यः । तत्र पार्थिवं शरीरं मनुष्याणामस्मदादीनां पशुपक्षिप्रभृतीनाञ्च बोध्यम् । वरुण-आदित्य-वायुलोकनिवासिनाञ्च जीवानां जलीयादिशरीराणि भवन्तीति विज्ञेयम् । **पाञ्चभौतिकमिति** । पृथिव्यादिपञ्चमहाभूतानां विकारभूतमित्यर्थः । तत्र च यस्मिन् शरीरे यस्य भूततत्त्वस्य प्राधान्यं तच्छरीरं तद्भूतविनिर्मितमेवोच्यते । यथाऽस्मदादिशरीरे पृथिव्याः प्राधान्यं जलादीनाञ्च भूतानामुपष्टम्भकत्वमात्रमिति तच्छरीरं पार्थिवं शरीरं कथ्यते । एवमन्यत्रापि जलीयादिशरीरेषु जलादिभूततत्त्वानां प्राधान्याज्जलीयत्वादिव्यवहारस्तत्र जायते ।

तत्र च पार्थिवशरीरे पृथिवीसत्त्वादेव शब्दादिसत्त्वं मन्तव्यं, शब्दादीनाञ्च दिव्यादिव्यभेदेन द्वैविध्याद् धार्यं शरीरमपि दशविधमित्युपपादयति—**शब्दादीनामिति** । शब्दादितन्मात्राणाम् । समूहः=शब्दस्पर्शरूपरसगन्धतन्मात्राणां समुदायः । ते च=शब्दादयश्च पञ्च । दिव्यादिव्यतया=दिव्यादिव्यभेदेन । धार्यमपि=शरीरमपीत्यर्थः । दशधा=दशविधम् ।

एवं बुद्धीन्द्रियाणां=श्रोत्रत्वक्चक्षूरसनाघ्राणाख्यानां पञ्चज्ञानेन्द्रियाणाम् । शब्दस्पर्शरूपरसगन्धाः=स्थूलाः शब्दादिपञ्चविषयाः । यथायथं=यथाक्रमम् ।

---

( ५ ) **'एवं धार्यमपि'** इति । अर्थात् इसी प्रकार अन्तःकरण जो मन, अहंकार, बुद्धिस्वरूप तीन हैं, इन तीनों का जो प्राण, अपान आदि पाँच प्रकार के वृत्त्यात्मक व्यापार हैं, उनसे पंचविध व्यापारों से यह शरीर धार्य=धारण करने योग्य है । और यह शरीर पृथिवीतत्त्व की प्रधानता के कारण वैसे तो पार्थिव है, परन्तु पृथिवी, जल, तेज आदि पाँच तत्त्वों से विनिर्मित है, अतः पाञ्चभौतिक कहलाता है ।

**'शब्दादीनाम्'** इति । शब्दादि=शब्द, स्पर्श, रूप, रस, गन्ध ये पाँच गुणों का समूह पृथिवी है और ये पाँचों गुण दिव्य और अदिव्य के द्वैविध्य से दस हो जाते हैं तथा उनसे युक्त पृथिवी भी दस प्रकार की हो जाती है ।

इसी प्रकार श्रोत्रादि ज्ञानेन्द्रियों के यथाक्रम—शब्द, स्पर्श, रूप, रस, गन्ध ये व्याप्य हैं और ये शब्दादि पाँच सूक्ष्म देवताओं के दिव्य होते हैं, और पाँच स्थूल अदिव्य हम लोगों के हैं, वे सब मिलकर दस हो जाते हैं तथा प्रकाश्य भी दिव्य और अदिव्य भेद से दस प्रकार के हैं ॥ ३२ ॥

त्रयोदशविधकरणेऽवान्तरविभागं करोति—

**अन्तःकरणं त्रिविधं दशधा बाह्यं त्रयस्य विषयाख्यम् ।**
**साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम् ॥ ३३ ॥**

( १ ) 'अन्तःकरणम्' इति । अन्तःकरणं त्रिविधम्—'बुद्धिरहङ्कारो मनः' इति । शरीराभ्यन्तरवर्तित्वादन्तःकरणम् । 'दशधा बाह्यं'—करणं 'त्रयस्य'—अन्तःकरणस्य 'विषयाख्यम्'—विषयमाख्याति विषयसङ्कल्पाभिमानाध्यवसायेषु कर्त्तव्येषु द्वारी भवति ।

---

व्याप्याः=प्रकाश्याः । ते च=तेऽपि शब्दादयः पञ्च । दिव्यादिव्यतया=देवानां दिव्याः=अलौकिकाः, अस्मदादीनामदिव्या लौकिकाः, तद्भेदेन । दश । इति=हेतोः । प्रकाश्यमपि । दशधा भवतीति ॥ ३२ ॥

**अन्वयः**—अन्तःकरणं त्रिविधं दशधा बाह्यं त्रयस्य विषयाख्यं बाह्यं साम्प्रतकालम् आभ्यन्तरं करणं त्रिकालम् ।

( १ ) अवान्तरविभागमाह—**अन्तःकरणमिति** । शरीराभ्यन्तरवर्तित्वादन्तःकरणम्—शरीरस्य=स्थूलशरीरस्य, आभ्यन्तरं=यत् हृदयकमलं, तत्र विद्यमानत्वात्, अन्तःकरणं=बुद्धि-अहकारमनसामन्तःकरणमिति संज्ञा, अन्तर्वर्तमानं यत् करणं तदन्तःकरणमिति व्युत्पत्तेः । बाह्यम्=बहिर्वस्तुमात्रावगाही । विषयाख्यम्—विषयं=घटपटादिकम्, आख्याति=कथयति, तत्तद् घट-पटादिविषयसम्बन्धि सङ्कल्पादिव्यापारं जनयतीति तु परमार्थः । अर्थात् मनोबुद्धि-अहङ्कारस्वरूपाय अन्तःकरणत्रयाय बाह्यकर-

---

**'त्रयोदशविधकरणे'** इति । अर्थात् पाँच ज्ञानेन्द्रिय, पाँच कर्मेन्द्रिय तथा मन, बुद्धि, अहङ्कार तीन ये है । इस प्रकार त्रयोदशविधकरण में अवान्तर विभाग करते है—**'अन्तःकरणं त्रिविधम्'** इति ।

**कारिकार्थ**—मन, बुद्धि, अहंकार भेद से अन्तःकरण तीन प्रकार का है तथा बाह्य इन्द्रियाँ दश प्रकार की हैं, जो त्रिविध अन्तःकरण के विषय ( भोग्य ) हैं । बाह्य इन्द्रियाँ वर्तमान विषय को ग्रहण करती है तथा आभ्यन्तर करण ( मन, बुद्धि, अहंकार ) त्रिकाल ( भूत, भविष्य, वर्तमान ) के विषय को ग्रहण करते है ।

( १ ) अन्तःकरण तीन प्रकार का है—बुद्धि, अहङ्कार, मन; ये तीनों शरीर के आभ्यन्तरवर्ती=अन्दर रहने के कारण 'अन्तःकरण' कहलाते है । और दस प्रकार का बाह्यकरण है—पाँच ज्ञानेन्द्रिय, पाँच कर्मेन्द्रिय । ये बाह्यकरण तीनो अन्तःकरणों को विषय प्रदान करते हैं—'विषयमाख्याति=ददाति, इति विषयाख्यम्' । अर्थात् विषयो के विषय मे होने वाले जो संकल्प, अभिमान तथा निश्चयरूप व्यापार हैं, उन्हें सम्पन्न करने में ये बाह्यकरण विषय-समर्पक बनते हैं । अर्थात् बाह्यकरण ही मन, अहङ्कार, बुद्धि ये तीनों अन्तःकरण जब अपने-अपने संकल्प, अभिमान, अध्यवसायरूप व्यापारों

( २ ) तत्र बुद्धीन्द्रियाण्यालोचनेन, कर्मेन्द्रियाणि तु यथास्वं व्यापारेण।

बाह्यान्तरयोः करणयोर्विशेषान्तरमाह—'साम्प्रतकालम्' इति। वर्तमानकालं बाह्यमिन्द्रियम्। वर्तमानसमीपमनागतमतीतमपि वर्तमानम्, अतो वागपि वर्तमानकालविषया भवति।

---

णमेव विषयं ददातीति विषयप्रदानेनैव बाह्यकरणं मनःप्रभृतीनि अन्तःकरणानि सव्यापाराणि प्रकुर्वन्तीत्यर्थः। तदुक्तम्—विषयसङ्कल्पेति। द्वारीभवति=दशधा बाह्यं करणमन्तःकरणत्रयाय विषयसमर्पकत्वेन द्वारीभवतीति निष्कर्षः।

( २ ) विषयसमर्पकत्वं दर्शयति—तत्र बुद्धीन्द्रियाणीति। तत्र=दशविधकरणेषु मध्ये। बुद्धीन्द्रियाणि=चक्षुरादिज्ञानेन्द्रियाणि। आलोचनेन=आलोचनात्मकेन व्यापारेण। कर्मेन्द्रियाणि=वागादीनि। यथास्वं व्यापारेण=स्वकीयेन स्वकीयेन व्यापारेण। अर्थाद् वागिन्द्रियं वचनजनकत्वात्, पाणिः आदानप्रदानजनकत्वात्, पादः भ्रमणजनकत्वात्, पायुः उत्सर्गजनकत्वात्, उपस्थश्च आनन्दजनकत्वाद् द्वाराणि भवन्ति। तज्जन्यत्वे सति तज्जन्यजनकत्वस्यैव व्यापारत्वात्।

व्यापारव्यापारित्वरूपं भेदं प्रदर्श्येदानीं विशेषान्तरमप्याह—साम्प्रतकालमिति। साम्प्रतकालो विषयो यस्य तत् ( इन्द्रियं ) साम्प्रतकालम्=वर्तमानकालमित्यर्थः, तच्च चक्षुरादिबाह्येन्द्रियम्, अर्थात् बाह्येन्द्रियं केवलं वर्तमानकालीनमेव विषयं गृह्णाति। वर्तमानेति। वर्तमानकालसमीपस्थो भूतकालोऽनागतकालोऽपि च वर्तमानकाल एव। अत एव 'कदाऽऽगतोऽसि' इति पृष्टे सति 'इदानीमेव आगच्छामि' इति ब्रूते, अत्राऽनागते काले वर्तमानकालस्य प्रयोगो दृश्यते। एवं 'कदा गमिष्यति' इत्युक्ते 'इदानीमेव गच्छामि' इत्यनेनाऽनागतकालेऽपि वर्तमानकालः प्रयुज्यते। अतः पाणिनिसूत्रोक्तमपि सङ्गच्छते—'वर्तमानसामीप्ये वर्तमानवद्वा' इति, अतो वागपि=वागिन्द्रियमपि। वर्तमानकालविषया=वर्तमानकालीनविषयग्राहिका=स्वसमानकालवृत्तिविषयतया व्यवहारयोग्येत्यर्थः।

---

को करते हैं, तब उन व्यापारों के करने में द्वार बनते हैं और तीनों अन्तःकरण द्वारी बनते हैं।

( २ ) 'तत्र बुद्धीन्द्रियाणि' इति। उन दशविधकरणों में बुद्धीन्द्रियाँ=ज्ञानेन्द्रियाँ आलोचन=विषयप्रकाशन रूप व्यापार के द्वारा सहायक बनती हैं। कर्मेन्द्रियाँ वचन, आदान आदि व्यापारों के द्वारा सहायक होती हैं।

'बाह्यान्तरयोः करणयोर्विशेषान्तरमाह' इति। द्वारद्वारीभाव के रूप में बाह्य और आभ्यन्तर दोनों करणों में एक विशेष=भेद दिखलाकर विशेषान्तर और दिखला रहे हैं—'साम्प्रतकालमिति'। अर्थात् दशविध बाह्य इन्द्रिय साम्प्रतकाल अर्थात् वर्तमानकालीन विषयों को ग्रहण करती हैं। वर्तमानकाल के समीपवर्ती अनागत तथा अतीतकाल भी वर्तमान है। अर्थात् वर्तमानकाल के समीप ठीक अनागत काल तथा ठीक बाद का अतीत काल भी वर्तमान काल है। अतः 'वाग्' इन्द्रिय भी वर्तमानकालीन विषय को ग्रहण करने वाला बाह्यकरण है।

(३) 'त्रिकालमाभ्यन्तरं करणम्' इति। तद्यथा—नदीपूरभेदादभूद् वृष्टिः; अस्ति धूमादग्निरिह नगनिकुञ्जे, असत्युपघातके पिपीलिकाण्डसमुञ्चरणाद्भविष्यति वृष्टिरिति, तदनुरूपाश्च सङ्कल्पाभिमानाध्यवसाया भवन्ति।

---

( ३ ) त्रिकालमाभ्यन्तरमिति। आभ्यन्तरं करणम्=मनोबुद्धयादयः। त्रिकालम्=कालत्रयवृत्तिपदार्थग्राहकाः। भवन्तीति शेषः। तत्र अतीतविषयकमनुमानमाह—नदीपूरभेदादिति। पूरः=पूर्णत्वं, तथा च नद्याः पूर्णत्वं दृष्ट्वा, स्रोतसः शीघ्रत्वञ्च दृष्ट्वा, नद्या उपरि भागे—'वृष्टिः अभूत् नदीपूरभेदात्' इत्यनुमिनोति। तथा च जलावरोधभङ्गादपि नद्याः पूर्णत्वस्य कदाचिज्जायमानत्वेन स्फुटतरो व्यभिचारः, अतस्तद्वारणाय हेतुतावच्छेदककुक्षौ भेदपदं दत्तम्, नदीपूरविशेषादिति च तदर्थः। अत्रानुमाने करणानां सम्बन्धमपि दर्शयति—यत् चक्षुरादीन्द्रियैः नद्याः पूर्णत्वदर्शनानन्तरं मनः सङ्कल्पयति—'यत्र नदीपूर्णत्वविशेषस्तत्र वृष्टिः' ( इदमेव=इयं नदी पूर्णत्वविशेषाद् वृष्टिमती ), तदनन्तरमहङ्कारः स्वाभिमानवृत्तिरूपं परामर्शं विधत्ते—'वृष्टिरूपसाध्यव्याप्यपूर्णत्वविशेषरूपहेतुमती चेयं नदी', तदनन्तरञ्च अध्यवसायस्वरूपाऽनुमितिरूपावृत्तिरुदेति—'वृष्टिरभूत्' इत्यादि।

वर्तमानकालविषयमनुमानमाह—अस्ति धूमादिति। इह=अस्मिन्। नगनिकुञ्जे—नगस्य=पर्वतस्य, निकुञ्जे=वृक्षलतादिभिराच्छादिते प्रदेशे। अग्निरस्ति, धूमात्, तथा च पर्वतो वह्निमान् धूमात् इत्यनुमानं फलितम्। अत्रापि पूर्ववत् ज्ञानेन्द्रियेण चक्षुषा धूमदर्शनानन्तरं मनः सङ्कल्पयति 'यत्र यत्र धूमस्तत्र तत्राग्निः', तदनन्तरमहङ्कारेणाऽभि-

---

( ३ ) 'त्रिकालमाभ्यन्तरम्' इति। अर्थात् आभ्यन्तरकरण कालत्रयवर्ती विषयों को ग्रहण करने वाले हैं। इस विषय में प्रथम अतीत विषय सम्बन्धी अनुमान दिखलाते हैं—इयं नदी=उपरिदेशावच्छेदेन भूता या वृष्टिस्तद्वती=बहुतरफेनकाष्ठमद्रजस्वलशीघ्रगामिप्रवाहवत्त्वात् वर्षाकालीन अतीतवृष्टयवच्छिन्ननद्यन्तरवत्'। इस अनुमान में पक्षीभूत नदी के वेग को जब हम आँखों से देखते है, तब उसके बाद ही मन संकल्प करता है कि 'यत्र=नद्यां तादृगशीघ्रगामिप्रवाहरूपो वेगविशेषः=पूरविशेषस्तत्र तत्र नद्यामुपरिदेशावच्छेदेनाऽतीतवृष्टिमत्त्वमवश्यमस्ति'। इसके पश्चात् अहङ्कार के द्वारा अभिमानवृत्तिस्वरूप परामर्श होता है कि तादृश वृष्टिव्याप्य जो तादृशप्रवाहरूप पूरविशेषात्मक वेग वाली यह नदी है। इसके अनन्तर बुद्धि के द्वारा उसी नदीभूतपक्ष में पूर्वोक्त वृष्टि की अनुमिति होती है। अनुमिति को ऊपर बतला चुके हैं।

'अस्ति धूमादग्निः' इति। अब तीनों करणों के वर्तमानकालीन व्यापारों का अनुमान से विवेचन करते हैं—प्रथम क्षण में जो व्यक्ति धूम को देखता है, द्वितीय क्षण में वह मन से संकल्प करता है—'यत्र यत्र धूमस्तत्र तत्र वह्निः', फिर तृतीय क्षण में अहङ्कार 'वह्निव्याप्यधूमवानयमेव पर्वतः' इस परामर्शात्मकरूप से अभिमान करता है, इसके पश्चात् बुद्धि चतुर्थ क्षण में 'पर्वतो वह्निमान्' इत्याकारक अनुमित्यात्मक

( ४ ) कालश्च वैशेषिकाभिमत एको न अनागतादिव्यवहारभेदं प्रवर्तयितुमर्हति । तस्मादयं यैरुपाधिभेदैरनागतादिभेदं प्रतिपद्यते, सन्तु त एवोपा-

---

मानः क्रियते । 'वह्निव्याप्यधूमवानयं पर्वतः', ततश्चतुर्थक्षणेऽध्यवसायस्वरूपा 'पर्वतो वह्निमान्' इत्यनुमितिरूपा वृत्तिर्जायते ।

अनागतविषयमनुमानं दर्शयति—असत्युपघातके इति । शलाकादिना जायमानमुपघातजन्यं पिपीलिकाण्डसञ्चरणं नास्ति वर्षामूलकारणमत उक्तम्—असत्युपघातके इति । अर्थाद् वृष्टिलिङ्गे महाभूतक्षोभे सति भौमेन ऊष्मणा क्वथ्यमानाः पिपीलिका यदि भूमिविलाऽन्तःस्थितान्यण्डान्युपरिष्टान्नयन्ति तदा वृष्टिलिङ्गेन पिपीलिकाण्डसञ्चरणेनाऽनागतकालीनाया वृष्टेरनुमानं जायते—'वृष्टिः भविष्यति असत्युपघातके पिपीलिकाण्डसञ्चरणात्' । अत्रापि—तदनुकूलाश्चेति । तदनुरूपाश्च=तत्तदतीताद्यनुगुणा इत्यर्थः । सङ्कल्पाभिमानाध्यवसायाः=मनःप्रभृतीनां प्रागुक्ताः सङ्कल्पादयः । भवन्ति =जायन्ते ।

( ४ ) पञ्चविंशतितत्त्वातिरिक्तकालोऽपि सांख्याचार्यैः स्वीकृत इति तु नाशङ्कनीयं यतस्तस्योपाधावन्तर्भावादित्येवाह—कालश्चेति । वैशेषिकाभिमतः=वैशेषिकनये स्वीकृतः । 'अपरस्मिन्नपरं युगपच्चिरं क्षिप्रमिति काललिङ्गानि' इति वैशेषिकसूत्रकथितः कालोऽतीतादिव्यवहारभेदं जनयितुं नार्हति, तस्यैकत्वात् । वैशेषिकनये काल

---

अध्यवसाय करती है । पर्वत का पर्वतत्वरूप से=पर्वत के रूप में, उल्लेख न कर नगनिकुञ्जत्व रूप से उल्लेख कर रहे हैं ।

अव भविष्यत्कालीन व्यापारों का अनुमानतः विवेचन करते हैं—'असत्युपघातके' इत्यादि ग्रन्थ से । अर्थात् किसी शलाकाप्रभृति उपघातक विशेष के न होने पर 'महाभूतसंक्षोभ' रूप कारण से जव भी पिपीलिकाएँ=चीटियाँ अपने-अपने अण्डों को लेकर विलों से वाहर निकलती हैं और संचरण करती हैं, तव उस पिपीलिकाण्डसञ्चरण से भविष्यत्कालीन वृष्टि का मन संकल्प करता है कि वृष्टि अवश्य ही होगी । इसके पश्चात् शलाका आदि का यदि कोई उपघात=उपद्रव नहीं होता है, तव पिपीलिकाण्डसंचरण ही भविष्यत्कालीन वृष्टि का कारण है, यह अभिमान अहङ्कार करता है । इसके अनन्तर इस कुछ ही लम्वायमान काल में अवश्य ही वृष्टि होगी, इस रूप से वुद्धि 'अध्यवसाय' करती है । इस प्रकार मन आदि के अतीत आदि कालों के अनुरूप ही संकल्प, अभिमान आदि व्यापार होते हैं ।

( ४ ) 'कालश्च' इति । वैशेषिक लोग काल को एक अखण्ड दण्डायमान के रूप में मानते हैं, उस एक काल में अनागत आदि भेद व्यवहार कैसे वन सकता है । इसलिए यह काल जिन भिन्न-भिन्न उपाधियों से अर्थात् उस एक ही नित्य अखण्ड दण्डायमान काल में अतीत सूर्यक्रियासम्वन्धात्मक उपाधि के कारण सोपाधिक होने से 'अतीतत्व' रहता है, जिससे उसकी संज्ञा 'अतीतकाल' हो जाती है । ऐसे ही वर्तमान सूर्यक्रियासम्वन्धरूपोपाधि के कारण उपाध्यवच्छिन्न होने से 'वर्तमानत्व' रहता है,

धयः येऽनागतादिव्यवहारहेतवः, कृतमत्राऽन्तर्गडुना कालेनेति साङ्ख्याचार्याः। तस्मान्न कालरूपतत्त्वान्तराभ्युपगम इति ॥ ३३ ॥

---

एको नित्यो दण्डायमान एवाऽङ्गीकृतः, स चाऽनागतादिभेदव्यवहारं जनयितु सर्वथाऽक्षमः।

तात्त्विकदृष्टया विचार्यमाणे कालस्यैकतां सर्वेऽपि दार्शनिकास्तदितराश्च स्वीकुर्वन्ति, भेदस्तु केवलमौपाधिकः। यथा वर्तमानकालीनभगवद्भास्करक्रियासम्बन्धात्मकेनोपाधिना 'अयं वर्तमानकालः' इति व्यवहारो जायते। एवमनागतसूर्यक्रियासम्बन्धात्मकेनोपाधिना, अयं भविष्यत्कालः=अनागतकालो वेति व्यवह्रियते। तथैवाऽतीतकालीनसूर्यकिरणसम्बन्धोपाधिमादाय 'अयमतीतकालः' इति च व्यवहारो भवति। इत्थञ्च भिन्नभिन्नक्रियोपाधिभेदवलादेव एकः कालो भिद्यते। अत्र प्रशस्तपादाचार्यसम्मतिमाह—'एकत्वेऽपि सर्वकार्याणाम् आरम्भक्रियाभिनिर्वृत्तिस्थितिनिरोधोपाधिभेदात् मणिवत् पाचकादिवद् वा नानात्वोपचारः'—प्रशस्तपादभाष्यम्। अस्यार्थः—आरम्भः=उपक्रमः, क्रियाभिनिर्वृत्तिः क्रियाया अभिनिर्वृत्तिः—समाप्तिः, स्थितिः स्वरूपतोऽवस्थानम्, निरोधः=विनाशः, एतेपामुपाधीनां भेदवशान्नानात्वव्यपदेशो जायते। उपाधिभेदवशाद् भेदश्चाऽनुभूयते—'अयं ज्येष्ठः, अयं कनिष्ठ' इत्यादिना। वहुतरसूर्यक्रियावच्छिन्नकालपिण्डसंयोगाज्ज्येष्ठत्वं व्यवह्रियते, अल्पतरसूर्यपरिस्पन्दावच्छिन्नकालपिण्डसंयोगाच्च कनिष्ठत्वमिति। अत्र न्यायवार्तिककाराणामपि सम्मतिमाह—'यथा एकस्मिन् पुरुषे अनेकसम्बन्धभेदानुविधायिनि अभिन्ने 'पिता पुत्रो भ्राता' इति प्रत्यया भवन्ति, तद्वद् एकः कालः कार्यकारणविशेषापेक्षः परापरादिप्रत्ययहेतुः' इति।

एतत्कालतत्त्वस्य तत्त्वान्तरत्वं निराकुर्वन्ति सांख्याचार्याः—**तस्मादयं यैरुपाधिभेदैरिति**। यस्मात् कारणादेकः कालोऽनागतादिभेदव्यवहारं जनयितुं नार्हति, तस्मादयं=कालः, यैरुपाधिभेदैः=प्रागुक्तकार्यारम्भस्थितिकार्यनिरोधादिस्वरूपैः। अनागतादिव्यवहारभेदम्=प्रागुक्तम् 'अयमनागतः कालः' 'अयं वर्तमानकालः' इत्यादिव्यवहारविशेषम्। प्रतिपद्यते=प्राप्नोति, 'अयं कालः' इति योजनीयम्। त एवोपाधयः=अनागतादिव्यवहारहेतुभूता उपाधय इत्यर्थः। कृतम्=व्यर्थम्। अन्तर्गडुना=निरर्थ-

---

जिससे उसकी संज्ञा 'वर्तमानकाल' हो जाती है। और अनागत सूर्यक्रियासम्बन्धरूपोपाधिवशात् उसमें 'अनागतकाल'=भविष्यत्काल यह व्यवहार होता है। इसी प्रकार और भी बहुत-सी उपाधियाँ हैं, जिन उपाधियों के भेदनिवन्धन उस एक, नित्य तथा अखण्डकाल के अनागत आदि खण्ड खण्डात्मक रूप हो जाते हैं।

'सन्तु त एवोपाधयः' इति। सांख्याचार्यों का कहना है कि जो उपाधियाँ उस अखण्ड लम्बायमान काल में अतीत, वर्तमान आदि भेदव्यवहार का कारण हैं, उन उपाधियों को ही मान लिया जाय; फिर क्या आवश्यकता है पञ्चविंशति तत्त्वों से भिन्न=निरर्थक एक 'कालतत्त्व' को स्वीकार करने की? इसलिए सांख्य का कहना है कि सूर्यक्रिया ही काल है, और वह सूर्यक्रिया सर्वतोभावेन समस्त शास्त्रज्ञों

साम्प्रतकालानां वाह्येन्द्रियाणां विषयं विवेचयति—

**बुद्धीन्द्रियाणि तेषां पञ्च विशेषाविशेषविषयाणि ।**
**वाग्भवति शब्दविषया शेषाणि तु पञ्चविषयाणि ।। ३४ ।।**

( १ ) 'बुद्धीन्द्रियाणि' इति । 'बुद्धीन्द्रियाणि' तेषां दशानामिन्द्रियाणां मध्ये 'पञ्च', विशेषाविशेषविषयाणि—विशेषाः स्थूलाः शब्दादयः शान्तघोरमूढरूपाः पृथिव्यादिरूपाः, अविशेषास्तन्मात्राणि सूक्ष्माः शब्दादयः ।

( २ ) मात्रग्रहणेन स्थूलभूतमपाकरोति । विशेषाश्च अविशेषाश्च

---

केन । इत्थञ्च सांख्यमतपौर्वापर्यक्रमपर्यालोचनेनेदमेवाऽऽयाति यत्तेषां नये सूर्यादिक्रियैव कालः, तस्याश्च क्रियायाः क्लृप्तपदार्थरूपत्वान्न कालतत्त्वस्य पदार्थान्तरकल्पनेति भावः ।। ३३ ।।

अन्वयः—तेषां पञ्च बुद्धीन्द्रियाणि विशेषाविशेषविषयाणि वाक् शब्दविषया भवति शेषाणि तु पञ्च विषयाणि ( भवन्ति ) ।

( १ ) ज्ञानेन्द्रियकर्मेन्द्रिययोर्विषयं विवेचयति—**बुद्धीन्द्रियाणि** इत्यादिना । बुद्धीन्द्रियाणि=ज्ञानेन्द्रियाणि=श्रोत्रत्वक्चक्षूरसनाघ्राणाख्यानीत्यर्थः । विशेषाविशेषविषयाणि=स्थूलसूक्ष्मशब्दादिविषयवन्ति । स्थूलशब्दादयः कथं विशेषाः कथ्यन्ते इत्यत आह—**शान्तघोरेति** । पृथिव्यादिस्वरूपाः स्थूलशब्दादयः सन्ति शब्दादितन्मात्राणां परिणामभूताः यतस्ते शान्तघोरमूढस्वरूपा अत एव ते विशेषाः । तत्र विपञ्च्यादीनां ध्वनिरूपः शब्दः शान्तः, मेघादीनां घोरः, व्याघ्रादीनां मूढः । अविशेषपदार्थमाह—**तन्मात्राणीति** ।

( २ ) ननु स्थूलशब्दादीनां 'विशेष'शब्दवाच्यानामिन्द्रियवेद्यत्वं सर्वजनसिद्धं,

---

से निश्चित एक पदार्थ है, तब फिर पदार्थान्तर के रूप में 'कालतत्त्व' की कल्पना व्यर्थ है ।। ३३ ।।

अब साम्प्रतकालीन विषयों वाली जो दशविध वाह्येन्द्रियाँ हैं, उनके विषयों का विवेचन करते हैं—'बुद्धीन्द्रियाणि' इति ।

**कारिकार्थ**—उन वाह्य इन्द्रियों के मध्य में पाँच ज्ञानेन्द्रियाँ विशेषाविशेष उभयविध विषयों को ग्रहण करती हैं । और कर्मेन्द्रियों के मध्य में वाक् शब्द को ग्रहण करती हैं । शेष पाणि-पादादि भी शब्द-स्पर्शादि युक्त पदार्थों को ग्रहण करती हैं ।

( १ ) उन दश इन्द्रियों=ज्ञानेन्द्रिय तथा कर्मेन्द्रियों के मध्य में पाँच जो ज्ञानेन्द्रियाँ =बुद्धीन्द्रियाँ हैं, वे विशेष और अविशेष दोनों को अर्थात् विशेष=स्थूलशब्दादि से स्थूलगन्धपर्यन्त जो शान्त, घोर, मूढ़=सुख-दुःख-मोहस्वरूप हैं; तथा पृथिवी आदि रूप हैं, उन्हें विषय करती हैं । तथा अविशेष=तन्मात्र=सूक्ष्म शब्द, स्पर्श, रूप, रस, गन्ध हैं, उन्हें भी बुद्धीन्द्रियाँ विषय करती हैं ।

( २ ) **'मात्रग्रहणेन'** इति । तन्मात्र'गत' मात्र पद से स्थूलभूतों का पृथिव्यादि

विशेषाविशेषाः, त एव विषया येषां बुद्धीन्द्रियाणां तानि तथोक्तानि । तत्रोर्ध्वस्रोतसां योगिनाञ्च श्रोत्रं शब्दतन्मात्रविषयं स्थूलशब्दविषय च, अस्मदादीनां तु स्थूलशब्दविषयमेव । एवं तेषां त्वक् स्थूलसूक्ष्मस्पर्शविषया, अस्मदादीनां तु स्थूलस्पर्शविषयैव । एवञ्चक्षुरादयोऽपि तेषामस्मादादीनां च रूपादिषु सूक्ष्मस्थूलेषु द्रष्टव्याः ।

( ३ ) एवं कर्मेन्द्रियेषु मध्ये 'वाग्भवति शब्दविषया'—स्थूलशब्दविषया,

---

परन्तु शब्दादितन्मात्राणामविशेषशब्दवाच्यानां कथमिन्द्रियग्राह्यत्वमित्यत्राह—**तत्रोर्ध्वस्रोतसामिति** । तत्र=विशेषाविशेषविषयेन्द्रियाणां मध्ये । ऊर्ध्वस्रोतसाम्—ऊर्ध्वं=उपर्येव=न कदाचिदप्यधः, स्रोतः=रेतःस्रोतो येषान्ते सनक-सनन्दन-भीष्मप्रभृतयो नैष्ठिकाश्च, भीष्मादयो ब्रह्मचारिणस्तेषामित्यर्थः, अष्टविधमैथुनेच्छाऽत्यन्ताभाववतामिति यावत् । योगिनाम्=अष्टाङ्गयोगयुक्तानाम् । श्रोत्रं=श्रोत्रेन्द्रियम् । शब्दतन्मात्रविषयम्=तन्मात्रात्मकं शब्दं ( सूक्ष्मं शब्दं ) विषयीकरोति, स्थूलसूक्ष्मोभयविधमेव शब्दं विषयीकरोति । **अस्मदादीनान्त्विति** । लेखकप्रभृतीनान्त्वित्यर्थः, योगीतरमानवानाम् अष्टविधमैथुनेच्छावतामिति यावत् । स्थूलशब्दविषयम् । श्रोत्रमिति शेषः । अर्थाद् योगीतराऽस्मदादिमानवानां श्रोत्रेन्द्रियं स्थूलशब्दमेव गृह्णातीति भावः । एवम्=तद्वत् । तेषाम्=ऊर्ध्वस्रोतसाम्, योगिनां देवानाञ्चेत्यर्थः । त्वक्=त्वगिन्द्रियम् । स्थूलसूक्ष्मस्पर्शविषया=स्थूलसूक्ष्मोभयविधस्पर्शं विषयीकरोति । **एवमिति** । तेषाम्=ऊर्ध्वस्रोतसाम्, योगिनां देवानाञ्चेत्यर्थः । चक्षुरादयोऽपि स्थूलसूक्ष्मोभयविधमेव रूपादिकं गृह्णन्ति । अस्मदादीनाञ्च स्थूलमात्रमेवेति विशेषः ।

( ३ ) कर्मेन्द्रियाणां स्वरूपं विविच्यते—**कर्मेन्द्रियेष्विति** । वाक्पाणिपादपायूपस्थाख्येषु । तद्धेतुत्वात्=स्थूलशब्दमात्रजनकत्वात् । मात्रपदव्यवच्छेद्यमाह—**न त्विति** ।

---

पञ्चभूतसमुदाय का अपाकरण=निषेध किया गया है । इस प्रकार विशेष तथा अविशेष वे हैं विषय जिन बुद्धीन्द्रियों के, वे बुद्धीन्द्रियाँ विशेष-अविशेष विषय वाली कहलाती हैं ।

'तत्रोर्ध्वस्रोतसाम्' इति । उन विशेष तथा अविशेष दोनों को विषय करने वाली इन्द्रियों में ऊर्ध्वरेता=अष्टविध मैथुनेच्छारहित देवविशेषों की श्रोत्रेन्द्रियाँ और योगी लोगों की श्रोत्रेन्द्रियाँ सूक्ष्म=तन्मात्ररूप शब्द को एवम् स्थूल शब्द को भी विषय करती है और अस्मदादि लोगों की श्रोत्रेन्द्रियाँ केवल स्थूल शब्द को ही विषय करती हैं । इसी प्रकार ऊर्ध्वस्रोताओं तथा योगियों की त्वगिन्द्रियाँ स्थूल-सूक्ष्मस्पर्शों को ग्रहण करती हैं और हम लोगों की तो केवल स्थूलस्पर्श को ही ग्रहण करती हैं । इसी प्रकार उनकी चक्षुरादि इन्द्रियाँ स्थूल-सूक्ष्म उभयविध रूप का प्रत्यक्ष करती हैं और हम लोगों की केवल स्थूल रूप का ही ।

( ३ ) 'एवं कर्मेन्द्रियेषु' इति । इसी प्रकार कर्मेन्द्रियों के मध्य 'वाक्' इन्द्रिय स्थूल शब्द को विषय करती है, कारण कि 'तद्धेतुत्वात्' वागिन्द्रिय ही अपने उच्चा-

तद्धेतुत्वात्। न तु शब्दतन्मात्रस्य हेतुस्तस्याहङ्कारिकत्वेन वागिन्द्रियेण सहैककारणकत्वात्। शेषाणि तु चत्वारि=पायूपस्थपाणिपादाख्यानि पञ्चविषयाणि पाण्याद्याहार्याणां घटादीनां पञ्चशब्दाद्यात्मकत्वात् ॥ ३४ ॥

---

वागिन्द्रियस्य शब्दतन्मात्रं प्रति कारणत्वाभावं दर्शयति—**तस्याऽऽहङ्कारिकत्वेनेति**। तस्य=शब्दतन्मात्रस्य। आहङ्कारिकत्वेन=अहङ्कारनिष्ठकारणतानिरूपितकार्यताशालित्वेन। **वागिन्द्रियेण सहैककारणकत्वादिति**। वागिन्द्रियं यादृशपदार्थनिष्ठकारणतानिरूपितकार्यतावत् शब्दतन्मात्रस्यापि तादृशत्वादित्यर्थः। तथा च वागिन्द्रियं यथाऽहङ्कारजन्यं शब्दतन्मात्रमपि तथैवाऽहङ्कारजन्यम् इत्यनयोर्नास्ति परस्परं कार्यकारणभावसम्भवः, लोकेऽपीदमेवानुभवामः, यदेककारणकयोः=एकस्मात्कारणादुत्पन्नयोः परस्परं कार्यकारणभावो नैव दृष्टिगोचरीभूतो भवतीति भावः।

शेषाणि=वागिन्द्रियं विहाय चत्वारि कर्मेन्द्रियाणि हस्तादीनि। पञ्चविषयाणि=पञ्च स्थूलशब्दादयो विषया येषान्तानीति व्युत्पत्त्या पञ्च स्थूलशब्दादीन् विषयीकरोति।

**पाण्याद्याहार्याणामिति**। पाणि( हस्तादि )कर्मेन्द्रियैर्ग्राह्याणामित्यर्थः। तथा च कार्यकारणयोरभेदाद् हस्तेनाऽऽहरणयोग्यस्य घट-पटादेः शब्दस्पर्शरूपरसगन्धात्मकत्वमनुभूतये सांख्यैः। पादेन भ्रमणादिक्रियाधारस्याऽऽहरणयोग्यस्य भूतलादेः शब्दाद्यात्मकत्वमनुभूयते। एवमेतद् द्वयातिरिक्ताभ्यां पायु-उपस्थरूपकर्मेन्द्रियाभ्यामाहार्यस्यापि विषयस्य शब्दादि पञ्चात्मकत्वं विज्ञेयम्। इत्थञ्च वागिन्द्रियस्यैव केवलं शब्दमात्रविषयात्मत्वम्, अन्यासां चतुर्णामिन्द्रियाणां हस्तादि उपस्थान्तानां कर्मेन्द्रियाणां शब्दादि पञ्चविषयात्मत्वं बोध्यमेतावानेव विशेषः।

तथा च वागिन्द्रियं विहायाऽन्यानि चत्वार्येव 'पाणि'-आदि कर्मेन्द्रियाणि यैर्घट-पटादिविषयैः सह सम्बन्धमादानप्रदानरूपं कुर्वन्ति ते सर्वेऽपि घट-पटादयो विषयाः शब्दादितन्मात्रस्वरूपाः सन्ति, शब्दादितन्मात्रेभ्य एव भूतपदार्थानां घट-पटादीनामुत्पत्तिदर्शनादित्यर्थः। कार्यकारणयोरभेदाच्च। केवलं वागेव शब्दमात्रं विषयीकुरुते, वागतिरिक्तानि चत्वारि कर्मेन्द्रियाणि पञ्चविषयाणि भवन्तीति भावः ॥ ३४ ॥

---

रणरूप व्यापार के द्वारा उस स्थूल शब्द की हेतु=कारण है, न कि शब्दतन्मात्र=सूक्ष्म शब्द की वह कारण है, क्योंकि उस वागिन्द्रिय का सात्त्विक उपादानकारण अहङ्कार है और शब्दतन्मात्र=सूक्ष्म शब्द का भी कारण सात्त्विक अहङ्कार ही है, अतः दोनों समानकालोत्पत्तिक होने के कारण पौर्वापर्यक्रम विवर्जित हैं, इसलिए परस्पर में कार्य-कारण ही नहीं बनता है।

'शेषाणि तु' इति। शेष='वाक्' इन्द्रिय को छोड़कर पायु, उपस्थ, पाणि, पाद नामक चारों कर्मेन्द्रियाँ शब्द, स्पर्श, रूप, रस, गन्ध, इन पाँच स्थूल विषय वाली होती हैं, कारण कि पाणि आदि से आहार्य=ग्राह्य घट-पट आदि पदार्थ स्थूल शब्द, स्पर्श, रूप, रस, गन्ध इन पाँच गुणों से सर्वथा सम्बद्ध होते हैं ॥ ३४ ॥

( १ ) साम्प्रतं त्रयोदशसु करणेषु केषाञ्चिद् गुणभावं केषाञ्चित् प्रधानभावं सहेतुकमाह—

**सान्तःकरणा बुद्धिः सर्वं विषयमवगाहते यस्मात् ।**
**तस्मात् त्रिविधं करणं द्वारि द्वाराणि शेषाणि ॥ ३५ ॥**

( २ ) 'सान्तःकरणा' इति । द्वारि प्रधानम् । 'शेषाणि' करणानि; वाह्येन्द्रियाणि द्वाराणि । तैरुपनीतं सर्वं विषयं समनोऽहङ्कारा बुद्धिर्यस्मादवगाहतेऽध्यवस्यति, तस्माद् वाह्येन्द्रियाणि द्वाराणि, द्वारवती च सान्तःकरणा बुद्धिरिति ॥ ३५ ॥

---

अन्वयः—यस्मात् सान्तःकरणा बुद्धिः सर्वं विषयम् अवगाहते, तस्मात् त्रिविधं करणं द्वारि शेषाणि द्वाराणि ।

( १-२ ) त्रयोदशविधकरणानां मध्ये कानि करणानि गौणानि कानि च प्रधानानीति विचार्यते—सान्तःकरणा इति । अत्र अन्तःकरणपदेन मनोऽहङ्कारयोरेव ग्रहणं, ताभ्यां सहिता बुद्धिः=तृतीयमन्तःकरणम् । द्वारि=प्रधानम् । कानि च पुनः द्वाराणि इत्यत आह—शेषाणीति । वाह्येन्द्रियाणीत्यर्थः । द्वाराणि=व्यापारभूतानि=उपकारकाणि=अप्रधानानीत्यर्थः । तदेव सहेतुकमाह—तैरुपनीतम्—तैः=वाह्येन्द्रियैः, उपनीतम्=उपस्थापितम् । सर्वम्=समस्तं सांसारिकम् । विषयं=वस्तु=पदार्थजातम् । समनोऽहङ्कारा=मनोऽहङ्कारसहिता । बुद्धिः=महत्तत्त्वम् । यस्मात्=यस्मात्कारणात् । अवगाहते=अध्यवस्यति=निश्चिनोति । अर्थात् मनसा सङ्कल्पितमहङ्कारेण चाभिमतमेवाऽर्थं बुद्धिः निश्चिनोति, अयञ्च निश्चयात्मको व्यापारोऽन्तिमो व्यापारः, इममन्तिमं व्यापारं बुद्धिरेव सम्पादयति, इत.परं किमपि व्यापारान्तरं नहि जायते, अत एव सर्वेषां व्यापाराणां परम्परया पर्यवसानं बुद्धावेव भवतीति बुद्धिः केवलं द्वारवती च गीयते । मनोऽहङ्कारौ द्वारभूतौ सन्तौ द्वारिणी अप्यस्तः, अतो मनोऽहङ्का-

---

( १ ) अव तेरह करणों=पाँच ज्ञानेन्दिय, पाँच कर्मेन्द्रिय, तीन अन्तःकरण में से कुछ करणों=दस वाह्यकरणों के गुणभाव=गौणरूपता=उपकारभाव=द्वारत्व और कुछ मन, अहङ्कार, बुद्धि, इन तीन अन्तःकरणों के प्रधानभाव=प्रधानता को सहेतुक कहते हैं—'सान्तःकरणा बुद्धिः' इत्यादि कारिका से ।

कारिकार्थ—यस्मात्=जिस कारण से मन, अहङ्कार सहित=सान्तःकरण बुद्धि, त्रिकालवृत्ति समस्त विषयों का निश्चय करती है । तस्मात्=इस कारण से त्रिविध अन्त.करण=मन, बुद्धि एवं अहङ्कार द्वारि=व्यापारवाले हैं । और शेषाणि=शेष दस वाह्यकरण द्वाराणि=व्यापार हैं ।

( २ ) द्वारी=प्रधान शेष=करण वाह्य चक्षुरादि वाह्य इन्द्रियाँ द्वार=व्यापार हैं । क्योंकि चक्षुरादि वाह्येन्द्रियों द्वारा उपनीत=प्राप्त समस्त घट-पटादि विषयों को मन और अहङ्कार के सहित बुद्धि जिस कारण से निश्चित करती है,

( १ ) न केवलं वाह्येन्द्रियाण्यपेक्ष्य प्रधानं बुद्धिः, अपि तु येऽप्यहङ्कार-मनसी द्वारिणी, तेऽप्यपेक्ष्य बुद्धिः प्रधानमित्याह—

**एते प्रदीपकल्पाः परस्परविलक्षणा गुणविशेषाः ।**
**कृत्स्नं पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति ।। ३६ ।।**

( २ ) 'एते' इति । यथाहि—ग्रामाध्यक्षः कौटुम्बिकेभ्यः करमादाय

---

रयोर्द्वारित्वं द्वारित्वं चोभयमेव वर्तते इति विज्ञेयम् । वाह्येन्द्रियाणि च केवलं द्वाराण्येव भवन्ति ।। ३५ ।।

( १ ) कारिकाया अवतरणमाह—**न केवलमिति** । वाह्येन्द्रियाण्यपेक्ष्य = वाह्येन्द्रियाणामपेक्षया । अपि तु अहङ्कारमनसी ये द्वारिणी स्तः तेपामपेक्षयापि बुद्धिः प्रधानम्, अर्थात् बुद्धिः द्वादशकरणानाम् ( दश वाह्येन्द्रिय, द्वे अहङ्कारमनसाम् ) अपेक्षयापि बुद्धेः प्रधानत्वात् बुद्धिः सर्वापेक्षया प्रधानभूताऽस्तीति दर्शयति—**एते इति** ।

**अन्वयः**—एते परस्परविलक्षणः गुणविशेपाः प्रदीपकल्पाः पुरुपस्य कृत्स्नम् अर्थं प्रकाशं बुद्धौ प्रयच्छन्ति ।

दशविधश्रोत्रेन्द्रियमनोऽहङ्काराः । परस्परविलक्षणाः = परस्परं विरुद्धाः । गुण-विशेपाः = सत्त्वादिगुणानां विकारभूताः । प्रदीपकल्पाः = दीपकसदृशाः । सन्तीति शेपः । पुरुपस्य = आत्मनश्चेतनस्य । कृत्स्नम् = समस्तम् । अर्थम् = सांसारिकं विपयजातम् । प्रकाश्य = प्रकाश्यं नीत्वा । बुद्धौ = महत्तत्त्वे । प्रयच्छन्ति = परम्पराक्रमेण समर्पयन्ति, दशविधवाह्येन्द्रियाणि मनसे विपयान् समर्पयन्ति, मनश्चाहङ्काराय, अहङ्कारश्च बुद्धयै, इति बुद्धिः सर्वतोऽस्ति प्रधानभूता । इत्यस्ति कारिकार्थः ।

( २ ) तत्रोदाहरणमाह—**'यथाहि ग्रामाध्यक्षः'** इति । ग्रामस्याध्यक्ष इति व्युत्पत्त्या

---

इसलिए वाह्य चक्षुरादि इन्द्रियाँ द्वार = व्यापार हैं और मन, अहङ्कार सहित बुद्धि व्यापार वाली है ।। ३५ ।।

( १ ) **'न केवलम्'** इति । न केवल वाह्य चक्षुरादि इन्द्रियों की ही अपेक्षा बुद्धि प्रधान है, अपितु मन, अहङ्कार जो स्वयं व्यापार वाले हैं, उनकी भी अपेक्षा बुद्धि प्रधान है, इस वात को वतलाते हैं—**'एते प्रदीपकल्पाः'** इत्यादि कारिका से ।

कारिकार्थ—एते = ये दशविध वाह्येन्द्रियाँ तथा मन और अहङ्कार, परस्पर में विलक्षण हैं, अर्थात् स्वतन्त्ररूप से विरोधी विपयों को ग्रहण करने वाले हैं, तथापि सत्त्व, रज, तम इन गुणविशेपों के परिणामभूत ये उपर्युक्त द्वादश करण = दस वाह्य इन्द्रियाँ, मन और अहङ्कार प्रदीपकल्प = प्रदीपवत् विपयों के प्रकाशक हैं; जैसे वत्ती, तेल, अग्नि परस्पर विरोधी होते हुए भी मिलकर प्रदीप के रूप में प्रकाशरूप कार्य को सम्पन्न करते हैं, उसी प्रकार पुरुप के समस्त विपयों को प्रकाश में लाकर तेरहवें करण प्रधानभूत बुद्धि को समर्पित कर देते हैं और वुद्धि फिर समस्त भोग्यजात विपय को अन्त में पुरुप को अर्पित कर देती है ।

( २ ) **'यथाहि ग्रामाध्यक्षः'** इति । जैसे ग्रामाध्यक्ष कौटुम्बिक = नागरिक

विषयाध्यक्षाय प्रयच्छति, विषयाध्यक्षश्च सर्वाध्यक्षाय, स च भूपतये; तथा वाह्येन्द्रियाण्यालोच्य मनसे समर्पयन्ति, मनश्च सङ्कल्प्याहङ्काराय, अहङ्कारश्चाभिमत्य बुद्धौ सर्वाध्यक्षभूतायां, तदिदमुक्तम्—'पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति' इति।

( ३ ) वाह्येन्द्रियमनोऽहङ्काराश्च गुणविशेषाः गुणानां सत्त्वरजस्तमसां

---

सर्वकारतः='सरकार की ओर से' इति हिन्दी, ग्रामस्य=ग्रामीणजनताया वा सरक्षणार्थं नियुक्तः राजकीयकर्मचारिविशेषः। कौटुम्बिकेभ्यः=करदातृत्वयोग्यतावद्भ्यः स्वग्रामीणजनेभ्यः। करम्=राजोचितदेयभागम्=राजग्राह्यभागं वा। आदाय=गृहीत्वा, 'वसूल करके' इति हिन्दी। विषयाध्यक्षाय—विषयः=जनपदो, ग्रामसमुदायरूपः 'जिला'-पदवाच्यस्तदध्यक्षाय, तदधिकारिणे=जिलाधिकारिणे, 'कलक्टर'-पदवाच्यायेत्यर्थः। सर्वाध्यक्षाय=सर्वस्यापि अध्यक्षभूताय प्रधानमन्त्रिणे। 'प्रयच्छति' इत्यध्याहार्यम्, परम्पराक्रमेण इति च योजनीयम्। स च=प्रधानमन्त्री च। तथा=तद्वत्। आलोच्य=स्वस्वविषयाणां पर्यालोचनं विधाय। मनसे=इन्द्रियग्रामाध्यक्षभूताय। सङ्कल्प्य='इदमेवं नैवम्' इति समीचीनां कल्पनां विधाय। अभिमत्य='मदर्था एवामी विषया इत्येवमभिमानं कृत्वा। सर्वाध्यक्षभूतायाम्=सर्वस्यापि चराचरात्मकस्य जगतो निर्माणकर्तृत्वेन अधिकारिभूतायाम्। बुद्धौ। एवं परम्पराक्रमेण स्वात्मनि समर्पितान् विषयान् बुद्धिर्विनिश्चिनोतीति भावः। अयमेव च निश्चयात्मको व्यापारोऽन्तिमो व्यापारः यश्च बुद्धिरेव सम्पादयति, अत एव बुद्धिः सर्वाध्यक्षा। एतदेव दर्शयति—'पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति'।

( ३ ) वाह्येन्द्रियमनोऽहङ्काराश्च=दशविधवाह्येन्द्रियमनोहङ्काराश्चेति द्वादशविधानि करणानि ( बुद्धि विहाय )। गुणविशेषपदार्थमाह—गुणानामिति। विकाराः=कार्यभूताः। अर्थाद् बुद्धि विहाय पञ्चज्ञानेन्द्रियाणि, पञ्चकर्मेन्द्रियाणि, अहङ्कारमनसी

---

व्यक्तियों से कर=टैक्स वसूल करके विषयाध्यक्ष=जिलाधिकारी=जिलाध्यक्ष के लिए अर्पण=प्रदान करता है और वह विषयाध्यक्ष फिर सर्वाध्यक्षभूत प्रधान मन्त्री को अर्पण करता है और प्रधानमन्त्री फिर सम्राट् को=राजा को अर्पण करता है। उसी प्रकार चक्षुरादि वाह्येन्द्रियाँ घट-पट आदि विषयों का निरीक्षण एवं परीक्षणात्मक आलोचन कर उन विषयो को मन के लिए अर्पित कर देती है, और फिर मन अपना संकल्पात्मक व्यापार सम्पन्न कर अहङ्कार को अर्पित कर देता है, और अहङ्कार अपना अभिमानात्मक व्यापार सम्पन्न कर सर्वाध्यक्षभूत बुद्धि को समर्पित कर देता है। वही कहा है—'पुरुषस्यार्थम्' इति। अर्थात् ये दस वाह्य और दो मन तथा अहङ्कार, ये द्वादश करण पुरुष के सम्पूर्ण भोग्यभूत विषयों को अपने-अपने व्यापारान्वित करके निश्चयार्थ बुद्धि को अर्पित कर देते है, फिर बुद्धि पुरुष को अर्पित करती है।

( ३ ) 'वाह्येन्द्रियमनोऽहङ्काराश्च' इति। अर्थात् दस वाह्येन्द्रिय, मन और अहङ्कार ये सत्त्व, रज, तम इन गुणों के विकार=कार्य=परिणाम है। और ये

विकाराः, ते तु परस्परविरोधशीला अपि पुरुषार्थेन भोगापवर्गरूपेणैकवाक्यतां नीताः। यथा वर्तितैलवह्नयः सन्तमसापनयेन रूपप्रकाशाय मिलिताः प्रदीपः, एवमेते गुणविशेषा इति योजना ॥ ३६ ॥

( १ ) कस्मात्पुनर्बुद्धौ प्रयच्छन्ति ? न तु बुद्धिरहङ्काराय द्वारिणे मनसे वेत्यत आह—

**सर्वं प्रत्युपभोगं यस्मात्पुरुषस्य साधयति बुद्धिः ।**
**सैव च विशिनष्टि पुनः प्रधानपुरुषान्तरं सूक्ष्मम् ॥ ३७ ॥**

---

च सर्वाण्यपि सन्ति कार्याणि। परस्परविरोधशीलाः=परस्परं विरुद्धाः, सत्त्वादिगुणानां विरुद्धधर्मकतया परस्परं विरोधशीलत्वात् इत्यर्थः। पुरुषार्थेन=पुरुषस्य योऽर्थः प्रयोजनं तेन। भोगापवर्गरूपेण—भोगः=सुखदुःखान्यतरसाक्षात्काररूपः, अपवर्गश्चैकान्तिकात्यन्तिकरूपेण दुःखत्रयनिवृत्तिस्तद्रूपेणेत्यर्थः। एकवाक्यताम्=एककार्यकारित्वरूपाम्। नीताः=प्रापिताः सन्तः, प्रदीपकल्पा भवन्ति। तत्रानुकूलं दृष्टान्तमाह—**यथा वर्तितैलवह्नय इति।** सन्तमसापनयेन—सन्तमसस्य=अन्धकारस्य, अपनयेन=दूरीकरणेन। मिलिताः=परस्परं संयुक्ताः, सन्तः प्रदीपो भवति अर्थात् मिलितानां वर्तितैलादीनां 'प्रदीप' इति संज्ञा भवति। तथा च यथा मिलिता इमे 'प्रदीप'संज्ञां लभमानाः सन्तः रूपप्रकाशलक्षणं कार्यं कुर्वन्ति, तथैव एते गुणविशेषाः=सत्त्वादिगुणविशेषा विरोधशीला अपि एकवाक्यतां गताः ( मिलिताः ) सन्तः पुरुषस्य कृते भोगापवर्गरूपं कार्यं सम्पादयन्तीति भावः ॥ ३६ ॥

( १ ) मनोऽहङ्कारबुद्धिषु त्रिष्वेव अन्तःकरणत्वाविशेषेऽपि कथं बुद्धेरेव प्राधान्यं पुनर्न तु तदितरयोर्मनोऽहङ्कारयोरित्यत आह—**सर्वं प्रत्युपभोगमिति।**

अन्वयः—यस्माद् बुद्धिः सर्वं प्रत्युपभोगं पुरुषस्य साधयति, सैव च पुनः सूक्ष्मं प्रधानपुरुषान्तरं विशिनष्टि।

---

परस्पर में विरोधशील=विरोधी होते हुए भी भोग अपवर्गरूप जो पुरुष का अर्थ=प्रयोजन है, उसको सम्पन्न करने के लिए एकवाक्यता=एककार्यकारित्व को प्राप्त हो जाते हैं। जैसे वत्ती, तेल, अग्नि ये परस्पर में विरोधी होते हुए भी अन्धकार का अपनयन करते हुए घट-पटादि पदार्थों के स्वरूप-प्रकाशार्थ मिलित होकर प्रदीप का रूप धारण कर एकवाक्यता को प्राप्त हो जाते हैं। इसी प्रकार ये गुणों के परिणामभूत करण भी एकवाक्यता को प्राप्त हो जाते हैं, केवल पुरुष के भोगापवर्ग को सम्पन्न करने के लिए ॥ ३६ ॥

( १ ) प्रश्न—**'कस्मात्पुनः'** इति। ये द्वादश करण विषयों को ग्रहण करके पुनः बुद्धि को ही क्यों प्रदान करते हैं ? इससे बुद्धि को प्राधान्य क्यों दिया गया ? बुद्धि ही अहङ्कार या मन को क्यों नहीं अर्पित कर देती है ? इसके उत्तर में कहते हैं—**'सर्वं प्रत्युपभोगम्'** इति।

( २ ) 'सर्वम्' इति। पुरुषार्थस्य प्रयोजकत्वात् तस्य यत्साक्षात्साधनं तत् प्रधानम्। बुद्धिश्चाऽस्य साक्षात्साधनम, तस्मात्सैव प्रधानम्। यथा सर्वाध्यक्षः साक्षाद्राजार्थसाधनतया प्रधानम्, इतरे तु ग्रामाध्यक्षादयस्तम्प्रति गुणभूताः।

---

यस्मात् कारणात् बुद्धिः, सर्वं प्रत्युपभोगम् = सुख-दुःखादिसमस्तविषयाणा साक्षात्कारम्। पुरुषस्य कृते साधयति। पुनश्च—प्रधानपुरुषयोर्मध्ये सैव बुद्धिर्भेद-मप्यज्ञायमानं करोति, अतो हेतोः सर्वथा बाह्याभ्यन्तरकरणेषु प्राधान्यं बुद्धेः। इति कारिकार्थः।

( २ ) पुरुषार्थस्य = पुरुषप्रयोजनस्य = पुरुषीयभोगापवर्गरूपस्य। ( सर्वेषां करणानां व्यापारात्मिकायां प्रवृत्तौ ), प्रयोजकत्वात् = सांसारिकप्रकृतिप्रवृत्तिजन-कत्वात्। अयम्भावः—प्रकृतिः पुरुषस्य कृते तदीयभोगापवर्गरूपमर्थं सम्पाद्य निवर्तते। प्रकृतिः खलु तावत्कालपर्यन्तमेव पुरुषविषये चेष्टां कुरुते यावत्कालपर्यन्तं पुरुषस्य भोगापवर्गरूपमर्थं नहि सम्पादयति। भोगापवर्गसम्पादनानन्तरमेव खलु प्रकृतिर्व्यापार-शून्या भवतीत्यर्थः। तस्य = भोगापवर्गरूपपुरुषार्थस्य। यत्साक्षात् साधनम्। किन्तस्य साक्षात्साधनम्? इत्यत्राह—**बुद्धिश्चास्येति**। अस्य = पुरुषार्थस्य। साक्षात् साधनम्। बुद्धिः = महत्तत्त्वम्। सैव = बुद्धिरेवेत्यर्थः। तत्राऽयं विषयो दृष्टान्तमुखेनोपपादयति—**यथा सर्वाध्यक्ष इति**। समस्तराज्यमण्डलस्याधिकारी प्रधानमन्त्रीत्यर्थः। साक्षात् = परम्पराशून्यक्रमेण। राजार्थसाधनतया—राज्ञः = राष्ट्रपतेः, अर्थस्य = प्रयोजनस्य, साधनतया = सर्वेषामेव कार्याणां सम्पादनकर्तृत्वेन। प्रधानम् = प्रधानमन्त्रीति कथ्यते। इतरे = प्रधानमन्त्रिणोऽतिरिक्ताः सर्वेऽपि ग्रामाध्यक्ष-विषयाध्यक्षादयः तम्प्रति = सर्वाध्यक्षभूतं प्रधानमन्त्रिणम्प्रति, अर्थात् तदपेक्षयेत्यर्थः। गुणभूताः = गौणाः, साहाय्यकर्तारः।

---

**कारिकार्थ**—जिस कारण से समस्त शब्दादि तथा घट-पटादि विषयों के साक्षात्काररूप उपभोग को पुरुष के लिए बुद्धि ही साक्षात् सम्पन्न करती है, और वही अन्त में प्रधान = प्रकृति और पुरुष इन दोनों में सूक्ष्म अन्तर = भेद को उत्पन्न करती है, अतः बुद्धि ही प्रधान है।

( २ ) **'सर्वम्'** इति। **'पुरुषार्थस्य'** इति। चेतन पुरुष का भोगापवर्गरूप अर्थ = प्रयोजन ही इस चराचर विश्व की रचना में प्रयोजक है। इसी के साधन समस्त करणों के सब व्यापार हैं। परन्तु उस पुरुषार्थ का जो साक्षात् साधन है, वही प्रधान है और बुद्धि ही उसका साक्षात् साधन है, अतः वही बुद्धि प्रधान है।

**'यथा'** इति। जैसे सर्वाध्यक्ष = सम्पूर्ण राज्यमण्डल का अधिकारी प्रधानमन्त्री ही साक्षात् राजा के अर्थ = समस्त विषयों का साधन होने से प्रधान होता है, और जो इतर ग्रामाध्यक्ष आदि हैं, वे प्रधानमन्त्री के प्रति गुणभूत = गौण हैं। अर्थात् प्रधान-मन्त्री के आदेश के पालक हैं।

( ३ ) बुद्धिर्हि पुरुषसन्निधानात् तच्छायापत्त्या तद्रूपेव सर्वविषयोपभोगं पुरुषस्य साधयति। सुखदुःखानुभवो हि भोगः, स च बुद्धौ, बुद्धिश्च पुरुषरूपैवेति सा च पुरुषमुपभोजयति।

---

( ३ ) पुरुषसन्निधानात्—पुरुषस्य = चिद्रूपस्याऽऽत्मनः, सन्निधानात् = सामीप्यात्। तच्छायापत्त्या—तस्य = पुरुषस्य, छाया = प्रतिविम्वः, ( तस्य ) आपत्तिः = बुद्धौ तत्पतनमित्यर्थः। तद्रूपेव—तस्य = पुरुषस्य, रूपं = चैतन्यम्, इव = तत्स्वरूपमापन्नेव। यथा—जपाकुसुमसन्निधानात् स्फटिकमणिर्यथा जपाकुसुमेन प्रतिविम्बितः, अर्थात् जपाकुसुमच्छायापत्त्या जपाकुसुमवद् भवति, तथा बुद्धिरपि तद्रूपेव भवति। सर्वविषयोपभोगं = सर्वेषां विषयाणामुपभोगं = सुखदुःखान्यतरसाक्षात्काररूपम्। पुरुषस्य = चेतनस्याऽऽत्मनः। साधयति = सम्पादयति। सुखदुःखानुभवः = सुखदुःखान्यतरसाक्षात्काररूपोऽनुभवः। स च = भोगश्च। बुद्धौ = भोगस्य बुद्धिधर्मत्वाद् बुद्धिरूपे आधारे, ( वर्तते ) इति शेषः, बुद्धौ सम्पन्नो भवतीत्यर्थः। पुरुषरूपेव = चितिच्छायापत्त्या चेतनेव भवति। इति = एवंरूपेण। सा = बुद्धिः। पुरुषमुपभोजयति = पुरुषाय भोगं जनयति, अर्थात् पुरुषसन्निधानात् पुरुषप्रतिविम्बवत्तया पुरुषस्वरूपतया भासमानाया बुद्धेः भेदाग्रहजन्याऽविवेकग्रहात् स्वानुष्ठितभोगेन 'अहं सुखमनुभवामी'त्यादिप्रतीतिजनकत्वात् पुरुषोपभोगहेतुत्वं बुद्धेर्निर्वहतीति भावः।

---

( ३ ) 'बुद्धिर्हि' इति। दृष्टान्त से प्रधानमन्त्री निष्ठ प्राधान्य का विवेचन कर दार्ष्टान्त में उसे बतलाते हैं—'बुद्धिर्हि' इत्यादि ग्रन्थ से। 'हि' निश्चयार्थक है, अर्थात् बुद्धि ही निश्चितरूप से पुरुष से पुरुष के सन्निधान से पुरुष की छाया = प्रतिबिम्ब पड़ने से तद्रूप = उस पुरुष का जो रूप = चैतन्य है, उसे प्राप्त की तरह अर्थात् चेतन की तरह बुद्धि ( प्रकृति ) हो जाती है, अतः वह पुरुष के लिए सभी प्रकार के विषयोपभोगों का सम्पादन करती है।

'सुख-दुःखानुभवो हि' इति। यहाँ प्रश्न यह उपस्थित होता है कि 'सर्वं प्रत्युपभोगम्' यह ईश्वरकृष्ण का कथन सर्वथा निराधार है, क्योंकि पुष्करपलाशवन्निर्लेप तथा निष्क्रिय एवं चिन्मात्र पुरुष कैसे उपभोग कर सकेगा? और बुद्धि कैसे उसका उसके लिए सम्पादन ही करती है?

उत्तर—सुख-दुःख, इन दोनों में से किसी एक का अनुभव होना भोग है और वह भोग निर्गुण पुरुष को कदापि नहीं हो सकता है। 'स च बुद्धौ' और वह भोग बुद्धि में ही संभव है, क्योंकि वह बुद्धि का धर्म है। बुद्धि स्वयं जड़ होती हुई भी पुरुष की छाया पड़ने से बुद्धि 'पुरुषरूपेव' चेतन की तरह हो जाती है और दोनों का पारस्परिक भेदज्ञान समाप्त हो जाने से बुद्धि पुरुष के लिए भोग प्रदान करती है, अर्थात् पुरुष से सांसारिक विषयों का उपभोग करवाती हैं। कहा भी है—'सा च पुरुषमुपभोजयति' इति।

( ४ ) यथाऽर्थालोचनसङ्कल्पाभिमानाश्च यत्तद्रूपपरिणामेन बुद्धावुपसङ्क्रान्ताः, तथेन्द्रियव्यापारा अपि बुद्धेरेव स्वव्यापारेणाऽध्यवसायेन सहैकव्यापारीभवन्ति, यथा वा स्वसैन्येन सह ग्रामाध्यक्षादिसैन्यं सर्वाध्यक्षस्य भवति। 'सर्वं' शब्दादिकं 'प्रति' य उपभोगः 'पुरुषस्य' तं साधयति।

---

( ४ ) ननु सर्वेषामेवेन्द्रियाणां तत्तद्भोगसाधनत्वात् कथं तत्साधनता पुनः बुद्धेरेवोच्यते ? इति दृष्टान्तमुखेन दर्शयति—**यथाऽर्थालोचनेति**। यथा घटपटादिविषयाणामालोचनात्मको व्यापारश्चक्षुषो व्यापारः, सङ्कल्पात्मकश्च मनसो व्यापारः, अभिमानात्मकश्चाऽहङ्कारस्येतीमे तत्तत्करणानां व्यापाराः। तत्तद्रूपपरिणामेन=क्रमशः सङ्कल्पाभिमानाऽध्यवसायेषु परिणता भूत्वा। बुद्धावुपसङ्क्रान्ताः=बुद्धावारोपिताः, भवन्तीति शेषः। आदानप्रदानादिरूपाणां कर्मेन्द्रियव्यापाराणां बुद्धिव्यापारेण सहैकतां दर्शयति—**तथेन्द्रियव्यापारा इति**। तथा वागादिकर्मेन्द्रियव्यापारा वचन-आदान-प्रदानादयः। बुद्धेरेव=वर्तन्ते इति शेषः। तत्र हेतुमाह—**स्वव्यापारेणेति**। बुद्धिव्यापारभूतेनाऽध्यवसायेन। एकव्यापारीभवन्ति=एकव्यापारशालिनो भवन्ति, अर्थात् वचनाऽऽदानप्रभृतयः कर्मेन्द्रियाणां व्यापारा अपि बुद्धेर्व्यापारभूतेनाऽध्यवसायेन सह मिलित्वा एकतामापन्ना एकतां गता वा भवन्ति। तत्राऽनुरूपं लौकिकं दृष्टान्तमाह—**यथा वा स्वसैन्येनेति**। प्रधानमन्त्रिस्थानीयसर्वाध्यक्षसैन्येन सह मिलित्वा। ग्रामाध्यक्षादिसैन्यं=ग्रामाध्यक्ष-विषयाध्यक्षादिसैन्यम्। सर्वाध्यक्षस्य=प्रधानमन्त्रिणो भवतीति। तथा चाऽन्येन्द्रियव्यापारोऽपि बुद्धिव्यापाररूपेणैव परिणतो भवतीति बुद्धेरेव साक्षाद् भोगसाधनत्वमिति भाव।

---

( ४ ) **'यथाऽर्थालोचनेति'** अर्थात् जैसे घट-पटादि विषयों के प्रति बाह्येन्द्रिय चक्षु का आलोचनात्मक व्यापार, मन का संकल्पात्मक व्यापार, अहङ्कार का अभिमानात्मक व्यापार, ये सब क्रमशः संकल्प, अभिमान, अध्यवसायरूप में अर्थात् आलोचन संकल्परूप में, संकल्प अभिमानरूप में और अभिमान बुद्धिरूप में परिणत होकर बुद्धि में उपसंक्रान्त=आरोपित हो जाते हैं अर्थात् बुद्धि के ही कार्य बन जाते हैं।

**'तथेन्द्रियव्यापारा अपि'** इति। और वैसे ही 'वाक्' आदि कर्मेन्द्रियों के वचन, आदान आदि व्यापार भी अन्ततोगत्वा बुद्धि के अध्यवसायरूप व्यापार के साथ मिलकर एक व्यापारी हो जाते है और भोगात्मक एककार्यकारी हो जाते हैं।

**'यथा स्वसैन्येन'** इति। यह अनुरूप दृष्टान्त है, अर्थात् जैसे स्वसैन्य=बुद्धिव्यापारस्थानीय सर्वाध्यक्ष सैन्य के साथ मिलकर इन्द्रियव्यापारस्थानीय ग्रामाध्यक्ष, विषयाध्यक्ष की सेना भी सर्वाध्यक्ष की ही सेना हो जाती है और सभी सेनाएँ मिलकर=एक होकर विजयात्मक एक कार्य को सम्पन्न करती है।

**'सर्वं शब्दादिकम्'** इति। दृष्टान्त में योजना करते हैं कि—सभी शब्द, स्पर्श, रूप, रसादि तथा घट-पटादि विषयों के प्रति जो पुरुष का उपभोग है, अर्थात् सांसारिक जितने भी विषय हैं, उन सबका उपभोग पुरुष को बुद्धि ही करवाती है।

( ५ ) ननु पुरुषस्य सर्वविषयोपभोगसम्पादिका यदि बुद्धिः, तर्ह्यनिर्मोक्ष इत्यत आह—'सैव चे'ति। पश्चात् 'प्रधानपुरुषयोरन्तरं' विशेषं 'विशिनष्टि' करोति—यथौदनपाकं पचतीति, करणं च प्रतिपादनम्। ननु प्रधानपुरुषयो-

---

बुद्धिः किं करोतीत्याह—**सर्वं शब्दादिकं प्रतीति**। सर्वशब्दार्थमाह—शब्दादिक**मिति**। अर्थात् समस्तान् शब्दादिविषयान् प्रति। य उपभोगः, तम् = उपभोगम्। पुरुषस्य = आत्मनः। साधयति = सम्पादयति, बुद्धिरिति शेषः।

( ५ ) इदानीं पुरुषस्याऽनिर्मोक्षमाशङ्कते—**ननु पुरुषस्येति**। सर्वविषयोपभोगसम्पादिका—सर्वेषां विषयाणां = शब्दादिविषयाणाम्, उपभोगस्य = सुखदुःखान्यतरसाक्षात्कारस्य, सम्पादिका = साधिका। अर्थात् पुरुषस्य सर्वविषयोपभोगसाधिका यदि बुद्धिरेवास्ति तदा पुरुषस्य अनिर्मोक्षः = मोक्षाभावः स्यात्, यतो बुद्धेस्तत्संयोगस्य च नित्यत्वात्, तस्य च सर्वदा विद्यमानत्वात्? इत्याशङ्कां निरस्यति—**सैव चेति**। बुद्धिरेव च। पश्चात् = पुरुषस्य विषयोपभोगानन्तरम्, विवेकावस्थायामित्यर्थः। तथा च भोगप्रदानकर्त्री बुद्धिरेव पश्चात् = भोगाधिकारसमाप्तौ सत्यां पुरुषस्य मोक्षं सम्पादयति। अन्तरशब्दार्थमाह—**विशेषमिति**। 'विशिनष्टि' इत्यस्यार्थमाह—**'करोति'** इति। अन्यथा 'विशिनष्टि' इत्यस्य यथाश्रुतार्थकत्वे 'विशेषं विशिनष्टि' इत्येव स्यात्तथा सति कर्मक्रिययोरैक्यप्रसङ्गः स्यादिति। यथा—'ओदन पाकं पचति' इति प्रयोगे पाककर्मकस्य पाकस्य सर्वथा भवितुमशक्यत्वादतः 'पचति' इत्यस्य करोति, 'सम्पादयति' वा इत्येवार्थः क्रियते, तथैव प्रकृतेऽपीदृश्येव गतिश्चिन्तनीयेति नात्र कश्चिद् दोषः।

'पचति' इत्यस्य 'करोति' इत्यर्थो विज्ञेयः, करोतीत्यस्य करणमर्थः, स चात्र प्रतिपादनरूपः, स च प्रतिपादनरूपोऽर्थः = सिद्धस्य प्रधानपुरुषयोरन्तरस्य बुद्ध्या बोधनरूपः। स चानुपदमेव विवेचयिष्यते।

---

( ५ ) अब अग्रिम ग्रन्थ से बुद्धि के अनिर्मोक्षत्व की शंका करते हैं—**'ननु पुरुषस्य'** इति। अर्थात् पुरुष के लिए सभी सांसारिक विषयों के उपभोगों की संपादिका यदि बुद्धि ही है तो बुद्धि 'सत्' है, अतः उसके अभाव का कोई प्रश्न ही नहीं है—'नाभावो विद्यते सतः' यह सांख्यसिद्धान्त है। ऐसी परिस्थिति में बुद्धि का पुरुष के साथ नित्य सान्निध्य बने रहने के कारण पुरुष हमेशा ही उपभोग में बना रहेगा, फिर उसका = पुरुष का मोक्ष कैसा?

उत्तर—**'सैव च'** इति। अर्थात् वही बुद्धि पुरुष के लिए भोगदात्री है और बाद में = भोग के पश्चात् वही प्रधान = प्रकृति और पुरुष में अन्तर = भेद = पार्थक्यकर्त्री भी है। देखें ६१ तथा ६२ कारिका में। यहाँ 'विशिनष्टि' का 'करोति' अर्थ है, न कि 'विशेषं करोति'। जैसे 'ओदनपाकं पचति' यहाँ दृष्टान्त में 'पचति' का 'करोति' यही अर्थ है, न कि 'पाकं करोति'। अन्यथा पाककर्मक पाक सर्वथा असंभव है, अर्थात् पाक का पाक कदापि संभव नहीं।

'करणं च प्रतिपादनम्' इति। 'करोति' यहाँ पर 'कृञ्' धातु का अर्थ है—'करण',

रन्तरस्य कृतकत्वादनित्यत्वं, तत्कृतस्य मोक्षस्याप्यनित्यत्वं स्यादित्यत आह— 'विशिनष्टि'। 'प्रधानं सविकारमन्यदहमन्यः' इति विद्यमानमेवाऽन्तरमविवेकेनाऽविद्यमानमिव बुद्धिर्बोधयति, न तु करोति, येनानित्यत्वमित्यर्थः। अनेनापवर्गः पुरुषार्थो दर्शितः। 'सूक्ष्मम्' दुर्लक्ष्यं तदन्तरमित्यर्थः॥ ३७॥

---

ननु वक्तुरिच्छाधीने शब्दप्रयोगे प्रागेव ग्रन्थकारः करोतीत्यनुक्त्वा 'विशिनष्टि' इति कथं प्रयुक्तवानित्याशङ्कां निरसितुमाह—**ननु प्रधानपुरुषयोरिति**। तथा च करोतीत्युक्ते मोक्षस्य कार्यत्वं=जन्यत्वं सिद्धयति, अत एव मोक्षस्याऽनित्यत्वाऽऽपत्तिदर्शनेन 'विशिनष्टि' इत्युक्तम्, एतदेव सुस्पष्टयति वाचस्पतिमिश्रः—'**ननु प्रधानपुरुषयोरन्तरस्ये**'त्यादिना। अन्तरस्य=भेदस्य। कृतकत्वात्=कार्यत्वात्, बुद्धिजन्यत्वात्। तत्कृतस्य— तेन कृतस्येति व्युत्पत्त्या, तेन=बुद्धिजन्यप्रकृतिपुरुषभेदज्ञानेन, कृतस्य=सम्पादितस्य। मोक्षस्य। अनित्यत्वम्=जन्यत्वं, कृतकत्वम्। यद्यत्कृतकं तत्तदनित्यं दृष्टं; यथा घटादयः। तथा च मोक्षस्याऽनित्यत्वशङ्कानिराकरणायाह—'**विशिनष्टि**' इति। तदेव दर्शयति—**प्रधानं सविकारमिति**। प्रधानं=प्रकृतिः। सविकारं=सुख-दुःखादिपरिणामस्वरूपविकारयुक्तम्। एवं प्रधानम् अन्यत्=चेतनभिन्नम्। अहं=चेतनः पुरुष आत्मा। अन्यः=प्रागुक्तविकारस्वरूपपरिणामभिन्नः। **विद्यमानमेवेति**। अत्रैवकारोऽप्यर्थकः, विद्यमानमपीत्यर्थः। अन्तरम्=भेदम्। अविवेकेन=अज्ञानेन, अर्थात् प्रकृतिपुरुषयोर्यः 'अहं प्रकृत्यभिन्नः' इत्याकारको अविवेकस्तेन तदीयप्रभावेनाऽविद्यमानमिव स्थितं तमन्तरं बुद्धिर्बोधयति न तु करोतीति भावः। येन=कृतकत्वेन हेतुना,

---

करण का प्रकृति में अर्थ है प्रतिपादन=ज्ञापन, न कि उत्पादन। क्योंकि 'करोति' यहाँ पर 'कृञ्' धातु का अर्थ हुआ—करण और करण का अर्थ यदि प्रकृत में उत्पादन हो तो प्रधान=प्रकृति और पुरुष इन दोनों का अन्तर भी कृतक=कार्य हो जायेगा। और कृतकत्वात्=कार्यत्वात्, अर्थात् कार्य हो जाने से उन दोनों के अन्तर=भेद= विवेक को अनित्य ही मानना होगा, फिर तत्कृत=प्रकृति-पुरुष के भेद से कृत मोक्ष को भी अनित्य ही मानना होगा। यह आपत्ति अर्थात् मोक्ष को अनित्यत्व की सांख्यमत में आपत्ति उत्पादनरूप अर्थ पक्ष में है।

उत्तर—'इत्यत आह—विशिनष्टि' इति। इसलिए 'विशिनष्टि' यह कहा है। अर्थात् 'प्रधानं सविकारम्' इति। प्रकृति सुख-दुःखादिपरिणामात्मक विकार सहित है, और चेतनपुरुष निर्विकार है, इसलिए प्रकृति चेतनपुरुष से भिन्न है और मैं पुरुष प्रकृति से भिन्न हूँ यह अन्तर=भेद पूर्व से ही विद्यमान है; केवल अविवेक=भेदाग्रह निबन्धन अविद्यमान की तरह मालूम हो रहा है, उसी 'अन्तर' को बुद्धि प्रतिपादित या बोधित करती है, न कि उस अन्तर को उत्पन्न करती है, जिससे तत्कृत मोक्ष को अनित्य मानना पड़े।

इससे यह भी दिखला दिया गया कि मोक्ष अवश्य पुरुषार्थ है और वह मोक्ष अन्तरज्ञान ज्ञाप्य है तथा वह प्रकृति-पुरुष का अन्तर सूक्ष्म अर्थात् दुर्लक्ष्य है॥ ३७॥

( १ ) तदेवं करणानि विभज्य विशेषाविशेषान् विभजते—

**तन्मात्राण्यविशेषास्तेभ्यो भूतानि पञ्च पञ्चभ्यः ।**
**एते स्मृता विशेषाः शान्ता घोराश्च मूढाश्च ॥ ३८ ॥**

( २ ) 'तन्मात्राणि' इति। शब्दादितन्मात्राणि सूक्ष्माणि। न चैषां शान्तत्वादिरस्ति उपभोगयोग्यो विशेष इति मात्रशब्दार्थः।

---

अनित्यत्वं स्यान्मोक्षस्य। करणं च = प्रधानपुरुषयोरन्तरकरणञ्च। अनेन = विशिनष्टि इति पदप्रयोगेन। अपवर्गः = बुद्धिबोध्योऽपवर्गः। पुरुषार्थः = पुरुषप्रयोजनम्। सूक्ष्मम् = दुर्लक्ष्यम् = तथा च अन्तरस्य सूक्ष्मत्वादेव नास्ति वास्तविको भोगः अपि तु वास्तविक इव भातीति भावः ॥ ३७ ॥

( १ ) 'तन्मात्राण्यविशेषा' इत्यादिकारिकामवतारयितुमाह—**तदेवमिति**। चतुस्त्रिंशत्कारिकायां समुल्लिखितानि विशेषाविशेषविषयाणि कानि तान्याह—**तन्मात्राण्यविशेषा इति**।

अन्वयः—तन्मात्राणि अविशेषा तेभ्यः पञ्चभ्यः पञ्च भूतानि ( भवन्ति ), एते विशेषाः स्मृताः शान्ताः घोराश्च मूढाश्च।

तन्मात्राणि इति। अविशेषाः=सूक्ष्माः। तेभ्यः = पञ्चभ्यः=पञ्चतन्मात्रेभ्यः। पञ्चभूतानि = पृथिव्यप्तेजोवाय्वाकाशरूपाणि ( भवन्ति )। एते पञ्चमहाभूतपदार्थाः। विशेषाः = स्थूलाः। स्मृताः=कथिताः। एते पञ्चमहाभूतपदार्थाः शान्ताः घोराः मूढाश्च ( भवन्ति )। इति कारिकार्थो जातः।

( २ ) **शब्दादितन्मात्राणि**। शब्दस्पर्शरूपरसगन्धात्मकानि। सूक्ष्माणि। अविशेषा उच्यन्ते। एषाम् = तन्मात्राणाम् = सूक्ष्मशब्दस्पर्शरूपरसगन्धानामित्यर्थः। 'तन्मात्र' इत्येतद्घटकीभूतमात्रशब्दार्थमाह—**न चैषां शान्तत्वादिरस्तीति**। सूक्ष्मशब्दस्पर्शरूपरसगन्धात्मकेषु तन्मात्रेषु उपभोगयोग्यसुखदुःखमोहात्मकाः शान्तत्व-घोरत्व-मूढत्व-धर्मस्वरूपा विशेषा नैव तिष्ठन्तीत्ययमेवास्ति मात्रशब्दार्थः। विष्णुपुराणेऽपि—'तस्मिंस्तस्मिंस्तु तन्मात्रास्तेन तन्मात्रता स्मृता'। तथा चोपभोगयोग्यसकलविशेषयोग-

---

( १ ) इस प्रकार करणों का विभाग करके अब उनके 'विशेषाविशेषविषयाणि' इत्यादि से पूर्व कथित तन्मात्राओं के विशेष तथा अविशेषों के विभाग को बतलाते हैं—'तन्मात्राण्यविशेषाः' इत्यादि ग्रन्थ से—

कारिकार्थ—शब्द, स्पर्श, रूप आदि पंचतन्मात्राएँ अविशेष = सूक्ष्म हैं और इन पाँच तन्मात्राओं से आकाश, वायु, तेज आदि पाँच भूत उत्पन्न होते हैं और ये पाँच महाभूत विशेष = स्थूल कहे जाते हैं, कारण कि ये शान्त = सुखात्मक होते हैं, और घोर = दुःखात्मक तथा मूढ़ = मोहात्मक होते हैं।

( २ ) 'शब्दतन्मात्राणि' इति। शब्दस्पर्शरूपरसगन्धात्मक सूक्ष्म तन्मात्राएँ अविशेष कही जाती हैं और इन तन्मात्राओं में उपभोग योग्य शान्तत्वादि विशेष नहीं है। यही 'तन्मात्र' यहाँ पर मात्र शब्दार्थ है, इसीलिए तन्मात्राओं को 'अविशेष' कहा है।

( ३ ) अविशेषानुक्त्वा विशेषान् वक्तुमुत्पत्तिमेषामाह—'तेभ्यो भूतानि' इति। तेभ्यस्तन्मात्रेभ्यो यथासङ्ख्यमेकद्वित्रिचतुःपञ्चभ्यो भूतान्याकाशानिलानलसलिलावनिरूपाणि पञ्च 'पञ्चभ्यः' तन्मात्रेभ्यः।

( ४ ) अस्तु—एतेषामुत्पत्तिः, विशेषत्वे किमायातमित्यत आह—'एते स्मृता विशेषाः' इति। कुतः ? 'शान्ता घोराश्च मूढाश्च'। चकार एको हेतौ, द्वितीयः समुच्चये।

---

व्यवच्छेदार्थकं मात्रपदम्। एवञ्च मात्रशब्देन धर्मान्तरराहित्यप्रतीतेः शान्तत्वादिधर्माणामप्रत्यक्षत्वदर्शनात् 'इदमस्माद् भिन्नम्' 'इदमस्माद् भिन्नम्' इत्यादिप्रतीत्यसम्भवेन शब्दादितन्मात्राणामविशेषत्वं सूपपन्नं भवति। इत्थमेव च 'उपभोगयोग्यशान्तत्वादिरूपसुखदुःखादिमत्त्वं विशेषत्वमिति विशेषलक्षणमपि सुस्पष्टं भवतीति भावः।

( ३ ) अविशेषान्=सूक्ष्मशब्दादिस्वरूपान् विषयान्। उक्त्वा=प्रदर्श्य। विशेषान्=आकाशादिपञ्चमहाभूतान्। वक्तुं=प्रदर्शयितुम्। एषाम्=आकाशादिपञ्चविशेषाणाम्। उत्पत्तिम्=आविर्भावम्, आह—तेभ्य इति। शब्दादिसूक्ष्मतन्मात्रेभ्य इत्यर्थः। **यथासङ्ख्यमिति**। एकद्वित्रिचतुःपञ्चभ्यः=एकस्मात् शब्दतन्मात्रात् आकाशम् 'उत्पद्यते' इति शेषः। शब्दस्पर्शस्वरूपाभ्यां द्वाभ्यां तन्मात्राभ्यामनिलो 'जायते' इति। एवं शब्दस्पर्शरूपस्वरूपैस्त्रिभिस्तन्मात्रैः अनलः=अग्निरूपं तेजः। तथा शब्दस्पर्शरूपरसतन्मात्रैः सलिलं=जलं, 'जायते'। एवं गन्धतन्मात्रसहितैरेभिरेव तन्मात्रैः, अर्थात् शब्दस्पर्शरूपरसगन्धतन्मात्रेभ्यः अवनिः ( पृथिवी ) समुत्पद्यते।

( ४ ) एतावता प्रबन्धेन पञ्चतन्मात्रेभ्यः पञ्चमहाभूतानामुत्पत्तिर्वर्णिता, तेन विशेषत्वे=विशेषत्वविचारे। किमायातं=को निश्चयो जातः ? इति प्रश्नस्योत्तरमाह—**'एते स्मृता विशेषा'** इति। एते=पञ्चमहाभूताः। विशेषाः। स्मृताः=कथिताः। कथमिति कथम्भावाकाङ्क्षायामाह—**'शान्ता घोराश्च मूढाश्चे'ति**। यत

---

( ३ ) **'अविशेषानुक्त्वा'** इति। अविशेषों को बतला कर अब तन्मात्राओ के विशेषों को उत्पत्ति सहित बतलाते है—**'तेभ्यः'** इति। अर्थात् इन पञ्चतन्मात्राओ से भूत=आकाशादि यथासंख्य एक, दो, तीन, चार, पाँच तन्मात्राओं से आकाश, वायु, अग्नि, जल तथा पृथ्वी उत्पन्न होते है, अर्थात् एक शब्दात्मक तन्मात्रा से आकाश=भूत; शब्द-स्पर्शात्मक दो तन्मात्राओ से अनिल=वायु; शब्द-स्पर्श-रूप, इन तीन तन्मात्राओं से अनल=अग्नि; शब्द-स्पर्श-रूप-रस, इन चार तन्मात्राओं से सलिल=जल तथा शब्द-स्पर्श-रूप-रस-गन्ध, इन पाँच तन्मात्राओं से अवनि=पृथ्वी उत्पन्न होती है।

( ४ ) **'अस्त्वेतेषामुत्पत्तिः'** इति। अर्थात् इन पाँच स्थूलभूतों की उत्पत्ति जो ऊपर बतलाई गई है वह ठीक है, परन्तु इन स्थूलभूतों को जो 'विशेष' बतलाया गया है, वह विशेषता किम्प्रयुक्त है ?

उत्तर—**'एते स्मृता विशेषाः'** इति। अर्थात् इन स्थूलभूतों=पृथिवी, जल,

( ५ ) यस्मादाकाशादिषु स्थूलेषु सत्त्वप्रधानतया केचिच्छान्ताः, सुखाः, प्रकाशाः, लघवः; केचिद्रजःप्रधानतया घोराः, दुःखाः, अनवस्थिताः; केचित्तमःप्रधानतया मूढाः, विषण्णाः, गुरवः ।

---

एते पञ्चमहाभूतपदार्थाः शान्ता घोराश्च मूढाश्च, अत एव ते विशेषाः कथिताः । शान्तत्व-घोरत्व-मूढत्वमेव तेषां विशेषत्वमिति विज्ञेयम् । घोराश्चेत्यत्र चकारो यत इत्यर्थके हेतुत्वरूपेऽर्थे । मूढाश्चेत्यत्र चकारः समुच्चयरूपार्थकः, शान्तत्व-घोरत्व-मूढत्वानां त्रयाणां समुच्चयकर्ता द्वितीयश्चकारः ।

( ५ ) फलितार्थं दर्शयति—**यस्मादाकाशादिष्विति** । यस्मात् कारणात् आकाशादिषु स्थूलेषु=आकाशादिपञ्चमहाभूतेषु । सत्त्वप्रधानतया=सत्त्वगुणस्य प्राधान्येन । केचित्=सत्त्वबहुला महात्मानो, योगिनो महर्षयश्च । शान्ताः=वास्तविकीं शान्तिमापन्नाः । सुखाः=सुखकराः=सुखदाश्च, भवन्तीति शेषः । जडवर्गकोटिका अपि घट-पटादयो दधि-दुग्धादयश्च, सुखाः=सुखकराः, भवन्ति । प्रकाशाः=प्रकाशकरा अपि भवन्ति, यथा प्रदीपप्रभृतयः । लघवः=लघुत्वधर्मावच्छिन्नाः, सन्ति यथा वायुप्रभृतयः । अपरे केचित्=मानवजातीयाः क्षत्रियादयः । रजःप्रधानतया । घोराः=

---

आदिकों को सांख्याचार्यों ने 'विशेष' शब्द से कहा है । अतः ये ही पाँच स्थूलभूत पृथिवी आदि विशेष हैं ।

प्रश्न—'कुतः' इति । जिज्ञासा होती है कि किस कारण ये 'विशेष' शब्द से कहे जाते हैं ?

उत्तर—**'शान्ता घोराश्च मूढाश्च'** इति । 'शान्तत्व-घोरत्व-मूढत्वं विशेषत्वम्' यह विशेष का लक्षण है, जो कि इन्हीं में समन्वित हो रहा है । एवम्—'सुखदुःखमोहस्वरूपैर्धर्मैर्विशेष्यन्ते इति विशेषाः' यह अनुभवरूपता भी इन्हीं में पायी जा रही है, जिसे अभी आगे बतला रहे हैं । अतः ये ही पाँच स्थूलभूत पृथिवी आदि 'विशेष' हैं ।

**'चकार एको हेतौ'** इति । पाँच स्थूलभूत पृथिवी आदि ही विशेष हैं । इस विषय में कारण की जिज्ञासा हुई थी कि किस कारण से ये विशेष हैं ? उसी कारण को बतलाते हैं—'चकार एको हेतौ' अर्थात् 'शान्ता घोराश्च मूढाश्च' यहाँ पर 'घोराश्च' यह प्रथम चकार कारण को बतलाता है और 'मूढाश्च' यह द्वितीय चकार समुच्चयार्थक है । अब प्रथम चकारबोध्य कारणजन्य विशेष को आगे बतलाते हैं ।

( ५ ) **'यस्मादाकाशादिषु'** इति । जिस कारण से आकाशादि पाँच स्थूलभूतों में सत्त्व की प्रधानता से शान्तत्वधर्म रहता है, अतः वे शान्त हैं; जैसे चन्द्रप्रभृति देवता । कुछ स्थूलभूत सुखाः=सुखकर हैं; जैसे स्वादिष्ट मिष्ठान्न । कुछ प्रकाशकर हैं जैसे प्रदीप आदि । कुछ लघु हैं, जैसे पवन आदि ।

**'केचिद्रजःप्रधानतया'** इति । कुछ स्थूलभूतों में रजोगुण की प्रधानता होने से वे घोर हैं; जैसे क्षत्रियादि, कुछ दुःखद हैं; जैसे शत्रु प्रभृति और कुछ अनवस्थित=चञ्चल हैं ।

( ६ ) तेऽमी परस्परव्यावृत्त्याऽनुभूयमाना 'विशेषाः' इति च 'स्थूलाः' इति चोच्यन्ते। तन्मात्राणि त्वस्मदादिभिः परस्परव्यावृत्तानि नाऽनुभूयन्ते, इत्यविशेषाः सूक्ष्मा इति चोच्यन्ते ॥ ३८ ॥

( १ ) विशेषाणामवान्तरविशेषमाह—

**सूक्ष्मा मातापितृजाः सह प्रभूतैस्त्रिधा विशेषाः स्युः ।**
**सूक्ष्मास्तेषां नियता मातापितृजा निवर्तन्ते ॥ ३९ ॥**

---

घोरत्ववन्तो भयङ्कराः। दुःखाः=दुःखकराः, यथा सपत्न्यादयः। अनवस्थिताः= अत्यन्तमभीष्टा अपि, अचिरेणैव परिणामशीलाः पदार्थाः। केचित्=पशुपक्ष्यादयः। तमोगुणप्रधानतया मूढाः=विशेषतोऽज्ञानशीलाः। विषण्णाः=विषादयुक्ताः। गुरवः= गुरुत्वशालिनः, यथा पाषाणादयः। इत्थञ्च पाञ्चभौतिकाः समस्ता अपि पदार्थाः प्रधानगौणभावेन शान्तघोरमूढा भवन्ति।

( ६ ) निष्कृष्टार्थमाह—**तेऽमीति**। ते=समुत्पन्नाः। अमी=स्थूलाः पृथिव्यादयः। परस्परव्यावृत्त्या=परस्परं भिन्नभिन्नत्वेन रूपेण=परस्परं पृथक् पृथग् रूपेण। अनुभूयमानाः=प्रतीयमानाः। आकाशादिमहाभूतपदार्थाः। विशेषाः=विशेषा इति पदेन, स्थूला इति पदेन च, उच्यन्ते=कथ्यन्ते। तन्मात्राणामेतेषामपेक्षया किमपि वैजात्यं दर्शयति—**तन्मात्राणीति**। सूक्ष्मशब्दादितन्मात्रपदाभिधेयानि। अस्मदादिभिः= प्राकृतजनैः, चर्मचक्षुर्वद्भिः। परस्परव्यावृत्तानि=इतरेतरं भिन्नानि, अर्थात् कानिचित् तन्मात्राणि शान्तानि, कानिचिद् घोराणि, कानिचिन्मूढानीत्येवं रूपेण परस्परं भिन्नानि भिन्नानि। नानुभूयन्ते=न प्रतीयन्ते। इति=इत्यतः तन्मात्राणि। अविशेषाः, सूक्ष्मा इति चोच्यन्ते ॥ ३८ ॥

( १ ) 'सूक्ष्मा' इत्यादिकारिकामवतारयति—विशेषाणां=पञ्चमहाभूतानां मध्ये। अवान्तरविशेषम्=अवान्तरभेदम्। आह—**सूक्ष्मा इति**।

---

**'केचित्तमःप्रधानतया'** इति। और स्थूलभूतों में कुछ स्थूलभूत ऐसे हैं जिनमें तमोगुण की प्रधानता होने से वे मोहसमन्वित=मूढ़ है; जैसे—पशु-पक्षी आदि। एवं कुछ विषण्ण=विषादप्रद; जैसे परस्त्री आदि। कुछ गुरु=भारी होते हैं; जैसे—पत्थर आदि भूत पदार्थ।

( ६ ) **'तेऽमी परस्परव्यावृत्त्या'** इति। इसलिए ये पाँच भूत परस्पर में भिन्न-भिन्न रूप से अर्थात् कोई शान्तरूप से, कोई घोररूप से, कोई मूढ़रूप से पृथक्-पृथक् रूप से अनुभूयमान होते हुए 'विशेष' तथा 'स्थूल' इन शब्दों से कहे जाते हैं।

**'तन्मात्राणि'** इति। परन्तु तन्मात्राएँ हम लोगों के द्वारा परस्पर में भिन्न-भिन्न रूप से अनुभूत नहीं होती है, इसलिए वे अविशेष तथा सूक्ष्म इन शब्दों से कही जाती हैं ॥ ३८ ॥

( १ ) **'विशेषाणाम्'** इति। अब विशेषों के अवान्तरविशेष को **'सूक्ष्मा मातापितृजा'** इत्यादि कारिका से बतलाते हैं—

( २ ) 'सूक्ष्मा' इति । 'त्रिधा विशेषाः स्युः' इति । तान् विशेषप्रकारानाह—'सूक्ष्मा' सूक्ष्मदेहाः परिकल्पिताः, 'मातापितृजाः' षाट्कौशिकाः । तत्र मातृतो लोमलोहितमांसानि, पितृतस्तु स्नाय्वस्थिमज्जान इति षट् कोशाः ।

---

अन्वयः—सूक्ष्मा मातापितृजा प्रभूतैः सह विशेषाः त्रिधाः स्युः, तेषां सूक्ष्माः नियताः मातापितृजाः निवर्तन्ते ।

सूक्ष्माः = सूक्ष्मशरीराणि । मातापितृजाः = स्थूलशरीराणि । प्रभूतैः सह = पर्वतवृक्षमहाभूतैः सह ( मिलित्वा ) । विशेषाः=विशेषपदाभिधेयाः । त्रिधाः = त्रिविधाः । स्युः = भवन्ति । तेषां = त्रिविधविशेषाणां मध्ये सूक्ष्माः = सूक्ष्मशरीराणि । महदादिसूक्ष्मगन्धान्ताः, अष्टादशतत्त्वविनिर्मिताः । नियताः = नित्याः, मोक्षकालपर्यन्तस्थायिनः इत्यर्थः । मोक्षकालपर्यन्तस्थायित्वमेव तेषां नित्यत्वम् । मातापितृजाः = स्थूलदेहाः, ये मातापितृभ्यां जायन्ते । ते । निवर्तन्ते = नश्यन्ति, मरणकाले पतन्ति इत्यर्थः । इति कारिकार्थः ।

( २ ) त्रिधा = त्रिप्रकाराः । विशेषाः = भेदाः । स्युः = भवन्ति । न न्यूनाः, नाप्यधिकाः । १. तत्रैको विशेषः—'सूक्ष्मा' इति । सूक्ष्मदेहा इत्यर्थः । परिकल्पिताः= अनुमानगम्याः, न तु स्थूलशरीरवत् प्रत्यक्षप्रमाणगम्याः । सूक्ष्मशरीरं विना सुखदुःखभोगानुपपत्त्या सूक्ष्माणि शरीराण्यनुमितानि भवन्तीति सांख्याचार्या वदन्ति विवदन्ते चात्र बहवः । २. द्वितीयो विशेषः—मातापितृजाः = स्थूलदेहाः । षाट्कौशिकाः = षड्भिः कोशैर्निर्मिताः, तानेव दर्शयति—तत्र मातृतो लोमेत्यादि । पितृतः स्नाय्व-

---

कारिकार्थ—सूक्ष्माः = सूक्ष्म शरीर मातापितृजाः = माता-पिता से उत्पन्न षाट्कौशिक स्थूल शरीर, तथा प्रभूत = महाभूत = वृक्ष-पर्वतादि के साथ मिलकर तीन प्रकार के विशेष हो जाते हैं । उन तीन प्रकार के विशेषों के मध्य में 'सूक्ष्म' शरीरात्मक विशेष नियत = नित्य हैं, और माता-पितृज अर्थात् माता-पिता के अंशों से उत्पन्न होने वाले जो षाट्कौशिक पुत्रादि के शरीर हैं तथा पर्वत-वृक्षादिरूप 'प्रभूत' नामक विशेष हैं, वे निवर्तन्ते = नश्यन्ति अर्थात् उत्पन्न और नष्ट होते रहते हैं ।

( २ ) 'सूक्ष्मा' इति । 'त्रिधा विशेषाः स्युः' इति । तीन प्रकार के विशेष हैं; न कम न ज्यादा अर्थात्—१. सूक्ष्म शरीर २. मातापितृज स्थूल शरीर तथा ३. वृक्षपर्वतादिरूप 'प्रभूत'—ये तीन विशेष हैं ।

'तान् विशेषप्रकारानाह' इति । उन विशेषों के प्रकार = भेदों को बतलाते हैं । सूक्ष्माः = सूक्ष्मशरीर, यह प्रथम 'विशेष' है । ये सूक्ष्मशरीर परिकल्पित = अनुमानगम्य है ।

द्वितीय विशेष को बतलाते हैं—मातापितृजाः = माता-पिता से उत्पन्न शरीर स्थूलशरीर है और वह षट् = छः कोशों से निर्मित होने के कारण षाट्कौशिक कहलाता है । उनमें माता से लोम = त्वचा, लोहित = रक्त और मांस ये तीन कोश आते हैं तथा स्नायु = नसें, अस्थि, मज्जा, ये तीन पिता से आते हैं ।

( ३ ) प्रकृष्टानि महान्ति भूतानि प्रभूतानि तैस्सह। सूक्ष्मशरीरमेको विशेषः, मातापितृजो द्वितीयः, महाभूतानि तृतीयः। महाभूतवर्गे च घटादीनां निवेश इति।

( ४ ) सूक्ष्ममातापितृजयोर्देहयोर्विशेषमाह—'सूक्ष्मास्तेषां' विशेषाणां मध्ये ये, ते 'नियताः' नित्याः। 'मातापितृजा निवर्तन्ते' इति रसान्ता वा भस्मान्ता वा विडन्ता वेति ॥ ३९ ॥

---

स्थीति। ३. तृतीयो विशेषः—'प्रभूतैः सह' इत्यस्य व्याख्यया दर्शयति—प्रकृष्टानि महान्तीति।

( ३ ) कारिकास्थस्य 'प्रभूत'पदस्य व्याख्याया अनन्तरं विशेषाणां त्रिविधत्वं वाचस्पतिमिश्रो विवेचयतीत्याह—सूक्ष्मशरीरमेक इति। तथा च सूक्ष्मशरीर-स्थूलशरीर-पञ्चमहाभूतभेदेन विशेषास्त्रिविधा विनिरूपिताः। इत्थञ्च सूक्ष्मशरीरमेको विषयः, स्थूलशरीरमपरः, महाभूतानि च तृतीयो विषयः।

अस्मिन् पञ्चमहाभूतसमुदाये सर्वेऽपि घट-पटादयो महाभूतविकारा गृह्यन्तामित्याह—महाभूतवर्गे चेति। पञ्चमहाभूतानां यो वर्गस्तस्मिन्नित्यर्थः। तथा चात्र घट-पटादीनां तदवच्छिन्नाकाशादीनां च, निवेशः=सङ्ग्रहः।

( ४ ) सूक्ष्ममातापितृजयोर्देहयोः=सूक्ष्मशरीरस्थूलशरीरयोरित्यर्थः। विशेषमाह=भेदमाह। ते=सूक्ष्मदेहाः। नियताः=नित्याः, सृष्टिप्रारम्भमादाय प्रलयकालपर्यन्तस्थायिन इत्यर्थः। मातापितृजाः=स्थूलशरीराः। निवर्तन्ते=नश्यन्ति। नाशं

---

( ३ ) '**प्रकृष्टानि महान्ति भूतानि**' इति। 'प्रभूत' जो तीसरा विशेष है, उसकी व्याख्या करते है कि—प्रकृष्टानि=महान्ति, भूतानि=प्रभूतानि, अर्थात् 'प्रभूत' नामक जो वृक्ष-पर्वतादि एवं घट-पटादि तृतीय विशेष है, उसी के साथ अर्थात् उसी को मिलाकर विशेषों की त्रित्व संख्या पूरी होती है। उन तीन विशेषों में एक विशेष सूक्ष्मशरीर है, दूसरा विशेष स्थूलशरीर है, जो कि मातापितृज=पाट्कौशिक है और तृतीय विशेष 'प्रभूत'=महाभूत जो वृक्ष-पर्वतादि एवं घट-पटादि हैं तथा महाभूतवर्ग में ही घट-पटादि का सन्निवेश है।

( ४ ) '**सूक्ष्ममातापितृजयोः**' इति। इन कथित तीनों विशेषों मे से सूक्ष्मदेह और माता-पितृज जो स्थूलशरीर रूप विशेष हैं, इन दोनों विशेषों में शरीरत्वेन समानता होने पर भी विशेष=अन्तर वतलाते है—'**सूक्ष्मास्तेषां नियता**' इति। अर्थात् उन तीन विशेषों के मध्य में से सूक्ष्मशरीरात्मक जो विशेष हैं वे नित्य हैं, अर्थात् महाप्रलयपर्यन्त स्थायी है। और मातापितृज स्थूलशरीरात्मक जो विशेष हैं, वे नष्ट हो जाते हैं, अर्थात् स्थूलशरीरात्मक जो विशेष हैं, वे विनाशशील हैं। उन स्थूलदेहात्मक विशेषों की तीन गतियां होती हैं—रसान्त, भस्मान्त एवं विडन्त।

'**रसान्ता वा**' इति। रसा=पृथिवी, वही है अन्त में परिणाम जिनका, अर्थात् पृथिवीभावापन्न हो जाना=पृथिवी रूप हो जाना; एक तो यही स्थूल देहात्मक

(१) सूक्ष्मशरीरं विभजते—

**पूर्वोत्पन्नमसक्तं नियतं महदादिसूक्ष्मपर्यन्तम् ।**
**संसरति निरुपभोगं भावैरधिवासितं लिङ्गम् ॥ ४० ॥**

---

दर्शयति—रसान्ताः—रसा=पृथिवी, सैव अन्ते येषां ते रसान्ता इति व्युत्पत्त्या पृथिवीभावमापन्ना इत्यर्थः । भस्मान्ताः—भस्म अन्तो येषान्ते=दग्धा इत्यर्थः । विडन्ताः—विट्=विष्ठा अन्तो येषान्ते=विडालगृध्रश्वादिभिर्भक्षिता इत्यर्थः । शरीराणामेतास्तिस्रो गतयो भवन्ति ॥ ३९ ॥

(१) इदानीं 'पूर्वोत्पन्नमि'त्यादिकारिकावतरणमाह—सूक्ष्मशरीरमिति ।

अन्वयः—लिङ्गं पूर्वोत्पन्नम् असक्तं नियतं महदादिसूक्ष्मपर्यन्तं भावैरधिवासितं निरुपभोगं संसरति ।

लिङ्गम्=सूक्ष्मशरीरम् । पूर्वोत्पन्नम्=सृष्ट्यारम्भकाले प्रधानादुत्पन्नम् । असक्तम्=अव्याहतगतिकम्, अर्थात् परमाण्वादौ शिलादौ च प्रवेशनशक्तिसम्पन्नम् । नियतम्=नित्यम् । सृष्टिमारभ्य प्रलयकालपर्यन्तं स्थायि । महदादिसूक्ष्मपर्यन्तम्=महदहङ्कार-एकादशेन्द्रिय-पञ्चतन्मात्रपर्यन्तमष्टादशपदार्थविनिर्मितम् । भावैरधिवासितम्=भवति जगद् एभ्यस्ते भावास्तैः=धर्माधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्यरूपैः, अधिवासितम्=युक्तम् । निरुपभोगम्=सुखदुःखाऽन्यतरसाक्षात्काररूपभोगरहितम् । संसरति=पूर्वपूर्वस्थूलशरीराणि परित्यज्य नवनवस्थूलशरीरेषु गच्छति इति कारिकार्थः ।

---

विशेषों की स्थिति है । और 'भस्मान्त' हो जाना अर्थात् श्मसान में भस्मीभूत कर देना; यह दूसरी गति है । और तीसरी है 'विडन्त' हो जाना, अर्थात् जो स्थूलशरीर ऐसे ही जंगलों में फेंक दिये जाते हैं, उन्हें गृध्र-पक्षी, कुत्ते तथा गीदड़ आदि खा जाते हैं, उन स्थूलशरीरात्मक विशेषों की विष्ठा के रूप में परिणाम देखा जाता है, वे स्थूलशरीर विडन्त हो जाते हैं ।

और ऐसे ही प्रभूत=महाभूत जो तृतीय विशेष हैं, वे भी प्रलयावस्था में अपने-अपने कारण अव्यक्त में लीन हो जाते हैं ॥ ३९ ॥

(१) 'सूक्ष्मशरीरम्' इति । सूक्ष्मशरीर का विभाग करते हैं—'पूर्वोत्पन्नमसक्तम्' इत्यादि कारिका से ।

कारिकार्थ—यह लिङ्गशरीर=सूक्ष्मशरीर सर्वप्रथम सृष्टि के आरम्भकाल में उत्पन्न होता है, जो असक्त=अव्याहतगतिक है, नित्य है, अर्थात् सृष्टि के आरम्भ से लेकर महाप्रलयपर्यन्त बराबर रहता है और महदादि सूक्ष्मपर्यन्त है, अर्थात् महत्तत्त्व से लेकर सूक्ष्म पञ्चतन्मात्रापर्यन्त जो समुदाय है, अष्टादश अवयव तत्त्वरूप ही यह सूक्ष्मशरीर है । तथा धर्म, अधर्म, ज्ञान, अज्ञान आदि अष्टविध भावों से युक्त है और निरुपभोग अर्थात् सुख-दुःख आदि के साक्षात्काररूप उपभोग से रहित होता हुआ पूर्व-पूर्व स्थूलशरीरों को छोड़कर नये-नये स्थूलशरीरों में बराबर संसरण=गमनागमन करता रहता है ।

( २ ) 'पूर्वोत्पन्नम्' इति । 'पूर्वोत्पन्नम्' प्रधानेनाऽऽदिसर्गे प्रतिपुरुषमेकैकमुत्पादितम् । 'असक्तम्', अव्याहतं, शिलामप्यनुप्रविशति । 'नियतम्' आ चाऽऽदिसर्गात्, आ च महाप्रलयादवतिष्ठते । महदादिसूक्ष्मपर्यन्तम्, महदहङ्कारैकादशेन्द्रियपञ्चतन्मात्रपर्यन्तम् । एषां समुदायः सूक्ष्मं शरीरम्, शान्तघोरमूढैरिन्द्रियैरन्वितत्वाद्विशेषः ।

---

( २ ) पूर्वोत्पन्नमिति शब्दस्यार्थमाह—**प्रधानेनेति** । मूलप्रकृत्या । आदिसर्गे=सर्वप्रथमसृष्टिकाले । असक्तम्=संसर्गरहितम् । विषयान्तरसंसर्गेणैव गत्यवरोधो भवति तदभावात् सर्वत्र गतिशीलमित्याशयेनाह—**अव्याहतमिति** । **शिलामपीति** । अनुप्रविशति=पश्चात्प्रवेशं करोति । 'नियतम्' इत्यस्यार्थमाह—**आ चेति** । आदिसर्गात्=आदिसर्गमारभ्येत्यर्थः । इदं श्रूयते यत्—'दशसु महाकल्पेषु विपरिवर्तमानेन मये'त्यादिना आवट्यजैगीषव्यसंवादेन निश्चीयते यत् सन्ति बहवो महाकल्पाः=महासर्गास्तत्र चास्ति सूक्ष्मशरीरमेकमेवेति, अन्यथा तयोः प्रागुक्तं संवादरूपं कथनमेव विरुद्धयेत, इत्यतो बहूनां महासर्गाणा य आदिभूतो महासर्गस्तस्मात्, आ=आरभ्य, अर्थात् आदिभूतमहासर्गमारभ्येत्यर्थः । आ च महाप्रलयात्=महाप्रलयात् आ=अभिव्याप्य=पर्यन्तम्, महाप्रलयपर्यन्तमित्यर्थः । 'महदादिसूक्ष्मपर्यन्तम्' इत्यस्यार्थमाह—**महदहङ्कारैकादशेन्द्रियेत्यादि** । अर्थाद् बुद्ध्यहङ्कारमनांसि, दशविधानि बाह्येन्द्रियाणि=पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि च, पञ्च तन्मात्राणि चेत्यष्टादश । एषाम्=अष्टादशाऽवयवानाम् । समुदायः=समूहः=पुञ्जमेव । सूक्ष्मशरीरम्, कथ्यते इति शेषः । सूक्ष्मशरीरस्य विशेषत्वं दर्शयति—**शान्तघोरमूढैरिति** । शान्तत्व-घोरत्व-मूढत्वधर्मावच्छिन्नैरिन्द्रियैर्विशेषैर्युक्तत्वात् सूक्ष्मशरीरसमुदायेऽपि औपचारिको विशेषो वर्तते । तथा चेन्द्रियाणां शान्तत्व-घोरत्व-मूढत्वधर्माणां मादृशैः सर्वैरेवाऽनुभवविषयीकरणाद् विशेषत्वमङ्गीकरणीयम्, इत्थञ्च तद्घटितसूक्ष्मशरीरस्यापि विशेषत्वं सर्वथा निर्विवादमेव । अत एव 'तन्मात्राण्यविशेषाः' इति ईश्वरकृष्णकथनेन तन्मात्राणामेव शान्तत्व-घोरत्वादेरनुभवाऽविषयत्वाद् अविशेषत्वं नातिरिक्तानाम् ।

---

( २ ) **'पूर्वोत्पन्नम्'** इति । अर्थात् सृष्टि के आरम्भ में प्रधान=प्रकृति के द्वारा प्रत्येक पुरुष के लिए पृथक्-पृथक् रूप से समुत्पादित यह सूक्ष्मशरीर असक्त=अव्याहतगतिक है, जिससे यह शिला के अन्दर भी प्रवेश कर जाता है । नियत=नित्य है, अर्थात् सृष्टि के आरम्भ से लेकर महाप्रलयपर्यन्त स्वस्थितिमान् है । और यह महदादि सूक्ष्मपर्यन्त है, अर्थात् महत्तत्त्व से लेकर सूक्ष्म जो पञ्चतन्मात्राएँ हैं, तत्पर्यन्त जो समुदाय अर्थात् महत्, अहङ्कार, एकादशेन्द्रिय और पञ्चतन्मात्राएँ हैं—इन अठारह अवयवों का समुदाय ही सूक्ष्मशरीर है । शान्त, घोर एवं मूढ़ स्वभाववाली इन्द्रियों से सम्बन्धित होने के कारण इसे विशेष भी कहा है ।

कुछ दार्शनिक विद्वानों का कहना है कि इस सूक्ष्मशरीर से भिन्न भी एक अनादिवासनालक्षण-लक्षित कारणशरीर है ।

( ३ ) नन्वस्त्वेतदेव शरीरं भोगायतनं पुरुषस्य, कृतं दृश्यमानेन षाट्कौशिकेन शरीरेणेत्यत आह—'संसरति' इति। उपात्तमुपात्तं षाट्कौशिकं शरीरं जहाति, हायं हायं चोपादत्ते।

( ४ ) कस्मात्? 'निरुपभोगं'; यतः षाट्कौशिकं शरीरं निरुपभोगं तस्मात्सूक्ष्मं शरीरं संसरति।

---

( ३ ) नन्विति। एतदेव=सूक्ष्ममेव। भोगायतनम्=भोगाधिष्ठानभूतम्=भोगाधिकरणं वा। पुरुषस्य=चेतनस्य=आत्मनः। कृतम्=व्यर्थम्। षाट्कौशिकेन=रोम-लोहित-मांस-स्नायु-अस्थि-मज्जास्वरूपषट्कोशविनिर्मितेन। शरीरेण। इत्यत आह—**संसरतीति**। गच्छतीत्यर्थः। उपात्तमुपात्तम्=गृहीतं गृहीतम्। जहाति=परित्यजति। नवीनञ्च शरीरम्। उपादत्ते=गृह्णाति।

( ४ ) तत्र कारणजिज्ञासायामाह—**कस्मादिति**। अर्थात् कस्मात् कारणात् स्थूलशरीरमुपादत्ते त्यजति चेदं सूक्ष्मशरीरम्? प्रयोजनमाह—**निरुपभोगमिति**। सुख-दुःखान्यतरसाक्षात्काररूपभोगरहितमित्यर्थः। तदेव प्रस्फोरयति—**यत इति**। यतः=यस्मात्कारणात्। ( सूक्ष्मशरीरमिदम् ) षाट्कौशिकं शरीरम्=प्रागुक्तषट्कोशविनिर्मितस्थूलशरीरम् ( विना )। निरुपभोगम्=धर्माधर्मरूपभोगासमर्थम्। तस्मात्=तस्मात् कारणात्। सूक्ष्मं शरीरम्। संसरति=पुनः पुनर्गृहीतं स्थूलशरीरं परित्यज्य नवं नवं शरीरं गृह्णातीत्यर्थः।

---

( ३ ) प्रश्न—**'नन्वस्तु एतदेव'** इति। अर्थात् इस सूक्ष्मशरीर को ही पुरुष के भोग का आयतन=अधिकरण=स्थान मान लिया जाय; क्या आवश्यकता है फिर इस षाट्कौशिक दृश्य=स्थूलशरीर की?

उत्तर—**'इत्यत आह—संसरति'** इति। अर्थात् यह सूक्ष्मशरीर संसरणशील है, अर्थात् यह सूक्ष्मशरीर पूर्व-पूर्व स्थूलशरीर को छोड़कर स्व-स्व अदृष्टानुसार दूसरे-दूसरे नये नये स्थूल शरीरों को बराबर धारण करता रहता है और धारण किये हुओं को छोड़ता रहता है। इस प्रकार बराबर सूक्ष्मशरीरों का स्थूलशरीरों में गमनागमन होता रहता है; अतः स्थूलशरीर का स्वीकार नितान्त आवश्यक है।

( ४ ) प्रश्न—**'कस्मात्'** इति। अर्थात् सूक्ष्मशरीर जो स्थूलशरीर को बार-बार ग्रहण करता है और बार-बार छोड़ता है, उसमें कारण क्या है; वह ऐसा क्यों करता है?

उत्तर—**'निरुपभोगम्'** इति। धर्म तथा अधर्मजन्य फलोपभोग में असमर्थ होने के कारण यह सूक्ष्मशरीर सर्वथा निरुपभोग है। इसलिए षाट्कौशिक भोगायतन इस स्थूलशरीर के बिना यह सूक्ष्मशरीर सुखदुःखान्यतरसाक्षात्कारात्मक उपभोग करने में सर्वथा असमर्थ है; इसी कारण यह सूक्ष्मशरीर बारम्बार स्थूलशरीर में संसरण करता रहता है।

( ५ ) ननु धर्माधर्मनिमित्तः संसारः, न च सूक्ष्मशरीरस्याऽस्ति तद्योगः, तत्कथं संसरतीत्यत आह—'भावैरधिवासितम्' इति। धर्माधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्याणि भावाः, तदन्विता बुद्धिः, तदन्वितञ्च सूक्ष्मं शरीरमिति तदपि भावैरधिवासितम्।

( ६ ) यथा सुरभिचम्पककुसुमसम्पर्काद्वस्त्रं तदामोदवासितं भवति। तस्माद्भावैरेवाऽधिवासितत्वात्संसरति।

---

( ५ ) धर्माधर्मावात्मगुणाविति न्यायमतेनाऽऽशङ्कते—**ननु धर्माधर्मनिमित्त इति**। धर्माधर्मौ निमित्तकारणं यस्य एवम्भूतः संसारः। संसारश्च मिथ्याधीप्रभवैर्वासनारूपः। **न चेति**। न च सूक्ष्मशरीरस्य=न च सूक्ष्मशरीरेण सह। तद्योगः=धर्माधर्मयोगः, धर्माधर्मसम्बन्ध इत्यर्थः। तत्कथम्=तस्माद् अयोगादेव कारणात्, कथम्=केन कारणेन, केन वा प्रकारेण। संसरति=सूक्ष्मशरीरं शरीरान्तरं गच्छति, अर्थात् तत्तद्धर्माधर्मनिबन्धनं स्थूलशरीरं गृह्णातीत्यर्थः? समाधत्ते—**'भावैरधिवासितमि'ति**। भवन्तीति भावाः—धर्माधर्मादयस्तैः=धर्माधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्यरूपैरित्यर्थः। तदन्विता बुद्धिः=भावभूतपदार्थान्विता बुद्धिः। तथा च साङ्ख्याचार्यैर्वैशेषिकादिवद् धर्माधर्मयोर्नात्मनो धर्मत्वं स्वीक्रियते अपि तु बुद्धिधर्मत्वमेव तयोरिति भावः। तदन्वितञ्च=बुद्धिघटितञ्च, सूक्ष्मशरीरम्। इति=इत्यतः। तदपि=सूक्ष्मशरीरमपि। भावैः=धर्माधर्मरूपैः प्रागुक्तैः। अधिवासितम्=युक्तं, भवतीति शेषः। अधिवासितमित्यत्र 'अधि'शब्दः अत्यन्तयोगार्थः, तथा च धर्माधर्माद्यष्टविधभावपदार्थानां सूक्ष्मशरीरेण सह अत्यन्तमेवाऽभेद्यघनिष्ठसम्बन्धः सूचितः।

( ६ ) तच्च दृष्टान्तेन सुस्पष्टयति—**यथेति**। सुरभिचम्पककुसुमसम्पर्कात्—सुरभिः=सुष्ठु गन्धः, तद्युक्तं यच्चम्पकस्य कुसुमं=पुष्पं, तत्सम्पर्कात्=सम्बन्धात्=संयोगात्मकसम्बन्धात्। वस्त्रम्=वस्त्रमपि। तदामोदवासितम्—तस्य=कुसुमस्य=पुष्पस्य, आमोदेन=सुगन्धेन, वासितम्=गन्धयुक्तं=सुगन्धीकृतमित्यर्थः। एवञ्च यथा कुसुमगन्धेन वस्त्रं सुगन्धं प्रतीतं भवति तथैव धर्माधर्माद्यष्टविधभावभूतैर्बुद्धिधर्म-

---

( ५ ) शंका—'**ननु धर्माधर्मनिमित्त**' इति। अर्थात् यह चराचर संसार धर्माधर्मनिमित्तक है और इस सूक्ष्मशरीर का धर्म तथा अधर्म से कोई योग=सम्बन्ध नहीं है, तब फिर यह सूक्ष्मशरीर क्यों संसरण करता है?

समाधान—'भावैरधिवासितम्' इति। धर्म अधर्म, ज्ञान-अज्ञान, वैराग्य-अवैराग्य, ऐश्वर्य-अनैश्वर्य—ये आठ भाव हैं और इन आठ भावों से युक्त बुद्धि है तथा बुद्धि से युक्त यह सूक्ष्मशरीर है। इस प्रकार बुद्धि के द्वारा परम्परया सूक्ष्मशरीर का धर्माऽधर्म रूप भावों के साथ सम्बन्ध हो जाता है।

( ६ ) 'यथा सुरभिचम्पके' इति। दृष्टान्त के आधार पर इस विषय का उपपादन करते हैं कि जैसे—वस्त्र के एकदेश मे भी यदि चम्पा के पुष्प का सम्पर्क हो जाता है तो उससे समग्र वस्त्र परम्परया अन्वित होने के कारण उसकी महक से

( ७ ) कस्मात् पुनः प्रधानमिव महाप्रलयेऽपि तच्छरीरं न तिष्ठतीत्यत आह—'लिङ्गम्' इति। लयं गच्छतीति लिङ्गम्, हेतुमत्त्वेन चाऽस्य लिङ्गत्वमिति भावः ॥ ४० ॥

( १ ) स्यादेतत्—बुद्धिरेव साहङ्कारेन्द्रिया कस्मान्न संसरति? कृतं सूक्ष्मशरीरेणाप्रामाणिकेनेत्यत आह—

---

रपि सूक्ष्मशरीराणि समस्तानि संयुक्तानि भवन्तीति बोध्यम्, तत एव चास्य संसरणं भवति, तस्माद्धेतोः सूक्ष्मत्वेऽपि लिङ्गशरीरस्य धर्मादिसम्बन्धस्त्वनिवार्य एवेति सिद्धान्तः। 'तस्मादि'ति पदस्यैवाऽर्थं सुस्पष्टयति—भावैरधिवासितत्वादिति। अर्थाद् यस्माद् धर्माधर्मयोः पुण्यपापयोर्न पुरुषनिष्ठत्वं तस्मात्, भावैरधिवासितत्वात् संसरति। तथा च सांख्याचार्यैर्धर्माधर्मयोर्न पुरुषनिष्ठत्वं स्वीक्रियतेऽतस्तयोः सूक्ष्मशरीरनिष्ठतयैव तददृष्टनिबन्धनः स्थूलशरीरसम्बन्धः सूक्ष्मशरीरस्यैव समुचितः प्रतीयते इति भावः।

( ७ ) अस्य सूक्ष्मशरीरस्याऽनयैव कारिकया सृष्टिकालमारभ्य महाप्रलयपर्यन्तस्थायित्वरूपं नियतत्वं ( नित्यत्वं ) प्रतिपादितमीश्वरकृष्णेन, तदेवेदानीं शङ्कोत्तरभावेन प्रतिपादयति वाचस्पतिमिश्रः—कस्मादिति। शङ्कते—कस्मात्कारणात् पुनरिति चकारार्थे। प्रधानं=मूलप्रकृतिः, यथा महाप्रलयेऽपि तिष्ठति, तथा तच्छरीरं=सूक्ष्मशरीरम्। कथन्न महाप्रलये न तिष्ठति? समाधत्ते—लिङ्गमिति। लिङ्गशब्दार्थमाह—लयमिति। लयं=तिरोभावम्। गच्छति=स्वकारणे तिरोहितं भवतीति। हेतुमत्त्वेन=जन्यत्वेन। अस्य=सूक्ष्मशरीरस्य। लिङ्गत्वं=लयगामित्वम् ॥ ४० ॥

**सूक्ष्मशरीरे प्रमाणकथनम्**

( १ ) 'चित्रमि'त्यादिकारिकाया अवतरणं शङ्कामुखेनाह—स्यादेतदिति। साह-

---

सुवासित हो उठता है, उसी प्रकार बुद्धिधर्मभावों से यह समस्त सूक्ष्मशरीरसमुदाय भी भावान्वित हो जाता है।

( ७ ) प्रश्न—'**कस्मात् पुनः प्रधानमिव**' इति। महाप्रलय में जैसे प्रधान=प्रकृति की अपनी स्थिति बराबर अक्षुण्ण रूप से बनी रहती है, वैसे ही यह सूक्ष्मशरीर जब कि नित्य है तब यह कैसे महाप्रलय में सन्तिष्ठमान नहीं रहता है?

उत्तर—'**लिङ्गम्**' इति। अपने कारण प्रधान में यह लीन=तिरोभूत हो जाता है।

प्रश्न—यह सूक्ष्मशरीर लीन=तिरोभूत क्यों हो जाता है?

उत्तर—'**हेतुमत्त्वेन**' इति। सूक्ष्मशरीर भी हेतुमान् अर्थात् कारणजन्य होने के कारण अनित्य है, उत्पादविनाशशाली है। और महाप्रलयपर्यन्त स्थितिमत्त्व ही इसका नित्यत्व है ॥ ४० ॥

( १ ) '**स्यादेतत्**' इति। यह पूर्वोक्त कथन ठीक है, परन्तु यहाँ यह प्रश्न अवश्य जागरूक होता है कि—अहङ्कार तथा इन्द्रियों के सहित बुद्धि ही संसरण क्यों नहीं करती है? क्या आवश्यकता है अप्रामाणिक सूक्ष्मशरीर की?

**चित्रं यथाऽऽश्रयमृते स्थाण्वादिभ्यो विना यथा च्छाया ।**
**तद्वद्विनाऽविशेषैर्न तिष्ठति निराश्रयं लिङ्गम् ॥४१॥**

( २ ) 'चित्रम्' इति । लिङ्गनाज्ज्ञापनाद् बुद्ध्यादयो 'लिङ्गम्' तत् अनाश्रयं न तिष्ठति। जन्मप्रायणान्तराले बुद्ध्यादयः प्रत्युत्पन्नशरीराश्रिताः—प्रत्युत्पन्नपञ्चतन्मात्रवत्त्वे सति बुद्ध्यादित्वाद् दृश्यमानशरीरवृत्तिबुद्ध्यादिवत् ।

---

ङ्कारेन्द्रिया=एकादशेन्द्रियसहिता अहङ्कारसहिता चेत्यर्थः । कृतम्=व्यर्थम् । बुद्धिः, अर्थात् साहङ्कारेन्द्रियबुद्धित एव भोगोऽस्तु, काऽऽवश्यकताऽप्रामाणिकस्य सूक्ष्मशरीरस्येत्यत आह—**चित्रं यथाश्रयमिति** ।

अन्वयः—यथा चित्रम् आश्रयम् ऋते न तिष्ठति, यथा छाया स्थाण्वादिभ्यः विना न तिष्ठति; तद्वत् लिङ्गम् अविशेषैः विना निराश्रयं न तिष्ठति ।

यथा चित्रम्='फोटो' इति हिन्दी । आश्रयम्=आधारम् । कृते=विना । न तिष्ठति । एवं यथा छाया=वृक्षादीनां छाया । स्थाण्वादिभ्यः=वृक्षादिभ्यः । विना । न तिष्ठति तद्वत्=तथैव । अविशेषैः=सूक्ष्मशरीरैर्विना अत्रादिपदेन यथा नोऽद्भिर्विना शैत्यं तिष्ठति, अग्निं विना नोष्णं तिष्ठति, वायुं विना स्पर्शो न, आकाशं वाऽवकाशो न तिष्ठति । लिङ्गम्=बुद्धि आदि । निराश्रयम्=निराधारम् । न तिष्ठतीति कारिकार्थः ।

( २ ) लिङ्गयतीति व्युत्पत्त्या लिङ्गनम्=ज्ञापनम् । तस्य प्रधानस्याऽनुमापकत्वात् पञ्चतन्मात्राणि परित्यज्य त्रयोदशविधकरणानि बुद्ध्यादीनि लिङ्गपदाभिधेयानि भवति । अनुमानप्रकारमाह—**जन्मप्रायणान्तराले** इत्यादिना । प्रायणं=मृत्युः, अर्थात् जन्म च प्रायणञ्चेति जन्मप्रायणे, तयोरन्तराले=मध्ये इत्यर्थः । अत्रानुमाने—'जन्मप्रायणान्तराले बुद्ध्यादयः' पक्षः प्रत्युत्पन्नशरीराश्रितात्वं साध्यम्, प्रत्युत्पन्नेत्यारभ्य बुद्धित्वादित्यन्तं हेतुः, दृश्यमानेत्यादिकं दृष्टान्तः । अर्थात् जन्ममरणयोर्मध्यकाले

---

**कारिकार्थ**—उत्तर देते हैं—**'चित्रम्'** इति । जैसे आश्रय=आधार के बिना चित्र नहीं रह सकता है, एवं स्थाणु=वृक्ष आदि के बिना छाया नही रह सकती है, उसी प्रकार विशेष=सूक्ष्मशरीर के बिना लिङ्ग=बुद्धि, अहङ्कार आदि निराश्रय=आश्रयविहीन होकर नही रह सकते हैं अर्थात् यही सूक्ष्मशरीर की आवश्यकता है ।

( २ ) **'चित्रम्'** इति । लिङ्ग का अर्थ है 'ज्ञापक' अर्थात् लिङ्गनात्=ज्ञापनात् अर्थात् बुद्धि आदि प्रधान के ज्ञापक=अनुमापक होने से 'लिङ्ग' शब्द से कहे जाते हैं, अतः ये बुद्ध्यादि—पाँच ज्ञानेन्द्रिय, पांच कर्मेन्द्रिय तथा बुद्धि, मन, अहङ्कार, यह त्रयोदशविध करण लिङ्ग आश्रयरहित होकर नहीं रह सकते हैं । अनुमान यह है—

**'जन्मप्रायणान्तराले'** इति । अर्थात् जन्म, प्रायण=मरण, इनके अन्तराल=मध्यकाल में बुद्धि आदि त्रयोदशविध करण ( यह पक्ष है )—उत्पन्न जो एक-एक शरीर उसके आश्रित हैं ( यह साध्य है )—कारण कि ये बुद्धि आदि तेरह करण सृष्टिकाल में उत्पन्न पञ्चतन्मात्राओं से युक्त होकर बुद्धि आदि रूप हैं ( यह हेतु है ),

( ३ ) 'विनाऽविशेषैः' इति, सूक्ष्मैः शरीरैरित्यर्थः। आगमश्चात्र भवति-

'ततः सत्यवतः कायात् पाशबद्धं वशङ्गतम् ।
अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष बलाद्यमः' ॥

( महा० व० २९७।१७ )

इत्यङ्गुष्ठमात्रत्वेन सूक्ष्मशरीरत्वमुपलक्षयति। आत्मनो निष्कर्षासम्भवात् सूक्ष्ममेव शरीरं 'पुरुषः', तदपि पुरि स्थूलशरीरे शेते इति ॥ ४१ ॥

---

प्रत्येकशरीरे बुद्धयादयः, समाश्रिताः सन्तः सन्तिष्ठन्ते, हेतुमाह—सृष्टिकाले समुत्पन्न-पञ्चतन्मात्राभियुक्ताः सन्तो बुद्धि-अहङ्कारादिरूपेण शरीरे स्थितिमापन्नाः भवन्ति। ये ये पदार्थाः पञ्चतन्मात्राभियुक्ताः सन्तो बुद्धयादिरूपेण सन्तिष्ठन्ते ते शरीरं विना नैव स्थितिमापन्ना भवन्तीति भावः।

( ३ ) **सूक्ष्मैः शरीरैरिति**। सूक्ष्मशरीरस्वरूपविशेषं विना जन्मप्रायणयोर्मध्ये बुद्धयादयो नहि तिष्ठन्तीति निष्कर्षः।

इदानीमनुमानप्रमाणेन साधितं सूक्ष्मशरीरं दाढर्यार्थं शब्दप्रमाणेनापि पुनः साध्यते—**आगमश्चात्रेति**। अत्र = सूक्ष्मशरीरे। ततः = यमस्याऽऽगमनानन्तरम्। यमः = यमदूतः। सत्यवतः = 'सत्यवान्' इति नामकस्य राज्ञः। कायात् = स्थूलशरीरात्। वशङ्गतम् = स्वाधीनम्। पाशबद्धम् = पाशात्मकबन्धनग्रस्तम्। अङ्गुष्ठमात्रम् = अष्टादशतत्त्वात्मकसूक्ष्मशरीरविशिष्टमित्यर्थः। पुरुषम् = आत्मानम्। बलात्। निश्चकर्ष = निष्कासितवान्। सूक्ष्मशरीरत्वमुपलक्षयति। अत्र वाचस्पतिमिश्रः लक्षणावृत्त्या अङ्गुष्ठमात्रत्वेन सूक्ष्मशरीरस्य ग्रहणं विधत्ते।

ननु मिश्रमते अङ्गुष्ठमात्रपदेन सूक्ष्मशरीरस्य ग्रहणं जायते इत्यत्र कारणमुच्यताम्? लक्षणा चेत् कारणं तदा तस्यापि कारणमुच्यताम्? इति प्रश्ने पुरुषपदप्रयोगेण विभोरात्मनः पुरुषस्य शरीरतो निष्कासनाऽसम्भवे नाऽन्वयानुपपत्त्या पुरुषपदस्य पुरि = स्थूलशरीरे, शेते इति यौगिकव्युत्पत्त्या स्थूलशरीरे शयनकर्ता इत्यर्थो लभ्यते। अङ्गुष्ठमात्रपदस्य च लक्षणाकारणीभूतया तात्पर्यानुपपत्त्या सूक्ष्मशरीरे लक्षणा जायते; इत्याशयेनोक्तम्—**आत्मन इति**। आत्मनः = व्यापकीभूतस्य चेतनस्य निष्कासनं नहि भवितु-

---

जो पदार्थ तन्मात्राओं से युक्त होकर बुद्धि आदि स्वरूप हैं, वे शरीर के बिना कदापि नहीं रहते, जैसे दृश्यमान इस स्थूल शरीर में रहने वाले बुद्धि आदि ( यह दृष्टान्त है )।

( ३ ) **'विना विशेषैः'** इति। विशेष के बिना अर्थात् सूक्ष्मशरीर के बिना, अर्थात् सूक्ष्मशरीरात्मक विशेष के बिना, जन्म तथा मृत्यु के अन्तरालकाल में बुद्धि त्रयोदशविध करण निराश्रय होकर नहीं रहते हैं—इस सूक्ष्मशरीर का स्वीकार सर्वथा आवश्यक है।

**'आगमश्चात्र'** इति। अनुमानप्रमाण से सूक्ष्मशरीर को सिद्ध करके शब्दप्रमाण से भी पुष्ट करते हैं—यम ने सत्यवान् के स्थूलशरीर से पाशबद्ध तथा वशंगत अंगुष्ठ-

( १ ) एवं सूक्ष्मशरीरास्तित्वमुपपाद्य यथा संसरति, येन हेतुना च तदुभयमाह—

**पुरुषार्थहेतुकमिदं निमित्तनैमित्तिकप्रसङ्गेन ।**
**प्रकृतेर्विभुत्वयोगान्नटवद्व्यवतिष्ठते लिङ्गम् ॥ ४२ ॥**

---

मर्हतीति, 'अङ्गुष्ठमात्र'पदस्य लक्ष्यीभूतं यत् सूक्ष्ममेव शरीरमिति तदनुकूल एव पुरुषपदस्यार्थः क्रियते—तदपीति । सूक्ष्मशरीरमपीत्यर्थः । पुरि=स्थूलशरीरे, शेते । इत्यतः 'स्थूलशरीरे शयनकर्ता' इत्यर्थः पुरुषपदेन लभ्यते । इत्थञ्च स्थूलशयनकर्तारं सूक्ष्मशरीरं यमो बलान्निश्चकर्ष इति तु परमार्थः ॥ ४१ ॥

( १ ) 'पुरुषार्थहेतुकम्' इत्यादिकारिकाया अवतरणमाह—**एवं सूक्ष्मशरीरेत्यादिना** । तच्च सूक्ष्मशरीरं यथा संसरति, येन च कारणेन संसरति, तदुभयमेवाऽऽह—**पुरुषार्थहेतुकमिति** ।

अन्वयः—पुरुषार्थहेतुकम् इदं लिङ्गं निमित्तनैमित्तिकप्रसङ्गेन प्रकृतेः विभुत्वयोगात् नटवत् व्यवतिष्ठते ।

पुरुषार्थहेतुकम्=पुरुषस्य=आत्मनः, अर्थः=प्रयोजनं=भोगापवर्गरूपम्, स (पुरुषार्थः) एव हेतुर्यस्य तत् पुरुषार्थहेतुकम् इत्यर्थः । सूक्ष्मशरीरस्य गमनागमने पुरुषार्थ एव हेतुत्वेन प्रयोजकम् इति भावः । इदम्='महदादिसूक्ष्मपर्यन्तम्' इत्यनेनोल्लिखितम् । लिङ्गम्=सूक्ष्मशरीरम् । निमित्तनैमित्तिकप्रसङ्गेन—निमित्ताः =धर्माऽधर्मादयोऽष्टौ भावपदार्थाः, अनेकविधशरीरकारणीभूताः । नैमित्तिकाः=

---

मात्र पुरुष को बलपूर्वक निकाल लिया, 'अङ्गुष्ठमात्र' यह पद सूक्ष्मपरक है, अतः अंगुष्ठमात्र पुरुष सूक्ष्मशरीरपरक है । आत्मा का निष्कर्ष=निकालना असंभव है, अतः सूक्ष्म शरीर ही पुरुष है, क्योंकि सूक्ष्मशरीर भी स्थूलशरीर मे शयन करता है ॥ ४१ ॥

( १ ) **'एवं सूक्ष्मशरीरास्तित्वम्'** इति । इस प्रकार पूर्वोक्तरीत्या सूक्ष्मशरीर के अस्तित्व का उपपादन कर दिया । अब ४२वी कारिका से यह बतलाना है कि यह सूक्ष्मशरीर किस प्रकार से तथा किस कारण से पूर्व-पूर्व स्थूल शरीरों को छोड़कर नाना स्थूल शरीरान्तरों मे संसरण=भ्रमण करता है । इन दोनों बातो को बतलाते है—**'पुरुषार्थहेतुकम्'** इत्यादि कारिका से ।

**कारिकार्थ**—पुरुष=चेतनतत्त्व=आत्मा का भोग तथा अपवर्ग रूप जो अर्थ=प्रयोजन, उसका कारणीभूत यह लिङ्ग=सूक्ष्मशरीरनिमित्त=धर्माधर्मादिरूप अष्ट भाव, तथा नैमित्तिक=धर्माधर्मादिलभ्यपाट्कौशिकस्थूलशरीर, इन दोनो के प्रसङ्ग =प्राप्ति=सहयोग से और प्रकृति के विभुत्वयोग से नट की तरह अर्थात् नट जैसे देवस्वरूप धारण करता है तो कभी मनुष्य बनता है और कभी विदूषक, इत्यादि रूप मे नाटक करता है, इसी प्रकार से यह सूक्ष्मशरीर भी मोक्षकालपर्यन्त कभी देवशरीर

(२) 'पुरुषार्थहेतुकम्' इति । पुरुषार्थेन हेतुना प्रयुक्तम् । 'निमित्तम्' धर्माधर्मादि; 'नैमित्तिकम्' तेषु तेषु निकायेषु यथायथं षाट्कौशिकशरीरग्रहः, स हि धर्मादिनिमित्तप्रभवः । निमित्तञ्च नैमित्तिकञ्च—तत्र यः प्रसङ्गः प्रसक्तिस्तेन 'नटवद्व्यवतिष्ठते लिङ्गम्' सूक्ष्मशरीरम् । यथा हि नटस्तां तां भूमिकां

---

स्थूलशरीरादयः, तेषां प्रसङ्गेन=धर्माधर्मादिकरणकनानाविधस्थूलशरीरधारणरूपव्यापारेण । प्रकृतेः । विभुत्वयोगात्=व्यापकत्वात् । नटवत् । व्यवतिष्ठते=संसरति =मोक्षकालपर्यन्तम् अथवा प्रलयकालपर्यन्तं संसरणं करोत्येव ।

( २ ) कौमुद्याम्—पुरुषार्थेन=पुरुषस्य=चेतनतत्त्वभूतस्याऽऽत्मनः, योऽस्ति भोगापवर्गात्मकप्रयोजनरूपोऽर्थस्तेन । हेतुना । प्रयुक्तम्=प्रवर्तितम् । निमित्तपदस्यार्थमाह—**धर्माधर्मादीति** । अर्थात् धर्मः, अधर्मः, ज्ञानम्, अज्ञानम्, वैराग्यम्, अवैराग्यम्, ऐश्वर्यम्, अनैश्वर्यम् इत्यष्टौ भावपदार्थाः सन्ति 'निमित्त'पदवाच्याः । नैमित्तिकपदार्थमाह—तेषु तेषु इति । तेषु तेषु निकायेषु=तासु तासु योनिषु, अर्थात् मनुष्यपश्वादियोनिषु । यथायथम्=अदृष्टक्रमाऽनुसारम् । षाट्कौशिकशरीरग्रहः=स्थूलशरीरप्राप्तिः । स हि=षाट्कौशिकशरीरपरिग्रहो हि । धर्मादिनिमित्तप्रभवः=धर्माधर्मादिनिमित्तकारणात् जन्यः, इत्थञ्च धर्माधर्मादिना स्थूलशरीरप्राप्तिः स्थूलशरीरेण च पुनर्धर्माधर्माद्युपार्जनम्, इत्येवं क्रमेण जायते खलु मोक्षावाधिकः संसरणं नैरन्तर्येण प्रचलति । तथा च शरीरस्य कारणं धर्मादिः, धर्मादिकारणञ्च शरीरमित्यनवस्थाप्रसङ्गः समागच्छति, स च न दोषावहः, बीजाङ्कुरवत् प्रामाणिकीयमनवस्था, न दोषाय । 'निमित्तनैमित्तिकप्रसङ्गेन' इत्यस्यार्थमाह—**निमित्तञ्च नैमित्तिकञ्चेत्यादिना** । प्रसङ्गः=प्रसक्तिः=सहयोगः=सहचारस्तेनेत्यर्थः । यदि धर्माधर्मादिना निमि-

---

में जाता है तो कभी मनुष्य शरीर में, तो कभी पशु-पक्षी आदि शरीरों में बराबर संसरण=भ्रमण करता रहता है । एवं कभी देश में स्थूलशरीर धारण करता है तो कभी विदेशों में बराबर संसरण करता रहता है ।

( २ ) पुरुषार्थहेतुक अर्थात् पुरुष के भोगापवर्गरूप अर्थ=प्रयोजनरूप कारणवाला यह सूक्ष्मशरीर-निमित्त जो धर्म, अधर्म, ज्ञान, अज्ञान, वैराग्य, अवैराग्य, ऐश्वर्य तथा अनैश्वर्य, ये आठ भावपदार्थ हैं, उनके प्रसङ्ग=सहयोग से तथा नैमित्तिक=उन-उन निकायों में अर्थात् भिन्न-भिन्न देव, मनुष्य, पशु, पक्षी आदि योनियों में—यथायथ=अदृष्टक्रमानुसार षाट्कौशिक शरीर की प्राप्ति जो सूक्ष्मशरीर को होती है, वह धर्माधर्मादिरूप निमित्तकारण वाले स्थूल से प्रभव=जन्य है । और नैमित्तिक इस षाट्कौशिक शरीर के सहयोग से सूक्ष्मशरीर पुरुष के भोगापवर्गरूप अर्थ का हेतु बनता है । वही कहा है—'निमित्तञ्च नैमित्तिकञ्च तत्र यः प्रसङ्गः प्रसक्तिस्तया' इति । अर्थात् निमित्त=धर्माधर्मादि अष्टविध भावपदार्थ और नैमित्तिक=स्थूलशरीर के प्रसङ्ग=प्रसक्ति=सहयोग से यह लिङ्ग=सूक्ष्मशरीर पुरुषार्थहेतुक है ।

विधाय परशुरामो वाऽजातशत्रुर्वा वत्सराजो वा भवति, एवं तत्तत्स्थूलशरीरपरिग्रहणाद्देवो वा मनुष्यो वा पशुर्वा वनस्पतिर्वा भवति सूक्ष्मशरीरमित्यर्थः।

( ३ ) कुतस्त्यः पुनरस्येदृशो महिमेत्यत आह—'प्रकृतेर्विभुत्वयोगात्' इति। तथा च पुराणम्—'वैश्वरूप्यात् प्रधानस्य परिणामोऽयमद्भुतः' इति॥

---

त्तेन, अथवा स्थूलशरीरेण नैमित्तिकेन सह सहयोगो नैव भवेत् लिङ्गशरीरस्य तदा न व्यवतिष्ठेत ( अर्थात् ठहर ही नहीं पायेगा ), ततश्च सर्वापि नटवद् व्यवस्थैव विलीना स्यादिति भावः। 'लिङ्गम्' इत्यस्यार्थमाह—**सूक्ष्मशरीरम्**। कस्यापि परस्य शरीरे आत्मनः, लिङ्गनात्=अनुमापकत्वात् लिङ्गमित्युच्यते। लिङ्गशरीरे सूक्ष्मत्वञ्च मध्यम अणुपरिमाणयुक्तत्वमेव बोध्यम्। अस्मिन् लिङ्गशरीरे सूक्ष्मताव्यवहारो दृश्यमानस्थूलशरीरापेक्षया भवतीति विज्ञेयम्। शरीरशब्दस्य व्युत्पत्तिमाह—शीर्यते=करणे लीयते इति शरीरम्।

'नटवद् व्यवतिष्ठते' इति दृष्टान्तं स्पष्टयति—**यथा हि नट इति**। दृष्टान्ते तत् प्रदर्श्य दार्ष्टान्तिके योजयति—**एवं तत्तत्स्थूलेति**। तत्तज्जात्यवच्छिन्नस्थूलशरीरस्य परिग्रहणात्=धारणादिदं सूक्ष्मशरीरमपि कदाचिद् देवशरीरे प्रविश्य देवो भवतीत्येवं क्रमेणैव कदाचित् मनुष्यः, पशुः, वनस्पतिर्वा जायते। इत्येवंरूपेण तत्तत्संज्ञां लभते इति भावः।

( ३ ) सूक्ष्मशरीरस्य नानाशरीरधारणसामर्थ्यं कुत आगतमित्याह—**प्रकृतेर्विभुत्वयोगादिति**। प्रकृतेः=सूक्ष्मशरीरकारणीभूताया मूलप्रकृतेः, विभुत्वशक्तिसंयोगात्। विभुकारणे तादात्म्यसम्बन्धादिति भावः। अर्थाद् यत्र कारणे तादात्म्येन सूक्ष्मशरीरं विद्यते, तस्य कारणस्य व्यापकत्वेन=सर्वत्र सदा विद्यमानत्वेन तच्छक्तिबलादेव सूक्ष्मशरीरमपि; सर्वत्र सदैव संसरणं करोति।

पुराणस्याप्यत्र प्रामाण्यमाह—**वैश्वरूप्यादिति**। प्रधानस्य। वैश्वरूप्यात्=

---

**'नटवद् व्यवतिष्ठते लिङ्गम्'** इति। इस विषय को दृष्टान्त के द्वारा और स्पष्ट तथा सुदृढ़ बनाते हैं कि जैसे नट उस-उस पात्र-विशेष की रचनानुकूल भूमिका को तैयार करके कभी राम बनता है तो कभी परशुराम, कभी अजातशत्रु=रामचन्द्र मालवीय बनता है एवं कभी वत्सराज बनता है।

**'एवं तत्तत्स्थूलशरीरे'**ति। अर्थात् इसी प्रकार यह सूक्ष्मशरीर तत्तत्स्थूलशरीरों को प्राप्त कर देव, मनुष्य, पशु तथा वनस्पति=वृक्ष बनता रहता है।

( ३ ) प्रश्न—इस सूक्ष्मशरीर को बहुरूप होने की सामर्थ्य=विश्वरूपता कहाँ से तथा कैसे प्राप्त हो जाती है?

उत्तर—**'प्रकृतेर्विभुत्वयोगात्'** इति। अर्थात् प्रकृति के विभुत्व के सामर्थ्य से तथा निमित्त और नैमित्तिक के सहचार से यह लिङ्गशरीर अर्थात् सूक्ष्मशरीर भिन्न-भिन्न योनियों वाले अर्थात् देवयोनि, मनुष्ययोनि, पशु, पक्षी आदि योनियों के स्थूलशरीरों को धारण करता रहता है॥ ४२॥

( १ ) 'निमित्तनैमित्तिकप्रसङ्गेन' इत्युक्तम् । तत्र निमित्तनैमित्तिके च विभजते--

**सांसिद्धिकाश्च भावाः प्राकृतिका वैकृताश्च धर्माद्याः ।**
**दृष्टाः करणाश्रयिणः कार्याश्रयिणश्च कललाद्याः ॥ ४३ ॥**

---

जगदात्मकनानावस्थानरूपत्वात्, व्यापकत्वाच्च । अयम् =शरीरात् शरीरान्तरप्राप्तिरूपः । परिणामः=संसारः । अद्भुतः=विलक्षणः, अर्थात् अनन्तत्वेन अपारत्वेन च बहुलोकमयस्य ब्रह्माण्डस्य सृष्टिं करोति ॥ ४२ ॥

( १ ) इदानीं 'सांसिद्धिकाश्चे'त्यादि ( ४३ ) कारिकाया अवतरणमाह—**निमित्तनैमित्तिकप्रसङ्गेनेति** । 'निमित्तनैमित्तिकप्रसङ्गेन' इति तु कथितमिदानीं निमित्तनैमित्तिकयोर्मध्ये किं प्रकृते निमित्तं किञ्च नैमित्तिकमिति विभज्य दर्शयति—**'सांसिद्धिकाश्च भावाः'** इत्यादिना ।

अन्वयः—भावाः सांसिद्धिकाः, प्राकृतिकाः वैकृताश्च ( भवन्ति ) । ( तत्र ) धर्माद्याः करणाश्रयिणः दृष्टाः, च कललाद्या कार्याश्रयिणः दृष्टाः ।

**व्याख्या**—भावाः=धर्माधर्माद्यष्टविधभावपदार्थाः ( द्विविधा भवन्ति ) । सांसिद्धिकाः=स्वाभाविकाः । ( अतस्ते प्राकृतिका अप्युच्यन्ते ) प्रकृतिः=स्वभावः, स्वभावसिद्धा इत्यर्थः । यथा—सृष्ट्यादौ आदिविद्वान् कपिलो महामुनिर्धर्मज्ञानवैराग्यैश्वर्यसम्पन्नो प्रादुर्बभूव इति श्रूयते । वैकृताश्च (भावाः), असांसिद्धिकाः=नैमित्तिकाः । अर्थात् ये ईश्वराराधनरूपोपायानुष्ठात्मकनिमित्तेन उत्पन्नाः इति भावः । यथा वाल्मीकिप्रभृतयो महर्षय ईश्वराराधनेन धर्मज्ञानवैराग्यैश्वर्याणामुपार्जनं कृतवन्तः । एवमधर्माज्ञानाऽवैराग्याऽनैश्वर्याणि राक्षसप्रभृतीनां सांसिद्धिकानि । तेषां ( राक्षस-

---

( १ ) **'निमित्त-नैमित्तकप्रसङ्गेन'** इति । यह सूक्ष्मशरीर नानाविध स्थूलशरीरों में निमित्त तथा नैमित्तिक के सहयोग से संसरण करता रहता है, यह कहा जा चुका है । अब निमित्त तथा नैमित्तिक का विभाग करते हैं—**'सांसिद्धिकाश्च भावाः'** इत्यादि कारिका से ।

**कारिकार्थ** - धर्म, अधर्म, ज्ञान, अज्ञान, वैराग्य, अवैराग्य, ऐश्वर्य तथा अनैश्वर्य इन अष्टविध भावभूत पदार्थों को दो रूपों में विभाजित करते हैं—१. सांसिद्धिक= प्राकृतिक=स्वाभाविक, २. वैकृतिक=नैमित्तिक ।

इनमें प्रथम को स्वाभाविक अर्थात् स्वभावसिद्ध बतलाया, अर्थात् वे जनमते ही पैदा हो जाते हैं, जैसे महामुनि कपिल धर्म, ज्ञान, वैराग्य तथा ऐश्वर्य—इन भावों से सम्पन्न होकर ही प्रादुर्भूत हुए थे ।

और 'वैकृतिक' वे हैं जो ईश्वर की तपश्चर्या, आराधना, उपासना आदि किसी निमित्त के आधार पर होते हैं, जैसे—वाल्मीकि मुनि ने 'राम' नाम की रटन्त लगाकर ही—धर्म, ज्ञान, वैराग्य तथा ऐश्वर्य, इन चार भावभूत पदार्थों को प्राप्त किया ।

( २ ) 'सांसिद्धिकाश्च' इति। 'वैकृताः' नैमित्तिकाः, पुरुषस्य जातस्योत्तरकालदेवताराधनादिनोत्पन्नाः। 'प्राकृतिकाः' स्वाभाविका भावाः सांसिद्धिकाः। तथा हि—सर्गादावादिविद्वान् भगवान् कपिलो महामुनिर्धर्मज्ञानवैराग्यैश्वर्यसम्पन्नः प्रादुर्बभूवेति स्मरन्ति।

( ३ ) वैकृताश्च भावा असांसिद्धिकाः, ये उपायानुष्ठानेनोत्पन्नाः, यथा प्राचेतसप्रभृतीनां महर्षीणाम्। एवमधर्माज्ञानावैराग्यानैश्वर्याण्यपि।

---

प्रभृतीनां ) संसर्गेण ( निमित्तेन ) जातानि वैकृतानि कथ्यन्ते। एते धर्माधर्माद्यष्ट भावपदार्थाः कस्याश्रयिणः ? इत्यत आह—'दृष्टाः करणाश्रयिणः' इति। करणं बुद्धितत्त्वं, तदाश्रयिण इत्यर्थः। कललाद्याः=कलल-बुद्बुद-मांसपेशी-करण-करण्डाद्यङ्गप्रत्यङ्गव्यूहात्मकाश्च भावान्तरभूताः विषयाः। कार्याश्रयिणः=कार्यं स्थूलशरीरं, तदाश्रयिणः।

**अयमभिप्रायः**—धर्माधर्माद्यष्टविधभावपदार्था बुद्धितत्त्वरूपं यद् अन्तःकरणं तदाश्रयिणो भवन्ति। एवमेतेभ्योऽष्टविधभावपदार्थेभ्योऽतिरिक्तास्तेषां परिणामभूताः कललादयः स्थूलशरीराश्रयिणः सन्तीति भावः।

( २-४ ) तत्त्वकौमुद्याम्—वैकृता इति। नैमित्तिका इति तदर्थः। ईश्वरभक्ति-

---

इसी प्रकार अधर्म, अज्ञान, अवैराग्य तथा अनैश्वर्य, ये चार भाव भी स्वाभाविक सांसिद्धिक तथा वैकृतिक होते हैं, जो स्वाभाविक राक्षस एवं राक्षस-प्रकृति के लोगों को होते है और वैकृतिक उनका संसर्ग करने वाले चोर, डकैतों को होते है।

और ये अष्टविध भावपदार्थ बुद्धितत्त्वरूप करण के आश्रित होते है तथा कलल, बुद्बुद आदि भावों का कार्य जो स्थूलशरीर है, उसके आश्रित होते है। इनका विशद विवेचन हिन्दी व्याख्या में देखें।

( २ ) 'सांसिद्धिकाश्च' इति। वैकृत का अर्थ है नैमित्तिक=किसी निमित्त से उत्पन्न होने वाले। अर्थात् जात=उत्पन्न पुरुष की उत्पत्ति के उत्तरकाल में देवताराधन से अथवा देवताराधनजन्य देवता की प्रसन्नता से उत्पन्न=प्राप्त जो धर्मादिस्वरूप भावभूत पदार्थ हैं, वे वैकृत=नैमित्तिक कहलाते हैं।

**'प्राकृतिकाः=स्वाभाविका'** इति। प्राकृतिक अर्थात् प्रकृति=स्वभाव से, अर्थात् जन्म से ही पैदा होने वाले जो धर्मादि भाव हैं, वे प्राकृतिक=स्वाभाविक=सांसिद्धिक कहलाते हैं। जैसे सर्ग=सृष्टि के आदि=प्रारम्भ में समस्त विद्वानों में प्राचीन विद्वान् भगवान् महामुनि कपिल धर्म, ज्ञान, वैराग्य तथा ऐश्वर्य, इन भावों से सम्पन्न होकर ही प्रादुर्भूत हुए, ऐसा सुनने में आता है।

( ३ ) **वैकृताश्च भावा'** इति। ये पूर्व में=अभी ऊपर चर्चित वैकृत भाव असांसिद्धिक कहलाते है, जो देवाराधन आदि उपाय के अनुष्ठान से उत्पन्न होने वाले हैं। जैसे—प्राचेतस=प्रचेता के पुत्र=वाल्मीकि एवं विश्वामित्र प्रभृति ने अपनी अटूट तपस्या=निमित्त के आधार पर धर्म, ज्ञान, वैराग्य तथा ऐश्वर्य इन चार भावों

( ४ ) एते कुत्र दृष्टाः ? इत्यत आह—'करणाश्रयिणः' इति। करणं बुद्धितत्त्वम्, कार्यं शरीरं तदाश्रयिणः, तस्याऽवस्थाः, कललबुद्बुदमांसपेशीकरण्डाद्यङ्गप्रत्यङ्गव्यूहाः गर्भस्थस्य, ततो निर्गतस्य बालस्य वाल्यकौमारयौवनवार्धकानीति ॥ ४३ ॥

( १ ) अवगतानि निमित्तनैमित्तिकानि। कतमस्य तु निमित्तस्य कतमन्नैमित्तिकमित्यत आह—

---

रूपनिमित्तजन्या इत्यर्थः। के ते ? इत्याकाङ्क्षायामाह—**पुरुषस्य जातस्येति**। प्राचेतसप्रभृतीनाम्=वाल्मीकिप्रभृतीनाम्। कौमुद्या—तत इति। गर्भत इत्यर्थः। निर्गतस्य=वहिरागतस्य। वालस्य। वाल्यकौमारादयोऽपि भावा भवन्तीत्युपचर्यन्ते ॥ ४३ ॥

( १ ) 'धर्मेण गमनमूर्ध्वम्' इत्यादि कारिकामवतारयति–**अवगतानीति**। ज्ञातानि। निमित्तनैमित्तिकानि। कतमस्य=कस्य ? कतमत्=कौन-सा। नैमित्तिकम्=कार्यमस्तीति ब्रूते—**'धर्मेण गमनमूर्ध्वम्'** इत्यादिना।

---

को प्राप्त किया। इसलिए ऐसे लोगों के उपायानुष्ठान से प्राप्त होने वाले भाव वैकृत=नैमित्तिक कहे जाते हैं।

**'एवमधर्माज्ञाने'**ति। इसी प्रकार अधर्म, अज्ञान, अवैराग्य तथा अनैश्वर्य ये भी प्राकृतिक और वैकृत होते हैं। राक्षस तथा राक्षस प्रकृति वालों के अधर्म एवं अज्ञान आदि चार भाव प्राकृतिक हैं, क्योंकि वे जन्मतः उनसे सम्बद्ध हैं। और चोर-डकैत जो राक्षसों के सम्पर्की हैं, उनके अधर्मादि चार भाव वैकृत=नैमित्तिक हैं।

( ४ ) प्रश्न—**'एते कुत्र दृष्टा'** इति। अर्थात् ये धर्म, अधर्म आदि अष्टविध भाव कहाँ रहते हैं; इनका अधिकरण कौन है ?

उत्तर—**'करणाश्रयिण'** इति। ये धर्म, अधर्म आदि आठ भाव करणाश्रयी हैं, अर्थात् करण जो बुद्धितत्त्व है, तदाश्रयी हैं, बुद्धितत्त्वरूप करण के आश्रित हैं।

**'कार्यं शरीरम्'** इति। 'कार्य' से यहाँ स्थूलशरीर अर्थ लिया है। और उस स्थूलशरीर के ही आश्रयी=आश्रित, उस स्थूलशरीर के ही अवस्थाविशेष कलल=रज और वीर्य का सम्मिश्रण, बुद्बुद=रजवीर्यवर्तुलीभाव, मांस=घनीभाव, पेशी=मांस का कठिन भाग, करण्ड=उससे भी कठिनतर भाग, अङ्ग=हस्त-पादादि, प्रत्यङ्ग=अंगुलि आदि, व्यूह=इन सबसे मिलकर सम्पन्न होने वाला शरीर, ये भी सब शरीर की अवस्थाविशेष होने के कारण गर्भस्थ शरीर के भाव कहलाते हैं।

इसके बाद गर्भ से निर्गत इस बालशरीर की बाल्यावस्था, कौमारावस्था, यौवनावस्था तथा वृद्धावस्था, ये भी भाव कहलाने लगते हैं ॥ ४३ ॥

( १ ) **'अवगतानि निमित्तनैमित्तिकानि'** इति। अर्थात् निमित्त एवं नैमित्तिक तो अवगत हो चुके हैं, अब किस निमित्त का कौन नैमित्तिक=कार्य है, यह बतलाते हैं—**'धर्मेण गमनमूर्ध्वम्'** इत्यादि कारिका से।

**धर्मेण गमनमूर्ध्वं गमनमधस्ताद्भवत्यधर्मेण ।**
**ज्ञानेन चाऽपवर्गो विपर्ययादिष्यते बन्धः ॥ ४४ ॥**

( २ ) 'धर्मेण गमनमूर्ध्वम्' द्युप्रभृतिषु लोकेषु गमनम् । 'गमनमधस्ताद्भवत्यधर्मेण' सुतलादिषु लोकेषु । 'ज्ञानेन चाऽपवर्गः' ।

( ३ ) तावदेव प्रकृतिर्भोगमारभते न यावद्विवेकख्यातिं करोति । अथ विवेकख्यातौ सत्यां कृतकृत्यतया विवेकख्यातिमन्तं पुरुषं प्रति निवर्तते । यथाऽऽहुः—

---

अन्वयः—धर्मेण ऊर्ध्वं गमनं भवति, अधर्मेण अधस्तात् गमनं भवति, ज्ञानेन च अपवर्गः ( भवति ), विपर्ययात् बन्धः इष्यते ।

( २ ) व्याख्या—द्युप्रभृतिषु=स्वर्गादिषु । प्रभृतिपदेन महर्जनतपःसत्यलोका ग्राह्याः । भूतलादिष्विति । भूतलम्=मृत्युलोकः । अत्राप्यादिना अतल-वितल-सुतल-तलातल-महातल-रसातल-पातालाख्या लोका गृह्यन्ते । ज्ञानेन=तत्त्वज्ञानेन । अपवर्गः=मोक्षः, स चाऽऽत्यन्तिकदुःखध्वंसरूपः ।

( ३ ) तदेवाऽऽह कौमुद्याम्—तावदेवेति । तावत्कालपर्यन्तमेव । प्रकृतिः । भोगम्=सुखदुःखान्यतरसाक्षात्काररूपम् । आरभते=उत्पादयति । यावत्=यावत्कालपर्यन्तम् । विवेकख्यातिम्=तत्त्वज्ञानद्वारा सत्त्वपुरुषान्यताख्यातिं, प्रकृतिपुरुषयोर्भेद-

---

कारिकार्थ—धर्म ( निमित्त ) के द्वारा ऊर्ध्वगमन ( नैमित्तिक ) होता है, अर्थात् स्वर्गादि लोको में गमन होता है; और अधर्म ( निमित्त ) के द्वारा अधोगमन ( नैमित्तिक ) होता है, अर्थात् नरक-पाताललोक में गमन होता है। ज्ञान ( निमित्त ) से अपवर्ग ( नैमित्तिक ) अर्थात् मोक्ष होता है; और अज्ञान ( निमित्त ) से बन्ध ( नैमित्तिक ) अर्थात् जन्म-मरण चक्र होता है।

( २ ) अभ्युदयकारणीभूत धर्म से ऊर्ध्व=स्वर्गप्रभृति लोकों में गमन होता है और अधर्म से अधोलोकों में अर्थात् भूतल=मर्त्यलोक एवं पाताल आदि लोकों में तथा पशु-पक्षी आदि नीचे की जातियों में गमन होता है अर्थात् जो धर्मात्मा=पुण्यात्मा लोग हैं, वे अपने-अपने धर्म के कारण शरीरान्त होने पर मृत्युलोक से ऊपर स्वर्गलोक, महर्लोक आदि सभी लोकों में जाने का अधिकार रखते हैं। और अधर्मात्मा लोग नीचे के अतल, वितल, सुतल आदि लोकों में ही भ्रमण करते रहते हैं।

'ज्ञानेन चापवर्ग' इति। अर्थात् प्रकृति और पुरुष के भेदज्ञानात्मक सत्त्वपुरुषान्यताख्यातिरूप तत्त्वज्ञान से अपवर्ग=आत्यन्तिक दुःखध्वंसरूप मोक्ष की प्राप्ति होती है।

( ३ ) 'तावदेव प्रकृतिः' इति। प्रकृति तभी तक पुरुष के लिए सुख-दुःखान्यतर साक्षात्काररूप भोग का आरम्भ=उत्पत्ति करती है, जब तक प्रकृति पुरुष को विवेकख्याति=सत्त्वपुरुषान्यताख्यातिरूप तत्त्वज्ञान को उत्पन्न नहीं करती है। और फिर इसके बाद विवेकख्याति हो जाने पर वह प्रकृति कृतकृत्य हो जाती है, अर्थात्

'विवेकख्यातिपर्यन्तं ज्ञेयं प्रकृतिचेष्टितम्' । इति ।

'विपर्ययात्' 'अतत्त्वज्ञानात्' 'इष्यते बन्धः' ॥

( ४ ) स च त्रिविधः—प्राकृतिको वैकृतिको दाक्षिणकश्चेति । तत्र प्रकृतावात्मज्ञानाद्ये प्रकृतिमुपासते तेषां प्राकृतिको बन्धः, यः पुराणे प्रकृतिलयान् प्रत्युच्यते ।

'पूर्णं शतसहस्रं हि तिष्ठन्त्यव्यक्तचिन्तकाः' । इति ।

---

ज्ञानमित्यर्थः । अथ=तत्त्वज्ञानात् । विवेकख्यातौ जायमानायाम्, प्रकृतिर्यदा भोगात्मकं प्रयोजनं सम्पादयति, तदा पुनः कृतकृत्यतया सा विवेकख्यातिमन्तं पुरुषं प्रति निवर्तते । अस्मिन्नर्थे प्राचीनाचार्यचरणोक्तिप्रमाणमाह—यथाऽऽहुरिति । प्रकृतिचेष्टितम्= प्रकृतेः चेष्टितं=भोगदानानुकूलं चरित्रम् । विवेकख्यातिपर्यन्तं ज्ञेयम् । विपर्ययात् । बन्धः ।

( ४ ) स च=बन्धश्च । त्रिविधः—१. 'प्राकृतिकः'—प्रकृतिः=जगतः कारणीभूता मूलमाया, 'तत्र भवः' प्रकृतौ चेतनतत्त्वस्य लयात्मको यो बन्धः, स एव प्राकृतिको बन्धः कथ्यते । २. 'वैकृतिकः'—विकाराः=प्रकृतेर्विकारभूता महत्तत्त्वादयः कार्यस्वरूपा विकाराः, तत्र भवः प्रकृतौ चेतनस्य लयात्मको बन्धो वैकृतिको बन्धो निरुच्यते । ३. दाक्षिणकः—यागादौ बहुविध—रजत-सुवर्ण-द्रव्यदक्षिणादिप्रदानेन यत् फलं लभ्यते, तत् पुण्यभोगार्थं स्वर्गीयशरीरादौ अवस्थानात्मको बन्धो दाक्षिणको बन्धः कथ्यते ।

तत्र प्राकृतिकबन्धः प्रदर्श्यते—तत्रेति । त्रिषु बन्धेषु मध्ये । प्रकृतिमेव आत्मत्वेन मन्यमाना ये जनाः प्रकृतेरेवोपासनं कुर्वन्ति, तेषां प्रकृतिभक्तानां प्राकृतिको बन्धो

---

प्रकृति को पुरुष के लिए और कोई कर्तव्य अवशिष्ट नहीं रह जाता है, और फिर विवेकख्याति-प्राप्त उस पुरुष से सर्वदा के लिए निवृत्त हो जाती है, अर्थात् फिर वह पुरुष को भोगदान नहीं करती है । पुरुष को अपवर्ग की प्राप्ति करा देना ही प्रकृति का प्रधान प्रयोजन है । जैसे कहा भी है कि—प्रकृति से चेष्टित अर्थात् प्रकृति के द्वारा पुरुष को होने वाला भोगदानात्मक चरित्र पुरुष को विवेकख्यातिरूप तत्त्वज्ञान होने वाले कालपर्यन्त ही जानना चाहिए ।

'विपर्ययात् अतत्त्वज्ञानात्' इति । अर्थात् तत्त्वज्ञान से भिन्न विपर्ययरूप अतत्त्वज्ञान से पुरुष को बन्धन होता है । अर्थात् पुरुष मोक्ष-विरोधी जो सांसारिक विषयवासनारूपी जाल है, उसी जालरूपी बन्धन से सर्वदा आबद्ध रहता है ।

( ४ ) 'स च त्रिविधः' इति । और वह 'बन्ध' तीन प्रकार का होता है—१. प्राकृतिक, २. वैकृतिक, ३. दाक्षिणक ।

प्रकृतिमुपासते । जो लोग प्रकृति को ही आत्मा मानकर प्रकृति की ही उपासना करते हैं, उन लोगों को प्राकृतिक बन्ध होता है । अर्थात् प्रकृति को आत्मा समझकर उसकी उपासना करने वाले अर्थात् प्रकृति में लीन होने वाले उन पुरुषों के

( ५ ) वैकारिको वन्धस्तेषां ये विकारानेव भूतेन्द्रियाहङ्कारबुद्धीः पुरुषधियोपासते, तान् प्रतीदमुच्यते—

'दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः ।
भौतिकास्तु शतं पूर्णं सहस्रं त्वाभिमानिकाः ॥
बौद्धा दश सहस्राणि तिष्ठन्ति विगतज्वराः । इति ।

---

भवति, अर्थात् मरणान्तकाले प्रकृतावेव लयो जायते इति लयात्मको बन्धः । अयमेव वन्धः, पुराणे=पुराणशास्त्रे प्रकृतिलयान् प्रति=प्रकृतौ लयङ्गतान् प्रति, उच्यते, अर्थात् प्रकृतौ लयं प्राप्तानां कृते कथितः । यथा—'पूर्णं शतसहस्रं हि' इत्यादिना ।

( ५ ) कोऽसौ वैकृतिको वन्धः, के च तादृशवन्धाधिकारिणः ? इत्यत आह—**वैकारिको वन्धस्तेषामिति** । ये च चार्वाकाः प्रकृतिविकारान् पञ्चमहाभूतान्येवाऽऽत्मत्वेनोपासते, एवं ये नास्तिका इन्द्रियाणि, ये चाऽहङ्कारं वा, बुद्धिं वाऽऽत्मत्वेनोपासते, तान्=चार्वाकान् प्रति । इदम्=वक्ष्यमाणं पौराणिकं पद्यमुच्यते—**दशमन्वन्तराणीति** । **'दश मन्वन्तराणीति'** । एकस्य मन्वन्तरस्य विंशतिसहस्राधिकसप्तषष्टिलक्षोत्तरत्रिंशत्कोटिकानि ( ३०६७२०००० ) वर्षाणि भवन्ति । एवङ्क्रमेणैवाऽन्येषामपि मन्वन्तराणामियमेव गतिर्ज्ञेया । इन्द्रियचिन्तकाः=इन्द्रियाणामेवाऽऽत्मत्वोपासकाः । इह=प्रकृतौ, दशमन्वन्तरपर्यन्तं लयं यान्तीति । भौतिकास्तु=भूतानामात्मत्वोपासकाः । शतं पूर्णम्=शतमन्वन्तरकालपर्यन्तम् ( प्रकृतौ लयं यान्ति ) । आभिमानिकाः=अहङ्कारस्याऽऽत्मत्वोपासकाः । सहस्रम्=सहस्रमन्वन्तरकालपर्यन्तम् ( प्रकृतौ लयं यान्ति ) । बौद्धाः=बुद्धेरेवाऽऽत्मत्वोपासकाः । विगतज्वराः=विगतो ज्वरो येषान्ते, स्थूलशरीरलभ्यसुख-दुःखादिभोग रहिताः सूक्ष्मशरीरसहिताश्च सन्तः । दशसहस्राणि=दशसहस्रमन्वन्तरकालपर्यन्तम् ( प्रकृतौ लयं गच्छन्ति ) ।

---

विषय में कहा है कि वे पूरे सहस्र=हजार मन्वन्तर-पर्यन्त प्रकृति में ही विलीन होकर इस प्राकृतिक वन्धन का अनुभव करते रहते है, अर्थात् प्रकृति के जाल में ही तव तक फँसे रहते हैं, ऐसा पुराण में भी कहा है ।

( ५ ) **'वैकारिको वन्धस्तेषाम्'** इति । अर्थात् जो लोग प्रकृति के विकारस्वरूप पञ्चमहाभूतों को इन्द्रिय तथा अहङ्कार और बुद्धि को आत्मा मानकर चार्वाक लोग उनकी उपासना करते हैं, उनके प्रति हमें यह कहना है कि 'दशमन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः' इत्यादि पुराणवाक्यानुसार इन्द्रियोपासक चार्वाक दश मन्वन्तरपर्यन्त विगतज्वर=दुःखत्रयरहित होकर उन-उन भूतों में लीन रहते हैं, अर्थात् स्वस्थिति सम्पन्न होकर रहते हैं । और भौतिक=भूतोपासक, चार्वाक शतमन्वन्तरपर्यन्त एवम् आभिमानिक=अहङ्कारोपासक अर्थात् जो अहङ्कार को आत्मा मानकर उसी की उपासना करते है, वे हजार मन्वन्तरपर्यन्त प्रकृति में लीन रहते हैं । और बौद्ध=बुद्धि के उपासक दश हजार मन्वन्तर-पर्यन्त विगतज्वर=दुःखत्रयशून्य होकर प्रकृति में लीन होकर रहते हैं ।

( ६ ) 'ते खल्वमी विदेहा येषां वैकृतिको बन्धः' इति । इष्टापूर्तेन दाक्षिणकः । पुरुषतत्त्वानभिज्ञो हीष्टापूर्तकारी कामोपहतमना बध्यत इति ॥४४॥

---

( ६ ) तेषां नामोल्लिख्यते—**ते खल्वमीति** । येषामस्ति वैकृतिको बन्धस्तेऽमी 'विदेहाः' कथ्यन्ते । अर्थाद् यावत्कालं लयस्तावत्कालन्ते स्थूलशरीररहिताः सन्तस्तिष्ठन्ति, अत एव ते विदेहाः प्रोच्यन्ते, पुनश्च खलु स्वीयधर्माऽधर्माऽनुरूपन्ते नानाविधानि शरीराणि धारयन्ति । तृतीयं बन्धं प्रागुक्तमाह—**इष्टापूर्तेनेति** । अर्थात् इष्टस्य =इष्टसाधनस्येत्यर्थः, इष्टं स्वर्गादि, तत् साधनं=यागादि, तस्य, आ=समाप्तौ जायमानायां, यत् पूर्त्तं कर्म=दक्षिणादानादिकं, तेन पुण्येन प्राप्तो बन्धो दाक्षिणकः ।

केचन 'इष्टापूर्तं' शब्दस्येत्थं व्याख्यानं प्रकुर्वन्ति—इष्टं यागादि, पूर्त्तम् खातादि । तदुक्तम्—

'अग्निहोत्रं तपः सत्यं वेदानां चानुपालनम् ।
आतिथ्यं वैश्वदेवश्च इष्टमित्यभिधीयते ॥'
'वापीकूपतडागादि देवतायतनानि च ।
अन्नप्रदानमारामः पूर्त्तमित्यभिधीयते ॥'

इत्थञ्च दक्षिणमार्गेण धूमादिना चन्द्रलोकादिप्राप्तिरूपो बन्धो 'दाक्षिणको' बन्धः कथ्यते । कस्याऽयं बन्धो जायते ? इत्यत्र समाधीयते—**पुरुषतत्त्वानभिज्ञ इति** । पुरुषतत्त्वस्य=आत्मनः, अनभिज्ञः=स्वरूपानभिज्ञः, अज्ञानीत्यर्थः । इष्टापूर्त्तकारी—इष्टस्य=यागादेः, समाप्तौ, यत् पूर्तं=दक्षिणादानादिकं कर्म, तत्कर्मकारीत्यर्थः । स च देवादिरूपं शरीरं प्राप्य बध्यते, न तु मुच्यते । वारं वारं धर्मः वारंवार शरीरमिति बन्धनदाढर्यान्न मुक्तिरित्यर्थः ॥ ४४ ॥



---

( ६ ) **ते खल्वमीति** । जिन्हें वैकृतिक बन्धन प्राप्त होते हैं वे ही विदेह=स्थूलशरीर शून्य कहलाते हैं, अर्थात् जब तक वे प्रकृति में लीन रहते हैं, तब तक वे स्थूलशरीर से रहित होते हैं, इस कारण उनकी 'विदेह' संज्ञा हो जाती है ।

**'इष्टापूर्त्तेन दाक्षिणकः'** इति । 'इष्टापूर्तेन' यहाँ तीन पद है—इष्ट, आ, पूर्त । इनमें 'इष्ट' का अर्थ है इष्टसाधन; इष्ट है सबको स्वर्ग, उसका साधन हुआ यज्ञ । और 'आ' का अर्थ है समाप्ति तथा 'पूर्त' का अर्थ हुआ कर्मविशेष=दक्षिणादान=ब्राह्मणभोजनादि । इनका मिलित अर्थ हुआ कि यज्ञ की समाप्ति होने के पश्चात् जो दक्षिणादान तथा ब्राह्मणभोजन आदि कर्मविशेष हैं, उनसे होने वाला जो बन्धन, वही 'दाक्षिणक' बन्ध है । यह बन्ध=बन्धन पुरुषतत्त्व=आत्मतत्त्व से अनभिज्ञ तथा 'इष्टापूर्त' कर्मविशेष को करने वाले एवं कामों से=अनेक प्रकार के मनोरथों से उपहत=प्रपूरित मन वाले व्यक्ति को होता है । अर्थात् इष्टापूर्त कर्मविशेष से होने वाले 'दाक्षिणक' बन्ध से पुरुषतत्त्वानभिज्ञ इष्टापूर्तकर्मविशेष को सम्पन्न करने वाले कामोपहित मन वाले व्यक्ति ही बद्ध होते हैं । यह तृतीय बन्ध है ॥ ४४ ॥

**वैराग्यात् प्रकृतिलयः संसारो भवति राजसाद्रागात् ।**
**ऐश्वर्यादविघातो विपर्ययात् तद्विपर्यासः ॥ ४५ ॥**

( १ ) 'वैराग्यात् प्रकृतिलयः' इति । पुरुषतत्त्वानभिज्ञस्य वैराग्यमात्रात् प्रकृतिलयः, प्रकृतिग्रहणेन प्रकृतिमहदहङ्कारभूतेन्द्रियाणि गृह्यन्ते, तेष्वात्मबुद्ध्योपास्यमानेषु लयः । कालान्तरेण च पुनराविर्भवति ।

---

अन्वयः—वैराग्यात् प्रकृतिलयः भवति, राजसात् रागात् संसारः ( भवति ), ऐश्वर्याद् अविघातः ( भवति ), विपर्ययात् तद्विपर्यासः ( भवति ) ।

( १ ) तथाऽन्यदपि निमित्तमाह—'**वैराग्यात् प्रकृतिलयः**' इत्यादिः । पुरुषतत्त्वानभिज्ञस्य=तत्त्वज्ञानरहितस्य, अर्थात् पुरुषः प्रकृति-तत्कार्यमहत्तत्त्वादिजडादिभ्योऽभिन्नः इत्येवंरूपेण प्रकृत्यादिजडवर्गे आत्मत्वोपासनां कुर्वतः । वैराग्यमात्रात्=वशीकारसंज्ञकाद् वैराग्यात् । प्रकृतिलयः=प्रकृतौ, तत्कार्येषु च महत्तत्त्वादिषु च लयो जायते अर्थात् सूक्ष्मशरीरमात्रेण सह तत्र प्रवेशो जायत इत्यत्र तात्पर्यम् । प्रकृतिग्रहणेनेति । प्रकृतिपदेनेत्यर्थः । अर्थात् प्रकृतिपदेन=प्रकृतिः, महत्तत्त्वम्, अहङ्कारः, पञ्चतन्मात्राणि, पञ्चभूतानि, मनःसहितानि एकादशेन्द्रियाणि च सङ्ग्राह्याणि भवन्ति । तेषु=तदन्यतमेषु । आत्मबुद्ध्या=आत्मा महत्तत्त्वाऽभिन्नः, इत्यारभ्य आत्मा प्रकृतिपदेनाऽभिधेयेभ्यः सर्वेभ्योऽभिन्नः, इत्येवंरूपया । उपास्यमानेषु=उपासनाविषयीभूतेषु तेषु तेषु महत्तत्त्वाऽहङ्कारादिषु । लयः=सूक्ष्मशरीरेण सह जडवत् स्थितिर्जायते ।

---

आठ प्रकार के बुद्धिधर्मों से धर्म, अधर्म, ज्ञान एवं अज्ञान, इन चार का फल बतला दिया है । अब अवशिष्ट जो वैराग्य, अवैराग्य, ऐश्वर्य, अनैश्वर्य हैं, उनका फल बतलाते हैं—'**वैराग्यात् प्रकृतिलयः**' इत्यादि कारिका से ।

**कारिकार्थ**—केवल वैराग्य से प्रकृतिलय होता है और राजस राग से संसार ( अर्थात् जन्म-मरण ) होता है । ऐश्वर्य से इच्छा का विघात नहीं होता है और अनैश्वर्य से सर्वत्र इच्छा का विघात होता है ।

( १ ) 'वैराग्यात् प्रकृतिलयः' इति । वैराग्य से प्रकृति में लय होता है । अर्थात् पुरुषतत्त्व=आत्मतत्त्व के ज्ञानशून्य व्यक्ति को होने वाले वैराग्यमात्र से प्रकृतिलय=प्रकृति में लय होना, यह सांख्य ने बतलाया है । प्रकृति के ग्रहण से प्रकृति, महत्तत्त्व, अहङ्कार, पञ्चमहाभूत तथा एकादश इन्द्रियों का ग्रहण होता है ।

'तेष्वात्मबुद्ध्या' इति । अर्थात् प्रकृति, महत्तत्त्व आदि पदार्थों में अर्थात् जिनका प्रकृतिग्रहण से ग्रहण है, उनमें आत्मबुद्धि करने से उपास्यमान इन्हीं तत्त्वों में उपासक का लय हो जाता है । और फिर कालान्तर में अर्थात् लयकाल के समाप्त हो जाने पर वह उपासक फिर सूक्ष्मशरीर के साथ अपने प्राग्भवीय अदृष्टानुसार स्थूलशरीर को धारण करता है, अर्थात् फिर आविर्भूत=उत्पन्न होता है ।

( २ ) 'संसारो भवति राजसाद्रागात्' इति । 'राजसात्' इत्यनेन रजसो दुःखहेतुत्वात् संसारस्य दुःखहेतुता सूचिता ।

( ३ ) 'ऐश्वर्यादविघातः' इति इच्छायाः । ईश्वरो हि यदेवेच्छति तदेव करोति । 'विपर्ययात्'—अनैश्वर्यात्, 'तद्विपर्यासः'—सर्वत्रेच्छाविघात इत्यर्थः ॥ ४५ ॥

( १ ) बुद्धिधर्मान् धर्मादीनष्टौ भावान् समासव्यासाभ्यां मुमुक्षूणां हेयोपादेयान् दर्शयितुं प्रथमतस्तावत् समासमाह—

---

कालान्तरेण च=लयकालसमापनेन च । पुनराविर्भवति=सूक्ष्मशरीरेण सह बन्धनात् विनिर्मुक्तः सन् पूर्वोपार्जितादृष्टानुसारं स्थूलशरीरं धारयति ।

( २ ) 'संसारो भवति राजसात् रागात् ।' रागस्य रजोमयत्वं सिद्धमेवेति रजसो दुःखहेतुत्वेन संसारस्य दुःखकारणत्वमागतमिति भावः ।

( ३ ) 'ऐश्वर्यादविघातः' । कस्येति शङ्कायामाह—इच्छायाः । हि=निश्चयेन । ईश्वरः=अष्टविधैश्वर्यवान् । विपर्ययात्=अनैश्वर्यात्=ऐश्वर्यविरुद्धात् । 'तद्विपर्यासः' इत्यस्य पदस्यार्थमाह—वाचस्पतिमिश्रः 'सर्वत्रेच्छाविघातः' । अर्थात् अनैश्वर्यात् सर्वत्रैवेच्छाया हननं जायते ॥ ४५ ॥

( १ ) बुद्धिधर्मान्=बुद्धिवृत्तिधर्मान् । समासव्यासाभ्याम्=सङ्क्षेपविस्तराभ्याम्, अर्थात् समासेन=सङ्क्षेपेण, व्यासेन=विस्तरेण च । मुमुक्षूणाम्=मुक्त्यभिलाषिणाम् । समासम्=सङ्क्षेपं=विपर्ययेत्यादिना चातुर्विध्यात्मकं सङ्क्षेपमित्यर्थः ।

---

( २ ) 'संसारो भवति' इति । अर्थात् रजोगुण से युक्त राग=अवैराग्य से 'पुनरपि जननं पुनरपि मरणं पुनरपि जननी जठरे शयनम्' इस प्रकार के संसार की प्राप्ति होती है । 'राजसात्' इस कथन से रजोगुण दुःख का कारण है, इसलिए संसार भी दुःख का कारण है, यह सूचित किया गया है ।

( ३ ) 'ऐश्वर्यादविघातः' इति । अणिमा, महिमा, लघिमा, गरिमा, प्राप्ति, प्राकाम्य, ईशित्व वशित्व रूप अष्टविध ऐश्वर्य से कदापि इच्छा का व्याघात नहीं होता है । इस अष्टविध ऐश्वर्य से सम्पन्न ईश्वर जो चाहता है, उसी को प्राप्त कर लेता है ।

'विपर्ययात्' इति । ऐश्वर्य का विपर्यय जो अनैश्वर्य है, उससे सर्वत्र इच्छा का विघात ही देखने में आता है । इस अनैश्वर्यपक्ष में यह देखा जाता है कि जो भी व्यक्ति अपने अभीष्ट पदार्थ की इच्छा करता है वहाँ सर्वत्र निष्फलता ही सामने आती है, यही दुःख की पराकाष्ठा=चरमावधि है ॥ ४५ ॥

( १ ) 'बुद्धिधर्मान् धर्मादीनष्टौ' इति । बुद्धि के धर्म, अधर्म आदि पूर्वोक्त अष्टविध भावभूत धर्मों को संक्षेप तथा विस्तार से मुमुक्षुलोगों के लिए हेय=त्याज्य एवं उपादेय=ग्राह्य के रूप में दिखलाने के लिए सर्वप्रथम संक्षेप में बतलाते हैं—'एषः प्रत्ययसर्गः' इत्यादि कारिका से ।

**एष प्रत्ययसर्गो विपर्ययाशक्तितुष्टिसिद्ध्याख्यः ।**
**गुणवैषम्यविमर्दात् तस्य च भेदास्तु पञ्चाशत् ॥ ४६ ॥**

( २ ) 'एषः' इति । प्रतीयतेऽनेनेति प्रत्ययो बुद्धिः, तस्य सर्गः । तत्र—'विपर्ययः' अज्ञानमविद्या, साऽपि बुद्धिधर्मः । 'अशक्तिः' अपि करणवैकल्य-हेतुका बुद्धिधर्म एव । 'तुष्टिसिद्धी' अपि वक्ष्यमाणलक्षणे बुद्धिधर्माविव । तत्र

---

'एषः प्रत्ययसर्गः' इति मूलम् । अनया मूलकारिकया प्रकृतेः कार्यभूताया बुद्धेः सृष्टिर्निरूप्यते, सङ्क्षेपतो विस्तरतश्च ।

अन्वयः—एषः प्रत्ययसर्गः ( सङ्क्षेपात् ) विपर्ययाशक्तितुष्टिसिद्ध्याख्यः ( चतुर्धा भवति ), तस्य गुणवैषम्यविमर्दात् ( विस्तरतः ) पञ्चाशद् भेदाः ( भवन्ति ) ।

( २ ) एषः = प्रागुक्तः धर्माधर्म-ज्ञानाज्ञान-वैराग्याऽवैराग्यैश्वर्यानैश्वर्यरूपोऽष्टविधो भावाख्यः । प्रतीयन्ते विषया अनेनेति प्रत्ययो = बुद्धिः = ज्ञानं, तस्य सर्गः = बुद्धि-सृष्टिरित्यर्थः । ( सङ्क्षेपात्—विपर्ययाऽशक्तितुष्टिसिद्ध्याख्यः । तत्र विपर्ययः=अज्ञानम् = मिथ्याज्ञानम् । अशक्तिः = इन्द्रियादीनां वैकल्यम्, यथा चक्षुषोऽन्धत्वम्, श्रोत्रस्य बाधिर्यम्, घ्राणस्य अजिघ्रत्वम्, त्वचः कुष्ठित्वम्, रसनस्य जडत्वम् । तुष्टिः = सांसारिकप्रसन्नता, अत एवेयं मोक्षविरोधिनी । वक्ष्यमाणलक्षणे = ५० कारिकायां वक्ष्यमाणे । एतेषु चतुर्ष्वेव धर्माधर्माद्यष्टविधभावानामन्तर्भावमाह—तत्रेति । विपर्य-

---

कारिकार्थ—धर्म-अधर्म, ज्ञान-अज्ञान, वैराग्य-अवैराग्य, तथा ऐश्वर्य-अनैश्वर्य, रूप यह प्रत्ययसर्ग = बुद्धिसर्ग = बुद्धिसृष्टि संक्षेप = समास में चार प्रकार का है, जिसे विपर्यय, अशक्ति, तुष्टि, सिद्धि, इन नामों से कहा जाता है और सत्त्व, रज, तम, इन तीन गुणों का जो न्यूनाधिक्यरूप वैषम्य, उससे होने वाला जो एक या दो गुणों का अभिभव, उस अभिभव के कारण व्यास = विस्तार में, उस संक्षिप्त सर्ग के पचास भेद हो जाते है ।

( २ ) 'एष' इति । 'प्रतीयते = ज्ञायते अनेन' अर्थात् ज्ञान होता है सांसारिक विषयों का जिससे, वह हुआ प्रत्यय = बुद्धि, उसका जो सर्ग = सृष्टि, वह चार प्रकार का है । उसमें प्रथम जो विपर्यय है वह अज्ञान = अविद्या रूप है; वह भी बुद्धि में रहने के कारण बुद्धि का धर्म है । यह तमोगुणसमुत्पन्न परिमाण है ।

'अशक्तिः' इति । अशक्ति भी त्रयोदश करणों के वैकल्य = अपटुता के कारण बुद्धिधर्म ही है । एकदश इन्द्रियाँ, बुद्धि और अहंकार ये त्रयोदश करण हैं । 'करण-वैकल्यहेतुका' इसका अर्थ यह है कि ज्ञानेन्द्रियों तथा कर्मेन्द्रियों के विकल हो जाने पर वे अपने-अपने विषयों को ग्रहण नहीं कर पायेंगी । इन्द्रियों के वैकल्य रूप दोषों के कारण फिर मन, अहंकार, बुद्धि, इनमें भी वह दोष-परम्परा फैल जायेगी,

विपर्ययाशक्तितुष्टिषु यथायोगं सप्तानाञ्च धर्मादीनां ज्ञानवर्जमन्तर्भावः, सिद्धौ च ज्ञानस्येति ।

( ३ ) व्यासमाह—'तस्य च भेदास्तु पञ्चाशत्' इति । कस्मात् ? 'गुणवैषम्यविमर्दात्' इति । गुणानां वैषम्यम्.........एकैकस्याऽधिकबलता द्वयोर्द्वयोर्वा, एकैकस्य न्यूनबलता द्वयोर्द्वयोर्वा; ते च न्यूनाधिक्ये मन्दमध्याधिक-

---

येऽज्ञानस्याऽधर्मस्य चान्तर्भावः । अशक्तौ अवैराग्यस्याऽनैश्वर्यस्य चान्तर्भावः । धर्मवैराग्यैश्वर्याणां खलु तुष्टौ अन्तर्भावः, तदेवोक्तं—यथायोगं सप्तानां चेति । ज्ञानवर्जमिति । अर्थात् ज्ञानं विहाय सप्तानामन्तर्भावो दर्शितः । सिद्धौ चेति । ज्ञानस्य सिद्धौ अन्तर्भावः ।

( ३ ) व्यासमिति । विस्तारमित्यर्थः । तस्य भेदास्तु पञ्चाशत् । तस्य=विपर्ययादि सङ्क्षिप्तसर्गस्य, पञ्चाशद् भेदा अग्रिमायामेव ४७ कारिकायामेव विवेचयिष्यन्ते । कस्मादिति । पृच्छति—कुतस्ते भेदाः ? समाधत्ते—गुणवैषम्यविमर्दादिति । गुणानाम्=सत्त्वगुण-रजोगुण-तमोगुणानाम् । वैषम्यम्=न्यूनाधिकभावः । तज्जन्यो यो विमर्दः=

---

अर्थात् मन, अहंकार वगैरह भी अपने-अपने व्यापारों को करने में सर्वथा असमर्थ हो जायेंगे । कारण कि जब इन्द्रियाँ ही स्वयं विषयों को ग्रहण नहीं कर पायेंगी तो फिर मन आदि को कैसे विषय-प्रदान कर पायेंगी । विषयों के अभाव में मन, अहंकार आदि का भी व्यापार ठप हो जायेगा । इसीलिए शक्तिविहीन होने के कारण यह 'अशक्ति' है ।

'तुष्टिसिद्धी अपि' इति । अर्थात् तुष्टि, सिद्धि भी जो कि वक्ष्यमाण लक्षण हैं, बुद्धिधर्म ही हैं । उन विपर्यय, अशक्ति, तुष्टि तीनों में ज्ञान को छोड़कर सातों धर्माधर्म आदि का अन्तर्भाव है और अष्टम बुद्धिधर्म ज्ञान का सिद्धि में अन्तर्भाव है ।

( ३ ) 'व्यासमाह—तस्य भेदास्तु' इति । विपर्ययादि चारों प्रकार के संक्षिप्त सर्ग के भेदों को व्यास=विस्तार से बतलाते हैं कि व्यास में उसके ५० भेद हैं ।

प्रश्न—व्यास में ५० भेद कैसे होते हैं ?

उत्तर—'गुणवैषम्यविमर्दात्' इति । सत्त्वादि गुणों का जो न्यूनाधिक भावभूत वैषम्य, तत्कृत जो विमर्द=स्व-स्वकार्योत्पादकसामर्थ्यपराभव, तादृशपराभवरूप कारण से ५० भेद हो जाते हैं ।

'गुणानां वैषम्यम्' इति । ५० प्रकार के भेदों को ही पुष्ट करते हैं कि—सत्त्वादि गुणों का जो वैषम्य अर्थात् एक-एक गुण की अधिकबलता अथवा दो-दो गुणों की अधिकबलता, एवम् एक-एक की न्यूनबलता अथवा दो-दो गुणों की न्यूनबलतारूप जो न्यूनाधिक्य, वही वैषम्य है; जैसे—

१. सत्त्वगुण न्यूनबल, रजोगुण-तमोगुण अधिकबल ।
२. रजोगुण न्यूनबल, सत्त्वगुण-तमोगुण अधिकबल ।
३. तमोगुण न्यूनबल, सत्त्वगुण-रजोगुण अधिकबल ।

मात्रतया यथाकार्यमुन्नीयेते। तदिदं गुणानां वैषम्यम्, तेनोपमर्दः, एकैकस्य न्यूनवलस्य द्वयोर्द्वयोर्वाऽभिभवः। तस्मात्तस्य भेदाः पञ्चाशदिति ॥ ४६ ॥

( १ ) तानेव पञ्चाशद् भेदान् गणयति—

**पञ्च विपर्ययभेदा भवन्त्यशक्तिश्च करणवैकल्यात् ।**
**अष्टाविंशतिभेदा तुष्टिर्नवधाऽष्टधा सिद्धिः ॥ ४७ ॥**

( २ ) 'पञ्च' इति। अविद्याऽस्मितारागद्वेषाभिनिवेशा यथासङ्ख्यं तमो-

---

स्वस्वकार्यसमुत्पादनासामर्थ्यम्। तदेव वैषम्यं स्फुटीक्रियते—**एकैकस्येति**। ते च न्यूनाधिक्ये मन्दमध्यातिमात्रतयेति। यादृशं कार्यं वयं पश्यामस्तस्य कार्यस्य कारणेऽपि न्यूनाधिकवलभावसमन्विते एव ज्ञायेते=अनुमीयेते। हिन्दीटीकायां दर्शितासु षट्त्रिंशद्विधास्वपि उत्तममध्यमकनिष्ठादिभेदेनाऽनन्ता एव भेदास्तत्राऽनुमीयन्ते। प्राग्दर्शितस्य विषयस्योपसंहारो विधीयते—**तदिदं गुणानां वैषम्यमित्यादिना**। इत्थञ्च पञ्चाशद् भेदाः सांख्याचार्यैः सुनिश्चिता भवन्तीति निष्कर्षः ॥ ४६ ॥

( १ ) 'पञ्चविपर्ययभेदाः' इत्यादिकारिकाया अवतरणमाह—**तानेवेति**।

**अन्वयः**—विपर्ययभेदाः पञ्च भवन्ति, करणवैकल्यात् अशक्तिश्च अष्टाविंशतिभेदा ( भवति ), तुष्टिः नवधा सिद्धिश्च अष्टधा ( भवति )।

( २ ) विपर्ययस्य=मिथ्याज्ञानस्य=अविद्यायाः, भेदाः=प्रकाराः। पञ्च

---

वैसे ही—

४. सत्त्वगुण अधिकवल, रजोगुण-तमोगुण न्यूनवल।

५. रजोगुण अधिकवल, सत्त्वगुण-तमोगुण न्यूनवल।

६. तमोगुण अधिकवल, रजोगुण-सत्त्वगुण न्यूनवल।

**'ते च न्यूनाधिक्ये'** इति। और वह गुणों की न्यूनाधिकता अर्थात् न्यूनवलता तथा अधिकवलता 'यथाकार्यम्' कार्यानुसार गुणों की मन्दता, मध्यता और अधिकांशता मात्र से जानी जाती है। यही है गुणों का वैषम्य। इस प्रकार गुणों के न्यूनाधिक्यरूप वैषम्यजन्य जो स्व-स्वकार्योत्पादक सामर्थ्यपराभवरूप उपमर्द=एक-एक न्यूनवलगुण का अभिभव अथवा दो-दो न्यूनवल वाले गुणों का अभिभव, उससे विपर्यय, अशक्ति, तुष्टि, सिद्धिस्वरूप संक्षिप्तसर्ग के ५० भेद हो जाते हैं ॥ ४६ ॥

( १ ) **'तानेव पञ्चाशद्भेदान्'** इति। उन्हीं ५० भेदों को गिनाते हैं—**'पञ्च विपर्ययभेदाः'** इत्यादि कारिका से।

**कारिकार्थ**—पाँच विपर्यय के भेद हैं और त्रयोदशविध करणों के वैकल्य से अशक्ति २८ प्रकार की है, ९ प्रकार की तुष्टि और ८ प्रकार की सिद्धि है। इस प्रकार ५० भेद हो जाते हैं।

( २ ) 'पञ्च' इति। अविद्या, अस्मिता, राग, द्वेष तथा अभिनिवेश, ये

मोहमहामोहतामिस्रान्धतामिस्रसञ्ज्ञकाः पञ्च विपर्ययविशेषाः। विपर्ययप्रभवाणामप्यस्मितादीनां विपर्ययस्वभावत्वात्।

( ३ ) यद्वा यदविद्यया विपर्ययेणाऽवधार्यते वस्तु, अस्मितादयस्तत्स्वभावाः सन्तस्तदभिनिविशन्ते। अत एव 'पञ्चपर्वाऽविद्या' इत्याह भगवान् वार्षगण्यः॥ ४७॥

---

भवन्ति। ते च भेदा वाचस्पतिमिश्रद्वारा योगदर्शने—'अविद्यास्मिता' इत्यादिरूपेण वर्णिताः सन्ति। सांख्यदर्शने च—'तमो, मोह,' इत्यादिरूपेण निरूपिता वर्तन्ते।

एतेषु विपर्ययस्य पञ्चविधभेदेषु योगदर्शने 'अविद्याऽस्मिता' इत्यादिरूपेण वर्णितेषु, सांख्यदर्शने च 'तमो मोह' इत्यादिरूपेण वर्णितेषु नास्ति कोऽपि भेदः। शाब्दिकभेदसत्त्वेऽप्यर्थतो नास्ति कश्चन भेदः। 'अनित्याशुचिदुःखाऽनात्मसु नित्यशुचिसुखात्मख्यातिरविद्या'। इयमेवाऽविद्या 'तमः'शब्देनोच्यते। 'अस्मिता' च मोहशब्देनोच्यते, बुद्धिपुरुषयोर्मोहनमात्रत्वात्। अनात्मधर्मसुखतृष्णात्मको रागः महामोहशब्देनोच्यते। अनात्मधर्मदुःखत्यागेच्छात्मको द्वेषः 'तामिस्र'शब्देनोच्यते। अनात्मधर्मस्य मरणस्यात्मनि त्रासस्वरूपस्याऽभिनिवेशस्याऽन्धतामिस्रेऽन्तर्भावः, यतस्तस्याऽभिनिवेशस्याऽन्धतामिस्ररूपत्वात्। यथासङ्ख्यम्=यथाक्रमानुसारम्।

शङ्कते—अविद्यैव विपर्ययः, अस्मितादीनां कथं विपर्ययत्वमित्याकाङ्क्षायामाह—**विपर्ययप्रभवाणामपीति**। विपर्ययः=अविद्या, तत्प्रभवाणामपि=तज्जन्यानामपि, विपर्ययस्वरूपाऽविद्याकार्यभूतानामित्यर्थः। अस्मितादीनाम्=अस्मितारागद्वेषाभिनिवेशानाम्। विपर्ययस्वभावत्वात्=विपर्ययस्य स्वभावः=धर्मः=अज्ञानत्वम्=अविद्यात्वं, तद्वत्त्वादित्यर्थः।

( ३ ) इदानीं शङ्कते—उपादानोपादेययोरभेदाद् विपर्ययस्याऽविद्यास्वरूपस्याऽस्मितादीनां चतुर्णां निमित्तकारणत्वेनाऽस्मितादिभिः सहाऽविद्याया न कदाप्यभेदो भवितुमर्हतीत्यतोऽस्मितादिषु विपर्ययव्यवहारोऽपि न स्यात्, अर्थात् अस्मितादीनां विपर्ययशब्देन सर्वथा वक्तुमशक्यत्वात्—इत्यत आह—यद्वेति। अविद्यया=विपर्ययेण, अर्थाद् विपर्ययात्मिकयाऽविद्यया यद् वस्तु=विषयः, अवधार्यते=निश्चीयते, ( तद् वस्तु अयथार्थरूपेणैव ज्ञायते, अस्मितादयोऽपि सन्ति ) तत्स्वभावाः=अविद्यास्वभावाः, अतः किमपि वस्तु अयथार्थरूपेणैव निश्चिन्वन्ति। अयमाशयः—अस्मितादीनामविद्यो-

---

क्रमशः तम, मोह, महामोह, तामिस्र, अन्धतामिस्र, इन पाँच नाम वाले पाँच विपर्यय =अज्ञान विशेष हैं। क्योंकि विपर्यय से उत्पन्न हुए अस्मिता आदि भी विपर्ययस्वभाव वाले है। अविद्या आदि का विशेष विवेचन ४८ कारिका में देखें।

( ३ ) '**यद्वा यद्विद्यया**' इति। अथवा जिस वस्तु को अविद्या=विपर्यय के द्वारा विषय किया जाता है, अस्मिता आदि भी अविद्यापरपर्यायभूत विपर्यय के स्वभाव वाले होते हुए स्व-स्वानुरूप उसी वस्तु को विषय करते हैं। इसीलिए भगवान् वार्षगण्य ने कहा है कि अविद्या पांच प्रकार की होती है॥ ४७॥

( १ ) सम्प्रति पञ्चानां विपर्ययभेदानामवान्तरभेदमाह—

**भेदस्तमसोऽष्टविधो मोहस्य च दशविधो महामोहः ।**
**तामिस्रोऽष्टादशधा तथा भवत्यन्धतामिस्रः ॥ ४८ ॥**

( २ ) 'भेदः' इति । भेदस्तमसोऽविद्याया अष्टविधः । अष्टस्वव्यक्तमहदहङ्कारपञ्चतन्मात्रेष्वनात्मस्वात्मबुद्धिरविद्या तमः, अष्टविधविषयत्वात् तस्याऽष्टविधत्वम् ।

---

पादानत्वाभावेऽपि अस्मितादिषु अविद्याविषयकस्याऽविनाभावसत्त्वेनाऽस्मितादयोऽपि विपर्ययः=अविद्या, शब्दजन्यबोधविषयतावन्तो भवन्ति, अर्थात् अस्मितादयोऽपि विपर्ययशब्देन कथ्यन्ते । तत्त्वकौमुद्यां—तदभिनिविशन्ते=यथायोग्यं स्वस्वानुरूपेण विपयीक्रियन्ते इत्यतस्तेऽस्मितादयोऽपि विपर्ययशब्देन कथ्यन्ते इति भावः ।

अविद्याऽस्मितारागादयः पञ्च क्लेशा 'अविद्या'शब्देनोच्यन्ते इत्यत्र सांख्यशास्त्रस्य प्राचीनाचार्यस्यापि सम्मतिमाह—अत एवेति । 'पञ्चपर्वाऽविद्या'=पञ्चपर्वाणि=पञ्चशाखाः, सन्ति यस्या अविद्याया, एवम्भूतामविद्यामाह—भगवान्=महर्षिः । वार्षगण्यः=एतन्नामकः सांख्यशास्त्रस्याचार्यः ॥ ४७ ॥

**अष्टविधं तमः**

( १ ) 'भेदस्तमसोऽष्टविध' इत्यादिकारिकामवतारयति—**सम्प्रतीति** । इदानीम् । अविद्यापरपर्यायभूतस्य विपर्ययस्य पञ्चविधभेदानाम्=तमोमोहमहामोहतामिस्रान्धतामिस्रनामधेयानाम् अविद्याऽस्मितारागद्वेषाभिनिवेशापरनामधेयानामवान्तरं भेदानाह—**'भेदस्तमसः'** इत्यादिः ।

अन्वयः—तमसः मोहस्य च अष्टविधो भेदः ( अस्ति ), महामोहः दशविधः तामिस्रः तथा अन्धतामिस्रः अष्टादशधा ( भवति ) ।

( २ ) अर्थात्तमसोऽष्टविधो भेदः । तथाहि—प्रकृति-महत्तत्त्व-अहङ्कार-पञ्चतन्मात्रेषु आत्मभिन्नेषु आत्मबुद्धिरेवाऽविद्या । सैव च तमः । सा च तमोरूपाऽविद्याऽष्टविधा—१. आत्मा प्रकृत्यभिन्नः, २. आत्मा महत्तत्त्वाभिन्नः, ३. आत्माऽहङ्कारा-

---

( १ ) **'सम्प्रति पञ्चानाम्'** इति । अब पाँच जो अविद्यापरपर्यायभूत विपर्यय के भेद हैं, उनके अवान्तर भेदों को बतलाते हैं—**'भेदस्तमसोऽष्टविधः'** इत्यादि कारिका से ।

कारिकार्थ—तम का अष्टविध भेद है और अष्टविध भेद मोह का भी है । महामोह दस प्रकार का, तामिस्र अठारह प्रकार का तथा अन्धतामिस्र भी अठारह प्रकार का है। इस प्रकार सभी मिलाकर ६२ अवान्तर भेद हो जाते हैं ।

( २ ) **'भेद'** इति । अर्थात् तम=अविद्या का अष्टविध भेद है, अर्थात् तम=अविद्या आठ प्रकार का है । अव्यक्त=प्रकृति, महत्तत्त्व, अहंकार और पञ्चतन्मात्रा इन अनात्मभूत=आत्मा से भिन्न आठ पदार्थों में आत्मबुद्धि, यही अविद्या=तम

( ३ ) 'मोहस्य च' इति। अत्राऽप्यष्टविधो भेदश्चकारेणाऽनुषज्यते। देवा ह्यष्टविधमैश्वर्यमासाद्याऽमृतत्वाभिमानिनोऽणिमादिकमात्मीयं शाश्वतिकमभिमन्यन्ते, सेयमस्मिता मोहोऽष्टविधैश्वर्यविषयत्वादष्टविधः।

( ४ ) 'दशविधो महामोहः' इति। शब्दादिषु पञ्चसु दिव्यादिव्यतया दशविधेषु विषयेषु रञ्जनीयेषु राग आसक्तिर्महामोहः, स च दशविधविषयत्वाद् दशविधः।

---

भिन्नः, ४. आत्मा शब्दतन्मात्राभिन्नः, ५. आत्मा स्पर्शतन्मात्राभिन्नः, ६. आत्मा रूपतन्मात्राभिन्नः, ७. आत्मा रसतन्मात्राभिन्नः, एवम् ८. आत्मा गन्धतन्मात्राभिन्नः।

### मोहस्याऽष्टौ भेदाः

( ३ ) 'मोहस्य च = अस्मितायाश्च'—अस्याप्यष्टविधो भेदः, तथाहि—१. तपोबलेन देवादीनामष्टविधैश्वर्यशालित्वात् अस्मितापरपर्यायभूतस्य मोहस्य—'अणिमात्मक-ऐश्वर्यवानहम्' इत्येको भेदः। २. एवं तादृशमहिमात्मकैश्वर्यवानहम् इति द्वितीयो भेदः। ३. तादृशलघिमावानहमस्मि, इति तृतीयो भेदः। ४. तादृशगरिमात्मकैश्वर्यवानहम् इति चतुर्थो भेदः। ५. तादृशप्राप्तिरूपैश्वर्यवानहम् इति पञ्चमो भेदः। ६. तादृशप्राकाम्यरूपैश्वर्यवानहम्, इति षष्ठो भेदः। ७. तादृशवशित्वरूपैश्वर्यवानहम् इति सप्तमो भेदः। ८. तादृशेशित्वरूपैश्वर्यवानहम् इति अष्टमो भेदः।

देवाः = देवविशेषाः। अष्टविधम् = अष्टप्रकारकम्। आसाद्य = प्राप्य। अणिमादिकम् = अणिमादिकमैश्वर्यम्। आत्मीयम् = स्वीयम्। शाश्वतिकम् = सार्वदिकम् = उत्तरकाले बाधरहितम् इत्यर्थः अभिमन्यन्ते = अभिमानं कुर्वन्ति।

### दशविधो महामोहः

( ४ ) रागापरपर्यायभूतस्य महामोहस्य दिव्य-अदिव्यभेदेन शब्दादिविषयत्वाद् दश भेदा जायन्ते, तत्र पञ्चविधोऽस्माकं रागः, पञ्चविधश्च देवानाम्, एवं मिलित्वा दशविधो जायते। तथाहि—

---

है। यह अविद्यारूप तम अव्यक्त, महत्तत्त्व, अहंकार तथा पञ्च तन्मात्राओं को विषय करता है। इस कारण यह अविद्यारूप तम आठ प्रकार का है।

( ३ ) 'मोहस्य च' इति। मोह के भी अष्टविध भेद चकार के सम्बन्ध मे जान लेना चाहिए। देवता लोग अणिमा, महिमा, लघिमा आदि अष्टविध ऐश्वर्य को प्राप्त करके अपने अमृतत्व = अमरत्व का अभिमान करते हुए अणिमादि अष्टविध ऐश्वर्य को हमेशा के लिए अपना मान बैठते हैं। इस प्रकार यह अस्मितारूप मोह अष्टविध ऐश्वर्यरूप विषय वाला होने से आठ प्रकार का है।

( ४ ) 'दशविधो महामोहः' इति। महामोह दस प्रकार का है। शब्द, स्पर्श, रूप, रस और गन्ध, ये शब्दादि पांच विषय दिव्य-अदिव्य भेद से दशविध हो जाते हैं और ये रञ्जनीय = रागोत्पादक हैं। अतः इन रागोत्पादक दशविध विषयों में

( ५ ) 'तामिस्रः' द्वेषः 'अष्टादशधा'। शब्दादयो दश विषया रञ्जनीयाः स्वरूपतः, ऐश्वर्यन्त्वणिमादिकं न स्वरूपतो रञ्जनीयम्; किं तु रञ्जनीयशब्दाद्युपायाः। ते च शब्दादय उपस्थिताः परस्परेणोपहन्यमानास्तदुपा-

---

१. अस्माकं यथा—मम शब्दसुखं जायताम्। २. अस्माकं यथा—मम स्पर्शसुखं जायताम्। ३. अस्माकं यथा—मम रूपसुखं जायताम्। ४. अस्माकं यथा—मम रससुखं जायताम्। ५. अस्माकं यथा—मम गन्धसुखं जायताम्।

देवानां कृते तु दिव्यादिव्योभयविषयको रागो जायते। तथाहि—१. मम दिव्यादिव्यशब्दसुखं जायताम्। २. मम दिव्यादिव्यस्पर्शसुखं जायताम्। ३. मम दिव्यादिव्यरूपसुखं जायताम्। ४. मम दिव्यादिव्यरससुखं जायताम्। ५. मम दिव्यादिव्यगन्धसुखं जायताम्।

इमे दिव्यादिव्यशब्दादि दशविषयाः, स्वरूपतः=स्वरूपेणैव, रञ्जनीयाः=रागोत्पादकाः, भवन्तीति शेषः। तत्र ये शब्दादयो देवानां सुखजनकरागभूता भवन्ति ते दिव्याः। ये चाऽस्माकं तेऽदिव्याः।

**तामिस्रोऽष्टादशधा**

( ५ ) तामिस्रो=द्वेषः, अष्टादशधा, भवतीति शेषः। अयमाशयः—शब्दादयः पञ्च दिव्याः, पञ्च अदिव्याः पूर्वोक्ता वेदितव्याः, एवं मिलित्वा दशविधा भवन्ति। एवं तादृशशब्दादिसाधनभूतम् अणिमादिरूपमैश्वर्यमपि पूर्वोक्तमष्टविधं बोध्यम्। इत्थञ्च सर्वेऽपि मिलित्वाऽष्टादशधा भवन्ति। तथाहि—

सर्वेऽप्यत्र विचारयन्ति—१ अस्मद्भोग्यः शब्दरूपोऽदिव्यविषयः स्वरूपतो मा नाशं गच्छेत्। २. एवम् अदिव्यस्पर्शो मा नाशं प्राप्नुयात्। ३. तथा अदिव्यरूपं मा नङ्क्षीत्। ४. एवम् अदिव्यरसो मा नङ्क्षीत्। ५. तथैव अदिव्यगन्धो मा नाशं गच्छेत्। ६. एवमेव—दिव्यशब्दो मा नङ्क्षीत्। ७. एवमेव—दिव्यस्पर्शो मा नाशं प्राप्नुयात्। ८. एवमेव—दिव्यरूप मा नङ्क्षीत्। ९. तथैव—दिव्यरसोऽपि मा नाशं गच्छेत्। १० तथैव—दिव्यगन्धोऽपि मा नङ्क्षीत्।

---

राग=आसक्ति हो जाना ही महामोह है। इस महामोह के दिव्य-अदिव्य भेद से शब्दादि दस विषय हैं, अतः यह दशविध विषय वाला होने के कारण दस प्रकार का है।

( ५ ) **'तामिस्रो द्वेषोऽष्टादशधा'** इति। तामिस्र द्वेषरूप है और वह अठारह प्रकार का है। शब्दादि विषय जो कि स्वरूपतः रागोत्पादक हैं, वे दिव्य-अदिव्य भेद से दस प्रकार के हैं, और आठ अणिमादि ऐश्वर्य हैं, अतः १८ हो जाते हैं। किन्तु ये अणिमादि स्वरूपतः रञ्जनीय नहीं हैं, बल्कि रञ्जनीय जो शब्दादि हैं, उनके उपाय =साधनभूत ये हैं; और ये शब्द, स्पर्श आदि विषय भोग्यरूप से उपस्थित होकर परस्पर में एक-दूसरे से उपहन्यमान हो जाते हैं। इस कारण इनके उपायभूत अणिमादि स्वरूप से ही शत्रुवत् कोपनीय=क्रोध के विषय बन जाते हैं। इस प्रकार

याश्चाऽणिमादयः स्वरूपेणैव कोपनीया भवन्तीति शब्दादिभिर्दशभिः सहाऽणिमाद्यष्टकमष्टादशधेति, तद्विषयो द्वेषस्तामिस्त्रोऽष्टादशविषयत्वादष्टादशधेति ।

( ९ ) 'तथा भवत्यन्धतामिस्रः' । अभिनिवेशोऽन्धतामिस्रः । तथेत्यनेनाऽष्टादशधेत्यनुषज्यते । देवाः खल्वणिमादिकमष्टविधमैश्वर्यमासाद्य दश शब्दा-

---

अष्टविधैश्वर्यविषयेऽपीयमेव सरणिर्विज्ञेया—

१. शब्दादिसाधनम् अणिमा मा नाशं गच्छेत् । २. शब्दादिसाधनं महिमा मा नङ्क्षीत् । ३. शब्दादिसाधनं लघिमा मा नङ्क्षीत् । ४. शब्दादिसाधनं गरिमा मा नङ्क्षीत् । ५. शब्दादिसाधनं प्राप्तिः मा नङ्क्षीत् । ६. शब्दादिसाधनं प्राकाम्यं मा नङ्क्षीत् । ७. शब्दादिसाधनं वशित्वं मा नङ्क्षीत् । ८. शब्दादिसाधनम् ईशित्वं मा नङ्क्षीत् ।

इदमेवोक्तं तत्त्वकौमुद्यां—यदणिमादिकं न स्वरूपतो रञ्जनीयमिति । अणिमादिकमष्टविधमैश्वर्यं स्वरूपेण रागजनका न भवन्ति, किन्तु शब्दादिविषयाणामुपभोगार्थमेवाऽणिमादिकं तदुपायत्वेन सेव्यतेऽतः शब्दादिविषयाणामुपभोगोपायत्वादेव परम्परया रञ्जनीया भवन्ति अणिमादयः, फले रागादुपायेऽपि राग इतिवत् । फले द्वेषात् उपायेऽपि द्वेष इत्यस्य सर्वजनानुभवसिद्धत्वात् । इत्थञ्च शब्दादिस्वरूपनाशे द्वेषदर्शनात् शब्दादिस्वरूपनाशप्रयोजकीभूते अणिमाद्यैश्वर्यस्वरूपनाशेऽपि द्वेषोऽनुभूयते इति सर्वजनानुभवं दर्शयति—ते चेति । परस्परेण=अन्योऽन्येन । उपहन्यमानाः=नाशं गच्छन्तः, देवैरिति शेषः । अतस्ते शब्दाः स्वरूपेण शत्रुवत् कोपनीयाः=द्वेषविषयाः भवन्ति, परस्परं विरोधशीलास्ते पारस्परिकं कार्यं प्रतिबध्नन्ति । एवमेव अणिमादयः=अणिमादयोऽपि । तदुपायाः=शब्दाद्युपायभूताः सन्तः । देवैः परस्परम् अधिकाधिकशक्तिशालिभिरभिभवं प्राप्नुवानाः सन्तः स्वरूपतोऽपि ते कोपनीया जायन्ते, इति शब्दादिभिर्दिव्यादिव्यैर्मिलित्वा दशसङ्ख्याकैः सार्धम् अणिमाद्यष्टकमष्टसङ्ख्याको गणो जायते इति अष्टादशसङ्ख्याकत्वं द्वेषापरपर्यायभूतस्य तामिस्रस्य सूपपद्यते इति । तद्विषयः=तादृशाष्टादशविषयविषयको द्वेषोऽपि अष्टादशविधो जायते ।

( ९ ) अभिनिवेशो नाम अन्धतामिस्रः=भयरूपः । तथेत्यनेनेति । 'तथा' इति पदेन, 'अष्टादशधा' । अनुषज्यते=सम्बद्ध्यते । तस्याष्टविधत्वं प्रस्फोरयति —देवाः खल्विति । ऐश्वर्यम्=अष्टविधमैश्वर्यम् । आसाद्य=प्राप्य । दश=दशसङ्ख्याकान् ।

---

दिव्य-अदिव्य भेद से दशविध शब्दादि के साथ अष्टविध अणिमादि मिलकर 'अठारह' हो जाते हैं । और इनका विषय अर्थात् इनमें होने वाला द्वेष 'तामिस्र' है, तथा वह पूर्वोक्त अठारह प्रकार के विषय वाला होने से अठारह प्रकार का है ।

( ९ ) 'तथा भवत्यन्धतामिस्रः' इति । अन्धतामिस्र भी तथाविध ही है, अर्थात् अठारह प्रकार का है । अन्धतामिस्र नाम अभिनिवेश का है । 'तथा' इस पद से 'अन्धतामिस्र' अठारह प्रकार का है, यह सूचित होता है । देवता आदि लोग अणिमा

दीन् भुञ्जानाः—'शब्दादयो भोग्यास्तदुपायाश्चाऽणिमादयोऽस्माकमसुरादिभिरुपघानिषते' इति बिभ्यति। तदिदं भयमभिनिवेशोऽन्धतामिस्रोऽष्टादशविषयत्वादष्टादशधेति।

सोऽयं पञ्चविधविकल्पो विपर्ययोऽवान्तरभेदाद् द्वाषष्टिरिति ॥ ४८ ॥

( १ ) तदेवं पञ्चविपर्ययभेदानुक्त्वाऽष्टाविंशतिभेदामशक्तिमाह—

**एकादशेन्द्रियवधाः सह बुद्धिवधैरशक्तिरुद्दिष्टा।**
**सप्तदश वधा बुद्धेर्विपर्ययात्तुष्टिसिद्धीनाम् ॥ ४९ ॥**

---

शब्दादीन्=तादृशैश्वर्यप्रभावेण दिव्यादिव्यतया दशविधत्वं प्राप्तान् शब्दादिपञ्चविषयान्। भुञ्जानाः=तेषां विषयाणां भोगं कुर्वाणाः, सन्तोऽपि भयं कुर्वन्ति। कीदृशं तद् भयमित्याह—**शब्दादयो भोग्या इति**। भोगविषयाः, शब्दादिपञ्च दिव्यादिव्यतया दशविधास्ते विषया इत्यर्थः। असुरादिभिः मा उपघानिषत इत्येवंरूपेण भययुक्ता देवाः खलु भवन्ति। तदुपायाः=शब्दाद्युपायाः, अणिमादयोऽष्टविधैश्वर्यविशेषाः अपि असुरादिभिः मा उपघानिषत इत्येवं ते देवाः सभया भवन्ति। तदिदं भयम्=अभिनिवेशनामकम् अन्धतामिस्रसंज्ञकम्, प्रागुक्तदिशाऽष्टादशसङ्ख्याकं भवतीति विज्ञेयम्। उपसंहरति—**सोऽयमिति**। एतावता प्रबन्धेन निरूपितोऽयं विपर्ययः=अविद्या, पञ्चविधा भवतीति प्रागेव निवेदितमस्माभिः।

**अयमभिप्रायः**—यस्य विपर्ययस्य सन्ति मुख्यतः पञ्च भेदाः, ये च प्राग् दर्शिताः, तेषामेव स्वस्वाऽवान्तरभेदात् मिलित्वा ते भेदा द्वाषष्टिसंख्याका भवन्तीति भावः ॥

( १ ) अशक्तेः अष्टाविंशतिभेदानाह—**'एकादशेन्द्रियवधाः'** इत्यादिना।

**अन्वयः**—एकादश इन्द्रियवधाः ( सप्तसङ्ख्याकैः ) बुद्धिवधैः सह ( मिलित्वा ) अशक्तिः अष्टाविंशतिधा उद्दिष्टा, तुष्टिसिद्धीनां विपर्ययात् बुद्धेः वधाः सप्तदश ( भवन्ति )।

---

आदि अष्टविध ऐश्वर्य को प्राप्त करके शब्दादि दस विषयों का भोग करते हुए डरते रहते हैं कि हमारे भोग्य विषय जो शब्द-स्पर्श आदि हैं तथा उनके साधनभूत उपाय जो अणिमादि है, उन्हें असुर लोग नष्ट न कर दें; यही भय अभिनिवेश तथा अन्धतामिस्र कहलाता है। यह भय=अभिनिवेश=अन्धतामिस्र अष्टादश विषय वाला होने के कारण अठारह प्रकार का है। इस प्रकार यह विपर्यय=अविद्या पाँच विकल्प=प्रकार वाला होता हुआ अवान्तरभेद से ६२ प्रकार का हो जाता है ॥ ४८ ॥

( १ ) अब=पूर्वोक्तरीत्या पाँच विपर्यय के भेदों को बतलाकर अठाइस भेदों वाली अशक्ति को बतलाते हैं—**'एकादशेन्द्रियवधाः'** इत्यादि कारिका से।

**कारिकार्थ**—एकादश इन्द्रियाँ हैं, अतः उनके वध=इन्द्रियविनाशकारणीभूत दोष भी एकादश ही हैं। जिन्हें अभी तत्त्वकौमुदीकार बतलायेंगे। एवं नव प्रकार की तुष्टि तथा आठ प्रकार की सिद्धि के विपर्यय से बुद्धि के १७ वध हैं। इस प्रकार बुद्धि-

( २ ) 'एकादश' इति। इन्द्रियवधस्य ग्रहो बुद्धिवधहेतुत्वेन, नत्वशक्तिभेदपूरणत्वेन। एकादशेन्द्रियवधाः—

'वाधिर्यं कुष्ठिताऽन्धत्वं जडताऽजिघ्रता तथा।
मूकता कौण्यपङ्गुत्वे क्लैब्योदावर्तमन्दताः॥'

यथासङ्ख्यं श्रोत्रादीनामिन्द्रियाणां वधाः।

---

( २ ) इन्द्रियवधस्येति। ननु इन्द्रियवधानामिन्द्रियधर्मत्वात् कथन्ते इन्द्रियवधा अशक्तयो भवितुं प्रभविष्यन्ति, अशक्तेर्बुद्धिधर्मत्वादिति चेन्न। इन्द्रियवधस्य तु बुद्धिवधस्योत्पादकत्वेन अर्थात् बुद्धिवधजनकत्वेन ग्रहणं कृतमित्यतो बुद्धिवधा एवैकादशशब्दशब्दिता विज्ञेयाः। न त्वशक्तिभेदपूर्णत्वेनेति। इन्द्रियवधस्य ग्रहो बुद्धिवधरूपाया अशक्तेरष्टाविंशतिसङ्ख्याभेदपूरको न विज्ञेयः। एकादशेन्द्रियवधान् ब्रूते—**वाधिर्यमित्यादिना**। वाधिर्यम् —वधिरस्य भावः=श्रोत्रेन्द्रियश्रवणशक्तेर्विनाशः। कुष्ठिता—कुष्ठोऽस्यास्तीति कुष्ठी, तस्य भावः=त्वगिन्द्रियशक्तेर्विनाशः। अन्धत्वम्=चक्षुःशक्तेरभावः। जडता=रसनेन्द्रियशक्त्यभावः। अजिघ्रता=घ्राणेन्द्रियशक्त्यभावः, घ्राणदोषः। मूकता=वाक्शक्तेरभावः। कौण्यम्—कुणोऽस्यास्तीति कुणी, तस्य भावः कौण्यम्=हस्तशक्त्यभावः। पङ्गुत्वम्=पादशक्त्यभावः, चलनाऽसामर्थ्यरूपम्। क्लैब्यम्=नपुंसकत्वम्, रतिशक्त्यभावः। उदावर्तः=पायुशक्तेरभावः, मलमूत्रवायुनिःसरणावरोधकरोगविशेषः। इमे च सन्ति ज्ञानेन्द्रिय-कर्मेन्द्रियाणां वधरूपा दोषाः।

---

वध के साथ मिलकर एकादश इन्द्रियवध २८ प्रकार के हो जाते हैं, वही २८ भेद वाली अशक्ति उद्दिष्ट है।

( २ ) **'एकादश इति' इति**। यहाँ यह प्रश्न होता है कि अन्धत्व, वधिरत्व, आदि वक्ष्यमाण इन्द्रियवध इन्द्रियधर्म हैं और अशक्ति को पूर्व में बुद्धिधर्म बतलाया जा चुका है, तब फिर 'एकादशेन्द्रियवधाः सह बुद्धिवधैरशक्तिरुद्दिष्टा' इस कथन से अशक्ति के अन्दर इन्द्रियवध को क्यों समाविष्ट किया गया है?

उत्तर—**'इन्द्रियवधस्य ग्रह'** इति। यहाँ 'ग्रह' शब्द का अर्थ है - 'ग्रहण'। अर्थात् कारिका में जो इन्द्रियवध का ग्रहण है, वह इस बात का सूचक है कि इन्द्रियवध बुद्धिवध का हेतु है, अतः बुद्धिवधहेतुत्वेन=बुद्धिवध का हेतु है। इस कारण इन्द्रियवध का ग्रहण है, न कि अशक्ति के २८ प्रकार के भेदों के पूरणार्थ इन्द्रियवध का ग्रहण है।

प्रश्न—एकादश इन्द्रियवध कौन-कौन से हैं?

उत्तर—**'एकादशेन्द्रियवधाः'** इति। वाधिर्य=वधिरता, कुष्ठिता=कुष्ठरोग, अन्धत्व=अन्धा हो जाना=चक्षु का नष्ट हो जाना, जडता=रसनाशक्ति का अभाव=खाये हुए पदार्थों के स्वाद का ज्ञान न होना, अजिघ्रता=घ्राणशक्ति का अभाव हो जाना—ये तो पाँच ज्ञानेन्द्रियों के वध बतलाये गये हैं।

( ३ ) एतावत्येव तु तद्धेतुका बुद्धेरशक्तिः स्वव्यापारे भवति। तथा चैकादशहेतुकत्वादेकादशधा बुद्धेरशक्तिरुच्यते। हेतुहेतुमतोरभेदविवक्षया च सामानाधिकरण्यम्।

---

इदानीम् 'उभयात्मकमत्र मनः' इत्यादिना कथितस्य मनःस्वरूपेन्द्रियस्य दोषमाह—मन्दता = मनसः कुण्ठितत्वम्, सङ्कल्पशक्त्यभावः, सुखदुःखादिविषयग्रहणासामर्थ्यम् इत्यर्थः।

यथासङ्ख्यम् = क्रमानुसारम्। श्रोत्रादीनामिन्द्रियाणाम् = ज्ञानेन्द्रिय-कर्मेन्द्रिय-मनोरूपेन्द्रियाणाम्, अर्थात् श्रोत्र-त्वक्-चक्षू-रसना-घ्राण-वाक्-पाणि-पाद-पायु-उपस्थ-मनःसंज्ञकैकादशेन्द्रियवधा अशक्तयो विज्ञेयाः।

( ३ ) एतावत्येव = एकादशसङ्ख्याका एव। तद्धेतुका = एकादशेन्द्रियवधहेतुका। बुद्धेः = महत्तत्त्वस्य। अशक्तिः। स्वव्यापारे = स्वस्याः = बुद्धेः, व्यापारे = अध्यवसायात्मके व्यापारे।

**अयमभिप्रायः**—एकादशहेतुकत्वात् = एकादशेन्द्रियवधहेतुकत्वात्। बुद्धेरशक्तिरपि। एकादशधा = एकादशसंख्याका = एकादशसंख्यावती। उच्यते = कथ्यते। **हेतुहेतुमतोरभेदविवक्षयेति**। अत्र एकादशेन्द्रियवधो हेतुः, हेतुमती ( कार्यस्वरूपा ) च बुद्धिवधात्मिका अशक्तिः, इति द्वयोः ( कार्यकारणयोः ) अभेदविवक्षया 'एकादशेन्द्रियवधाः' इति शब्दस्य 'अशक्तिः' इति शब्दस्य च सामानाधिकरण्यम् = एकार्थप्रतिपादकत्वम्, कथितम्।

---

पाँच कर्मेन्द्रियवध इस प्रकार हैं—मूकता = वाक्शक्ति का अभाव हो जाना, कौण्य = हाथ रूप शक्ति का अभाव हो जाना, पंगुत्व = पादशक्ति का अभाव = लंगड़ा हो जाना अथवा चलना-फिरना एकदम बन्द हो जाना, क्लैब्य = नपुंसकत्व, उदावर्त = शौचनिःसरणरोधक रोग—ये पाँच कर्मेन्द्रियवध है।

'मन' रूप इन्द्रियवध है—मन्दता = संकल्पशक्ति का अभाव हो जाना, अर्थात् सुखादिविषयक ज्ञान-संपादन में मन्द हो जाना—ये ११ यथासंख्य श्रोत्रादि इन्द्रियवध हैं।

( ३ ) **'एतावत्येव तु'** इति। अर्थात् इन एकादश इन्द्रियों के वधात्मक दोषों के कारण 'एतावत्येव' = एकादश संख्या वाली ही बुद्धि की वधदोषात्मिका अशक्ति अपने व्यापार = अध्यवसाय में स्वीकार की गयी है। इस प्रकार एकादश इन्द्रियवध दोषों से उत्पन्न होने के कारण बुद्धि की अशक्ति एकादशधा = ११ प्रकार की कही जाती है।

**'हेतुहेतुमतोः'** इति। हेतु हुआ एकादश इन्द्रियवध और हेतुमान् हुई बुद्धिवध रूपी अशक्ति; इन दोनों का सामानाधिकरण्य अभेदरूप कथन कारण और कार्य में अभेद विवक्षा से ही है।

( ४ ) तदेवमिन्द्रियवधद्वारेण बुद्धेरशक्तिमुक्त्वा स्वरूपतोऽशक्तीराह—'सह बुद्धिवधैः' इति। कति बुद्धेः स्वरूपतो वधा इत्यत आह—'सप्तदश वधा बुद्धेः'। कुतः ? 'विपर्ययात्तुष्टिसिद्धीनाम्।' तुष्टयो नवधेति तद्विपर्ययास्त-

---

( ४ ) तदित्थमेकादशेन्द्रियवधात्मिका याऽशक्तिः, एवं तादृशं यद् वैगुण्यं तद्द्वारेण समुत्पन्नां बुद्धेरशक्तिं निरुच्येदानीं बुद्धेः स्वरूपात्मकबुद्धिसंज्ञकधर्माणामशक्तीराह—'सह बुद्धिवधैः' इति। अर्थाद् बुद्धिवधैः सहैकादशेन्द्रियवधानां संयोजनेनाऽशक्तेरष्टाविंशतिभेदा भवन्ति। अत्राऽयं प्रश्नः—'कति बुद्धेरि'ति। बुद्धेः स्वरूपतो वधाः कियन्तो भवन्ति ? उत्तरयति—'सप्तदश वधा बुद्धेः' इति। कुतः ? इति। कस्मात् कारणाद् बुद्धेः सप्तदशवधाः भवन्ति, बुद्धेरेकत्वात् ?

समाधत्ते—'विपर्ययात्तुष्टिसिद्धीनामिति। तुष्टयो नवधा भवन्ति, तुष्टेर्विपर्ययाः= अभावाः अतुष्टिस्वरूपा अपि न वधा जायन्ते। ते च यथा—१. 'प्रकृतिर्मोक्षदा' इति तुष्टेर्विपर्ययोऽभावः 'प्रकृतिर्न मोक्षदा' इत्यतुष्टिः, 'अप्रकृतिरि'ति कथ्यते। २. 'बुद्धिर्मोक्षदा' इति तुष्टेर्विपर्ययो 'बुद्धिर्न मोक्षदा' इत्यतुष्टिः 'अबुद्धि' इत्याख्या, 'अनुपादाना' इति च कथ्यते। ३. मनोलयकाले बुद्धिर्मोक्षदेति तुष्टेर्विपर्ययः= अभावः, तस्मिन्नेव काले बुद्धिर्न मोक्षदेत्याकारिकाऽतुष्टिः, सा चाऽकालाख्या इति च कथ्यते। ४. केनचिदाचार्येण कथितं 'भाग्यमेव मोक्षदम्' इति तुष्टेर्विपर्ययः 'भाग्यं न मोक्षदम्' इतीयमतुष्टिरभाग्याख्या कथ्यते। इतीमाश्चतस्रोऽतुष्टयः सति खल्वाध्यात्मिक्य अतुष्टय इति तु परमार्थः।

अथ बाह्या पञ्चाऽतुष्टयः प्रदर्श्यन्ते; यथा—१. शब्दविषयतः शान्ता वृत्तिः शब्दोपरमा इति कथ्यते। २. एवं स्पर्शविषयाच्छान्ता वृत्तिः स्पर्शोपरमा इति च निगद्यते। ३. तथा रूपात्मकविषयतः शान्ता वृत्तिः रूपोपरमा इति च कथ्यते। ४. एवमेव रसस्वरूपविषयतः शान्ता वृत्तिः रसोपरमा व्यवह्रियते शास्त्रकारैः। ५. तदेवं गन्धलक्षणलक्षितात् गन्धविषयाच्छान्ता वृत्तिः गन्धोपरमा कथ्यते।

एतासामन्यान्यपि नामानि शास्त्रेषु वर्णितानि शास्त्रकारैः। तानि च यथा—१. अनम्भा अतुष्टिः। २. असलिला अतुष्टिः। ३. अमेघा अतुष्टिः।

एवं शास्त्रान्तरेषु एतान्यपि अपराणि नामानि समुपलभ्यन्ते। तानि च यथा—१. असुवर्णा, २. अनीला, ३. अमनोज्ञा, ४. अदृष्टिः, ५. अपरा, ६. सुपरा, ७. असुनेत्रा, ८. असुनाडिका. ९. अनुत्तमाम्भसिका।

---

( ४ ) 'तदेवमिन्द्रियवधद्वारेण' इति। इस प्रकार एकादश इन्द्रियवध रूप दोषों के द्वारा उत्पन्न बुद्धि की अशक्ति को कहकर स्वरूपतः अशक्तियों को कहते हैं—'सह बुद्धिवधैः' इत्यादि ग्रन्थ से।

प्रश्न—बुद्धि के स्वरूपतः कितने वध हैं ?

उत्तर—बुद्धि के स्वरूपतः सतरह वध हैं।

न्निरूपणान्नवधा भवन्ति। एवं सिद्धयोऽष्टाविति तद्विपर्ययास्तन्निरूपणादष्टौ भवन्तीति ॥ ४९ ॥

( १ ) तुष्टिर्नवधेत्युक्तम्, ताः परिगणयति—

**आध्यात्मिक्यश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः ।**

**बाह्या विषयोपरमात् पञ्च नव तुष्टयोऽभिमताः ॥ ५० ॥**

( २ ) 'आध्यात्मिक्यः' इति। आध्यात्मिक्यः—'प्रकृतिव्यतिरिक्त आत्मा-

---

तत्त्वकौमुद्याम्—**एवं सिद्धयोऽष्टाविति**। अष्टौ सन्ति सिद्धयः। ताश्च 'ऊहः शब्दोऽध्ययनम्' इत्यादि एकपञ्चाशत्कारिकायां ( ५१ ) वर्णिताः सन्ति। इदानीं सिद्धिप्रतियोगिकः विपर्ययरूपोऽभावः प्रदर्श्यते। तथाहि—१. अध्ययनात् जायमानं तत्त्वज्ञानमध्ययनं सिद्धिः, एवमनध्ययनाज्जायमानमतत्त्वज्ञानम् अनध्ययनम् 'असिद्धिः'। २. शब्दाऽश्रवणाज्जायमानमतत्त्वज्ञानम् 'अशब्दः'=असिद्धिः। ३. एवम् 'ऊह'विपर्ययात् अतत्त्वज्ञानम् 'अनूहः' असिद्धिः। ४. सहपाठिनोऽभावेऽतत्त्वज्ञानम-सुहृत्प्राप्तिः। ५. प्राक्तनसंस्काराऽभावेऽतत्त्वज्ञानम् 'अदानम्' असिद्धिः। एवम्—आध्या-त्मिक-आधिभौतिक-आधिदैविक-दुःखस्वरूपास्तिस्रः असिद्धयोऽपि अष्टासु असिद्धिषु परिगणिताः सन्ति। तदुक्तं तत्त्वकौमुद्याम्—**तन्निरूपणादष्टौ भवन्तीति** ॥ ४९ ॥

**अन्वयः**—आध्यात्मिक्यः प्रकृत्युपादानकालभाग्याख्याः चतस्रः तुष्टयः ( भवन्ति ), विषयोपरमात् पञ्च बाह्याः तुष्टयः ( मिलित्वा ) नव तुष्टयः अभिमताः।

( २ ) **आध्यात्मिक्य इति**। प्रकृत्यादिभ्यो भिन्नम् आत्मानमधिकृत्य जायमाना याः सन्तोषाख्या वृत्तयस्ता आत्मत्वेनाभिमता आध्यात्मिक्यस्तुष्टयः। प्रकृतिव्यतिरिक्त

---

प्रश्न—कैसे हैं बुद्धि के १७ वध, जब कि बुद्धि एक है ?

उत्तर—तुष्टि और सिद्धियों के विपर्यय से ही बुद्धि के सप्तदश वध हैं। तुष्टियाँ नव हैं और उनके विपर्यय=अतुष्टियाँ भी नव ही हैं। इसी प्रकार सिद्धियाँ आठ हैं और उनके विपर्यय अभावरूप असिद्धियाँ भी आठ ही हैं, दोनों मिलकर सतरह (१७) हो जाती हैं ॥ ४९ ॥

( १ ) **'तुष्टिर्नवधेत्युक्तम्'** इति। तुष्टि नव प्रकार की है, यह कहा जा चुका है। अब उन्हें गिनाते हैं—**'आध्यात्मिक्यश्चतस्रः'** इत्यादि कारिका से।

**कारिकार्थ**—तुष्टि नाम है 'सन्तुष्टि' या सन्तोष का। वह तुष्टि दो प्रकार की है—आध्यात्मिक और बाह्य। आध्यात्मिक तुष्टि चार प्रकार की है—प्रकृति, उपा-दान, काल और भाग्य। और विषयों के प्रति वैराग्य हो जाने से पाँच बाह्य तुष्टियाँ सांख्याचार्यों को अभिमत हैं। इस प्रकार बाह्य और आध्यात्मिक तुष्टियों को मिला कर नव तुष्टियाँ हो जाती हैं।

( २ ) **'आध्यात्मिक्य'** इति। प्रकृति आदि जडवर्ग से अतिरिक्त आत्मा है, यह सद्गुरु के उपदेश से साधारणतया जानकर जो पुरुष जानने के बाद भी इस आत्मा

ऽस्ति' इति प्रतिपद्य, ततोऽस्य श्रवणमननादिना विवेकसाक्षात्काराय त्वसदुपदेशतुष्टो यो न प्रयतते, तस्याऽध्यात्मिक्यश्चतस्रस्तुष्टयो भवन्ति, प्रकृतिव्यतिरिक्तमात्मानमधिकृत्य यस्मात्तास्तुष्टयस्तस्मादाध्यात्मिक्यः।

( ३ ) कास्ता इत्यत आह—'प्रकृत्युपादानकालभाग्याख्याः' प्रकृत्यादिराख्या यासां तास्तथोक्ताः। तत्र प्रकृत्याख्या तुष्टिर्यथा—कस्यचिदुपदेशे—'विवेकसाक्षात्कारो हि प्रकृतिपरिणामभेदस्तञ्च प्रकृतिरेव करोतीति कृतं

---

इति। प्रकृतिभिन्न इत्यर्थः। प्रतिपद्य=सद्गुरूपदेशान्निश्चित्य। अथवा कस्माच्चित् सुबुद्धव्यक्तिविशेषतो ज्ञात्वा। ततः=तादृशज्ञानोत्तरम्। अस्य=आत्मनः। श्रवणमननादिना। विवेकसाक्षात्काराय=सत्त्वपुरुषान्यताख्यातिद्वारकं यत्तत्त्वज्ञानं तदर्थम्। यः=पुरुषः। असदुपदेशतुष्टः=असतः=मिथ्यावादिनः, उपदेशेन तुष्टः सन्। तस्य=पुरुषस्य। चतस्रः=प्रकृत्युपादानकालभाग्याख्याश्चतुःसङ्ख्याकाः। तुष्टयः=सन्तोषाः।

एतास्तुष्टय आध्यात्मिक्यः कथमुच्यन्ते इति समाधत्ते—**प्रकृतिव्यतिरिक्तमात्मानमिति।** प्रकृत्यादिभिन्नमात्मानमित्यर्थः। अधिकृत्य=उद्दिश्य। यस्मात्=यस्मात् कारणात्। तस्मात्=तस्मात्कारणात्। आध्यात्मिक्यः। इत्युच्यन्ते इति शेषः।

( ३ ) पृच्छयते कास्तास्तुष्टयः? समाधत्ते—**प्रकृत्युपादानकालभाग्याख्या इति।** प्रकृत्यादिराख्या=नाम, यासां ताः। तथोक्ताः=प्रकृत्यादिनाम्ना कथिताः। तत्र=तुष्टिचतुष्टयमध्ये। प्रकृत्याख्या तुष्टिर्यथा—कस्यचित्=मिथ्यावादिनः। उपदेशे=वाक्यप्रयोगे कृते सति। तादृशवाक्यप्रयोगात्मकमुपदेशमाह—**'विवेकसाक्षात्कारः'** इत्यादिग्रन्थमारभ्य **'वत्स'** इत्यन्तग्रन्थेन। विवेकसाक्षात्कारः=प्रकृत्यादितो भेदेन यः साक्षात्कारः=आत्मा प्रकृत्यादितो भिन्न इत्याकारकः सत्त्वपुरुषान्यताख्यातिरूपः=आत्मसाक्षात्कारः=स्वात्मज्ञानमित्यर्थः। प्रकृतिपरिणामभेदः=

---

का श्रवण-मननादि के द्वारा प्रकृति, पुरुष के भेदज्ञानद्वारक साक्षात्कार के लिए अर्थात् विवेकज्ञान के लिए मिथ्यावादी व्यक्ति के मिथ्यावाद से सन्तुष्ट होकर प्रयत्न नहीं करता है, उस असत् उपदेश=मिथ्यावाद से सन्तुष्ट व्यक्ति की ये चार आध्यात्मिक तुष्टियाँ होती हैं। जिस कारण से वे तुष्टियाँ आत्मा को अधिकृत करके अर्थात् आत्मा के उद्देश्य से होती है, इसलिए इन्हें आध्यात्मिक तुष्टियाँ कहते हैं।

( ३ ) प्रश्न—'कास्ताः' इति ? अर्थात् वह कौन तुष्टियाँ हैं ?

उत्तर—प्रकृति, उपादान, काल तथा भाग्य, इन चार नामों वाली हैं।

**'तत्र प्रकृत्याख्या तुष्टिर्यथा'** इति। प्रकृति नाम वाली तुष्टि इस प्रकार है कि किसी व्यक्ति के यह कथन या कथनात्मक उपदेश करने पर कि विवेकसाक्षात्कार प्रकृति का ही परिणाम-भेद=परिणामविशेष है और उसे प्रकृति ही करती है, कारण कि साक्षात्कार बुद्धि का धर्म है और बुद्धि प्रकृति का परिणामविशेष है। इसलिए हे वत्स ! तुम्हारा यह ध्यान तथा अभ्यास सब व्यर्थ है; श्रवण-मनन भी सब बेकार है।

तद् ध्यानाभ्यासेन, तस्मादेवमेवाऽऽस्व वत्स'—इति सेयमुपदेष्टव्यस्य शिष्यस्य या तुष्टिः प्रकृतौ, सा तुष्टिः प्रकृत्याख्या 'अम्भः' उच्यते ।

( ४ ) या तु—'प्राकृत्यपि विवेकख्यातिर्न सा प्रकृतिमात्राद्भवति, मा भूत्सर्वस्य सर्वदा, तन्मात्रस्य सर्वान् प्रत्यविशेषात्, प्रव्रज्यायास्तु सा भवति, तस्मात् प्रव्रज्यामुपाददीथाः, कृतं ते ध्यानाभ्यासेनाऽऽयुष्मन्' इति उपदेशे या तुष्टिः सोपादानाख्या 'सलिलम्' उच्यते ।

---

( स एव विवेकसाक्षात्कार. ) प्रकृते.=बुद्धितत्त्वस्य, परिणामभेदः=परिणामविशेपः। तश्च=परिणामविशेपश्च । प्रकृतिरेव=बुद्धिरूपा प्रकृतिरेव । कृतम्=व्यर्थम् । तद्ध्यानाभ्यासेन—तस्य=आत्मनः, ध्यानाऽभ्यासेन=श्रवणमननिदिध्यासनाभ्यासेन । तस्मात्=प्रागुक्तविवेकसाक्षात्कारस्य प्रकृत्यधीनत्वात् । एवमेव=श्रवणमननादी प्रयत्नं ( अभ्यासं ) विनैव । आस्व=तिष्ठ । इति=इत्येवमुपदेशे । प्रकृत्याख्या= प्रकृतिनाम्नी । अम्भः=एतस्यास्तुष्टेर्नामान्तरं 'अम्भः' जलमिति । अर्थाद् यथा जलं मज्जनकारणं भवति तथैवेयं प्रकृत्याख्या प्रथमा तुष्टिरपि तत्सादृश्यान्मज्जनकारणं जायते इति तु निष्कर्षः, इति च प्रथमा तुष्टिः ।

( ४ ) द्वितीयां तां तुष्टिमाह—**या तु प्राकृत्यपीति** । प्रकृतिधर्मस्वरूपापि । विवेकख्यातिः=प्रागुक्ता सत्त्वपुरुषान्यताख्यातिः । सा=विवेकख्यातिः । **न प्रकृतिमात्रादिति** । कथन्न सा भवतीत्याशङ्कायामाह—**तन्मात्रस्येति** । प्रकृतिमात्रस्येत्यर्थः । **सर्वान् प्रतीति** । सर्वपुरुपान् प्रति । अविशेपात्=समानसम्बन्धात् । सर्वदा=यदा यदा विवेकख्यातिस्तदा तदा । सर्वस्य=सकलपुरुपस्य, सकलप्राणिमात्रस्येत्यर्थः । एककालावच्छेदेन आपद्येत इति शेपः । एककालावच्छेदेन तस्या विवेकख्यातेः प्राणिमात्रस्याऽऽपत्तिः—मा भूत्=मा भवेत् । ( तदर्थमन्यदेव किमपि कारणं स्वीक्रियताम्, तच्च प्रव्रज्यारूपम्, अतः ) **प्रव्रज्यायास्त्विति** । प्रव्रज्यायाः=संन्यासधर्मस्य=तुरीयाश्रमवतः=चतुर्थाश्रमिणः । सा=विवेकख्यातिः=आत्मसाक्षात्कारः । तस्मात्= तस्मात्कारणात् । ( त्वम् ) प्रव्रज्याम् । उपाददीथाः=गृह्णीथाः । कृतम्=व्यर्थम् । ते । ध्यानाभ्यासेन=श्रवणमननिदिध्यासनाभ्यासेन । सोपादानाख्या—सा=प्रव्रज्याख्या तुष्टिः, उपादानाख्या—उप=वृद्धावस्थायाः समीपे, आदीयते=गृह्यते, यः प्रव्रज्या-

---

इस प्रकार के उपदेश से उपदेष्टव्य शिष्य को प्रकृति में होने वाली जो तुष्टि=सन्तुष्टि =सन्तोष उसे प्रकृति नामक तुष्टि कहते हैं, इसका दूसरा नाम 'अम्भ' है । जैसे अम्भ=जल डुबो देने वाला होता है, वैसे ही प्रकृति भी संसार-सागर में डुबो देने वाली है ।

( ४ ) 'या तु प्राकृत्यपि' इति । जो विवेकख्याति=विवेकज्ञान प्रकृति का परिणामविशेष होता हुआ भी वह विवेकज्ञान प्रकृतिमात्र से उत्पन्न नहीं होता है, कारण कि प्रकृति सबके लिए समान योगवाली होने के कारण सबको सर्वदा विवेकज्ञान होने लग जायेगा, परन्तु होता नहीं; वह प्रव्रज्या=संन्यास से होता है, इसलिए हे आयुष्मन् !

( ५ ) या तु—'प्रव्रज्याऽपि सद्यो न निर्वाणदेति, सैव कालपरिपाकमपेक्ष्य सिद्धिं ते विधास्यति, अलमुत्तप्ततया तव' इति उपदेशे या तुष्टिः सा कालाख्या 'ओघः' उच्यते।

( ६ ) या तु—'न प्रकृतेर्न कालान्नाऽप्युपादानाद्विवेकख्यातिः, अपि तु भाग्यादेव। अत एव मदालसापत्यान्यतिबालानि मातुरुपदेशादेव विवेकख्याति-

---

रूपो धर्मस्तदाख्या तुष्टिः उपादानाख्या कथ्यते, अस्या एव तुष्टेर्नामान्तरं 'सलिलम्' इत्यपि चास्ति।

अस्या अपि तुष्टेः श्रवण-मननादिध्यानाभ्यासाभावे पुनः संसारप्रापकत्वेन 'सलिले'ति नामान्तरेण कथ्यते। अङ्कुरं प्रति यथा सलिलस्य सहकारिकारणत्वं, तथैवाऽस्या अपि प्रव्रज्यायास्तुष्टेः सत्त्वपुरुषान्यताख्यातिरूपाऽऽत्मसाक्षात्कारं प्रति सहकारिकारणत्वमस्ति, अतः सलिलसमाना चेयं तुष्टिः। आत्मसाक्षात्कारार्थं च फलार्थिभिरुपादीयमानत्वेन 'उपादानाख्या' इत्यपि निगद्यते साङ्ख्याचार्यैः।

( ५ ) तृतीयां तुष्टिमाह—**या तु प्रव्रज्याऽपीति**। सद्यः=शीघ्रम्। निर्वाणदा=मोक्षदा। सैव=प्रव्रज्यैव। कालपरिपाकम्=कर्मणां भोगसमाप्तिरूपाऽवधिम्। अपेक्ष्य=तादृशावधिरूपं कालं सहकारीकृत्य। सिद्धिम्=सत्त्वपुरुषान्यताख्यातिरूपामिष्टसिद्धिम्। अलम्=व्यर्थम्। उत्तप्ततया=त्वरया ( अर्थात् उसके लिए उतावला होना व्यर्थ है )। इति उपदेशे=इत्याकारकोपदेशग्रहणे सति। 'कालाख्या'=कालनाम्नी। 'ओघः'=इति नामान्तरं, कथ्यते।

( ६ ) चतुर्थीं तां तुष्टिमाह—**या तु न प्रकृतेरिति**। भाग्यादेव=अदृष्टादेव। 'भाग्यं फलति सर्वत्र' इत्यभियुक्तोक्तेः, मदालसाऽपत्यानि=तत्त्वज्ञानसम्पन्नाया राज्ञ्यः मदालसायाः, अपत्यानि=पुत्राः। अतिबालानि=वर्षाभ्यन्तराऽऽयुष्कानि। उपदेशादेव=शास्त्रीयवाक्यादेव। तच्च वाक्यम्—

---

तुम संन्यास का उपादान=ग्रहण करो, इस ध्यानाभ्यास से क्या फायदा? अर्थात् यह सब व्यर्थ है। इस उपदेश से होने वाला जो सन्तोष, उपादानाख्य तुष्टि=सन्तोष है। इसका दूसरा नाम सलिल है।

( ५ ) **'या तु प्रव्रज्यापि'** इति। प्रव्रज्या=संन्यास भी सद्यः=शीघ्र ही विवेक ज्ञान द्वारा निर्वाण=मोक्ष प्रदान करने वाला नहीं है। वह संन्यास भी कुछ कालपरिपाक की अपेक्षा करके ही हे वत्स! तुम्हें विवेकज्ञानरूपा सिद्धि प्रदान कर सकेगा। इसलिए तुम्हारा उत्तप्त होना सर्वथा व्यर्थ है। इस उपदेश से काल की प्रतीक्षा में जो तुष्टि=सन्तोष, वह कालाख्य=कालनाम्नी तुष्टि कहलाती है। इसी का दूसरा नाम 'ओघ' है।

( ६ ) **'या तु न प्रकृतेः'** इति। और जो विवेकख्याति न तो प्रकृति से, न काल से और न उपादान=संन्यासग्रहण से ही होती है, अपि तु भाग्य से ही होती है, अतएव मदालसा के पुत्र अत्यन्त ही बाल होते हुए भी माता के उपदेश मात्र से

मन्ति मुक्तानि वभूवुः, तस्माद्भाग्यमेव हेतुर्नाऽन्यत्' इति उपदेशे या तुष्टिः सा भाग्याख्या 'वृष्टिः' उच्यते ।

( ७ ) वाह्या दर्शयति—'वाह्याः' तुष्टयो 'विषयोपरमात्पञ्च' । याः खल्वनात्मनः प्रकृतिमहदहङ्कारादीनात्मेत्यभिमन्यमानस्य वैराग्ये सति तुष्टयस्ता वाह्याः, आत्मज्ञानाभावे सत्यनात्मानमधिकृत्य प्रवृत्तेरिति ।

( ८ ) ताश्च वैराग्ये सति तुष्टय इति वैराग्यहेतुपञ्चत्वाद्वैराग्याण्यपि

---

'शुद्धोऽसि वुद्धोऽसि निरञ्जनोऽसि संसारमायापरिवर्जितोऽसि ।
संसारस्वप्नं त्यज मोहनिद्रां मदालसा वाक्यमुवाच पुत्रम् ॥'

भाग्यमेव हेतुः=प्रधानं कारणम् । नान्यत्=न कालादिकम् । भाग्याख्या=भाग्यनाम्नी तुष्टि. । वृष्टिः=अस्या एव तुष्टेर्नामान्तरमिदम् ।

( ७ ) वाह्याः पञ्च तुष्टयः प्रदर्श्यन्ते—'वाह्याः तुष्टयो विषयोपरमात् पञ्चे'ति । वाह्याः=वाह्याः प्रकृत्यादय एवाऽऽत्मानः ( सन्तीत्येवंरूपेण याः ) । तुष्टयः=वाह्यशब्दादिविषयजन्याः सन्तोपाः । विषयेभ्यः=शब्दादिवाह्यविषयेभ्यः, यः उपरमः=वैराग्यम्=विषयवैतृष्ण्यजन्यसन्तोपः=तुष्टिरूपस्तस्मादित्यर्थः ( अयमेव तुष्टिरूपः सन्तोषः वाह्यतुष्टिपदाभिधेयः ) । याः=तुष्टयः । अनात्मनः=आत्मभिन्नान्=जडवर्गस्वरूपान् । प्रकृतिमहदहङ्कारादीन्=आदिपदग्राह्य-मनो-दशविधेन्द्रिय-पञ्चतन्मात्रभूतान् विषयान् । आत्मेत्यभिमन्यमानस्य=आत्मा प्रकृत्यादि प्रागुक्तजडवर्गतोऽभिन्न इत्यभिमानं प्रकुर्वतः पुरुपस्य । ( पञ्चविधशब्दादिविपयेपु केनापि कारणेन वैराग्ये जाते यास्तुष्टयो भवन्ति ) तुष्टयस्ता इति । तास्तुष्टय इत्यर्थः । वाह्याः=पञ्च वाह्यतुष्टयः । तासां तुष्टीनां वाह्यत्वे कारणमाह—आत्मज्ञानाऽभावे सतीति=आत्मनो विवेकज्ञानस्य=सत्त्वपुरुपान्यताख्यातिरूपस्य, अभावे सतीत्यर्थः । अनात्मानम्=वाह्यशब्दादिविपयजातम् । अधिकृत्य=उद्दिश्य । प्रवृत्तेरिति । वाह्यशब्दादिविपयभूते जडवर्गे आत्मत्वं मन्यमानस्य सन्तोपे सति प्रवृत्तिर्भवतीत्यनुभूयते इत्यतस्ते वाह्यप्रकृत्याद्यात्मविपयत्वाद् वाह्याः कथ्यन्ते ।

( ८ ) तासां वाह्यतुष्टीनां पञ्चत्वं ब्रूते—ताश्च वैराग्ये सतीति । ताश्च=पञ्च-

---

विवेकख्याति प्राप्त कर मुक्त हो गये । इस कारण से हे वत्स ! भाग्य ही सवके प्रति हेतु है, अन्य नहीं । 'भाग्यं फलति सर्वत्र' इस उपदेश से जो तुष्टि=सन्तोप हो जाना, यही 'भाग्य' नामक तुष्टि है इसे वृष्टि भी कहते हैं । जो अकस्मात् ही विवेकज्ञान की वर्षा करे, वही वृष्टि=भाग्य कही जाती है ।

( ७ ) 'वाह्या दर्शयति' इति । वाह्य तुष्टियाँ शब्द-स्पर्श आदि विपयों में वैराग्य हो जाने से पाँच प्रकार की हैं । अनात्मभूत प्रकृति, महत्, अहङ्कार आदि को आत्मा मानने वाले पुरुष को शब्दादि वाह्य विपयों में वैराग्य हो जाने पर जो तुष्टियाँ होती हैं, वे वाह्य तुष्टियाँ हैं, क्योंकि आत्मज्ञान न होने पर अनात्म जडवर्ग को आत्मा मानकर होने वाली प्रवृत्ति से वाह्य तुष्टियाँ ही होती हैं ।

( ८ ) 'ताश्च वैराग्ये सति' इति । और पाँच वाह्य तुष्टियाँ वैराग्य हो जाने

पञ्च, तत्पञ्चत्वात् तुष्टयः पञ्चेति। उपरम्यतेऽनेनेत्युपरमो वैराग्यम्, विषयादुपरमो विषयोपरमः। विषयाः भोग्याः शब्दादयः पञ्च, उपरमा अपि पञ्च।

( ९ ) तथा हि—अर्जनरक्षणक्षयभोगहिंसादोषदर्शनहेतुजन्मानः पञ्चोपरमा भवन्ति।

( १० ) तथा हि—सेवादयो धनार्जनोपायाः, ते च सेवाकादीन् दुःखाकुर्वन्ति।

---

वाह्यतुष्टयश्च। वैराग्ये सति=वैराग्ये जाते, वैराग्योत्तरम्, भवन्तीति शेषः। **वैराग्यहेतुपञ्चत्वादिति**। वैराग्यहेतूनां पञ्चविषयभूतत्वात्, तस्मात् कारणात् वैराग्याण्यपि पञ्चैव सन्ति। **तत्पञ्चत्वादिति**। तेषां वैराग्याणां पञ्चत्वात्। वाह्यतुष्टयोऽपि पञ्चैव।

वैराग्यशब्दार्थं ब्रूते—**उपरम्यते इति**। रागसहिता वृत्तयः प्रत्याह्रियन्तेऽनेन रागरहितवृत्तिस्वरूपबुद्धिधर्मेणेति उपरमः। विषयात्=शब्दादिपञ्चविषयात्, उपरमः—विषयोपरमः=शब्दादिवाह्यपञ्चविषयेषु रागाभाव इत्यर्थः। शब्दादयः पञ्च=शब्दस्पर्शरूपरसगन्धाः पञ्च। उपरमा अपि पञ्च=तेषां शब्दादिपञ्चभोग्यविषयाणाम्—शब्दोपरमः, स्पर्शोपरमः, रूपोपरमः, रसोपरमः, गन्धोपरमः, इत्येवंरूपा उपरमा अपि पञ्चैव।

( ९ ) तानेव स्पष्टयति—**तथाहीति**। **अर्जनेत्यादि**। अर्जनम्=द्रव्योपार्जनम्, रक्षणम्=द्रव्यस्य चौरादिभ्यः संरक्षणम्, क्षयः=व्ययः, भोगः=द्रव्येण खाद्यपदार्थद्वारा पत्न्यादिभोगः, हिंसा=द्रव्यप्राप्त्यर्थं हिंसा, इमे दोषा दृश्यन्ते द्रव्यनिमित्तभूताः, तादृशदोषदर्शनमेव हेतुः, जन्मानः=तादृशदोषदर्शनरूपहेतुजन्याः। **पञ्चोपरमा इति**। शब्दादिपञ्चविषयोपरमाः। भवन्ति=सन्ति।

( १० ) प्रागुक्तेषु अर्जनादिषु दोषानुद्भावयन् पञ्चविषयोपरमानाह—**तथा हि—सेवादय इति**। सेवादय उपायाः सेवकादीन् दुःखा कुर्वन्ति। तद्यथा—दृप्यद्दुरीश्वरेति।

---

के पश्चात् होती हैं और वैराग्य के हेतु पांच शब्द-स्पर्शादि विषय हैं, अतः वैराग्य भी पांच हैं और वैराग्य के पांच होने से तुष्टियाँ भी पांच हैं।

**'उपरम्यतेऽनेनेत्युपरमः'** इति। अर्थात् जिसके द्वारा विषयोपभोग से निवृत्ति होती है, वही उपरम=वैराग्य है। विषयों से उपरम होना यह विषयोपरम कहलाता है। विषय शब्दादि पाँच हैं जो कि भोग्य हैं, इसलिए उपरम भी पाँच हैं।

( ९ ) **'तथाहि—अर्जन-रक्षण-क्षय'** इति। पाँच उपरमों को बतलाते हैं—अर्जन =उपार्जन, रक्षण, क्षय, भोग तथा हिंसा—इन पांच दोषों के दर्शन के कारण 'उपरम' भी पांच होते हैं।

( १० ) **'तथाहि—सेवादयो धनार्जनोपायाः'** इति। अर्जन, रक्षण आदि पाँच दोषों को दिखलाते हैं कि—सेवा आदि जो धनोपार्जन के उपाय है, वे सेवक आदि

'दृप्यद्दुरीश्वरद्वा:स्थदण्डिचण्डार्द्धचन्द्रजाम् ।
वेदनां भावयन् प्राज्ञः कः सेवास्वनुषज्जते ?' ॥

( ११ ) एवमन्येऽप्यर्जनोपायाः दुःखा इति विषयोपरमे या तुष्टिः सैषा 'पारम्' उच्यते । तथार्ऽजितन्धनं राजैकागारिकाग्निजलौघादिभ्यो विनङ्क्ष्यतीति तद्रक्षणे महद्दुःखमिति भावयतो विषयोपरमे या तुष्टिः सा द्वितीया

---

दृप्यतीति दृप्यन्=दर्पं कुर्वन्, दुरीश्वरः—दुः=दुष्टः, ईश्वरः=धनस्वामी, तस्य द्वास्थः=द्वारि तिष्ठतीति व्युत्पत्त्या—द्वाररक्षकः, यो दण्डी=दण्डधारको भृत्यः, ( पहरेदार ), तस्य चण्डः=महानेव कठिनः, यः=अर्धचन्द्रः=अर्धचन्द्रमिव स्वरूपं यस्य हस्तस्य स हस्तः 'अर्धचन्द्र'शब्देन प्रकृते कथ्यते, तस्माद् अर्धचन्द्रस्वरूपाद् हस्ताज्जायते इति 'दृप्यद्दुरीश्वरद्वा:स्थदण्डिचण्डार्धचन्द्रजा', तामित्यर्थः । वेदनाम्=पीडाम्=दु.खम् । भावयन्=स्मरन् । कः प्राज्ञ । सेवासु=दुःखदायिनी सेवासु । अनुषज्जते=प्रवृत्तो भवति ।

( ११ ) **एवमन्येऽप्यर्जनोपाया इति** । तथैव भिक्षा-वाणिज्यादयोऽप्यन्ये धनार्जनोपायाः । दुःखाः=दुःखकराः । इति=इत्येवंरूपेण । विषयोपरमे—विषयान्=पञ्चशब्दादिभोग्यविषयान् प्रति, उपरमे=वैराग्ये सति । या तुष्टिः=यः सन्तोषः । तस्यास्तुष्टेरन्यत् नाम **'पारम्'** इति । यस्मात् कारणात् धनार्जनात्मकदुःखस्य पारं प्रापयित्रीयं तुष्टिरत इयं तुष्टिः पारम्=पारा इत्यादिनाम्ना व्याह्रियते, व्यवह्रियते च ।

द्वितीयां तां बाह्यां तुष्टिमाह—**तथार्ऽजितन्धनमिति** । सेवादिना समुपार्जितधनमित्यर्थः । राजैकागारिकाग्निजलौघादिभ्य इति । राज्ञः=नृपात्, ऐकागारिकात्=चौरात्, अग्नितः, जलौघात्=जलप्रवाहात् ( बाढ़ से ) । आदिपदेनाऽन्येऽपि धना-

---

को दु.खी करते हैं । कहा भी है—दृप्यत्=दर्प=गर्व=अभिमान करने वाले दुरीश्वर=दुष्ट ईश्वर=मालिक=धनी व्यक्ति के दरवाजे पर स्थित जो प्रचण्डधारी द्वारपाल-भृत्य, उसके हाथ प्रदत्त जो असह्य अर्धचन्द्र=गलप्रहार, उस अर्धचन्द्रजन्य वेदना का अनुभव करने वाला कौन प्राज्ञ=सम्मानित बुद्धिमान् व्यक्ति सेवा-कार्यों में संलग्न अर्थात् उत्साह-सम्पन्न हो सकेगा ।

( ११ ) 'एवमन्येऽप्यर्जनोपायाः' इति । इसी प्रकार अन्य खेती=कृषि व्यापार करना आदि जो धनोपार्जन के उपाय हैं, वे भी सब दुःख देने वाले ही हैं । इस प्रकार से 'सर्वं दुःखमयं जगत्' ऐसी विचारधारा के आधार पर विषयों से वैराग्य होने पर जो मन को तुष्टि=सन्तोष होना है, वह 'पार' नामक तुष्टि है, क्योंकि यह तुष्टि वैराग्य द्वारा संसार से पार करने वाली है ।

'तथार्जितं धनम्' इति । वैसे ही अर्जित धन मे राजा, एकागारिक=चोर से, अग्नि से एवं जल की बाढ़ आदि से कदाचित् नष्ट न हो जाय, इस प्रकार की लगातार चिन्ता से उस धन के संरक्षण में होने वाला जो महान् दुःख, उस दुःखानुभूतिजन्य

'सुपारम्' उच्यते। तथा महताऽऽयासेनार्जितमर्थं भुज्यमानं क्षीयत इति तत्प्रक्षयम्भावयतो विषयोपरमे या तुष्टिः सा तृतीया 'पारापारम्' उच्यते।

( १२ ) एवं शब्दादिभोगाभ्यासात् प्रवर्द्धन्ते कामाः, ते च विषयाप्राप्तौ कामिनं दुःखाकुर्वन्तीति भोगदोषं भावयतो विषयोपरमे या तुष्टिः सा चतुर्थी 'अनुत्तमाम्भः' उच्यते।

---

पहारका ग्राह्याः। विनङ्क्ष्यति=नाशं गमिष्यति। इति=एतच्चिन्तया, एतद्भयेन वा। तद्रक्षणे=अर्जितधनरक्षणे। भावयतः=भावनां कुर्वतः=चिन्तयतः पुरुषस्य। विषयोपरमे=शब्दादिबाह्यविषयान् प्रति, उपरमे=वैराग्ये सति। या तुष्टिः=यः सन्तोषः। सा द्वितीया=तस्यान्तुष्टेर्द्वितीयं नाम 'सुपारम्' इति कथ्यते। अतीव दुःख-पारं प्रापयितृत्वात् इयं तुष्टिः 'सुपारम्' इति नाम्ना कथ्यते।

तृतीयां तां बाह्यां तुष्टिमाह—तथा महताऽऽयासेनेति। आयासेन=शरीरादि-प्रयत्नेन। अर्जितम्=उपार्जितम्। भुज्यमानम्=भोगं गतं, ( तद् धनम् ) क्षीयते=व्ययं गच्छति। इति=इत्येवंरूपेण। तत्प्रक्षयम्—तस्य=धनस्य, प्रक्षयम्=विना-शम्। भावयतः=चिन्तयतः, पुरुषस्य। विषयोपरमे=शब्दादिविषयान् प्रति वैराग्ये जाते। पारापारम्='पारापार' इति संज्ञकम्। उच्यते। इयं तुष्टिरत्वर्योनिबादिनीति धनक्षयं पश्यतो जनस्य विषयेषु कदाचित्प्रवृत्तिः, कदाचिच्चाऽप्रवृत्तिः अप्रवृत्तिकाले दुःखस्य पारम्, प्रवृत्तिकाले च दुःखस्याऽपारं याति अर्थाद् दुःखस्य पारं न गच्छतीत्यत इयं 'पारापार' संज्ञया संज्ञिता भवति।

( १२ ) चतुर्थी तां तुष्टिमाह—एवं शब्दादीति। शब्दादिभोगाभ्यासात्=शब्दादिरूपविषयाणां, भोगस्य, पौनःपुन्येन अभ्यासात्। कामाः=कामनाः=तृष्णाः।

---

विषयोपरम होने पर जो तुष्टि, वह 'सुपार' नामक दूसरी तुष्टि कही जाती है। वैराग्य द्वारा सुखपूर्वक संसार के पार करने में कारण है, अतः इसे सुपार' कहते हैं।

'तथा महतायासेनार्जितम्' इति। उसी प्रकार महान् प्रयास से उपार्जित धन भोग करने पर नष्ट हो जायेगा, इस प्रकार उस धनक्षय की भावना करने वाले व्यक्ति को विषयोपरम होने पर होने वाली जो तुष्टि, वह तीसरी तुष्टि 'पारापार' नामक तुष्टि कही जाती है। धनक्षय की भावना होने पर भी यदि धनोपार्जन में प्रवृत्ति बनी रही तो व्यक्ति दुःखसागर से पार हो जायेगा और यदि प्रवृत्ति नहीं रही तो वह उसी दुःखसागर में पड़ा हुआ गोते लगाता रहेगा, पार न हो पायेगा। इसलिए यह 'पारापार' नामक तुष्टि कही जाती है।

( १२ ) 'एवं शब्दादिभोगाभ्यासात्' इति। इसी प्रकार शब्दादि विषयों के भोगाभ्यास से कामनाएँ बढ़ती चली जाती है और विषयों की प्राप्ति न होने पर कामना वाले पुरुष उन कामनाओं से दुःखी होते हैं। इस प्रकार से विषयोपभोगों में दोषों की भावना करने वाले व्यक्ति को विषयोपरम होने पर जो तुष्टि होती है, वह चतुर्थ तुष्टि 'अनुत्तमाम्भ' तुष्टि कहलाती है।

( १३ ) एवं नाऽनुपहत्य भूतानि विषयोपभोगः सम्भवतीति हिंसादोषदर्शनाद्विषयोपरमे या तुष्टिः सा पञ्चमी 'उत्तमाम्भः' उच्यते ।

( १४ ) एवमाध्यात्मिकीभिश्चतसृभिः, वाह्याभिश्च पञ्चभिः 'नवतुष्टयोऽभिमताः' ॥ ५० ॥

---

प्रवर्धन्ते = वृद्धिं गता भवन्ति । ते च = कामाश्च = विषयतृष्णाश्च । विषयाऽप्राप्तौ = विषयाणामनुपलब्धौ सत्याम् । कामिनम् = सकामं = सतृष्णं पुरुषम् । भोगदोषम् = सर्वेषां विषयाणां भोगा दुःखकराः = दुःखदाः, इति दुःखविषयिणीभावनारूपं दोषम् । भावयतः = चिन्तयतः, पुरुषस्य । विषयोपरमे = विषयेषु वैराग्ये जाते । 'अनुत्तमाम्भः' = एतन्नाम्नी चतुर्थी तुष्टिः । इयं तुष्टिः शब्दादिविषयेभ्यो जलवद् द्रवन्ती पुरुषं, तथापि नोत्तमतया जलवद् द्रवन्तीत्यतो । 'न उत्तमा द्रविका' इति 'अनुत्तमाम्भः' कथ्यते ।

( १३ ) पञ्चमीं तुष्टिं ब्रूते—**एवं नानुपहत्य भूतानीति** । भूतानि = प्राणिनः, नानुपहत्य = हननम् = प्राणिहिंसां विना, न = नोपलभ्यते, मांसम् । मांसं विना शरीरस्य प्राबल्यं न जायते, तदभावे च विषयोपभोगः कामोपभोगः, न स्यात् । इति = इत्यतः । हिंसादोषदर्शनात् = हिंसा सर्वथा अनर्थकरीति दोषदर्शनात् । तथा च हिंसायाः स्वयं दोषरूपत्वात्, हिंसायाञ्च पातकादिदोषाणां दर्शनाद् विषयेभ्यो विवेकिन उपरमो = वैराग्यं नितान्तमावश्यकः इत्यत इयं तुष्टिः 'उत्तमाम्भः' कथ्यते । यतः हिंसादोषस्य कारुण्यजनकत्वेन उत्तमस्य आर्द्रीभावस्य विद्यमानत्वात् 'उत्तमाम्भः' कथ्यते ।

( १४ ) उपसंहारो विधीयते—**एवमाध्यात्मिकीभिरिति** । इत्थञ्च प्रागुक्ताभिश्चतसृभिस्तुष्टिभिः सह बाह्याः पञ्च मिलित्वा नवसङ्ख्याकास्तुष्टयो जायन्ते ॥ ५० ॥

---

**'अनुत्तमाम्भः'** इति । नास्ति उत्तमं यस्मात् तद् अनुत्तमम् = अतीव श्रेष्ठम्; इस व्युत्पत्ति से भोगों को रोग समझ कर उनसे होने वाला उत्कट वैराग्य और उससे होने वाली जो तुष्टि, वही अनुत्तम = सर्वोत्कृष्ट = सर्वश्रेष्ठ, अम्भ = गंगाजल के समान अनुत्तमाम्भ तुष्टि कही गयी है ।

( १३ ) **'एवं नानुपहत्य'** इति । भूतों = प्राणियों को अनुपहत्य = मारे बिना = हिंसा किये बिना मांस की प्राप्ति नहीं होगी, और मांस-भक्षण के बिना शरीर सबल नहीं होगा, बिना शरीर-प्राबल्य के विषयोपभोग सम्भव नहीं है, और हिंसा बहुत ही अनर्थकारी है । इस प्रकार हिंसादोषदर्शन से विषयोपरम होने पर जो तुष्टि, वह पाँचवीं तुष्टि 'उत्तमाम्भ' कही गयी है । उत्तमं = श्रेष्ठम्, अम्भः = जलम्, इससे अंकुर के प्रति जैसे अम्भ = जल हेतु है, वैसे ही विवेकख्याति के प्रति हिंसादोषदर्शनजन्य जो विषयोपरम भी हेतु है, उससे होने वाली तुष्टि 'उत्तमाम्भ' तुष्टि कहलाती है ।

( १४ ) **'एवमाध्यात्मिकीभिः'** इति । इस प्रकार चार तुष्टियाँ आध्यात्मिक और पाँच तुष्टियाँ बाह्य, कुल नव तुष्टियाँ सांख्याचार्यों को सर्वथा अभिमत हैं ॥५०॥

( १ ) गौणमुख्यभेदैः सिद्धीराह—

**ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः ।**
**दानञ्च सिद्धयोऽष्टौ सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः ॥ ५१ ॥**

( २ ) 'ऊहः' इति । विहन्यमानस्य दुःखस्य त्रित्वात्तद्विघातास्त्रय इतीमा मुख्यास्तिस्रः सिद्धयः, तदुपायतया त्वितरा गौण्यः पञ्च सिद्धयः, ता अपि हेतु-हेतुमत्तया व्यवस्थिताः ।

---

( १ ) इदानीं 'ऊहःशब्दोऽध्ययनमि'त्यादिकारिकामवतारयति—**गौणेति** । गौण-मुख्यभेदेनोभयविधसिद्धीराह—**'ऊहः शब्दोऽध्ययनम्'** इति ।

**अन्वयः**—अध्ययनं शब्दः ऊहः, सुहृत्प्राप्तिः, दानं त्रयश्च दुःखविघाताः, इति अष्टौ सिद्धयः सिद्धेः पूर्वः त्रिविधः अङ्कुशः भवतीति शेषः ।

वेदादिशास्त्राध्ययनात् जायमानमात्मज्ञानमध्ययनात्मिका सिद्धिः कथ्यते । शब्दात्मकपदजन्यमात्मज्ञानं शब्दात्मिका सिद्धिः निरुच्यते । तर्काज्जायमानमात्मज्ञानम् 'ऊहः' सिद्धिः । शास्त्रीयेऽर्थे विचार्यमाणे जायमानम् आत्मज्ञानं सुहृत्प्राप्तिनाम्नी सिद्धिरुच्यते । विवेकज्ञानस्य शुद्धिरूपा सिद्धिः दानात्मिका सिद्धिः कथ्यते । इमास्तु पञ्चसिद्धयः सन्ति गौणीभूताः सिद्धयः । इदानीं मुख्या सिद्धीराह—**तिस्रश्च मुख्या** इति । त्रयो दुःखविघाता मुख्यासिद्धिस्वरूपाः । ते च यथा—आध्यात्मिक-आधि-भौतिक-आधिदैविकदुःखध्वंसस्वरूपाः । एताश्च क्रमशः प्रमोद-मुदितमोदमानाश्च कथ्यन्ते ।

**'सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः'** इति । सिद्धेः = अष्टविधायाः सिद्धेः । पूर्वः = पूर्वोक्तः । त्रिविधः = विपर्ययाऽशक्तितुष्टिरूपः । अङ्कुशः = अङ्कुश इव, सिद्धेः प्रति-बन्धकः । यथा—अङ्कुशेन शासितोऽश्वादिर्वश्यो भवति तथा विपर्ययाऽशक्तितुष्टिभिः सिद्धेः प्रतिबन्धो जायते । अत एव लोकोऽहर्निशमनिशमविच्छिन्नप्रयासायासभार-मुद्वहन् परिभ्रमति । नहि कदापि विश्रमसुखशय्यामधिशेते ।

( २ ) कौमुद्याम्—**विहन्यमानस्येति** । सर्वथा परित्यक्तुं योग्यस्य ( हेयस्य ) । त्रित्वात् = आध्यात्मिक-आधिदैविक-आधिभौतिकभेदेन त्रिविधत्वात् । तद्विघाताः =

---

( १ ) **'गौणमुख्यभेदैः'** इति । गौणमुख्य भेदों के साथ सिद्धियों को बतलाते हैं—**'ऊहः शब्दोऽध्ययनम्'** इत्यादि कारिका से ।

**कारिकार्थ**—ऊह, शब्द, अध्ययन इन तीन प्रकार के आध्यात्मिक, आधिदैविक एवम् आधिभौतिक दुःख का विघात = विनाश, सुहृत्प्राप्ति और दान, ये आठ सिद्धियाँ हैं । तथा सिद्धि के पूर्व में जो विपर्यय, अशक्ति तथा तुष्टि ये तीन हैं, ये तीनों सिद्धि के प्रतिबन्धक = विरोधी हैं ।

( २ ) 'ऊहः इती'ति । विहन्यमान = विनष्ट हुए दुःख के तीन प्रकार के होने के कारण उसके विघात = निवृत्तियाँ भी तीन प्रकार के हैं, और ये दुःखविघात-

( ३ ) तत्राऽऽद्याऽध्ययनलक्षणा सिद्धिर्हेतुरेव। मुख्यास्तु सिद्धयो हेतुमत्य एव। मध्यमास्तु हेतुहेतुमत्यः।

( ४ ) विधिवद् गुरुमुखादध्यात्मविद्यानामक्षरस्वरूपग्रहणमध्ययनं प्रथमा सिद्धिः 'तारम्' उच्यते।

( ५ ) तत्कार्यम्—शब्दः। 'शब्दः' इति पदं शब्दजनितमर्थज्ञानमुपलक्ष-

---

दुःखत्रयविघाताः अपि तन्निवृत्तयः ( तिस्रो भवन्ति )। इतीमाः=दुःखत्रयनिवृत्तयः। मुख्याः=मुख्यरूपतया उपादेयाः। तदुपायतया—तेषां=दुःखविघातानाम्, उपायतया= साधनतया। इतराः=तत्त्वज्ञानस्वरूपा अध्ययनादि पञ्च सिद्धयः गौण्यः। ता अपि= अध्ययनसिद्धिमारभ्य दानपर्यन्ता पञ्च सिद्धयः। हेतुहेतुमत्तया=कारणकार्यरूपतया।

( ३ ) तत्राऽऽद्या=सर्वप्रथमा सिद्धिः। मुख्यास्तु=आध्यात्मिक-आधिदैविक-आधिभौतिकदुःखाभावरूपास्तु। हेतुमत्यः=कार्यभूता एव। मध्यमाः=शब्द-ऊह-सुहृत्प्राप्ति-दानसंज्ञकाः। हेतुहेतुमत्यः=दुःखविघातनाम्नीनां सिद्धीनां कारणानि, अध्ययनाभिधानायाः सिद्धेः कार्याणि।

( ४ ) 'विधिवद्' इत्यारभ्य 'तारम्' इत्यन्तं प्रथमा सिद्धिः।

( ५ ) द्वितीयां तां सिद्धिमाह—तत्कार्यं शब्द इति। अध्ययनस्य कार्यं शब्दो भवति। अत्र शब्दपदस्य शब्दजन्याऽर्थज्ञाने लक्षणा। अत इयं शब्दजन्याऽर्थज्ञानात्मिका

---

रूपा तीनों सिद्धियाँ मुख्य है और इन दुःख-विघातरूप तीन सिद्धियों के उपायभूत होने से इतर पाँच सिद्धियाँ गौण है और वे पाँच सिद्धियाँ भी हेतु तथा हेतुमान् होने से अर्थात् कारण-कार्य उभयरूप से व्यवस्थित है।

( ३ ) 'तत्राऽऽद्या' इति। उन आठ सिद्धियों में प्रथम अर्थात् दुःख-विघात के प्रथम जो 'अध्ययन' नामक सिद्धि है, वह कारण ही होती है और दुःखविघातरूप जो तीन मुख्य सिद्धियाँ हैं वे हेतुमान्=कार्य ही होती है। तथा मध्यम=मध्यपठित शब्दादि सिद्धियाँ हेतु और हेतुमान्=कार्य दोनों होती है।

### अध्ययनसिद्धि-विवेचन

( ४ ) 'विधिवद् गुरुमुखाद्' इति। अर्थात् 'समिधा हाथ में लेकर श्रोत्रिय ब्रह्मनिष्ठ गुरु के पास शिष्य अध्ययन के लिए जाये' इस शास्त्रीय विधि के कथनानुसार गुरुमुख से अध्यात्मविद्याप्रतिपादक जो अक्षरों के स्वरूप का अर्थात् शब्दरूप अक्षरों के ह्रस्व, दीर्घ, स्वरित, स्वरविशेषात्मक स्वरूप का ग्रहण=ज्ञान प्राप्त करना ही वस्तुतः 'अध्ययनसिद्धि' प्रथमा सिद्धि है. जिसे 'तार' कहते हैं। तार का अर्थ है— 'पार', अर्थात् इस संसारसागर से पार करनेवाली सिद्धि का ही दूसरा नाम तार है। क्योंकि ज्ञानप्लव से ही पार हुआ जा सकता है।

### शब्दसिद्धि

( ५ ) 'तत्कार्यं शब्दः' इत्यादि से 'शब्दसिद्धि' को बतलाते हैं। अर्थात् अध्ययन का कार्य शब्द=शब्दसिद्धि है। 'शब्द' यह पद शब्दजनित अर्थज्ञान का उपलक्षक=

यति, कार्ये कारणोपचारात्। सा द्वितीया सिद्धिः 'सुतारम्' उच्यते। पाठार्थाभ्यां तदिदं द्विधा श्रवणम्।

( ६ ) 'ऊहः'—तर्कः—आगमाविरोधिन्यायेनाऽऽगमार्थपरीक्षणम्। परीक्षणञ्च संशयपूर्वपक्षनिराकरणेनोत्तरपक्षव्यवस्थापनम्। तदिदं मननमाचक्षत आगमिनः। सा तृतीया सिद्धिः 'तारतारम्' उच्यते।

---

सिद्धिर्विज्ञेयेत्याशयेन मिश्रो ब्रूते—'शब्दः' इति **पदमिति**। अर्थात्, शब्देनात्र शक्तिलक्षणान्यतरवृत्तिजन्यं यदर्थज्ञानं तदेवोपलक्षयति=लक्षणयाऽर्थज्ञानं जनयति। कुतो जनयतीत्याशङ्कायामाह—**कार्ये इति**। इयञ्च शब्दजन्यार्थज्ञानात्मिका सिद्धिर्द्वितीयाऽर्थज्ञानात्मिका शब्दाभिधाना द्वितीया 'सुतार'नाम्नीत्यपराभिधाना कथ्यते। अस्याः सिद्धेः अर्थज्ञानस्यैव संसारतारकत्वेन 'सुतार' इति संज्ञा अत एव प्रदीयते। अनयोः द्वयोरेव सिद्धयोरयमेवास्ति सुस्पष्टोभेदः, एका गुरुसकाशादध्ययनात्मिका शब्दविषया सिद्धिस्तारमित्युच्यते। द्वितीया तु सुतारसिद्धिः अर्थविषयेति द्वयोर्भेदः सुस्पष्ट इत्यत आह—**पाठार्थाभ्यां द्विधा श्रवणम् इति**।

( ६ ) 'ऊहः तर्कः' इति। तर्कस्यार्थमाह—तर्क्यते इति तर्कः। **आगमाविरोधिन्यायेनेति**। आगमार्थः स्पष्ट एव। परीक्षणपदस्यार्थं ब्रूते—**संशयेति**। संशयपूर्वपक्षं निराकुर्वन्, उत्तरपक्षम्=सिद्धान्तपक्षं, व्यवस्थापयति। **अयमाशयः**—केचित् सतः सज्जायते, केचिच्च सतः असज्जायते इति वदन्ति, तत्र कार्यं सत् असद्वेति संशयः स्वाभाविकः। विचार्यमाणे प्रथमतोऽनुपलम्भात् पश्चाच्च कार्यस्य विनाशदर्शनात् कार्यं सर्वथाऽसदिति निर्धार्यते। पुनश्च 'असदकरणात्' इत्यादिनवमकारिकया कार्यमसत् इति स्वकीयसिद्धान्त उत्तरपक्षरूपेण स्थिरीक्रियते। तदिदम्=परीक्षणं=मननम्।

---

सूचक है, क्योंकि अर्थज्ञानरूप कार्य को शब्दात्मक कारण उपचार=लक्षणावृत्ति से बतलाता है। यह द्वितीया सिद्धि है, इसे सुतार भी कहते हैं, कारण कि यह सरलता से सुखपूर्वक तार देती है अर्थात् संसारसागर से पार कर देती है।

प्रश्न—तारसिद्धि साक्षात् अध्ययनलक्षणा है और सुतार=शब्दसिद्धि लक्षणया अर्थज्ञानात्मिका होने से अध्ययनरूपा है, ऐसी स्थिति में, तार एवं सुतार ये दोनों सिद्धियाँ अध्ययनरूपा होने से एक ही तो हैं, फिर भेद कहाँ ?

उत्तर—तारसिद्धि पाठविषया है और सुतारसिद्धि इसलिये पाठ और अर्थ से दोनों को भिन्न ही मानना होगा, इसीलिए द्विधा उल्लेख किया गया।

( ६ ) 'ऊहः=तर्कः' इति। 'ऊह' नाम तर्क का है। आगमन के अविरोधिन्याय से जो आगम=वेदादि शास्त्रों का परीक्षण, वही तर्क है और परीक्षण है संशयरूप पूर्वपक्ष का निराकरण करते हुए उत्तरपक्ष=सिद्धान्तपक्ष का व्यवस्थापन=स्थिरीकरण। आगमशास्त्रवेत्ताओं ने इसी परीक्षण को मनन कहा है। यह तृतीया 'ऊह' सिद्धि 'तारतार' कहलाती है। पूर्वोक्त सिद्धियों की अपेक्षा अधिक तारक होने से यह 'तारतार' कही जाती है।

( ७ ) स्वोत्प्रेक्षितं मननममननमेवासुहृत्सम्मतमिति द्वितीयं मननमाह— 'सुहृत्प्राप्तिः' इति। न्यायेन स्वयं परीक्षितमप्यर्थं न श्रद्धत्ते, न यावद् गुरु-शिष्यसब्रह्मचारिभिः सह संवाद्यते। अतः सुहृदां गुरुशिष्यसब्रह्मचारिणां संवादकानां प्राप्तिः सुहृत्प्राप्तिः। सा सिद्धिश्चतुर्थी 'रम्यकम्' उच्यते।

( ८ ) 'दानं च' शुद्धिर्विवेकज्ञानस्य, 'दैप् शोधने' ( धातुपाठः १।९२४ )

---

आगमिनः = आगमवेत्तारः = शास्त्रज्ञाः। आचक्षते = कथयन्ति। सा = ऊहनाम्नी = तर्कनाम्नी। तृतीया = 'तारतार'नाम्नी, सिद्धिः मननस्याऽध्ययनापेक्षया विशेषत-स्तारकत्वेन 'तारतारमि'ति कथयन्ति सांख्याचार्याः।

( ७ ) चतुर्थीं सिद्धिमाह—सुहृत्प्राप्तिरिति। न्यायेन = प्रतिज्ञादिपञ्चावयवैः। न श्रद्धत्ते = मया सुनिश्चितोऽर्थं एवमेव वर्तते इति न विश्वसिति अर्थात् प्रतिज्ञादि पञ्चवाक्यैरर्थपरीक्षणेऽपि न तावत्कालपर्यन्तं विश्वासो भवति यावत्कालपर्यन्तं ब्रह्मचारिभिः सह न सम्वाद्यते। न यावत् = न यावत्कालपर्यन्तम्। गुरुशिष्यसब्रह्म-चारिभिः = स्वकीयगुरोः, ये सन्ति शिष्याः = सहब्रह्मचारिणः = सतीर्थ्याः = सहाध्या-यिनः = सहपाठिनस्तैः सहेत्यर्थः, अर्थात् एकस्यैव स्वगुरोः शिष्याः सहब्रह्मचारि-सतीर्थ्यादिशब्दैरुच्यन्ते इति भावः। अतः = अस्मात्कारणात्। प्राप्तिः = कथायां संवाद-कत्वेन या उपस्थितिः। सुहृत्प्राप्तिः = सैव सुहृत्प्राप्तिः। रम्यकमिति। स्वीयसुहृद्भिः सह शास्त्रीयार्थनिर्णयस्यातिरमणीयार्थजनकत्वेन तादृशार्थविषयकनिश्चये श्रद्धाविद-धानेन रम्यकमित्युच्यते।

( ८ ) पञ्चमीं सिद्धिमाह—दानञ्चेति। दानशब्दार्थमाह—शुद्धिर्विवेकज्ञान-स्येति। सूत्रस्यैतादृशार्थविधाने सूत्रस्य प्रामाण्यमाह—सूत्रमाह-विवेकख्यातिरित्यादिः।

---

**'सुहृत्प्राप्ति' चतुर्थी सिद्धि**

( ७ ) 'स्वोत्प्रेक्षितं मननम्' इति। अर्थात् स्वोत्प्रेक्षित = स्वकृत अर्थात् स्वयं अपने द्वारा किया हुआ मनन भी अमनन रूप ही है, क्योंकि वह अपने सुहृदो अर्थात् सतीर्थ्यो द्वारा सम्मत नहीं है, अतः द्वितीय मनन को अर्थात् मनन के प्रकारान्तर को बतलाते हैं कि यह द्वितीय मनन ही 'सुहृत्प्राप्ति' है। प्रतिज्ञादि पञ्चावयववाक्यरूप न्याय के द्वारा स्वयं परीक्षित अर्थ में भी तब तक श्रद्धा = विश्वास नहीं होती है, जब तक अपने गुरुजी के शिष्य = सहब्रह्मचारी सतीर्थ्य = सहाध्यायियों के साथ परस्पर में मिलकर उस परीक्षित अर्थ के ऊपर संवाद के रूप में विचार नहीं कर लिया जाता है। अतः सुहृदों = संवाद करने वाले गुरुशिष्य सहब्रह्मचारियों की प्राप्ति 'सुहृ-त्प्राप्ति' नामक चतुर्थी सिद्धि है। इसे 'रम्यक' भी कहते हैं। अपने सतीर्थ्यों के साथ बैठकर शास्त्रीय अर्थविषयक संवाद अत्यन्त ही रमणीय होने के कारण इसे 'रम्यक' कहते हैं।

**'दान' पञ्चमी सिद्धि**

( ८ ) 'दानं च शुद्धिर्विवेकज्ञानस्य' इति। विवेकज्ञान की शुद्धि ही 'दान' है।

इत्यस्माद्धातोर्दानपदव्युत्पत्तेः। यथाह भगवान् पतञ्जलिः—'विवेकख्यातिरविप्लवा हानोपायः' इति ( योगसूत्रम् २।२६ )। 'अविप्लवः' शुद्धिः, सा च सवासनसंशयविपर्यासानां परिहारेण विवेकसाक्षात्कारस्य स्वच्छप्रवाहेऽवस्थापनम्। सा च न विना आदरनैरन्तर्यदीर्घकालसेविताभ्यासपरिपाकाद् भवतीति दानेन विवेकख्यात्या कार्येण सोऽपि सङ्गृहीतः। सेयं पञ्चमी सिद्धिः 'सदामुदितम्' उच्यते।

---

तदर्थश्च—हानोपाय इति। हानं=दुःखध्वंसः=मोक्षस्तस्य, उपायः=कारणम्=विवेकख्यातिः, अविप्लवा=विप्लवशून्या=सर्वथा विशुद्धा=मिथ्याज्ञानरहितेत्यर्थः, सा चेति=शुद्धिश्च। सवासनसंशयेत्यादिः। तत्तद्विषयकसंस्कारसहिता ये संशयविपर्यासास्तेषां, परिहारेण=संशयविपर्यासानां दग्धबीजभावस्याऽऽपादनेनेत्यर्थः। विवेकसाक्षात्कारस्य=सत्त्वपुरुषान्यताज्ञानस्य। स्वच्छप्रवाहे=मिथ्याज्ञानात्मके संशयविपर्ययसम्बन्धशून्ये प्रवाहे, अर्थात् विजातीयप्रत्ययान्तरसम्बन्धशून्यत्वे सति सजातीयप्रत्ययसन्तानात्मके प्रवाहे इत्यर्थः। सा च=विशुद्धा विवेकख्यातिश्च। आदरनैरन्तर्येत्यादि। अत्र सेवितपदस्य 'आदर' आदि त्रयेणान्वयो विधेयः, अर्थात् आदरेण सेवितः, नैरन्तर्येण सेवितः, दीर्घकालेन च सेवितः, योऽभ्यासः=स्वच्छप्रवाहात्मके मार्गे संस्थातुं योऽस्ति प्रयत्नविशेषः, तस्य यः परिपाकः=दार्ढ्यम्, तस्मादिति तु परमार्थः। विना=तादृशाऽभ्यासं विना। इत्थञ्चैवंविध अभ्यासस्य पराकाष्ठाऽस्तित्वं विना विवेकख्यातिर्न भवितुमर्हतीति भावः। इति=अतः। दानेन=कार्यस्वरूपविवेकख्यात्यपरपर्यायभूतदानाख्यसिद्ध्या। सोऽपीति। प्रागुक्तकारणीभूताऽभ्यासोऽपि। सङ्गृहीत इति। पञ्चमी या दानाख्या सिद्धिस्तस्यां सङ्गृहीत इत्यर्थः। अर्थात् कारणं योऽभ्यासः सोऽपि दानाख्यपञ्चम्यां सिद्धावन्तर्भवतीति भावः। इत्थञ्च कार्यकारणयोरौपचारिकमभेदं स्वीकृत्य 'दाना'ख्यसिद्ध्याऽभ्यासविवेकख्यात्योरुभयोरेव ग्रहणात् उभयमेव पञ्चमी

---

संशय, विपर्यय आदि ज्ञान के सम्बन्ध से शून्य होना ही विवेकज्ञान की शुद्धि है। शोधनार्थक 'दैप्' धातु से निष्पन्न होने के कारण 'दान' का प्रकृत में उपर्युक्त ही अर्थ है। भगवान् पतञ्जलि ने कहा भी है—

'विवेकख्यातिरविप्लवा हानोपायः'। ( यो० सू० २।२६ )

सूत्र-कथित 'अविप्लव' का अर्थ है—शुद्धि; और वह शुद्धि विषयों के संस्कारों के सहित जो संशय, विपरीत ज्ञान हैं, उनके परिहारपूर्वक विवेकज्ञान का जो स्वच्छ प्रवाह=निर्मल प्रवाह में अवस्थापन तद्रूप है; और इस प्रकार की शुद्धि आदर=गुरुवाक्यों में पूर्ण विश्वास तथा नैरन्तर्य के साथ बहुत दीर्घकालपर्यन्त अनुष्ठित जो प्रकृति और पुरुष के भेद चिन्तन के अभ्यास के परिपाक से होती है, इसलिए दान अर्थात् विवेकख्यातिरूप कार्य के साथ अभ्यास परिपाक भी संगृहीत है। इस पञ्चमी दानसिद्धि को 'सदामुदित' भी कहते हैं। 'सदामोद'=आनन्द को प्रदान करने के कारण 'सदामुदित' कहलाती है।

( ९ ) तिस्रश्च मुख्याः सिद्धयः प्रमोदमुदितमोदमाना इत्यष्टौ सिद्धयः।

( १० ) अन्ये व्याचक्षते—विनोपदेशादिना प्राग्भवीयाभ्यासवशात्तत्त्वस्य स्वयमूहनं यत् सा सिद्धिरूहः। यस्य साङ्ख्यशास्त्रपाठमन्यदीयमाकर्ण्य तत्त्वज्ञानमुत्पद्यते सा सिद्धिः शब्दः, शब्दपाठादनन्तरभावात्। यस्य शिष्याचार्यसम्बन्धेन साङ्ख्यशास्त्रं ग्रन्थतोऽर्थतश्चाधीत्य ज्ञानमुत्पद्यते साऽध्ययनहेतुका सिद्धिरध्ययनम्।

---

सिद्धिरिति तु निष्कर्षः। **सदामुदितमिति।** इयं पञ्चमी सिद्धिः सदा 'मुद'हर्षजनकत्वेन 'सदामुदिता' नाम्नी कथ्यते इति भावः।

( ९ ) **तिस्रश्चेति।** दुःखविघातरूपास्तिस्रः सिद्धयश्च। मुख्याः=परमपुरुषार्थमोक्षस्वरूपाः। विघातशब्दस्य प्रकृतेऽत्यन्ताभावरूपतया तस्य च दुःखेन सहाऽन्वयात्, आध्यात्मिकदुःखाभाव-आधिभौतिकदुःखाभाव-आधिदैविकदुःखाभावरूपास्तिस्रः सिद्धयो लभ्यन्ते। एतासां मोक्षस्वरूपत्वेन मुख्यत्वम्। तत्रापि क्रमश आनन्दप्रदानरूपत्वात् 'प्रमोद' इति नाम प्रथमायाः सिद्धेर्जायते, द्वितीयायाश्च मोदजनकत्वेन 'मुदित' इति, तृतीयायाश्चापि कथञ्चित् मोदजनकत्वेन 'मोदमान' इति संज्ञा जायते। इत्थञ्च पञ्च 'ऊहादि'सिद्धयः सन्ति, तिस्रश्चेमाः सिद्धयः, इत्येवं मिलित्वाऽष्टौ भवन्तीति परमार्थः।

( १० ) **अन्ये इति।** विनोपदेशादिना=उपदेशादिकं विनैव। प्राग्भवीयाभ्यासवशात्=जन्मजन्मान्तरीणज्ञानाभ्यासवशात्। तत्त्वस्य=जडचेतनतत्त्वसमूहस्य। यत्, स्वयम्=स्वतः। ऊहनम्=तर्कात्मकं ज्ञानम्। सा सिद्धिरूहः=सा ऊहाख्या सिद्धिः।

अन्यमतेन द्वितीयां सिद्धिमाह—यस्येत्यादिना। यस्य=पुरुषस्य। अन्यदीयम्=अन्यकर्तृकम्। सा सिद्धिः शब्दः=सा सांख्यशास्त्रपाठश्रवणलभ्या तत्त्वज्ञानस्वरूपा

---

## दुःखविघातरूप तीन मुख्य सिद्धियाँ

( ९ ) इसके पूर्व पाँच सिद्धियों का निरूपण हो चुका है। अब तीन सिद्धियाँ अवशिष्ट हैं, उन्हें बतलाते है—१. आध्यात्मिक दुःखविघात=आध्यात्मिक दुःखाभाव रूप यह छठी सिद्धि है। इसका दूसरा नाम 'प्रमोद' है। यह प्रकर्षेण मोद=आनन्दप्रद होने से 'प्रमोद' संज्ञक है। २. आधिभौतिक दुःखविघात=आधिभौतिक दुःखाभावरूप यह सातवी सिद्धि है। इसका दूसरा नाम 'मुदित' है। यह कदाचित् मोद का कारण होने से 'मुदित' संज्ञक है। ३. आधिदैविक दुःखविघात=आधिदैविक दुःखाभावरूप यह आठवीं सिद्धि है। इसका दूसरा नाम 'मोदमान' है। यह कथञ्चित् मोद का कारण होती है। अतः इसकी संज्ञा 'मोदमान' है। इस प्रकार ये आठ सिद्धियाँ हैं।

( १० ) 'अन्ये व्याचक्षते' इति। प्राचीन सांख्याचार्य सिद्धिग्रन्थ की व्याख्या इस प्रकार करते हैं कि विना किसी के उपदेशादि के पूर्वजन्मकृत ज्ञानाऽभ्यास के बल से जड़ एवं चेतनतत्त्व का जो स्वयम् ऊहन=तर्कन, वही 'ऊह' नामक सिद्धि है।

( ११ ) सुहृत्प्राप्तिरिति यस्याधिगततत्त्वं सुहृदं प्राप्य ज्ञानमुत्पद्यते सा ज्ञानलक्षणा सिद्धिस्तस्य सुहृत्प्राप्तिः। दानञ्च सिद्धिहेतुः, धनादिदानेनाऽऽराधितो ज्ञानी ज्ञानं प्रयच्छति। अस्य च युक्तायुक्तत्वे सूरिभिरेवावगन्तव्ये इति कृतं परदोषोद्भावनेन नः सिद्धान्तमात्रव्याख्यानप्रवृत्तानामिति।

---

'शब्द'नामिका सिद्धिः। शब्दपाठादनन्तरभावात्=पाठात्मकशब्दश्रवणानन्तरं जायमानत्वात्। तृतीयामध्ययनलक्षणात्मिकां सिद्धिमाह—**यस्य शिष्याचार्येति**। यस्य=शिष्यजनस्य। शिष्याचार्यसम्बन्धेन=गुरुशिष्यभावसम्बन्धेन। अग्रे सुस्पष्टमेव।

( ११ ) सुहृत्प्राप्तिलक्षणात्मिकां चतुर्थीं सिद्धिमाह—**सुहृत्प्राप्तिरिति**। यस्य=संयतयतेः=यतिराजस्य वा। अधिगततत्त्वम्—अधिगतानि=ज्ञातानि, तत्त्वानि=पञ्चविंशतिसंख्याकानि प्रकृत्यादीनि तत्त्वानि, येन स तम्=पञ्चविंशतिपदार्थतत्त्वज्ञानवन्तं यतिराजमित्यर्थः। ज्ञानलक्षणा=पदार्थतत्त्वज्ञानरूपा। पञ्चमीं दानलक्षणां सिद्धिमाह—**दानञ्चेति**। आराधितः=प्रसन्नीकृतः। ज्ञानी=ज्ञानवान्=पदार्थतत्त्वज्ञानवान्=विद्वानित्यर्थः। अस्य=अन्यमतेन कृतस्य व्याख्यानस्य। युक्तायुक्तत्वे—युक्तत्वम्='ऊहः शब्दोऽध्ययनम्' इत्यादिकारिकाऽर्थयाथार्थ्यवत्त्वम्, अयुक्तत्वम्=तादृशार्थविरुद्धत्वम्। सूरिभिरेव=सांख्यशास्त्रविद्वद्भिरेव। अवगन्तव्ये=ज्ञातव्ये। ( यतः ) **सिद्धान्तमात्रव्याख्यानप्रवृत्तानामिति**। सिद्धान्तमात्रस्य=सांख्यकारिकाकारेश्वरकृष्णाभिमते निश्चितार्थमात्रस्य, व्याख्यानात्मके कर्मणि प्रवृत्तानाम्। नः=अस्माकम्=तत्त्वकौमुदीटीका-

---

**'यस्य सांख्यशास्त्रम्'** इति। जिस व्यक्ति को दूसरों के द्वारा सांख्यशास्त्र के पाठ का श्रवण कर तत्त्वज्ञान उत्पन्न होता है, वह 'शब्द' नामक सिद्धि है, क्योंकि यह शब्दसिद्धि शब्दपाठ के पश्चात् ही होती है।

**'यस्य शिष्याचार्यसम्बन्धेन'** इति। अर्थात् जिस व्यक्ति को शिष्याचार्य सम्बन्ध=गुरुशिष्यभाव के सम्बन्ध के आधार पर सांख्यशास्त्र का ग्रन्थ से अर्थज्ञानपूर्वक अध्ययन कर सांख्यशास्त्र के २५ पदार्थ तत्त्वों का ज्ञान हो चुका है, वह ज्ञान ही अध्ययनहेतुक 'अध्ययन' नामक सिद्धि है।

( ११ ) 'सुहृत्प्राप्तिः' इति। तत्त्वज्ञान-प्राप्त सुहृदों के सम्बन्ध से जो ज्ञान प्राप्त होता है, वह ज्ञान ही 'सुहृत्प्राप्ति' नामक तत्त्वज्ञानरूप सिद्धि कहलाती है।

'दानञ्च सिद्धिहेतुः' इति। दान भी सिद्धि का कारण है, क्योंकि धनादि दान के द्वारा आराधित=सम्मानित प्रसन्नीकृत व्यक्ति ज्ञान प्रदान करता है। अतः यह ज्ञानात्मिका 'दानसिद्धि' कहलाती है।

**'अस्य युक्तायुक्तत्वे'** इति। इस अन्यकृत सिद्धि-व्याख्यान के युक्तत्व और अयुक्तत्व को अर्थात् औचित्य तथा अनौचित्य को विद्वान् लोग ही समझ सकते हैं। सिद्धान्त मात्र के व्याख्यान करने में प्रवृत्त हुए हमें=वाचस्पति मिश्र को दूसरे के दोषोद्भावन से क्या लाभ है, अर्थात् वह परदोषोद्भावन सर्वथा व्यर्थ है।

( १२ ) सिद्धितुष्टिविपर्ययेणाऽशक्तिर्बुद्धिवधस्सप्तदशधा द्रष्टव्यः। अत्र प्रत्ययसर्गे सिद्धिरुपादेयेति प्रसिद्धमेव। तन्निवारणहेतवस्तु विपर्ययाशक्तितुष्टयो हेया इत्याह—'सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः' इति।

( १३ ) 'पूर्वः' इति विपर्ययाशक्तितुष्टीः परामृशति। ताः सिद्धिकरिणीनामङ्कुशो निवारकत्वात्। अतः सिद्धिपरिपन्थित्वात् विपर्ययाशक्तितुष्टयो हेया इत्यर्थः॥ ५१॥

---

कार-श्रीवाचस्पतिमिश्राणाम्। परदोषोद्भावनेन—परस्य=रूपान्तरेण व्याख्याकारस्य, अर्थात् 'ऊहः शब्दोऽध्ययनम्' इत्यादिकारिकाया अन्यथारूपेण व्याख्याकारस्याऽन्यव्यक्तेर्विदुषः, दोषाणाम्=मतिमान्द्यादिदोषाणाम्, उद्भावनेन=प्रकाशनेन। कृतम्=व्यर्थम्।

( १२ ) इदानीं 'सप्तदशवधा बुद्धेर्विपर्ययात्तुष्टिसिद्धीनाम्' इति यदुक्तं पूर्वं तदेव पुष्टीकरणाय स्मारयति—सिद्धितुष्टिविपर्ययेणेति। अष्टसंख्याका याः प्रागुक्ताः सिद्धयः नवसंख्याकाश्च तुष्टयस्तासां विपर्ययेण वधेनेत्यर्थः। अशक्तिः=अशक्तिनामकः।

इदानीं विपर्ययाऽशक्तितुष्टिसिद्धिषु कासामुपादेयत्वं, केषाञ्चाऽनुपादेयत्वमित्याह—अत्र प्रत्ययसर्गे इति। अत्र=अस्मिन्=विपर्यय-अशक्ति-तुष्टि-सिद्धिरूपेण चतुर्धा विभक्ते। प्रत्ययसर्गे=प्रागुक्ते बुद्धिसर्गे। प्रसिद्धमेव=सर्वशास्त्रेषु, सर्वलोकाना हृदयेषु च विदितमेव।

इदानीमष्टविधसिद्धिनामुपादेयत्वं निरुच्य तत्प्रतिबन्धकीभूतानां हेयत्वमप्याह—तन्निवारणहेतवस्त्वित्यादिना। तासामष्टविधसिद्धीनां, निवारणहेतवः=प्रतिबन्धकीभूतानि कारणानि। कानि तानीत्याशङ्कायामाह—विपर्ययेति। अर्थाद् द्वाषष्टिप्रकारो विपर्ययः, अष्टाविंशतिप्रकाराश्चाऽशक्तयः, नवविधाश्च तुष्टयस्ते सर्वेऽपि हेया इत्याह—'सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः' इति।

( १३ ) कौमुद्याम्—पूर्व इति='सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः' एतद्घटकीभूतं 'पूर्व' इति पदम्। विपर्ययाशक्तितुष्टीः परामृशति=विपर्ययाशक्तितुष्ट्याख्यं त्रिविधं कथयतीति-

---

( १२ ) सिद्धितुष्टिविपर्ययेण' इति। आठ प्रकार की सिद्धि और नवधा तुष्टि के विपर्यय से अशक्ति अर्थात् बुद्धिवध १७ प्रकार का होता है, ऐसा जानना चाहिए।

'अत्र प्रत्ययसर्गे' इति। अर्थात् इस प्रत्यय=बुद्धि सर्ग=सृष्टि मे सिद्धि सर्वथा उपादेय है, यह सर्वत्र प्रसिद्ध है और सिद्धि के निवारण=विघातक जो हेतु=विपर्यय, अशक्ति, तुष्टि हैं वे हेय हैं अर्थात् वे त्याज्य हैं; यही कहा भी है—'प्रसिद्धे पूर्वोऽङ्कुशस्त्रिविधः' इति। अर्थात् सिद्धि के पूर्व मे जो तीन विपर्यय, अशक्ति, तुष्टि हैं, वे सिद्धि के सर्वथा अङ्कुश=विरोधी हैं।

( १३ ) 'पूर्व इति' इति। 'सिद्धेः पूर्वोऽङ्कुशः' यह 'पूर्व' शब्द विपर्यय, अशक्ति,

( १ ) स्यादेतत्—पुरुषार्थप्रयुक्ता सृष्टिः, स च पुरुषार्थः प्रत्ययसर्गाद्वा तन्मात्रसर्गाद्वा सिध्यतीति कृतमुभयसर्गेणेत्यत आह—

**न विना भावैर्लिङ्गं न विना लिङ्गेन भावनिर्वृत्तिः ।**
**लिङ्गाख्यो भावाख्यस्तस्माद् द्विविधः प्रवर्तते सर्गः ॥५२॥**

---

त्यर्थः । ताः = विपर्ययाशक्तितुष्टयस्त्रिविधाः । सिद्धिकरिणीनाम्—सिद्धय एव सन्ति, करिण्यः = हस्तिन्यः, इव, तासाम् । अङ्कुशः = अङ्कुशवदेव रोधिकाः ।

तत्र विपर्ययाशक्तितुष्टीनामङ्कुशत्वे कारणमाह—**निवारकत्वादिति** । प्रतिवन्धकत्वादित्यर्थः । अतः = एवञ्च । सिद्धिपरिपन्थित्वात् = सिद्धिविरोधित्वात् । हेयाः = मुमुक्षुभिस्ते विपर्ययाशक्तितुष्टयस्त्याज्या इत्यर्थः ॥ ५१ ॥

( १ ) द्विपञ्चाशत्तमां ( ५२ ) कारिकामवतारार्थमाह—**स्यादेतदिति** । पुरुषार्थप्रयुक्ता = पुरुषस्याऽर्थः पुरुषार्थः, स च भोगापवर्गरूपस्तेन गुणत्रयसाहाय्यमाश्रित्य सञ्चालितेत्यर्थः । सृष्टिः = सर्गः । **प्रत्ययसर्गादिति** । प्रतीयन्तेऽर्थाः = विषया अनेनेति प्रत्ययो = बुद्धिस्तस्य सर्गस्तस्मात् = भावसर्गात्, विपर्ययाऽशक्तितुष्टिसिद्धिभेदद्वारा सङ्क्षेपेण कथितात्, धर्माऽधर्माद्यष्टविधभावपदार्थोपलक्षितबुद्धिसर्गादित्यर्थः । तन्मात्रसर्गाद्वा, अत एकेनैव सर्गेण पुरुषस्य भोगापवर्गरूपोऽर्थः सेत्स्यतीति किमुभयसर्गेणेत्यत आह—'**न विना भावैर्लिङ्गम्**' इति ।

**अन्वयः**—भावैः विना लिङ्गं न ( भवति ), लिङ्गेन विना न भावनिर्वृत्तिः, तस्माद् भावाख्यः लिङ्गाख्यः द्विविधः सर्गः प्रवर्तते ।

---

तुष्टि, इन तीनों का परामर्शक है । ये तीनों सिद्धिरूपी करिणी = हस्तिनी के निवारक होने के कारण अङ्कुश कहलाते हैं । अतः सिद्धि के परिपन्थी=विरोधी होने के कारण विपर्यय, अशक्ति, तुष्टि इन तीनों को मुमुक्षु लोगों ने हेय वतलाया है ॥५१॥

( १ ) '**स्यादेतत्**' इति । पूर्व कथन ठीक है, किन्तु यह सृष्टि भोग तथा अपवर्ग रूप पुरुषार्थ प्रयुक्त है । और वह पुरुषार्थ प्रत्यय = बुद्धि एवं सर्ग = सृष्टि से अथवा तन्मात्रसृष्टि से सिद्ध है तो फिर क्या आवश्यकता है उभय सर्ग की, अर्थात् धर्मादि अष्टभावाख्य सृष्टि की तथा तन्मात्रजन्य शब्दादि से अन्वित स्थूल, सूक्ष्म शरीरात्मक लिङ्गसृष्टि की ? अतः पुरुषार्थसिद्धि के लिए एक ही सर्ग आवश्यक है, फिर क्या आवश्यकता है उभय सर्ग की ? फिर बुद्धि ने दो प्रकार की सृष्टि क्यों की ? इसका उत्तर '**न विना भावैर्लिङ्गम्**' इत्यादि कारिका से देते हैं ।

**कारिकार्थ**—धर्म-अधर्म, ज्ञान-अज्ञान, वैराग्य-अवैराग्य तथा ऐश्वर्य-अनैश्वर्य, इन आठ भावों के विना लिङ्गशरीर उत्पन्न नहीं हो सकता है । और तन्मात्राओं से समुत्पन्न लिङ्गशरीर के विना धर्माधर्म आदि भावों की उत्पत्ति नहीं हो सकती है । अतः प्रत्येक के विना दोनों का स्वरूप सर्वथा असम्भव है, इसलिए लिङ्गाख्य एवं भावाख्य, दोनों प्रकार की सृष्टि आवश्यक है ।

( २ ) 'न विना' इति। 'लिङ्गम्' इति तन्मात्रसर्गमुपलक्षयति—'भावैः' इति च प्रत्ययसर्गम्।

( ३ ) एतदुक्तं भवति—तन्मात्रसर्गस्य पुरुषार्थसाधनत्वं स्वरूपञ्च न प्रत्ययसर्गाद्विना भवति। एवं प्रत्ययसर्गस्य स्वरूपं पुरुषार्थसाधनत्वञ्च न तन्मात्रसर्गादृते, इत्युभयथा सर्गप्रवृत्तिः। भोगः पुरुषार्थो न भोग्यान् शब्दादीन् भोगायतनं शरीरद्वयञ्चाऽन्तरेण सम्भवतीत्युपपन्नस्तन्मात्रसर्गः।

---

( २ ) लिङ्गम्='लिङ्गम्' इति पदम्। तन्मात्रसर्गम्=तन्मात्रस्वरूपाया सृष्टिस्तादृशसृष्टिरूपमर्थम्। उपलक्षयति=लक्षणया बोधयति। ( यद्यपि लिङ्गपदस्य वाच्योऽर्थः सूक्ष्मशरीररूपोऽर्थ एव, तथापि प्रकृते लिङ्गपदस्य लक्ष्यीभूतोऽर्थो यस्तन्मात्रसर्गः स एव गृह्यते, तस्य च ग्रहणं लक्षणया भवतीति भावः। 'भावैः' इति च=कारिकास्थं 'भावैः' इति पदञ्च। प्रत्ययसर्गम्=बुद्धिसर्गरूपमर्थम्। उपलक्षयति= लक्षणया बोधयति। )

( ३ ) परस्परं तन्मात्रसर्ग-प्रत्ययसर्गयोर्द्वयोरावश्यकतां ब्रूते—एतदुक्तं भवतीत्यादिना। एतत्=तन्मात्रसर्ग-प्रत्ययसर्गयोरावश्यकत्वम्। उक्तं भवति=ब्रूते=कथयति। तन्मात्रसर्गस्य=शब्दस्पर्शादेः, स्थूलसूक्ष्मशरीरयोश्च। पुरुषार्थसाधनत्वम्=भोग्यत्वम्, भोगाधिकरणत्वञ्च। स्वरूपम्=स्वरूपनिष्पत्तिः। न प्रत्ययसर्गाद् विना भवति= प्रत्ययस्य=बुद्धेः, सर्गः=धर्मादिकं कारणीभूतं बुद्धिश्च स्वयं करणस्वरूपा, तस्माद्, प्रत्ययसर्गाद्विना नहि निष्पन्नो भवितुमर्हतीति, नापि च भवति। यतो बुद्धिस्वरूपकारणं विना शब्दस्पर्शादिषु कथं भोग्यताऽऽयास्यति, धर्मादिस्वरूपकारणं विना च शब्दादीनां तथा देहेन्द्रियादीनां स्वरूपस्य निष्पत्तिरेव नहि कालत्रयेऽपि भवितुमर्हति, यतः कारणाभावे कार्याभावात्, अन्यथा कारणाभावेऽपि यदि कारणं स्यात्तदा व्यतिरेकव्यभिचारः स्यात्। एवम्=तथैव। प्रत्ययसर्गस्य=धर्माधर्मादीनाम्, बुद्धेश्च, क्रमशः स्वरूपम्= स्वरूपोत्पत्तिः। पुरुषार्थसाधनत्वञ्च=भोगात्मकपुरुषार्थसाधनत्वञ्च। तन्मात्र-

---

( २ ) 'न विना इति' इति। 'लिङ्ग' का लाक्षणिक अर्थ बतलाते हैं—तन्मात्रसर्गमिति। अतः लिङ्गपद का लक्षणा से 'तन्मात्रसर्ग' अर्थ करना चाहिए और भाव पद का लक्षणया 'प्रत्ययसर्ग' अर्थ करना चाहिए। 'उपलक्षयति' का प्रकृत मे अर्थ है—'लक्षणया कथयति'।

( ३ ) 'एतदुक्तम्भवति' इति। एतत्=तन्मात्रसर्ग और प्रत्ययसर्ग इन दोनो की आवश्यकता उक्तं भवति=उच्यते स्पष्ट करते है कि—'तन्मात्रसर्गस्य' अर्थात् प्रत्ययसर्ग के बिना तन्मात्रसर्ग न तो भोगरूप पुरुषार्थ का साधन ही हो सकता है और न उसका स्वरूप ही सिद्ध हो सकता है।

'एवं प्रत्ययसर्गस्य' इति। इसी प्रकार तन्मात्रसर्ग के बिना प्रत्ययसर्ग की न तो भोगात्मक पुरुषार्थसाधनता ही बन सकती है, और न स्वरूपोत्पत्ति ही हो सकती है। इसलिए एक-दूसरे के बिना न तो एक-दूसरे के स्वरूप की सिद्धि हो सकती है,

( ४ ) एवं स एव भोगो भोगसाधनानीन्द्रियाण्यन्तःकरणानि चाऽन्तरेण न सम्भवति। न च तानि धर्मादीन् भावान् विना सम्भवन्ति। न चाऽपवर्गहेतुर्विवेकख्यातिरुभयसर्गं विना, इत्युपपन्न उभयविधः सर्गः।

---

सर्गादृते=शब्दादिक विना, स्थूलसूक्ष्मशरीरञ्च विना। न=नहि, भवितुमर्हतीति भावः। अर्थात् शब्दादिविषयं विना, शरीरेन्द्रियादिकञ्च विना धर्माधर्मादयोऽपि नोत्पत्तुमर्हन्ति। एवं बुद्धेर्भोगसाधनत्वमपि नैव भवितुमर्हति। इति=इत्येवम्प्रकारेण, परस्परसहयोगं विनाऽन्योन्यस्वरूपसिद्धिर्नैव भवितुं प्रभवति इत्यतः, उभयथा=तन्मात्रसर्गस्य ( लिङ्गसर्गस्य ), प्रत्ययसर्गस्य ( भावसर्गस्य ) च द्वयोर्नितान्तमावश्यकता वर्तते। सर्गप्रवृत्तिः=सृष्टेऽस्तित्वं प्रवर्तते। तदेव सुस्पष्टयति—'भोगः पुरुषस्यार्थो न' इत्यादिना। भोगः=सुखदुःखान्यतरसाक्षात्काररूपः। पुरुषार्थः=तादृशसाक्षात्काररूपः पुरुषार्थः। न=नहि। भोग्यान्=भोगविषयीभूतान्, शब्दादीन्। ( विना )। भोगायतनम्=भोगस्य आयतनमिति व्युत्पत्त्या भोगाधिकरणीभूतञ्च स्थूलसूक्ष्मशरीरम्। अन्तरेण=विना। सम्भवति। इति=अतः। उपपन्नः=सिद्धः। तन्मात्रसर्गः=तन्मात्रात्मिका सृष्टिः। इत्थञ्च प्रत्ययसर्गवत् अयमपि तन्मात्रसर्गो नितान्तमावश्यकः।

( ४ ) एवम्=तथैव। स एव भोगः साधनत्वेनेन्द्रियान्तःकरणसापेक्षः, अतो भोगः करणान्यपि साधयति। **न च तानीति**। तानि=करणानि। धर्मादिभावान् विना न सम्भवन्ति। इत्थञ्च भोगस्वरूपपुरुषार्थात्मकहेतुना भोगविषयान्, भोगाधिकरणानि, भोगसाधनानि च साधयित्वाऽधुनाऽपवर्गस्वरूपेण पुरुषार्थात्मकेन हेतुना सर्गद्वयं साधयति—**न चापवर्गहेतुरि**त्यादिना। अपवर्गः=आत्यन्तिकदुःखनिवृत्तिरूपो मोक्षः,

---

और न पुरुषार्थसाधनता निष्पन्न होती है। अतः तन्मात्रसर्ग=लिङ्गाख्य सृष्टि तथा प्रत्ययसर्ग=भावाख्यसर्ग दोनों नितान्त आवश्यक हैं। कारण कि उभयविध सृष्टि के विना भोग कदापि सम्भव नहीं है। वही वाचस्पतिमिश्र ने कहा है—'**भोगः पुरुषार्थो न**' इत्यादि। अर्थात् भोगात्मक पुरुषार्थ-भोग्य जो शब्दादि विषय तथा भोगायतन जो शरीरद्वय=स्थूलसूक्ष्मशरीरद्वय, उनके विना कदापि सम्भव नहीं है, अतः तन्मात्रसर्ग सर्वथा उपपन्न=उपपत्तिसिद्ध है।

( ४ ) '**एवं स एव भोगः**' इति। अर्थात् जो भोग भोग्य जो शब्दादि विषय हैं, उनके विना सम्भव नहीं है, वही भोग भोगसाधन इन्द्रियों के विना सम्भव नहीं है, तथा भोगसाधन अन्तःकरणों के विना भी सम्भव नहीं है।

'**न च तानि धर्मादिभिर्भावैर्विना**' इति। और वे भोगसाधन इन्द्रियाँ तथा अन्तःकरण धर्माधर्म आदि भावों के विना सम्भव नहीं है, क्योंकि इन्द्रियाँ और अन्तःकरण सुखदुःखभोग का साधन होने से धर्माऽधर्मरूप कारणसापेक्ष हैं। इसलिये उभयविध पूर्वोक्त सर्ग सर्वथा आवश्यक है।

'**न चाऽपवर्गहेतुः**' इति। और अपवर्ग=कैवल्यरूप जो पुरुषार्थ, उसकी कारणीभूत जो विवेकख्याति=विवेकज्ञान, वह उभयसर्ग से अर्थात् प्रत्ययसर्ग तथा तन्मात्रसर्ग

( ५ ) अनादित्वाच्च वीजाङ्कुरवन्नान्योन्याश्रयदोषमावहति। कल्पादावपि प्राचीनकल्पोत्पन्नभावलिङ्गसंस्कारवशाद्भावलिङ्गयोरुत्पत्तिर्नानुपपन्नेति सर्वमवदातम् ॥ ५२ ॥

---

तस्य हेतुः=कारणम्, विवेकख्यातिः=प्रकृतिपुरुषयोर्भेदज्ञानम्, आत्मा ( पुरुषः ) प्रकृत्यादिभ्यो भिन्न इत्याकारकम्। सा विवेकख्यातिः परम्परया, उभयसर्गम्=तन्मात्रसर्गं विना ( एवं ) भावसर्गं विना। न च सम्भवतीति योजनीयम्। इत्युपपन्नः=इत्येवंरूपेण निष्पन्नो भवति।

( ५ ) अन्योन्यापेक्षातः परस्पराश्रयदोषोऽपि नाशङ्कनीय इत्यत आह— **अनादित्वाच्चेति**। 'प्रवाहो नादिमानेषः' इत्यभियुक्तोक्त्या—सृष्टेः प्रवाहस्याऽनादित्वादित्यर्थः। **बीजाङ्कुरवदिति**। पूर्वं बीजस्योत्पत्तिः अङ्कुरस्य वेति संशये नान्योन्याश्रयो दोषः, अपि तु प्रामाणिक एवेति भावः।

ननु कल्पप्रारम्भकाले कस्यापि जन्यपदार्थस्याऽभावेन शरीरादीनां भावभूतपदार्थानाञ्चाप्यभावात् कथं खलु उभयविधः सर्गो भवितुमर्हतीत्याशङ्कायामाह— **कल्पादावपीति**। कल्पः=ब्रह्मणो दिवसः, तस्य आदौ=प्रारम्भे=सर्गप्रारम्भे इत्यर्थः। **प्राचीनकल्पोत्पन्नभावलिङ्गसंस्कारवशादिति**। अर्थात् प्राचीनकल्पे=ब्रह्मणो दिवसात्मककल्पतः पूर्वकालीने कल्पे, उत्पन्नाः ये भावभूता धर्मादयः, एवं तदनुमापकस्य शरीरद्वयस्य परस्परं सम्बन्धकर्तारो ये सन्ति चिरकालपर्यन्तं सन्तिष्ठमाना बुद्धिस्थाः संस्कारास्तादृशसंस्काररूपकारणवशादेव सृष्टेः प्रारम्भकाले भावानां तदनुमापकशरीरादीनाञ्चोत्पत्तिर्भवतीति सिद्ध्यति। तथैव पुनः प्राचीनकल्पादावपि ततः प्राचीनतरकल्प-

---

रूप उभयविध सर्ग के विना कदापि उपपन्न=उपपत्ति-सिद्ध नहीं हो सकता है और न हो सकेगा। अतः उभयविध सर्ग सर्वथा उपपन्न है।

( ५ ) **'अनादित्वाच्च वीजाङ्कुरवत्'** इति। वीजांकुर के समान यह सृष्टि-प्रवाह=संसार-प्रवाह अनादि है, बुद्धि भी अनादि और उसका संयोग भी अनादि है, इसीलिए संसार-प्रवाह भी अनादि है। अनादि होने के कारण यह प्रत्ययसर्ग तथा तन्मात्रसर्ग भी वीजांकुर के समान अनादि है, अर्थात् वीज से अंकुर अथवा अंकुर से वीज, धर्मादि भावों से शरीरादि अथवा शरीरादि से धर्मादिभाव, यह निश्चय न होने पर भी अन्योन्याश्रय दोष नहीं है, क्योंकि अनादित्वात्।

प्रश्न—कल्प के आदि=प्रारम्भ=सृष्टि के प्रारम्भ में न तो धर्मादिभाव का ही अस्तित्व है और न शरीरादि का; तब फिर कैसे दोनों की परस्पर सापेक्षता बताई?

**'कल्पादावपि'** इति। अर्थात् ब्रह्मा के एक दिन रूपी कल्प के प्रारम्भ में अर्थात् सृष्टि के प्रारम्भ में उसके पूर्वकालीन कल्प में उत्पन्न जो धर्मादि भाव तथा लिङ्ग शरीर उनके परस्पर के सम्बन्ध के आधारभूत जो बुद्धिस्थ चिरस्थायी संस्कार हैं उनके आधार पर इस सर्ग में भी भावों की तथा लिङ्गशरीर की उत्पत्ति सर्वथा सम्भव है, यह अनुपपन्न नहीं है, यह सब कथन निर्दोष है ॥ ५२ ॥

( १ ) विभक्तः प्रत्ययसर्गः । भूतादिसर्गं विभजते—

**अष्टविकल्पो दैवस्तैर्यग्योनश्च पञ्चधा भवति ।**
**मानुषकश्चैकविधः समासतो भौतिकः सर्गः ॥ ५३ ॥**

( २ ) 'अष्टविकल्प' इति । ब्राह्मः, प्राजापत्यः, ऐन्द्रः, पैत्रः, गान्धर्वः, याक्षः, राक्षसः, पैशाचः इत्यष्टविधो 'दैवः' सर्गः ।

---

समुत्पन्नभावलिङ्गवासनारूपकारणवशादेव सृष्टिः । एवं पौनःपुन्येन तत्पूर्वं तत्पूर्वं सृष्टेरविच्छिन्नरूपेण जायमानत्वेन प्रवाहस्यानादित्वं सिद्ध्यति । इत्थञ्च परस्परसापेक्षसृष्टिद्वयस्य प्रागुक्तस्योत्पत्तिः सर्वथाऽक्षुण्णेति सृष्टेरव्याहतत्वमायाति । सर्वमवदातम् = सर्वं सुस्पष्टमेव ॥ ५२ ॥

( १ ) 'अष्टविकल्पः' इत्यादिकारिकामवतारार्थमाह—**विभक्तः प्रत्ययसर्ग** इति । प्रत्ययसर्गः = बुद्धिसर्गः, अर्थाद् बुद्धेर्धर्माधर्मादयः प्रागुक्ता अष्टविधपरिणामभूताः ये च विपर्यय-अशक्ति-तुष्टि-सिद्धिरूपेण परिणता भवन्ति, ये च भावसर्गेण कथ्यन्ते तेषां सर्वेषामेव अवान्तरभेदेनापि विभागो निरूपितः । इदानीं भूतादिसर्गम् = तन्मात्रजन्यं चैतन्यावच्छिन्नं स्थूलभूतसर्गं विभजते—'अष्टविकल्पो दैवः' इत्यादिना ।

अन्वयः—दैवः अष्टविधः भवति, तैर्यग्योनश्च पञ्चधा भवति, मानुषकश्च एकविधो भवति, ( अयमस्ति ) समासतः भौतिकः सर्गः ।

( २ ) देवानामयं दैवः देवसर्गः, देवतानां सृष्टिरित्यर्थः । अष्टविकल्पः = तत्त्वकौमुद्यां दर्शिता ब्राह्मप्राजापत्यादिभेदेन अष्टौ विकल्पाः ।

१. ब्राह्मः = ब्रह्मलोकवासी, तत्र अष्टधा विकल्पितेषु सर्गेषु प्रथमः सर्गो ब्राह्मः सर्गः । अयञ्च सर्गो ब्रह्मणः सत्यतपोजननामकेषु लोकेषु सम्प्रवर्तते । तत्र सत्यलोकः सर्वलोकोपरि वर्तते सन्तिष्ठमानः । तत्र गताः खल्वात्मानस्ततो न पुनरावर्तन्ते । तत्र प्रणवाद्युपासकाः परमहंसाः परोक्षविद्वांसो यावत्सर्गायुषोऽच्युताः सन्तः शुद्धनिवासा एव निवसन्ति । एवं सत्यलोकतोऽधस्तात् तपोलोको वर्तते । तत्राऽहङ्कारवशिनस्त्रिविधा

---

( १ ) 'विभक्त' इति । प्रत्ययसर्ग = बुद्धिसृष्टि का विभाजन बतलाकर अब तन्मात्र जन्य भूतादि सृष्टि को विभागपूर्वक बतलाते हैं—'अष्टविकल्पः' इत्यादि कारिका से ।

कारिकार्थ—दैवः = देवसृष्टि अष्टविकल्पः = आठ प्रकार की है और तिर्यक् = पक्षि योनि-सम्बन्धी सृष्टि पाँच प्रकार की है और मानुष = मनुष्य सम्बन्धी सृष्टि एक प्रकार की है । यही समास = संक्षेप से भौतिक सृष्टि है ।

( २ ) 'अष्टविकल्पः' इति । ब्राह्म, प्राजापत्य, ऐन्द्र, पैत्र, गान्धर्व, याक्ष, राक्षस तथा पैशाच, यह अष्टविध दैवसृष्टि है ।

ब्राह्म इति । ब्रह्मा के सत्यलोक, जनलोक तथा तपलोक ये जो तीन लोक हैं, इन लोकों में जो सृष्टि वही ब्राह्म सर्ग = सृष्टि है ।

देवनिकायाः सन्ति सन्तिष्ठमानाः । ते च अभास्वराः, महाभास्वराः, सत्यमहाभास्वरा इति । एवं तपोलोकतोऽधस्तादस्ति जनलोकः । तत्र भूतेन्द्रियवशिनो, ब्रह्मपुरोहिताः, ब्रह्मकायिकाः, ब्रह्ममहाकायिकाः, अमराः इतीमे चतुर्विधा द्विगुण-द्विगुणोत्तरोत्तरायुषो निवसन्ति ।

२. प्राजापत्यः =प्रजापतयो दक्षादयस्तदीयः सर्गः प्राजापत्यः, प्रजापतिलोकवासीत्यर्थः । अयञ्च प्रजापतिलोकः महर्लोकः, तत्र प्रजापतिसम्बन्धिनो देवसमूहाः, कुमुदाः, ऋभवाः, प्रतर्दनाः, अजनाभाः, अमिताभाः, इतीमे पञ्चविधाः कल्पसहस्रायुषो निवसन्ति ।

३. ऐन्द्रः =अयञ्च ऐन्द्रः सर्गं इन्द्रस्य स्वर्गलोके प्रसिद्धः, स्वर्लोकवासी ऐन्द्रः । अयञ्च स्वर्लोकः माहेन्द्रापरपर्यायभूतः भुवर्लोकस्योपरि महर्लोकस्य चाऽधस्तादस्ति । तस्मिश्च लोके देवनिकायास्त्रिदशा निवसन्ति । ते च सर्वेऽपि सङ्कल्पसिद्धाः, अणिमाद्यैश्वर्योपपन्नाः स्वेच्छोपात्तविग्रहाः कल्पायुषः कामलम्पटाश्च निवसन्ति ।

४. पैत्रः =पितृलोके जायमानः सर्गः पैत्रः । अर्यमादिपितॄणां लोके यः सर्गं स पैत्रः सर्गं इत्यर्थः । 'सोमाधाराश्च पितरः' इति वचनानुसारं खल्वयमेव पैत्रलोकश्चन्द्रलोकोऽपि कथ्यते शास्त्रविद्भिः ।

५. गान्धर्वः =मेरुपर्वतस्य पृष्ठभागे दिवि च गन्धर्वाः निवसन्तीति गान्धर्वसर्गः । अर्थात् 'मेरोः पृष्ठे गन्धर्वाः वसन्ति' इत्युक्त्यनुसारं मेरुपृष्ठभागस्थितगन्धर्वलोके योऽस्ति जायमानः सर्गः स एव गान्धर्वसर्गः । अस्य च मेरोः पृष्ठभागपर्यन्तमस्ति जम्बूप्लक्षशाल्मलिकुशक्रौञ्चशाकपुष्कराख्यैः सप्तद्वीपैर्युक्तो भूर्लोकः । अस्यैव च मेरोः पर्वतस्य दक्षिणदिशि निषधहेमकूटहिमशैलास्त्रयः पर्वताः सन्ति । तत्र निषधनामके पर्वते सर्पनागगन्धर्वप्रभृतयो जीवाः सशरीराः निवसन्ति । तत्रैव च गन्धर्वलोकः, तस्मिन् यश्चास्ति सर्ग. स एव गान्धर्वसर्गः ।

६. याक्षः =वरुणलोके योऽस्ति यक्षःसम्बन्धी सर्गः स एव कथ्यते याक्षसर्ग इति । तत्र गन्धमादने पर्वते सानुगः खलु यक्षराजः कुबेरो निवसति । स चाऽनुदिनं सुरलल-

---

'प्राजापत्य' इति । दक्ष आदि जो प्रजापति हैं, उनके महर्लोक में होने वाली जो सृष्टि, वह प्राजापत्य सृष्टि है ।

'ऐन्द्र' इति । इन्द्र =देवराज का लोक स्वर्गलोक है, उसमें होने वाली सृष्टि = सर्ग 'ऐन्द्र' सर्ग है ।

'पैत्र' इति । अर्यमादि पितृलोगों के लोक में होने वाली सृष्टि को पैत्र सर्ग कहते हैं । यही चन्द्रलोक भी कहा जाता है ।

'गान्धर्व' इति । सुमेरु पर्वत के पृष्ठ भाग में गन्धर्व लोग रहते हैं, इससे स्पष्ट है कि मेरु के पृष्ठ भाग में गन्धर्वों की लोक सृष्टि है । अतः वही गान्धर्व सर्ग है ।

'याक्ष' इति । वरुणलोक में होने वाली सृष्टि को याक्ष सर्ग कहते हैं । इसमें यक्ष लोगों का ही निवास रहता है ।

( ३ ) 'तैर्यग्योनश्च पञ्चधा भवति', पशुमृगपक्षिसरीसृपस्थावराः इति ।

नाभिः सह नृत्यगानादिना प्रतिदिनं स्वीयं समयं सानन्दं गमयति, आनन्दविषयिणीञ्चाऽनुभूतिं सर्वदा विधत्ते ।

७. राक्षसः = 'अतल'नामकमधोलोकमारभ्य पाताललोकपर्यन्तं जायमानो योऽस्ति सर्गः स एव राक्षससर्गः । इमे चाऽतलादिपातालान्तलोका भूमेरधस्तात् सन्ति सन्तिष्ठमाना विविधदुःखमयाः इति श्रूयते । अत्रैव च दैत्यदानवनिवातकवचप्रभृतयो वसन्ति । तक्षकप्रभृतयोऽप्यत्रैव निवसन्ति, एवं मयो मायावी तदनुगाश्चाप्यत्रैव तिष्ठन्ति ।

८. पैशाचः = एतेष्वेव लोकेषु उपर्युक्तेषु जायमानः सर्गः पैशाचः सर्गः । अत्र पिशाचाद्यवच्छिन्ना जीवात्मानः श्राद्धतर्पणाद्यभावे महदेव दुःखं समनुभवन्ति, एवं नानाविधयातनाभिर्यात्यमाना हाहेति रुदन्तो निवसन्ति ।

**पञ्चविधस्तिर्यग्योनिसर्गः**

( ३ ) तैर्यग्योनस्य सर्गस्य पञ्चविधत्वं दर्शयति—पशुमृगेति । पशवः = लोमलाङ्गूलवन्तः = गवाश्वादयः, ग्रामनगरादिषु निवासशालिनः । 'लोमादिमान् पशुपदाद् बोद्धव्यः' इति गदाधरोक्तेः पशुपदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यता लोमलाङ्गूलवत्त्वेव प्रमीयते । अन्येषां मृगाणामपि तथात्वेन तत्रातिव्याप्तिवारणाय गाम्येति विशेषणं तत्र देयम्, मृगादिरूपपशूनामारण्यकत्वेन न पञ्चविधत्वानुपपत्तिः । मृगाः = आरण्यकाः पशवश्चतुष्पदा हरिणप्रभृतयः । पक्षिणः = काकपिकप्रभृतयः पक्षवन्तो जीवाः । सरीसृपाः—हृदयादिना सरन्तः सन्तः सर्पन्ति = गच्छन्तीति व्युत्पत्त्या सर्पवृश्चिकादय एव सरीसृपपदजन्यबोधविषयतावन्तो भवन्ति । एवं सरीसृपपदं सर्पवत् कीटवत् मत्स्यादीनामपि । स्थावराः = तिष्ठन्तीति व्युत्पत्तेः स्थावरपदेन प्रत्यक्षचेष्टाशून्या वृक्षादयो घटादयो वा सर्वथा चेष्टाशून्या ग्राह्याः । यथा कीटादिजीवानां सरीसृपेष्वस्ति अन्तर्भावस्तथैव जीवशून्यानां घटादीनामस्ति स्थावरेष्वन्तर्भावः ।

---

'राक्षस' इति । अतल से पाताललोक-पर्यन्त लोकों में होने वाली सभी सृष्टि राक्षससृष्टि है, एवम् वही पिशाचों की भी सृष्टि है । अतः राक्षस तथा पैशाच सर्ग उन्हीं में माना गया है ।

( ३ ) 'तैर्यग्योनश्च' इति । तिर्यग् योनि वाले चेतनतत्त्वस्वरूप जीवों की सृष्टि = सर्ग पशु-मृगादि पाँच प्रकार की है । उनमें जिसे लोम, लांगूल, खुर तथा चार पैर हों, वह 'पशु' कहलाता है । और जो जीव अनेक पैर वाले तथा विना खुर वाले हों वे 'मृग' हैं, जैसे—मूसा, गिलहरी आदि जीव । एवं जो पंखधारी जीव हैं तथा आकाश में उड़ने वाले हैं जैसे—चिड़िया, कौवा, गृध्र आदि जीव 'पक्षी' संज्ञासंज्ञित हैं । और हृदयादि से रेंगकर चलने वाले जीव सरीसृप = सर्प, विच्छू आदि नामधारी हैं । तथा जो जीव प्रत्यक्ष चेष्टा वाले नहीं हैं, जैसे—वृक्ष, लता आदि वे सब 'स्थावर' कहलाते हैं । इस प्रकार इन सभी जीवों की सृष्टि ही 'तैर्यग्योन' सर्ग कहलाती है और वह पञ्चधा है ।

( ४ ) 'मानुषश्चैकविध:' इति, ब्राह्मणत्वाद्यवान्तरजातिभेदाविवक्षया, संस्थानस्य चतुर्ष्वपि वर्णेष्वविशेषात्, इति। 'समासत:'–सङ्क्षेपत:। 'भौतिक: सर्ग:'। घटादयस्त्वशरीरत्वेऽपि स्थावरा एवेति ॥ ५३ ॥

( १ ) भौतिकस्याऽस्य सर्गस्य चैतन्योत्कर्षनिकर्षतारतम्याभ्यामूर्ध्वाधोमध्यभावेन त्रैविध्यमाह—

**ऊर्ध्वं सत्त्वविशालस्तमोविशालश्च मूलत: सर्ग:।**
**मध्ये रजोविशालो ब्रह्मादिस्तम्बपर्यन्त: ॥ ५४ ॥**

---

( ४ ) मानुषश्चेति। अर्थात् मानुषसर्गो यद्यपि चास्ति ब्राह्मणक्षत्रियवैश्यशूद्रभेदेन भिन्नस्तथापि ब्राह्मणत्व-क्षत्रियत्वप्रभृति अवान्तरजातिभेदानामविवक्षया मनुष्यत्वमात्रविवक्षया 'मानुषकश्चैकविध:' इत्यत्रैकविधत्वमुपपादनीयम्, अर्थात् मानुषसर्गस्यैकविधत्वं समुपपादनीयम्। यत:—संस्थानस्य = मुखहस्तपादादिरूपाऽवयवाऽऽकृतिसंस्थानस्य ब्राह्मणक्षत्रियादि चतुर्षु वर्णेष्वेव समानत्वात्। समासत: = सङ्क्षेपत:। भौतिक: सर्ग: = सङ्क्षिप्तेयं भौतिकी सृष्टि:। विस्तृतस्तु खलु जरायुज-अण्डज-स्वेदज-उद्भिज्जप्रभृतियोनिषु चतुरशीतिलक्षजातीय: सर्गो विज्ञेय:। घटादयस्त्वशरीरत्वेऽपीति। घटादीनां भोगाधिकरणीभूतशरीरत्वाभावेऽपि तेषां स्थावरसर्गे एवान्तर्भावो विधेय:, अर्थाद् घटादयोऽपि स्थावरा एव ॥ ५३ ॥

( १ ) ननु भूतविकारात्मकं चेतनसम्बन्धिसर्गं प्रति तन्मात्रसर्गस्य कारणस्य समानत्वेन सुख-दु:खादीनां विषयेऽनुभूयमानं यत् न्यूनाधिक्यरूपं तारतम्यं तत् कथं जायते? इत्याशङ्कासमाधानार्थमाह—भौतिकस्यास्येति। भौतिकस्य = भूतविकारस्वरूपस्य। अस्य = चेतनसम्बन्धिन:। चैतन्योत्कर्षनिकर्षतारतम्याभ्याम् = चेतन एव चैतन्यमात्मा, तस्याऽऽत्मन य: उत्कर्ष: = सत्त्वाधिक्यसम्बन्ध:, निकर्ष: = अपकर्ष: = अधर्मनिमित्तकरजस्तमोऽन्यतराधिक्यसम्बन्ध:, तादृशसम्बन्धस्वरूपतारतम्याभ्यां = भेदाभ्याम्। ऊर्ध्वाधोमध्यभावेन—ऊर्ध्वम् = ऊर्ध्वलोकेषु = स्वर्गादिलोकेषु, अध: = अधोलोकेषु पातालादिषु, मध्ये = मध्यलोकादौ भूतलादौ, य: भाव: = जन्म। तेन भौतिकसर्ग: त्रिविध:, तदेव त्रैविध्यमाह—ऊर्ध्वमिति।

---

( ४ ) 'मानुषकश्चैकविध:' इति। मानवीय सृष्टि = सर्ग एक प्रकार की है, यदि उसमें ब्राह्मणत्व एवं क्षत्रियत्वादि अवान्तर भेद की विवक्षा न की जाय। क्योंकि अवयवसंस्थान आदि चारों वर्णों मे समान ही है। इस प्रकार समास = संक्षेप से भौतिक सर्ग का विवेचन किया गया है और घट-पटादि अशरीर सृष्टि भी स्थावर सृष्टि = सर्ग मानी गई है ॥ ५३ ॥

( १ ) 'भौतिकस्यास्य' इति। 'चेतन एव चैतन्यम्' इस व्युत्पत्ति के आधार पर चेतनतत्त्व जीवात्मा के उत्कर्ष और अपकर्ष के तारतम्य = भेद से ऊर्ध्व = स्वर्गादि लोकों में, अध: = पातालादि लोकों में और मध्य = भूलोक में जीवों का 'भाव' = जन्मास्तित्व, उससे इस भौतिकसर्ग को तीन प्रकार का बतलाया है।

( २ ) 'ऊर्ध्वं सत्त्वविशालः' इति। 'द्युप्रभृतिः सत्यान्तो लोकः सत्त्ववहुलः। 'तमोविशालश्च मूलतः सर्गः' पश्वादिः स्थावरान्तः, सोऽयं मोहमयत्वात्तमोवहुलः।

( ३ ) भूर्लोकस्तु सप्तद्वीपसमुद्रसन्निवेशो 'मध्ये रजोविशालः' धर्माधर्मानुष्ठानपरत्वाद् दुःखवहुलत्वाच्च। तामिमां लोकसंस्थितिं सङ्क्षिपति—'ब्रह्मादिस्तम्बपर्यन्तः'। स्तम्बग्रहणेन वृक्षादयः सङ्गृहीताः॥ ५४॥

---

अन्वयः—ऊर्ध्वं सर्गः सत्त्वविशालः, मूलतः सर्गः तमोविशालः, मध्ये सर्गः रजोविशालः, ( सोऽयं सर्गः ) ब्रह्मादिस्तम्बपर्यन्तः ( वर्तते )।

( २ ) ऊर्ध्वम् = भुवःस्वर्महर्जनतपःसत्यलोकेषु। सत्त्वविशालः=सत्त्वगुणप्रधानः। सर्गः = सृष्टिः। द्युप्रभृतिसत्यान्तः=भुवर्लोकमारभ्य सत्यलोकपर्यन्तो लोकः। सत्त्ववहुलः = सत्त्वगुणप्रचुरः, रजस्तमसोस्तत्र विद्यमानत्वेऽपि सत्त्वगुणस्यैव तत्र प्राचुर्यम्, यतो ज्ञानसुखातिशयवत्त्वस्यैव तत्र सत्त्वात्। मूलतः = पातालादि अधोलोकेषु। सर्गः = नागदैत्यराक्षसादिसर्गः। तमोविशालः = तमःप्रधानः, तमोगुणप्रचुरः। अथवा मूलतः सर्गः = पश्वादिस्थावरान्तः, अर्थात् मानवेभ्योऽपकृष्टाः पशुप्रभृतयः, तेभ्यश्च पक्षिणोऽपकृष्टाः, पक्षिभ्यश्च वृक्षादयस्ततोऽपि लतास्तृणादयः, इत्येवं क्रमेण, पश्वादिः स्थावरान्तः = पश्ववधिकः [1]स्थावरान्तः तैर्यग्योनः सर्गः तमःप्रधानो वर्तते। तदेवोक्तं—[2]'सोऽयं-[3]मोहमयत्वात्तमोवहुलः'।

( ३ ) भूर्लोकस्तु। सप्तद्वीपसमुद्रसन्निवेशः—सप्तद्वीपाः = जम्बू-शाक-कुश-क्रौञ्च-

---

कारिकार्थ—ऊर्ध्वलोक = भुवः-स्वः-महः-जन-तप, सत्यलोकों में सत्त्वविशाल= सत्त्वगुण-प्रधान सर्ग = सृष्टि है। इसीलिए इन लोकों में रहने वाले जीव = देवता लोग सत्त्व-प्रधान होते हैं। मूलतः = अधोलोकों में=अतलादि लोकों से लेकर पाताल-पर्यन्त लोकों में तमोगुण-प्रधान सृष्टि है, अतः वहाँ रहने वाले जीव तमोगुण-प्रधान हैं। और मध्यलोक = भूलोक में रजोगुण-प्रधान सृष्टि है, अतः वहाँ रहने वाले जीव रजोगुण-प्रधान हैं।

'ब्रह्मादिस्तम्बपर्यन्तः' इति। इस प्रकार ब्रह्मा से लेकर देवता, पितर, मनुष्य, राक्षस, दैत्य, पशु, पक्षी, वृक्ष एवं तृणादिपर्यन्त समस्त सृष्टि तथा समस्त लोक तीनों गुणों से व्याप्त हैं तथा रहेंगे।

( २ ) 'ऊर्ध्वं सत्त्वविशालः' इति। अर्थात् द्यु=भुव लोक से लेकर 'सत्य'-पर्यन्त समस्त लोक सत्त्वगुण-प्रधान हैं और मूलतः = नीचे लोकों से = पातालादि लोकों में होने वाली 'पशु' आदि से लेकर 'स्थावर' पर्यन्त समस्त सृष्टि=सर्ग तमोगुण प्रधान है, क्योंकि यह सर्ग मोहमय है, अतः तमोवहुल है।

( ३ ) 'भूर्लोकस्तु' इति। सात द्वीप एवं सात समुद्रों वाला मध्य में रहने वाला यह भूलोकरूप सर्ग रजोगुण-प्रधान है, क्योंकि यहाँ धर्म तथा अधर्म के अनुष्ठान में

---

१. पशुपक्षिमृगसरीसृपवृक्षलतादिस्थावरान्तः। २. ब्रह्मादिस्तम्बपर्यन्तो लोकः। ३. मोहप्रचुरत्वात्।

( १ ) तदेवं सर्गं दर्शयित्वा तस्याऽपवर्गसाधनवैराग्योपयोगिनीं दुःख-हेतुतामाह—

**तत्र जरामरणकृतं दुःखं प्राप्नोति चेतनः पुरुषः ।**
**लिङ्गस्याऽविनिवृत्तेस्तस्माद् दुःखं स्वभावेन ॥ ५५ ॥**

---

शाल्मल-प्लक्ष-पुष्कराख्याः, सप्तसमुद्राश्च=लवण-इक्षु-सुरा-सर्पि-दधि-मण्ड-क्षीर-स्वादूदकाः, तेषां सन्निवेशो यत्र एवम्भूतो मध्यलोकः स रजोगुणप्रचुरो भवति । तदेव प्राचुर्यमुपपादयति—**धर्माधर्मेति** । अयं भूर्लोकः—धर्मः=पुण्यं कर्म यागादि, अधर्मः =पापकर्म मांसादिसेवनम्, तदनुष्ठानपरत्वात्, दुःखबहुलत्वाच्च रजोगुणप्रधानो वर्तते । **लोकसंस्थितिमिति** । ऊर्ध्वमध्यमूलान्ताम् । सङ्क्षिपति=सङ्क्षिप्तां करोति; ब्रह्मादिस्तम्बपर्यन्तः=ब्रह्म-देव-मानव-दानव-पशु-नाग-वृक्ष-लतादि-स्वरूपः ।

अत्रेदं विशेषतो विचार्यते—ऊर्ध्वलोकगणनायां 'भुवः स्वर्महर्जनः तपः सत्यम्' इमे षड् लोकाः समायान्ति । एतेषु लोकेषु सत्त्वगुणस्य प्राधान्यं वर्तते, रजस्तमसी गुणभावेन स्तः । मध्यसर्गे च रजोगुणस्य प्राधान्यमस्ति, सत्त्वतमसोश्च तत्र गुणभावेन स्थितिरस्ति । अस्य सर्गस्य गणनायां सम्पूर्णो भूर्लोकः समागच्छति ॥ ५४ ॥

( १ ) ननु सर्गस्य दुःखरूपतयाऽपुरुषार्थत्वेऽपि अपवर्गस्य ( मोक्षस्य ) पुरुषार्थत्वात्तदुपायभूतं वैराग्यमाह—**तदेवं सर्गं दर्शयित्वेति** । सर्गम्=ऊर्ध्वाऽधोमध्यस्वरूपं भौतिकं सर्गं पूर्वं निर्दिष्टम् । तस्य=सर्गस्य । अपवर्गसाधनवैराग्योपयोगिनीम्—अपवर्गस्य=मोक्षस्य, साधनम्=साधनभूतम्=प्रयोजकीभूतमित्यर्थः । ( यद् ) वैराग्यम् =रागाभावः, तदुपयोगिनीम्=वैराग्योपयोगिनीम्=वैराग्यप्रयोजिकामित्यर्थः । दुःख-हेतुताम्, आह । यतः सर्गस्य दुःखरूपतां विना वैराग्याभावः, तत्सत्त्वे च अपवर्गाभाव इति तु परमार्थः ।

**अन्वयः**—तत्र लिङ्गस्याविनिवृत्तेः चेतनः पुरुषः जरामरणकृतं दुःखं स्वभावेन प्राप्नोति, तस्मात् स्वभावेन ( भवति ) ।

---

तत्पर रहते है तथा दुःख का बाहुल्य होने से भी यह भूलोकरूप सर्ग रजोविशाल है । इस लोकसंस्थिति को अर्थात् चतुर्दश भुवनों में विभक्त हुए स्थानों को संक्षेप मे एक ही वाक्य 'ब्रह्मादिस्तम्बपर्यन्त' से प्रदर्शित किया है । स्तम्बग्रहण से वृक्ष आदि का भी संग्रह है ॥ ५४ ॥

( १ ) 'तदेवं सर्गं दर्शयित्वा' इति । इस प्रकार ऊर्ध्वसर्ग, मध्यसर्ग, मूलसर्ग; इन तीनों सर्गो का प्रदर्शन कर उस सर्ग के अपवर्ग=मोक्ष का साधन जो वैराग्य, उस वैराग्योपयोगिनी दुःखहेतुता को बतलाते हैं—'तत्र जरामरणकृतम्' इत्यादि कारिका से ।

कारिकार्थ—तत्र=विभिन्न जातीय सर्गीय शरीरों मे लिङ्ग=सूक्ष्म शरीर की निवृत्ति न होने मे अर्थात् सूक्ष्म शरीर के सर्वत्र बने रहने से चेतन पुरुष जरा-मरण कृत दुःख का बराबर अनुभव करता रहता है । इसलिए दुःख स्वाभाविक है ।

( २ ) 'तत्र' इति । 'तत्र' शरीरादौ । यद्यपि विविधविचित्रानन्दभोगभागिनः प्राणभृद्भेदाः, तथाऽपि सर्वेषां जरामरणकृतं दुःखमविशिष्टम् ।

( ३ ) सर्वस्य खलु कृमेरपि मरणत्रासो—'मा न भूवम्' 'भूयासम्' इत्येवमात्मकोऽस्ति । दुःखं च भयहेतुरिति दुःखं मरणम् ।

---

तत्रेति । तत्र=शरीरेन्द्रियादौ, आदिपदग्राह्यविभिन्नशरीरेषु विभिन्नविषयेषु चेति भावः । जरामरणकृतम्—जरा=वृद्धावस्था=अशक्तावस्थेत्यर्थः, मरणम्=प्राणवियोगः=शरीरत्यागो वा, तत्कृतमित्यर्थः । दुःखम्=आध्यात्मिकादिदुःखत्रयम् । प्राप्नोति=अनुभवति । लिङ्गस्य=सूक्ष्मशरीरस्य । अनिवृत्तेः=निवृत्तेरभावात्=यावल्लिङ्गं न निवर्तते इत्यर्थः । तस्मात्=तस्माद्धेतोः । तावत्कालपर्यन्तं चेतनः पुरुषः, स्वभावेन दुःखम् अनुभवति=प्राप्नोतीत्यर्थः । तस्माद् विश्वं स्वभावतो दुःखरूपमित्यर्थः ।

( २ ) कौमुद्याम्—यद्यपीति । विविधविचत्रानन्दभोगभागिनः=विविधाः=नानाप्रकारकाः, ( अत एव ) विचित्राः=मध्यमोत्तमादयः, ( ये ) आनन्दाः=पुत्रकलत्रजन्याः सुखविशेषाः, भोगः=तेषां प्रत्यक्षात्मकोऽनुभवः, तद्भागिनः=तत्शालिनः । ये सन्ति, प्राणभृद्भेदाः—प्राणभृतां=शरीरावच्छिन्नाऽऽत्मनाम्, भेदाः=विशेषाः, अर्थात् जीवविशेषाः । सन्तीति योजनीयम् । तथापीति । जरामरणकृतम्—जरा=वार्धक्यम्=वृद्धावस्था, तया कृतम्, मरणेन च कृतम् । दुःखम् । अविशिष्टम्=समानम् । अर्थात् सर्वेषामेव प्राणिनां जराजन्यं, मरणजन्यञ्च दुःखं समानमेव, परन्तु सुखे समानत्वं नानुभूयते ।

( ३ ) तदेव सुस्पष्टीक्रियते—सर्वस्येति । प्राणिनः । खलु=निश्चयेन । कृमेरपि=कृमिपर्यन्तस्यापि जीवस्य । मरणत्रासः=मरणजन्यं भयम् । मरणत्रासस्य स्वरूपमाह—मा न भूवम् इति । अहं कदापि अस्तित्वभाववान् न स्याम् । अपि तु सर्वदैव, भूयासम्=अहम् अस्तित्ववान् स्याम्, अर्थात् मम विनाशः कदापि न भवेत्, अहं सर्वदा जीवामि । इत्येवमात्मकः=एतादृशस्वरूपवान् । अस्ति=वर्तते । मरणत्रास

---

( २ ) 'तत्र' इति । उन विभिन्न शरीरों में और विभिन्न विषयों में दुःख स्वाभाविक है ।

'यद्यपि विविधविचित्रानन्दभोगभागिनः' इति । यद्यपि विविध=नाना प्रकार के विचित्र आनन्दमय भोगों को भोगने वाले प्राणधारी जीव बहुत हैं, तथापि जरा-मरण कृत दुःख सभी प्राणिमात्र को अविशिष्ट=समान है ।

( ३ ) 'सर्वस्य खलु कृमेरपि' इति । समस्त कृमिपर्यन्त प्राणियों को भी यह मरण-त्रास=मरणभय बना रहता है कि कदाचित् ऐसा न हो कि 'मा न भूवम्'=मैं न रहूँ, 'भूयासम्'=मैं हमेशा जीवित रहूँ, इत्येवमात्मक=इत्याकारक मरणत्रास सभी को बना रहता है और उस मरणत्रासरूपी भय का हेतु दुःख है, इसलिए मरण ही दुःख है ।

( ४ ) स्यादेतत्—दुःखादयः प्राकृता बुद्धिगुणाः, तत्कथमेते चेतनसम्बन्धिनो भवन्तीत्यत आह—'पुरुषः' इति। पुरि लिङ्गे शेते इति पुरुषः। लिङ्गं च तत्सम्बन्धीति चेतनोऽपि तत्सम्बन्धी भवतीत्यर्थः।

( ५ ) कुत. पुनर्लिङ्गसम्बन्धि दुःखं पुरुषस्य चेतनस्येत्यत आह—'लिङ्गस्याऽविनिवृत्तेः'—पुरुषाद् भेदाग्रहाल्लिङ्गधर्मानात्मन्यध्यवस्यति पुरुषः।

---

इति शेषः। भयहेतुः=भयकारणम्। मरणम्=मृत्युः। दुःखम्=जरामरणजन्यदुःखदम्। **अयम्भावः**—भयस्य कारणं यदस्ति भाविमरणजन्यं दुःखम्, तद् दुःखं भयात्मकेन कार्येणाऽनुमीयते, अनुमानञ्च—सर्वेऽपि कृमिपर्यन्ताः प्राणिनो मरणजन्यदुःखवन्तो मरणत्रासवत्त्वात्=मरणजन्यत्रासवत्त्वात्, इत्यत्र कार्येण कारणमनुमीयते इति कार्यलिङ्गकमनुमानमिदम्, वह्निमान् धूमादित्यनुमानवत्।

( ४ ) दुःखस्याऽऽत्मधर्मत्वाभावमाशङ्कते—**स्यादेतदिति**। दुःखादयः=सुखदुःखमोहस्वरूपास्त्रयो गुणाः। प्राकृताः=प्रकृतिः=स्वभावस्तज्जन्यत्वेन स्वाभाविकाः, प्रकृतिपरिणामभूता इत्यर्थः। अत एव बुद्धिगुणाः=बुद्धिधर्माः। एते=दुःखादयस्त्रयो गुणाः। चेतनसम्बन्धिनः=पुरुषसम्बन्धवन्तः। कथम्। भवन्ति=भवितुमर्हन्ति? समाधत्ते—**पुरुष इति**। पुरि=लिङ्गशरीरे, शेते=निवसति इति व्युत्पत्त्या पुरुष एव चेतनतत्त्वभूत आत्मा=जीवः। लिङ्गञ्च=लिङ्गशरीरञ्च। तत्सम्बन्धि=दुःखसम्बन्धि। इति=अतः। चेतनोऽपि=पुरुषोऽपि। तत्सम्बन्धी—तेषां=दुःखादीनाम्, सम्बन्धी। भवतीति शेषः। सम्बन्धश्च स्वाश्रयप्रतिबिम्बितत्वरूपो बोध्यः। स्वं=दुःखादयः, तदाश्रयः=लिङ्गशरीरम्, तत्र प्रतिबिम्बितः=चेतनः पुरुषः, इत्थञ्च दुःखादयश्चेतनपुरुषसम्बन्धिनो भवन्ति, अतो जरामरणकृतं दुःखं चेतनः पुरुषः प्राप्नोति इति तु निष्कर्षः।

( ५ ) प्रश्नः—कुतः=कस्मात् कारणात्। लिङ्गसम्बन्धि=लिङ्गशरीरसम्बन्धि। दुःखम्। चेतनस्य=पुरुषस्य। भवतीति शेषः।

उत्तरम्—**लिङ्गस्येति**। लिङ्गशरीरस्य, सकलेष्वपि सर्गेषु, अनिवृत्तेः=निवृत्तेरभावात्, पुरुषादिति शेषः। अर्थात् केष्वपि सर्गेषु लिङ्गशरीरस्य पुरुषान्निवृत्तेरदर्शनात्,

---

( ४ ) प्रश्न—'स्यादेतत्' इति। यह सब ठीक है, किन्तु दुःखादि प्राकृत=प्रकृति से जन्य होने के कारण बुद्धि के गुण हैं, अतः ये सब चेतन पुरुष से सम्बद्ध कैसे हो सकते हैं?

उत्तर—'पुरुषः' इति। उत्तर में कहते हैं कि यह पुरुष 'पुरि'=लिङ्ग शरीर में शयन करता है और लिङ्गशरीर दुःखादि से सर्वथा सम्बन्धित है, इस कारण चेतन पुरुष भी स्वाश्रय प्रतिबिम्बतत्त्व सम्बन्ध से बुद्धि एवं दुःखादि गुणों से सम्बद्ध हो जाता है।

( ५ ) प्रश्न—'कुतः पुनर्लिङ्गसम्बन्धि दुःखम्' इति। अर्थात् कैसे फिर लिङ्ग शरीर सम्बन्धी दुःख चेतन पुरुष को होता है?

(६) अथवा दुःखप्राप्ताववधिराङा कथ्यते, लिङ्गं यावन्न निवर्तते तावदिति ॥ ५५ ॥

(१) उक्तस्य सर्गस्य कारणविप्रतिपत्तीर्निराकरोति—

**इत्येष प्रकृतिकृतो महदादिविशेषभूतपर्यन्तः ।**
**प्रतिपुरुषविमोक्षार्थं स्वार्थ इव परार्थ आरम्भः ॥ ५६ ॥**

---

यतस्तस्य लिङ्गशरीरस्य सर्वदा प्रलयकालपर्यन्तं पुरुषानुगमनशालित्वेन चेतनः पुरुषस्तद् दुःखमनुभवति भेदाग्रहात् इति तु निष्कर्षः । तदेव स्पष्टीकृतं कौमुद्याम्—**पुरुषाद् भेदाग्रहादि**त्यादिना । इत्थञ्च लिङ्गशरीरेण सह वर्तमानः पुरुषः लिङ्गशरीरसम्बन्धवशादेव बुद्धिगतं दुःखमनुभवति, यतः स्व( पुरुष )प्रतियोगिकभेदस्य बुद्धौ अग्रहात् । अतः पुरुषः लिङ्गस्य बुद्धेः धर्मान् दुःखादीन् भेदाग्रहरूपकारणवशादेव, आत्मनि= स्वस्मिन् । अध्यवस्यति=अनुभवति ।

(६) पाठान्तरमनुसृत्य व्याख्यान्तरमप्याह—**अथवेति** । क्वचित् 'लिङ्गस्याविनिवृत्तेः' इति कारिकास्थपाठे 'लिङ्गस्य आ विनिवृत्तेः' एवंरीत्या पदच्छेदं विधाय 'लिङ्गस्याऽऽविनिवृत्तेरि'ति च सन्धिकार्यं कृत्वा तत्र 'आङा' इत्यनेन 'अवधि'रूपोऽर्थः कथ्यते । एवञ्च लिङ्गशरीरनिवृत्तिकालपर्यन्तं दुःखस्य प्राप्तिपरम्पराऽनवरतं प्रचलतीत्याह—**लिङ्गं यावन्नेति** । अर्थाद् यावदवधि लिङ्गशरीरं न लीयते तावत्कालपर्यन्तं चेतनः पुरुषो दुःखमनुभवति इति तु परमार्थः ॥ ५५ ॥

(१) 'इत्येषः प्रकृतिकृतः' इत्यादि कारिकामवतारार्थमाह—**उक्तस्येति** । दर्शितस्य । सर्गस्य=सृष्टेः=लिङ्गसर्गस्य, भावसर्गस्य चेत्यर्थः । कारणविप्रतिपत्तीः= कारणविषयकविरुद्धप्रतीतीः, अर्थात् मूलकारणस्य विप्रतिपत्तीः=महदादिभूतान्तः सर्गः

---

उत्तर—'**लिङ्गस्याऽविनिवृत्तेः**' इति । उत्तर में कहते हैं कि पुरुष का भेद बुद्धि द्वारा गृहीत न होने के कारण अपितु 'बुद्धिः आत्माऽभिन्ना' इत्याकारक अभेदग्रह होने के कारण लिङ्ग=बुद्धि के दुःखादि धर्मों को पुरुष अपने में निश्चय कर लेता है ।

(६) '**अथवा**' इति । 'लिङ्गस्याविनिवृत्तेः' यहाँ पर 'लिङ्गस्य आ विनिवृत्तेः' इस रूप से पदच्छेद करके इसकी दूसरी व्याख्या भी करते हैं—'अथवा' इत्यादि ग्रन्थ से । दुःख की प्राप्ति में 'आविनिवृत्तेः' यहाँ पर जो 'आङ्' उपसर्ग है, उससे अवधिरूप अर्थ कहा गया है और विनिवृत्त का अर्थ निवृत्ति है, इसका तात्त्विक अर्थ हुआ कि लिङ्गशरीर की निवृत्ति जब तक नहीं हो जाती है, तब तक दुःख की प्राप्ति अर्थात् दुःख का अनुभव चेतन पुरुष करता ही रहेगा । वाचस्पतिमिश्र ने वही कहा है— '**लिङ्गं यावन्न निवर्तते तावत्**' इति ॥ ५५ ॥

(१) '**उक्तस्य सर्गस्य**' इति । अर्थात् पूर्व में कथित भावाख्य तथा लिङ्गाख्य सर्ग के मूलभूत कारण के विषय में जो विप्रतिपत्तियाँ हैं, अर्थात् वादियों के विरुद्धमत हैं, जिनका प्रदर्शन अभी अपनी तत्त्वकौमुदी टीका में वाचस्पतिमिश्र करेंगे, उनका

( २ ) 'इत्येष' इति। आरभ्यते इति 'आरम्भः' सर्गो महदादिभूतान्तः प्रकृत्यैव कृतो नेश्वरेण, न ब्रह्मोपादानः, नाप्यकारणः। अकारणत्वे ह्यत्यन्तभावोऽत्यन्ताभावो वा स्यात्।

---

ईश्वराधिष्ठितप्रकृतिकृतो न वा, ब्रह्मकारणको न वा, एवम् अकारणको न वा इत्यादि विरुद्धविप्रतिपत्तिरूपेण विरोधिवादिनां मतानि समुपस्थितानि भवन्ति तानि निराक्रियन्ते—'इत्येष प्रकृतिकृतः सर्गः' इत्यादि कारिकया।

**अन्वयः**—इत्येषः महदादिविशेषभूतपर्यन्तः आरम्भः स्वार्थे इव प्रतिपुरुषविमोक्षार्थं परार्थे आरम्भो ( भवति )।

( २ ) **'इत्येष'** इति। व्युत्पत्तिवललभ्यमर्थमाह—**'आरम्भः'** इति। प्रकृतिकृतः =प्रकृत्या रचितः। महदादिविशेषभूतपर्यन्तः=महत्तत्त्वप्रभृति स्थूलभूतपर्यन्तः, अर्थात् महत्तत्त्वमारभ्य विशेषभूतानि यानि सन्ति स्थूलभूतानि तत्पर्यन्तः, अर्थात् महत्तत्त्वाहङ्कारमनः-श्रोत्रत्वक्चक्षूरसनाघ्राण-वाक्पाणिपादपायूपस्थ-शब्दस्पर्शरूपरसगन्ध-पृथिवीजलतेजोवायुगगनात्मकः। आरम्भः=सर्गः। सर्वोऽपि—प्रकृत्यैव कृतः=प्रकृत्युपादानकः, एवकारव्यवच्छेद्यमाह—नेश्वरेण, न ब्रह्मोपादानः, नाप्यकारणः। चार्वाकप्रभृतिदार्शनिकैः स्वीकृतं संसारस्य सर्वथाऽसन्मूलकत्वं निरस्यति—अकारणत्वे इति। सर्गस्येति शेषः। अर्थात् सर्गस्य अकारणकत्वे इत्यर्थः। अत्रेदं विकल्प्यते—सर्गः भावाऽकारणकः, अभावाऽकारणको वेति। आद्ये सर्गस्याऽत्यन्तं भावः=नित्यत्वं=सर्वदा सत्त्वं स्यात्। द्वितीये सर्गस्याऽत्यन्ताभावः=सर्वदाऽसत्त्वम्=अलीकत्वं स्यात्।

---

निराकरण करते हुए प्रकृतिकारणवाद का स्थापन करते हैं—'इत्येषः प्रकृतिकृतः' इत्यादि कारिका से।

**कारिकार्थ**—इस प्रकार यह मूलप्रकृतिकृत महत्तत्व से लेकर महाभूतपर्यन्त यह सर्ग=सृष्टि 'स्वार्थे इव' जैसे अपने अर्थ=प्रयोजन के लिए है, वैसे ही प्रत्येक पुरुष को विशेषरूप से मोक्ष प्रदान करना रूप जो पर=पुरुष का अर्थ=प्रयोजन है, उसके लिए ही विशेष रूप से इस आरम्भ=सर्ग=सृष्टि का निर्माण प्रकृति ने किया है।

( २ ) **'आरभ्यते'** यह कर्म-प्रत्ययान्त 'आरम्भ' शब्द महत्तत्त्व से लेकर आकाशादि महाभूतपर्यन्त सर्गरूप अर्थ को कहता है, जो कि सर्ग=सृष्टि एकमात्र प्रकृतिकृत है, ईश्वरकृत नहीं है। ब्रह्म भी उसका उपादानकारण नहीं है, अर्थात् ब्रह्मकृत भी नहीं है, सर्वथा अकारण=कारणसहित भी नहीं है। क्योंकि अकारण मानने पर दो पक्ष हमारे सामने आते हैं—असत्कारणवाद=शून्यवाद=माध्यमिकमत, अथवा स्वभाववाद=चार्वाकमत, इन दोनों ही पक्ष में सर्ग का अत्यन्तभाव=सर्वदा सत्त्व अर्थात् नित्यत्व सिद्ध हो रहा है। अथवा अत्यन्ताभाव=सर्वदा असत्त्व= वन्ध्यापुत्रवत् अलीकत्व सिद्ध हो रहा है, जो कि पक्ष अनुभव-विरुद्ध होने के कारण सर्वथा अमान्य हैं।

( ३ ) न ब्रह्मोपादानः, चितिशक्तेरपरिणामात्, नेश्वराधिष्ठितप्रकृतिकृतः, निर्व्यापारस्याऽधिष्ठातृत्वासम्भवात्। न हि निर्व्यापारस्तक्षा वास्याद्यधितिष्ठति।

( ४ ) ननु प्रकृतिकृतश्चेत्, तस्या नित्यायाः प्रवृत्तिशीलाया अनुपरमात् सदैव सर्गः स्यादिति न कश्चिन्मुच्येतेत्यत आह—'प्रतिपुरुषविमोक्षार्थं स्वार्थं

---

( ३ ) सर्गस्य ब्रह्मोपादानकत्वं अर्थात् शाङ्करमतं निराकरोति—**न ब्रह्मोपादानकः** इति। 'सर्ग' इति शेषः। तत्र हेतुमाह—**चितिशक्तेरपरिणामात्** इति। चितिशक्तेः=चेतनस्य ब्रह्मणः, अपरिणामात्=चितिशक्तेर्ब्रह्मणो नित्यत्वेन परिणामाऽसम्भवात्, 'निष्कलं निष्क्रियं शान्तम्' इत्यादिश्रुतेर्निरवयवस्य परिणामायोगादिति तु निष्कर्षः। यदि चेश्वराधिष्ठिता प्रकृतिरेव सर्गं करोतीति योगसम्मत ईश्वराधिष्ठातृत्ववादः स्वीक्रियते, अर्थात् अचेतनायाः प्रकृतेः स्वतःप्रवृत्त्यसम्भवेन चेतनाधिष्ठिततयैव जडवर्गस्य प्रवृत्तिर्भवतीति पातञ्जलसम्मतयोगदर्शनसिद्धान्तं निराकरोति—**नेश्वराधिष्ठितेति**। तत्र हेतुमाह—**निर्व्यापारस्येति**। व्यापाररहितस्य। अर्थाद् व्यापारशून्यस्य कस्याप्यधिष्ठातृत्वाऽसम्भवेन सुतरामीश्वरोऽपि नाधिष्ठाता भवितुमर्हति यतस्तेषां नये ईश्वरस्य निर्व्यापारत्वात्। दृष्टान्तेन तं पक्षं सुदृढीकरोति—**नहि निर्व्यापार इति**। उद्यमननिपातनरूपक्रियात्मकव्यापाररहितम्, तक्षा=त्वष्टा, अधितिष्ठति=आश्रयति।

( ४ ) प्रकृतिकारणवादमधिष्ठाय शङ्कते—**नन्विति**। प्रकृतिकृतः=प्रकृत्या विरचितः। चेत्=यदि। तस्याः=प्रकृतेः। अनुपरमात्=उपरमशून्यत्वात्=प्रवृत्ति-

---

( ३ ) **'न ब्रह्मोपादानः'** इति। उस सर्ग=सृष्टि का ब्रह्म भी उपादानकारण नहीं है, क्योंकि चितिशक्तिस्वरूप चेतन ब्रह्म किसी का परिणाम नहीं है। तथा ईश्वराधिष्ठित प्रकृति से भी कृत यह सर्ग नहीं है। कारण कि व्यापार क्रिया है, निर्धर्मक तथा क्रियात्मक व्यापारशून्य आत्मा=ईश्वर अधिष्ठाता कैसे हो सकता है, तथा ईश्वर से अधिष्ठित प्रकृति भी नहीं हो सकती है, फिर तत्कृत सर्ग भी सर्वथा असंभव ही है। जैसे निर्व्यापार=क्रियात्मक व्यापार शून्य तक्षा=बढ़ई वास्यादि=कुठारादि का अधिष्ठाता नहीं हो पाता है, किन्तु सक्रिय ही अधिष्ठाता होता है। ईश्वररूप चेतनतत्त्वरूप आत्मा जब कुछ करता ही नहीं, सर्वथा निष्क्रिय है, तब वह तक्षा की तरह अधिष्ठाता कैसे हो सकता है?

( ४ ) प्रश्न—**'ननु प्रकृतिकृतश्चेत्'** इति। यदि प्रकृतिकृत सर्ग है, यह माना जाय, तब सदैव सर्ग=सृष्टि होती रहे, यह आपत्ति लग जायेगी, क्योंकि प्रकृति नित्य है, प्रवृत्तिशील है तथा उपरमशून्य है। अतः सर्वदा सृष्टि करने में प्रवृत्तिशील बने रहना यह उसका स्वभाव हो जाने से सृष्टि सम्बन्धी व्यापार कभी बन्द ही नहीं होगा। इससे कोई भी पुरुष मुक्त ही नहीं हो पायेगा।

उत्तर—**'प्रतिपुरुषविमोक्षार्थम्'** इति। प्रत्येक पुरुष को मोक्ष प्रदान करने के लिए ही यह सृष्टि प्रकृतिकृत है, जो अपने अर्थ=प्रयोजन के लिए प्रतीत होती हुई भी

इव परार्थ आरम्भः' इति। यथौदनकाम ओदनाय पाके प्रवृत्तः ओदनसिद्धौ निवर्तते, एवं प्रत्येकं पुरुषान् मोचयितुं प्रवृत्ता प्रकृतिर्यं पुरुषं मोचयति तम्प्रति पुनर्न प्रवर्तते, तदिदमाह—'स्वार्थ इव'— स्वार्थे यथा तथा परार्थे आरम्भ इत्यर्थः ॥ ५६ ॥

( १ ) स्यादेतत्—स्वार्थं परार्थं वा चेतनः प्रवर्तते। न च प्रकृतिरचेतनैवं भवितुमर्हति, तस्मादस्ति प्रकृतेरधिष्ठाता चेतनः। न च क्षेत्रज्ञाश्चेतना

---

परायणत्वात्। सदैव=नित्य एव। कश्चित्=कश्चिदप्यात्मा। इत्यस्ति शङ्कापक्षः। समाधत्ते—**प्रतिपुरुषविमोक्षार्थमिति**। यथा काचित् चेतना कामिनी 'अहं पुरुषेण भोग्ये'ति मत्वा स्वकर्मक=कामिनीकर्मक-भोगरूपे स्वार्थे प्रवर्तते, तथा प्रतिपुरुषस्य यो विमोक्षस्तदर्थम् 'पुरुषायाऽपवर्गो दातव्य.' इति यः परार्थस्तत्र प्रकृतिः स्वयं प्रवृत्ता भवति, इत्थञ्च प्रकृतिः पुरुषाय भोगं दत्वा तदनन्तरं तस्मै मोक्षरूपमर्थमपि ददातीति प्रतिपुरुषस्य भोगार्थं विमोक्षार्थञ्चाऽयं सर्गः क्रियते। अयमेव विषयः पुनर्दृष्टान्तेन सुस्पष्टीक्रियते—**यथौदनेति**। यथा ओदनविषयिणी या कामना तद्वान् पुरुष ओदनस्य विक्लितिभावं सम्पादयितुं पाके प्रवर्तते, ओदनसिद्धौ सत्यां निवर्तते, इत्थञ्च फलप्राप्तौ सत्यां क्रियापरित्यागौचित्यात्, नो चेत् क्रियाया निष्फलत्वापत्तिरेव स्यात् इति भावः।

ननु प्रकृतिप्रवृत्तिजन्यं किमात्मकं तत्फलं यत्फलप्राप्तौ सत्यां प्रकृतिरुपरमतीत्यत आह—**एवं प्रत्येकं पुरुषानिति**। अमुमेवार्थं पुनर्दृष्टान्तेन दृढीकरोति—**स्वार्थ इवेति**। प्रकृतेः स्वयं स्वार्थाभावेऽपि स्वार्थे इत्यस्य 'स्वकार्ये' इत्यर्थो विधेयः। तथा च स्वकार्ये इव मोक्षस्वरूपेऽपि परार्थे सा प्रवर्तते इति न केवलप्रकृतिकारणवादेऽपि मोक्षानुपपत्तिः पुरुषस्येति तु परमार्थः ॥ ५६ ॥

( १ ) 'वत्सविवृद्धिनिमित्तम्' इत्यादिकारिकायाः पूर्वपक्षरूपेणाऽवतरणमाह—**स्यादेतदिति**। **चेतनः प्रवर्तते इति**। चेतनः पुरुषः प्रवृत्तिशीलो भवति। स्वार्थम्=स्वकीयप्रयोजनाय, परार्थम्=परप्रयोजनाय। एवञ्च परार्थं प्रयत्नशीलस्य पुरुषस्य

---

वस्तुतः परार्थ=पुरुष के मोक्ष-प्रयोजन के लिए ही है। जैसे ओदन की कामना वाला पुरुष ओदन के लिए पाक में प्रवृत्त होता है और ओदन के सिद्ध हो जाने पर उससे=पाककर्म से निवृत्त हो जाता है। इसी प्रकार प्रत्येक पुरुष को मोक्ष प्रदान करने के लिए प्रवृत्त हुई प्रकृति जिस पुरुष को मोक्ष प्रदान कर चुकी है, उस पुरुष के लिए फिर प्रवृत्तिशील नहीं होती है। यही आशय 'स्वार्थ इव परार्थ आरम्भः' इस कारिकांश के द्वारा स्पष्ट किया है। अर्थात् जैसे कोई व्यक्ति पर प्रयोजन के लिए प्रवृत्तिशील बनता है, वैसे ही प्रकृति पर के लिए=पुरुष के लिए प्रवृत्तिशील होती है ॥ ५६ ॥

( १ ) 'स्यादेतत्' इति। यह सब कथित विषय ठीक है, परन्तु माध्व, शैव, पाशुपत आदि मतानुयायी विद्वानों का कथन है कि जो चेतन है, वही स्वार्थ अथवा परार्थ के लिए प्रवृत्तिशील बनता है। प्रकृति अचेतन=जड है अतः वह स्वार्थ अथवा परार्थ के लिए प्रवृत्त नही हो सकती है। इसलिए प्रकृति को सर्गादि कार्य में प्रवृत्त

अपि प्रकृतिमधिष्ठातुमर्हन्ति, तेषां प्रकृतिस्वरूपानभिज्ञत्वात्। तस्मादस्ति सर्वार्थदर्शी प्रकृतेरधिष्ठाता, स चेश्वरः, इत्यत आह—

**वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य।**
**पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥ ५७ ॥**

( २ ) 'वत्सविवृद्धिनिमित्तम्' इति। दृष्टमचेतनमपि प्रयोजनं प्रति प्रवर्तमानम्, यथा वत्सविवृद्ध्यर्थं क्षीरमचेतनं प्रवर्तते। एवं प्रकृतिरचेतनाऽपि पुरुषविमोक्षणाय प्रवर्तिष्यते।

---

कृते तदर्थसिद्धौ सत्यां यशःस्वरूपो धर्मस्वरूपो वा, दुःखाभावरूपो वा कश्चन स्वार्थस्तु अवश्यमेव सिद्ध्यति सेत्स्यति वा, यतः स्वार्थसिद्ध्यभावे प्रवृत्तेरदर्शनात्। तस्माच्चेतनस्यैव पुरुषस्य परार्थं आरम्भो भवितुमर्हति न तु अचेतनभूतायाः प्रकृतेः। ननु प्रकृत्यधिष्ठातृत्वं क्षेत्रज्ञानां जीवानामेवास्तु नेश्वरस्येत्याशङ्कां निराकुरुते—**न च क्षेत्रज्ञा इति।** क्षेत्रज्ञाश्चेतनाः=जीवाः। तेषाम्=अल्पज्ञानां जीवानाम्। सर्वार्थदर्शी=सर्वज्ञः। स चेश्वरः=सर्वार्थदर्शी प्रकृतेरधिष्ठाता ईश्वरः, इत्यत आह—**वत्सविवृद्धिनिमित्तमिति।**

**अन्वयः**—यथा वत्सविवृद्धिनिमित्तम् अज्ञस्य क्षीरस्य प्रवृत्तिः तथा पुरुषविमोक्षनिमित्तं प्रधानस्य प्रवृत्तिः ( भवति )।

( २ ) दृष्टमचेतनमपि=चेतनवदचेतनमपि अर्थात् जडमपि वस्तु। प्रयोजनम्प्रति=स्वार्थरूपं परार्थरूपं वा प्रयोजनं प्रति। प्रवर्तमानम्=प्रवृत्तिशीलम्। दृष्टम्=अनुभूतम्। सर्वैरेवेति शेषः। दृष्टान्तमाह—**यथा वत्सविवृद्ध्यर्थमिति।** वत्सजीवनसम्पादनार्थम्। अचेतनम्=जडभूतम्। क्षीरम्=दुग्धम्। प्रवर्तते=स्तनाभ्यां, स्तनेभ्यो वा बहिर्निःसरणरूपां क्रियात्मिकां प्रवृत्तिं सम्पादयति, अर्थाद् गोशिशुपोषणार्थं, महीष्यादिशिशुपोषणार्थं वा स्तनाभ्यां स्वयमेव दुग्धप्रस्रावो भवतीत्येवंरूपेण जडस्यापि चेतनानधिष्ठितस्य प्रवृत्तिरनुभूयते इति भावः।

---

करने वाला चेतन अधिष्ठाता=प्रेरक, अवश्य कोई है। शरीर रूप क्षेत्र को जानने वाले चेतन जीव प्रकृति के अधिष्ठाता नहीं हो सकते हैं, क्योंकि वे प्रकृति का जो व्यापक बहुरूप वाला स्वरूप है, उससे अनभिज्ञ हैं। अतः सर्वार्थदर्शी=सर्वज्ञ कोई चेतन ही प्रकृति को सर्गादिकार्य में प्रवृत्त करने वाला अधिष्ठाता हो सकता है, वही ईश्वर है। इसी बात को **'वत्सविवृद्धिनिमित्तम्'** इत्यादि कारिका से बतलाते हैं।

**कारिकार्य**—जैसे वत्स=बछड़े के स्वास्थ्यसाधुत्वरूप विवृद्धि के निमित्त अज्ञ=ज्ञानशून्य=जड, क्षीर=दूध की स्वतः प्रवृत्ति देखने में आती है, उसी प्रकार पुरुष के मोक्ष के निमित्त अचेतन प्रधान की प्रवृत्ति होती है।

( २ ) **'वत्सविवृद्धिनिमित्तम्'** इति। ऐसा देखने में आता है कि अचेतन वस्तु भी स्वार्थ या परार्थ प्रयोजन के लिए प्रवर्तमान होती है। जैसे बछड़े की विवृद्धि के

( ३ ) न च—'क्षीरप्रवृत्तेरपीश्वराधिष्ठाननिबन्धनत्वेन साध्यत्वान्न साध्येन व्यभिचारः' इति साम्प्रतम्। प्रेक्षावतः प्रवृत्तेः स्वार्थकारुण्याभ्यां व्याप्तत्वात्। ते च जगत्सर्गाद्व्यावर्तमाने प्रेक्षावत्प्रवृत्तिपूर्वकत्वमपि व्यावर्तयतः।

---

तदेव प्रकृतेऽपि योजयति—**एवम्प्रकृतिरिति**। पुरुषविमोक्षणाय = पुरुषमुक्तये। प्रवर्तिष्यते = पुरुषस्य भोगापवर्गकारणीभूतां प्रवृत्तिं विधास्यते। इत्थञ्च 'क्षीरप्रवृत्तिः चेतनप्रयुक्ता प्रवृत्तित्वात् चैत्र-मैत्रादिप्रवृत्तिवत्' इत्यनुमाने स्वतो जायमान-क्षीर-प्रवृत्तिरूपे पक्षे साध्याभावेन हेतोः सत्त्वेन च यथा भवति व्यभिचारस्तथा प्रकृतेऽपि 'प्रकृतिप्रवृत्तिः' चेतनप्रयुक्ता प्रवृत्तित्वात् चैत्र-मैत्रादिप्रवृत्तिवत् इत्यनुमानेऽपि भवति व्यभिचारः, यतः प्रवृत्तित्वहेतोः पक्षे सत्त्वेन चेतनप्रयुक्तत्वरूपसाध्याभावात्।

( ३ ) व्यभिचारं वारयति—**न च क्षीरप्रवृत्तेरित्यादिना**। इत्थञ्च क्षीरप्रवृत्तिः ईश्वराधिष्ठाननिबन्धनत्वेन = ईश्वराधिष्ठितप्रयुक्तत्वेनोपपादनीया। **न साध्यव्यभिचारः इति**। तथा च न साध्याभाववद् वृत्तित्वरूपो व्यभिचारः। साम्प्रतम् = युक्तम् अस्य 'न च' इति पूर्वेणाऽन्वयः, अर्थात् न च साम्प्रतम् इत्यर्थो विधेयः। कुतो न साम्प्रतमित्यत्र कारणं ब्रूते—**प्रेक्षावतः प्रवृत्तेरिति**। चेतनावतः प्रवृत्तेः। स्वार्थकारुण्याभ्याम्—स्वार्थः = स्वस्य अर्थ इति व्युत्पत्त्या स्वप्रयोजनम्, स्वकीयसुखाऽवाप्तिदुःखनिवृत्तिरूपं प्रयोजनमित्यर्थः, कारुण्यम् = दयालुता, परकीयदुःखनिवृत्तीच्छारूपम्। व्याप्तत्वात् = व्याप्यत्वात्, स्वार्थकारुण्याभाववदवृत्तित्वादित्यर्थः। इत्थञ्च प्रेक्षावतः प्रवृत्तिः स्वार्थ-कारुण्याभाववन्निरूपितवृत्तित्वाभाववती यदि स्यात्तदा जगन्नियन्तुः परमेश्वरस्य स्वार्थ-कारुण्याऽसम्भवेन प्रवृत्तिरपि न भवितुं प्रभवतीति व्यापकाभावेन व्याप्याभावस्य सिद्धेः इत्यत आह—**ते चेति**। स्वार्थकारुण्ये च। जगत्सर्गाद्व्यावर्तमाने—जगतः सर्गात् = सृष्टितः व्यावर्तमाने = अन्यत्र वर्तमाने। प्रेक्षावत्प्रवृत्तिपूर्वकत्वमपि = चेतनप्रवृत्ति-जन्यत्वमपि। व्यावर्तयतः।

---

लिए अचेतन दूध स्वतः निकलने के लिए प्रवृत्तिशील हो जाता है, इसी प्रकार अचेतन प्रकृति भी पुरुष के विमोक्षण = मुक्ति के लिए भोगापवर्ग के अनुकूल स्वतः प्रवृत्त होती है।

( ३ ) **न च क्षीरप्रवृत्तेरिति**। क्षीरप्रवृत्ति = दूध का स्तनों में आ जाना, इसका भी ईश्वराधिष्ठाननिबन्धन रूप से उपपाद्य होने के कारण चेतनत्व रूप साध्य के साथ प्रवृत्तिमत्व = स्वयं गतिशील होना रूप साधन का व्यभिचार नहीं होता, ऐसा कहना युक्तिसंगत नहीं है, क्योंकि तटस्थ प्रेक्षक की प्रवृत्ति स्वार्थ = अपने प्रयोजन तथा करुणा = दूसरे के दुःख के विनाश करने की इच्छा से व्याप्त होती है, जैसा कि कहा गया है—'यत्र यत्र प्रवृत्तिः तत्र तत्र स्वार्थकारुण्ये' यह व्याप्ति है।

संसार की सृष्टि = रचना में उक्त स्वार्थ तथा करुणा में से कोई भी कारण न होने से प्रेक्षावान् = चेतन की प्रवृत्ति से संसार की उत्पत्ति होना व्यतिरेक व्याप्ति के अनुसार सिद्ध नहीं हो पाता।

( ४ ) न ह्यवाप्तसकलेप्सितस्य भगवतो जगत्सृजतः किमप्यभिलषितं भवति। नाऽपि कारुण्यादस्य सर्गे प्रवृत्तिः, प्राक् सर्गाज्जीवानामिन्द्रियशरीरविषयानुत्पत्तौ दुःखाभावेन कस्य प्रहाणेच्छा कारुण्यम् ? सर्गोत्तरकालं दुःखिनोऽवलोक्य कारुण्याभ्युपगमे दुरुत्तरमितरेतराश्रयदूषणम्, कारुण्येन सृष्टिः सृष्ट्या च कारुण्यमिति।

---

( ४ ) एतावता प्रबन्धेन अर्थात् व्यापकाभावेन व्याप्याभावस्य साधनेनेश्वरस्य स्वार्थकारुण्याभावे किं प्रमाणं प्रदर्शितं भवतीत्याशङ्कायामीश्वरे स्वार्थाभावः प्रदर्श्यते—न ह्यवाप्तेत्यादिना। सदाप्राप्तसर्वाभीष्टस्य। जगत्सृजतः=जगतः सृष्टिविधाने प्रवृत्तिशीलस्य। नहि किमपि, अभिलषितम्=स्वार्थम्। भवति=अस्ति। अर्थात् प्राप्तव्यफलात्मकसुखादिस्वरूपं स्वार्थमुद्दिश्य चेतनः प्रवर्तते। नहि भगवतः परमेश्वरस्य पूर्णकामस्य किमप्यभिलषितं ( स्वार्थम् ) अस्ति। अभिलषितस्यैव स्वार्थपदार्थत्वात्, यत्राभिलषितं नास्ति तत्र स्वार्थाऽभावः स्वत एवाऽऽयातः, इति परमेश्वरस्य जगतः सृष्टिविधाने नास्ति कोऽपि स्वार्थः इति भावः।

ईश्वरे कारुण्याभावः प्रदर्श्यते—**नापि कारुण्यादिति**। अस्य=ईश्वरस्य। सर्गे=सृष्टिविधाने। प्रवृत्तिः। नापि भवितुमर्हतीति शेषः। यतः—सर्गात् प्राक्=सृष्टेः पूर्वस्मिन् काले। जीवानाम्=जीवात्मनाम्। इन्द्रियशरीरविषयानुत्पत्तौ श्रोत्रादीन्द्रियाणाम्, स्थूलसूक्ष्मशरीरयोश्च, शब्दस्पर्शादिविषयाणाञ्चाऽनुत्पत्तौ सत्यामित्यर्थः। दुःखाभावेन=तादृशानुत्पत्तिप्रयुक्तस्य दुःखस्याप्यभावेन। कस्येति। प्रतियोगिभूतस्य कस्य दुःखस्य। प्रहाणेच्छा कारुण्यम्=विनाशेच्छारूपं कारुण्यम्। ईश्वरस्य कथं सम्भविष्यतीति भावः। अर्थात् दुःखस्य शरीरेन्द्रियविषयजन्यत्वनियमेन सर्गप्राक्कालावच्छेदेन शरीरेन्द्रियादिरूपदुःखसामग्रीविरहेण जीवानां तदानीं दुःखमेव नास्ति यस्य दुःखस्य विनाशेच्छा( प्रहाणेच्छा )रूपं कारुण्यमीश्वरस्य भवेदिति। सर्गोत्तरकालम्=

---

( ४ ) न ह्यवाप्तसकलेप्सितस्येति। संसार की सृष्टि=उत्पत्ति में सर्वशक्तिसम्पन्न पूर्णकाम एवं सृष्टिकर्ता ईश्वर की कोई कामना नहीं होती, यह सर्वविदित है। ईश्वर के सृष्टि करने में किसी प्रकार का करुणाभाव भी दृष्टिगोचर नहीं होता, क्योंकि सृष्टि करने से पहले प्राणियों के शरीरावयव, इन्द्रिय तथा उनके विषयों की उत्पत्ति न होने से उन्हें दुःख का ज्ञान ही नहीं होता, अतः भगवान् उन प्राणियों के किन दुःखों का विनाश करना चाहेंगे। दुःखों का विनाश करने की इच्छा का नाम ही 'कारुण्य' है।

यदि हम कहें कि सृष्टि करने के बाद दुःखी प्राणियों को देखकर करुणता का उदय होता है, ऐसा स्वीकार करने पर करुणा से सृष्टि होती है और सृष्टि होने पर करुणा नामक मानसिक भाव की उत्पत्ति होती है, ऐसा मानने पर 'अन्योन्याश्रयदोष' दुरुत्तर=असमाधेय हो जायेगा, क्योंकि पूर्व-पूर्व पर के प्रति कारण होता है, कहीं भी पर पूर्व के प्रति कारण होता नहीं देखा जाता।

( ५ ) अपि च करुणया प्रेरित ईश्वरः सुखिन एव जन्तून् सृजेन्न विचित्रान्। 'कर्मवैचित्र्याद्वैचित्र्यम्' इति चेत्, कृतमस्य प्रेक्षावतः कर्माधिष्ठानेन, तदनधिष्ठानमात्रादेवाऽचेतनस्याऽपि कर्मणः प्रवृत्त्यनुपपत्तेस्तत्कार्यशरीरेन्द्रियविषयानुत्पत्तौ दुःखानुत्पत्तेरपि सुकरत्वात्। प्रकृतेस्त्वचेतनायाः प्रवृत्तेर्न

---

सृष्टेरुत्तरस्मिन् काले, अर्थात् यदि च सृष्टेरुत्तरकालावच्छेदेन जीवानां दुःखं विलोक्य तादृशदुःखप्रहाणेच्छारूपं कारुण्यमीश्वरस्य जायते इत्युच्यते; तदा इतरेतराश्रयदूषणम्= अन्योन्याश्रयदोषः। दुरुत्तरम्=अपरिहार्यमेव, स्यात्। तदेव सुस्पष्टयति—कारुण्येनेति। अर्थात् कारुण्येन सृष्टिर्जायते। सृष्टया च=सृष्टिजन्यदुःखदर्शनेन च। कारुण्यं जायते इति अन्योन्याश्रयः।

( ५ ) इतरेतराश्रयदोषस्य बीजाङ्कुरवत् निराकरणसम्भवे सत्यपि ईश्वरे कारुण्यस्वीकारे दोषान्तरमप्याह—**अपि च करुणयेति**। अपि च=यदि च। करुणया। प्रेरित-=प्रेरणाप्राप्तः। ईश्वरः प्रकृतिद्वारा सृष्टिं करोति। तदा, जन्तून्=सर्वान् प्राणिनः। सुखिनः=दुःखाभाववन्तः, अर्थात् सृष्टेरुत्तरकालीनजीवानां दुःखविनाशेच्छया विरचितानां प्राणिनां सुखित्वमेव। सृजेत्=कुर्यात्। 'सुखि एवे'त्यत्र एवपदव्यवच्छेद्यमाह—न विचित्रान्=न सुख-दुःख-मोहादिमतः, सृजेदिति योजनीयम्।

यदि च प्राणिनां कर्मकलापादेव स परमेश्वरः जगद्रचनां करोतीति तु कर्मवैचित्र्यमात्रम्। यथोक्तम्—'कर्मवैचित्र्यात्तद् वैचित्र्यम्' इति। अत्र सिद्धान्ती ब्रूते—**इति चेत् कृतमस्येति**। इति चेत्तर्हि धर्माधर्मरूपादृष्टप्रयोज्याया एव सृष्टिप्रवृत्त्युपपत्तिरास्तां, प्रेक्षावतः=चेतनावतः। अस्य=ईश्वरस्य। **कर्माधिष्ठानेनेति**। कृतम्=अलम्=व्यर्थमित्यर्थः। एवञ्च परकीयदुःखहननेच्छुकः परमेश्वरो जीवकृतकर्माणि नाधितिष्ठेदित्यर्थः। तथा च पुण्यपापात्मकेन कर्मणैव सर्वसामञ्जस्ये प्रकृतेः प्रवृत्त्युपपत्तौ जायमानायां प्रवृत्तिकारणीभूतस्य परमेश्वरस्य सर्वथाऽनङ्गीकार एव श्रेयस्करः, इत्थञ्चेश्वरोऽन्यथासिद्ध एव। ननु परमेश्वरस्यानङ्गीकारे अन्यथासिद्धत्वे वा कर्मणोऽचेतनत्वेनेश्वरानधिष्ठितं कर्म प्रकृतिं प्रवृत्तिशीलां विशालां कथं विधास्यतीति परमेश्वरो

---

( ५ ) **अपि च करुणया इति**। यदि ईश्वर करुणा से प्रेरित होकर सृष्टि करता तो वह केवल सुखी प्राणियों की ही सृष्टि करता, न कि अनेक प्रकार के विचित्र= विविध कष्टों से पीड़ित प्राणियो की रचना करता। जब कि संसार मे सुखी प्राणियों से अधिक दुःखी, कष्ट-पतित एवं अभावग्रस्त प्राणी ही देखे जाते हैं।

'कर्मवैचित्र्याद् वैचित्र्यम्'—यदि हम ऐसा कहे कि ईश्वर ने आरम्भ मे सुखी जगत् की ही सृष्टि की थी, बाद मे अपने-अपने कर्मों की विविधता से ( शुभ अथवा अशुभ कर्मों से ) प्राणी सुखी-दुःखी होते हैं, तब बुद्धिमान् ईश्वर को सृष्टि का अधिष्ठाता मानने की क्या आवश्यकता है ? क्योंकि आपके उक्त कथन के अनुसार उनके अधिष्ठाता=नियामक न होने पर भी अचेतन कर्म स्वतः प्रवृत्त नहीं हो सकेगा, ऐसी स्थिति मे उनसे उत्पन्न होने वाले शरीरों मे इन्द्रियो तथा उनके विषयो की भी

स्वार्थानुग्रहो न वा कारुण्यं प्रयोजकमिति नोक्तदोषप्रसङ्गावतारः। पारार्थ्यमात्रं तु प्रयोजकमुपपद्यते। तस्मात् सुष्ठूक्तम्—'वत्सविवृद्धिनिमित्तम्' इति ॥ ५७ ॥

( १ ) 'स्वार्थ इव' इति दृष्टान्तितम् ( का० ५६-५७ ); तद्विभजते—

**औत्सुक्यनिवृत्त्यर्थं यथा क्रियासु प्रवर्तते लोकः।**
**पुरुषस्य विमोक्षार्थं प्रवर्तते तद्वदव्यक्तम् ॥ ५८ ॥**

( २ ) 'औत्सुक्य' इति। औत्सुक्यमिच्छा, सा खल्विष्यमाणप्राप्तौ

---

नान्यथासिद्धः। ईश्वरस्य कर्मजन्यफलदातृत्वाऽभावेन दोषान्तरमप्याह—तदनधिष्ठानमात्रादिति। तस्य=ईश्वरस्य, अनधिष्ठानमात्रात्=कर्मजन्यफलदातृत्वाभावमात्रात्। अचेतनस्य=जडस्य। कर्मणः। मात्रशब्देनेश्वरस्य यत्नान्तरं न विधेयमिति सूच्यते।

( १ ) 'औत्सुक्यनिवृत्त्यर्थमि'ति कारिकामवतारयति—'स्वार्थ इव इती'त्यादिना। औत्सुक्येति।

अन्वयः—यथा लोकः औत्सुक्यनिवृत्त्यर्थं क्रियासु प्रवर्तते, तद्वत् अव्यक्तं पुरुषस्य विमोक्षार्थं प्रवर्तते।

यथा लोकः=जनः। औत्सुक्यनिवृत्त्यर्थम्=इच्छानिवृत्त्यर्थम्। क्रियासु=कर्मसु। प्रवर्तते=प्रवृत्तिशीलो भवति। तद्वत्। पुरुषस्य विमोक्षार्थम्=पुरुषस्य मुक्तये। अव्यक्तम्=प्रकृतिः। प्रवर्तते।

( २ ) सा=सा चेच्छा। खलु=निश्चयेन। इष्यमाणप्राप्तौ=इच्छाविषयीभूतस्य पदार्थ-

---

उत्पत्ति नहीं हो सकेगी, इस प्रकार जब दुःख की उत्पत्ति ही नहीं होगी तब सुख की प्राप्ति स्वयं ही हो जायेगी। इस दृष्टि से सृष्टि-कार्य में ईश्वर की करुणा का कोई स्थान नहीं रह जाता।

प्रकृतेस्त्वचेतनाया इति। अचेतन प्रकृति की प्रवृत्ति में स्वार्थ एवं करुणा भाव की आवश्यकता नहीं होती है। अतः उक्त दोष यहाँ नहीं होता, अचेतन प्रकृति की प्रवृत्ति का प्रयोजन दूसरे के उपकार के लिए होता है, जो तर्कसंगत तथा उचित है ॥ ५७ ॥

( १ ) 'स्वार्थ इव' इति ( का० ५६ ) 'दृष्टान्तितम्' इति। पूर्व में ५६ कारिका में 'स्वार्थ इव' यह जो दृष्टान्त दिया था, उसको 'औत्सुक्यनिवृत्त्यर्थम्' इत्यादि कारिका से स्पष्ट करते हैं।

कारिकार्थ—जैसे लोक=लोग=मनुष्य औत्सुक्य=इच्छा की निवृत्ति के लिए कार्यों में प्रवृत्त होता है, उसी प्रकार प्रकृति भी पुरुष के मोक्ष के लिए प्रवृत्त होती है।

( २ ) 'औत्सुक्ये'ति। औत्सुक्य नाम है इच्छा का और यह इच्छा इष्यमाण

निवर्तते। इष्यमाणश्च स्वार्थः, इष्टलक्षणत्वात् फलस्य। दार्ष्टान्तिके योजयति—'पुरुषस्य विमोक्षार्थं प्रवर्तते, तद्वदव्यक्तम्' इति ॥ ५८ ॥

( १ ) ननु भवतु पुरुषार्थः प्रकृतेः प्रवर्तकः, निवृत्तिस्तु कुतस्त्या प्रकृतेः? इत्यत आह—

**रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात्।**
**पुरुषस्य तथाऽऽत्मानं प्रकाश्य विनिवर्तते प्रकृतिः ॥ ५९ ॥**

---

स्य प्राप्तौ सत्याम्। निवर्तते। **अयमाशयः**—यस्मिन् काले कस्यापि पुरुषस्य स्वाभीष्टविषयस्य ( पदार्थस्य ) प्राप्त्यर्थमिच्छा जायते तस्मिन् काले तदभीष्टपदार्थस्य प्राप्तये गमनागमनादिरूपक्रियासु लोकः प्रवृत्तो भवति, यस्मिश्च काले स विषयः ( पदार्थः ) प्राप्तो भवति तदनन्तरं स ततो निवर्तते। ननु 'इष्यमाणप्राप्तौ' इत्येतद्वाक्यघटकीभूत इष्यमाणपदार्थः कः? इति जिज्ञासायामाह—**इष्यमाणश्च स्वार्थ** इति। कुतः? तत्राह—**इष्टलक्षणत्वादिति**। इच्छाविषयस्वरूपत्वात्। फलस्य = दार्ष्टान्तिके = लोकप्रवृत्तिरूपोदाहरणेन प्रकृतिपुरुषव्यवहारे इत्यर्थः। अनेनोदाहरणेन प्रकृतेरपि प्रवृत्तिः परार्थैवेति सूचितं भवति ॥ ५८ ॥

( १ ) पुरुषार्थः = भोगापवर्गरूपं पुरुषप्रयोजनमेव। प्रकृतेः=प्रधानस्य। प्रवर्तकः= प्रवृत्तिकारणम्, प्रधानस्य प्रवृत्तिं जनयतीत्यर्थः। निवृत्तिस्तु=प्रधानस्य पुरुषं प्रति पराङ्मुखत्वं तु। कुतस्त्या=किम्प्रयुक्ता। प्रकृतेः=प्रधानस्य? इत्यत आह— **'रङ्गस्य दर्शयित्वा'** इति।

**अन्वयः**—यथा नर्तकी रङ्गस्य ( आत्मानम् ) दर्शयित्वा निवर्तते तथा प्रकृतिः पुरुषस्य आत्मानं प्रकाश्य विनिवर्तते।

यथा नर्तकी = वेश्या। रङ्गस्य = रङ्गो = नाट्यशालारूपः स्थानविशेषः, इत्यश्च

---

= इच्छा के विषय की प्राप्ति हो जाने पर निवृत्त हो जाती है। और इच्छा का विषय होता है स्वार्थ = अपना अर्थ = अपना प्रयोजन।

**'इष्टलक्षणत्वात्'** इति। अर्थात् मनुष्य जिस स्वार्थ अथवा परार्थ में प्रवृत्तिशील होता है, वह स्वार्थ या परार्थ उसका इष्टलक्षण फल कहलाता है। इसे अब दृष्टान्त में योजित करते हैं कि **'पुरुषस्य विमोक्षार्थम्'** इति। अर्थात् जैसे स्वभावतः लोगों की प्रवृत्ति इच्छाविषयीभूत = इष्यमाण फल में होती है, वैसे ही अव्यक्त=प्रकृति की प्रवृत्ति पुरुष के मोक्ष के निमित्त से सर्ग के लिए होती है ॥ ५८ ॥

( १ ) **'ननु भवतु पुरुषार्थः'** इति। यहाँ प्रश्न होता है कि प्रकृति की भोगापवर्गानुकूल सृष्टि के करने में जो प्रवृत्ति होती है, उसमें पुरुषार्थ ही कारण है; यह तो ठीक है, परन्तु उस प्रवृत्तिरूप व्यापार से जो निवृत्ति होती है उसमें क्या कारण है? इसका उत्तर ईश्वरकृष्ण देते हैं—**'रङ्गस्य दर्शयित्वा'** इत्यादि कारिका से।

**कारिकार्थ**—जैसे नृत्य करने वाली नर्तकी रङ्गस्थ पुरुषों को अर्थात् नाट्यस्थान-

(२) 'रङ्गस्य' इति। स्थानेन स्थानिनः पारिषदानुपलक्षयति। 'आत्मानं' शब्दाद्यात्मना पुरुषाद् भेदेन च प्रकाश्येत्यर्थः ॥ ५९ ॥

---

तादृशरङ्गस्थान् पुरुषान् प्रति, अर्थात् नाटयशालायां स्थितान् पुरुषान् प्रतीत्यर्थः, दर्शयित्वा=नृत्यं प्रदर्श्य । नृत्यात्, निवर्तते । तथा प्रकृतिः । आत्मानम्=स्वस्वरूपम् । पुरुषस्य=पुरुषं प्रति । प्रकाश्य=प्रदर्श्य । विनिवर्तते, अर्थात् प्रकृतिः पुरुषं प्रति स्वस्वरूपप्रकाशानन्तरं नहि कमपि अन्यं निवर्तकमपेक्षते यतः प्रकृतेरियं निवृत्तिः स्वाभाविकी । एवञ्च यथा नर्तकी=वेश्या, धनं प्राप्य सुप्रसन्ना सती विविधालङ्कार-हावभावविलासशोभिता सती नृत्यगानादिभिः स्वीयं वास्तविकं स्वरूपं दर्शकानां पुरस्तात् प्रदर्श्य 'दृष्टाऽहमेभिः' 'दृष्टं वा मदीयं स्वरूपमेभिः' इत्येवंरूपेण समाप्त-प्रयोजना सती निवर्तते । एवमेव प्रकृतिरपि पुरुषस्य कृते स्वस्वरूपं प्रदर्श्य 'त्वमन्यो-ऽहञ्चान्या' इत्येतादृशविवेकात्मकबुद्धितो निवर्तते इति तु निष्कर्षः ।

(२) तत्त्वकौमुद्याम्—'रङ्गस्ये'ति उपक्रम्यते—'रङ्गो' नाम नाटयस्थानविशेषः, स चास्ति पृथिव्या एको भागविशेषः, स चाऽचेतनः, तस्य कृते नर्तक्याः स्वीयनृत्य-प्रदर्शनं सर्वथाऽसङ्गतमेवेत्यत आह—'रङ्गस्य' इतीति । रङ्गपदम्, अर्थात् स्थान-विशेषार्थकं रङ्गपदमित्यर्थः । स्थानेन=आधारभूतरङ्गस्थानविशेषप्रतिपादनमुखेनेत्यर्थः । स्थानिनः=स्थाननिष्ठाऽधिकरणतानिरूपिताऽऽधेयताशालिनः । पारिषदान्=नाटय-दर्शनसभायां समुपस्थितान् समुपविष्टान् वा पुरुषविशेषान् इत्यर्थः । उपलक्षयति= लक्षणावृत्त्या बोधयति । अयमाशयः—मुख्यार्थभूतस्य परिषत्स्थानविशेषार्थकस्य रङ्गस्य दर्शनक्रियायामन्वयो नैव भवितुमर्हति, यतस्तस्याऽचेतनत्वात् जडत्वात्, अतोऽत्र कारिकास्थरङ्गपदेन लक्षणया पारिषदाः पुरुषविशेषा एव कथ्यन्ते । परिषत्=सभा, तत्र स्थिताः पुरुषा एव लक्ष्यन्ते इत्यर्थः । प्रधानापरपर्यायभूताया अव्यक्तस्वरूपायाः प्रकृतेः कथं व्यक्तिस्वरूपः प्रकाशो जायते ? इत्याशयेनाह—शब्दाद्यात्मनेति ॥ ५९ ॥

---

स्थित पुरुषों को नृत्यमय स्वरूप सहित अपने को दिखलाकर स्वयं नृत्य से निवृत्त हो जाती है, उसी प्रकार प्रकृति भी पुरुष के समक्ष अपने को दिखलाकर अर्थात् प्रकाश में लाकर हमेशा के लिए निवृत्त हो जाती है, अर्थात् पुरुष को संसारचक्र से सदा के लिए छुटकारा प्रदान कर देती है अर्थात् मुक्त कर देती है ।

(२) 'रङ्गस्य' इति । 'रङ्गस्य' इसका मुख्यतः स्थानविशेष अर्थ है । परन्तु यहाँ रङ्गस्थान से स्थानी=रङ्गस्थान में स्थित, अर्थात् नाटयस्थान-स्थित जो पारिषद्=दर्शक लोग हैं, उन्हीं को लक्षणावृत्ति उपलक्षित=बोध्य किया जा रहा है, अर्थात् उन रङ्गस्थान-स्थित दर्शक लोगों के समक्ष प्रकृति 'आत्मानम्'—अपने को शब्दादि रूप से अर्थात् शब्द-स्पर्शादि विषयों की सृष्टि के रूप से तथा पुरुष से भिन्नात्मक रूप से प्रदर्शित=प्रकट कर निवृत्त हो जाती है । अर्थात् पुरुष को पुरुष-भोगापवर्ग कराकर फिर प्रकृति सदा के लिए निवृत्त हो जाती है ॥ ५९ ॥

( १ ) स्यादेतत्--'प्रवर्ततां प्रकृतिः पुरुषार्थम्। पुरुषादुपकृतात्प्रकृतिर्लप्स्यते कञ्चिदुपकारम्, आज्ञासम्पादनाराधितात् इवाज्ञापयितुर्भुजिष्या। तथा च न परार्थोऽस्या आरम्भः, इत्यत आह—

**नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः।**

**गुणवत्यगुणस्य सतस्तस्याऽर्थमपार्थकं चरति ॥ ६० ॥**

---

( १ ) नानाविधैरिति कारिकां शङ्कामुखेनावतारयति—स्यादेतदिति। प्रवर्तताम् =सम्पादयतु। प्रकृतिः। पुरुषार्थम्=पुरुषस्य कृते भोगापवर्गरूपं परार्थम्। प्रकृतितः भोगापवर्गरूपोपकारप्रदानेन, उपकृतात्=साक्षादुपकृतात्। पुरुषात्। कञ्चित्=कमपि। लप्स्यते=प्राप्स्यति। इव=यथा। भुजिष्या=दासी। आज्ञासम्पादनाराधितात्—आज्ञायाः=स्वामिन आदेशस्य, सम्पादनेन=पालनेन, आराधितात् =प्रसन्नतां गतात्=प्रसन्नीकृतादित्यर्थः। आज्ञापयितुः=स्वामिनः ( हस्तात् किमपि पारितोषिकादिकं प्राप्नोति ) तथा च=तथैव। अस्याः=प्रकृतेः। आरम्भः=सर्गप्रवृत्तिः। परार्थः न=पुरुषमात्रप्रयोजनार्थमेव नास्ति, अपि तु पुरुषेण कृतो यः प्रकृतेः प्रत्युपकाररूपः स्वार्थः, तत्कृतेऽप्ययमारम्भो वेदितव्यः, इत्यत आह—**नानाविधैरुपायैरिति।**

अन्वयः—( प्रकृतिः ) अनुपकारिणः पुंसः नानाविधैः उपायैः उपकारिणी ( भवतीति शेषः )। गुणवती अगुणस्य सतः तस्य अर्थम् अपार्थकं चरति।

प्रकृतिः। अनुपकारिणः=प्रत्युपकाररहितस्य। पुंसः=पुरुषस्य। नानाविधैः= पृथक् पृथग् भेदमापन्नैर्महदहङ्कारेन्द्रियादिभिः। उपायैः=कारणैः परिमाणस्वरूपैः। उपकारिणी=पुरुषस्य कृते भोगापवर्गसम्पादनेन कार्यकारिणी भवति। गुणवती=स्वयं सा सत्त्वादिगुणत्रयवती। ( परन्तु ) अगुणस्य=निर्गुणस्य। सतः=केवलं सत्तावतः, अर्थात् स्वरूपतः केवलं विद्यमानस्येत्यर्थः। तस्य=चेतनस्य पुरुषस्य। अर्थम्=भोगा-

---

( १ ) 'स्यादेतत्' इति। यह सब कथन ठीक है कि प्रकृति भोगापवर्गरूप पुरुषार्थ के लिए अवश्य प्रवृत्त हो, परन्तु उपकृत पुरुष से प्रकृति अपना भी कुछ उपकार= लाभ प्राप्त कर सकेगी? जैसे भुजिष्या=दासी स्वामी की आज्ञा के सम्पादन के आधार पर आराधित=प्रसन्न किये हुए स्वामी से प्रत्युपकार के फलस्वरूप पारितोषिक प्राप्त करती है। इस दृष्टि से उपकृत पुरुष से प्रकृति को अवश्य कुछ प्राप्त होना चाहिए, किन्तु इस प्रकृति का आरम्भ=सर्गप्रवृत्ति केवल परार्थ=पुरुष-प्रयोजन के लिए ही नहीं है। इस शंका के समाधानार्थ ही 'नानाविधैरुपायैः' कारिका उपस्थित करते हैं।

कारिकार्थ—प्रकृति अनुपकारी=प्रत्युपकार न करने वाले पुरुष का भी नानाविध उपायों से उपकारिणी=उपकार ही करती है। कारण कि प्रकृति गुणवती= गुणमयी=त्रिगुणमयी है, इस कारण परोपकार करना ही गुणवान् का कर्तव्य होता है। पुरुष सत्=सत्ताविशिष्ट अवश्य है, वैसे वह अगुण=गुणरहित है, वह क्या दे

( २ ) 'नाना—' इति । यथा गुणवानप्युकार्यपि भृत्यो निर्गुणेऽत एवानुपकारिणि स्वामिनि निष्फलाराधनः, एवमियं प्रकृतिस्तपस्विनी गुणवत्युपकारिण्यनुपकारिणि पुरुषे व्यर्थपरिश्रमेति पुरुषार्थमेव यतते न स्वार्थमिति सिद्धम् ॥ ६० ॥

( १ ) स्यादेतत्—'नर्तकी नृत्यं परिषद्भ्यो दर्शयित्वा निवृत्ताऽपि पुन-

---

पवर्गरूपं प्रयोजनम् । अपार्थकं = निःस्वार्थम् । चरति = सम्पादयति, साधयतीत्यर्थः । स्वरूप एव खल्वयं महात्मनां गुणवतां यदपकारिण्यपि उपकारं कुर्यात् । उक्तञ्च— 'अपकारिषु यः साधुः स साधुः सद्भिरुच्यते' ।

( २ ) तदेवोक्तं तत्त्वकौमुद्याम्—यथेति । गुणवानपि = सेवा-सन्तोषादिकार्यसम्पादने प्रवीणतादिगुणवानपि । उपकार्यपि । भृत्यः = सेवकः । निर्गुणे = सेवाज्ञानादिगुणशून्ये । अत एव । अनुपकारिणि = उपकारकरणेऽसमर्थे, कृतघ्ने इत्यर्थः । स्वामिनि । निष्फलाराधनः—निष्फलं = फलरहितम्, आराधनं = सेवादिकार्यविधानं यस्य स एवम्भूतो भृत्यो भवति । एवम् । इयं प्रकृतिः । तपस्विनी = हीना, दीना सती = अर्थात् पुरुषस्य कृते भोगापवर्गरूपफलात्मिकां तपश्चर्यां कुर्वती सतीत्यर्थः । गुणवती अपि = सत्त्वादि गुणत्रयवती अपि । उपकारिणी अपि = भोगापवर्गात्मकोपकारवती अपि । अनुपकारिणि = उपकारासमर्थे । निर्गुणे = सत्त्वादिगुणत्रयशून्ये । व्यर्थपरिश्रमा = भोगापवर्गप्रदाने स्वार्थशून्यत्वेन निष्फलप्रयासा । ( तावतापि ) पुरुषार्थमेव यतते = पुरुषस्य कृते एव, अर्थम् = प्रयोजनाय, अर्थात् सर्वं परार्थमेवाऽस्याः प्रकृतेः प्रयासः । यतते = सृष्टिं करोति । न स्वार्थम् = नास्ति किमपि स्वीयं प्रयोजनमिति भावः ॥

( १ ) प्रकृतेः सुकुमारतरमित्यादिकारिकामवतारयति—स्यादेतदित्यादिना ।

यथा नर्तकी स्वीयं नृत्यम्, परिषद्भ्यः = परिषदि सन्तिष्ठमानेभ्यः । दर्शयित्वा । निवृत्तापि = स्वीयनृत्यप्रदर्शनान्निवृत्तापि । तद्द्रष्टृकौतूहलात्—तस्य = नृत्यस्य, द्रष्टृणाम् = दर्शकजनानाम्, कौतूहलात् = आश्चर्येण वारं वारं दर्शय नृत्यमित्यादि वदतो जनसमूहस्य तृष्णावशात् = परिषत्स्थितदर्शककौतुकवशादित्यर्थः । प्रवर्तते = पुनरपि

---

सकता है ? इस कारण प्रकृति पुरुष के अर्थ = भोगापवर्गरूप प्रयोजन को अपार्थक = निःस्वार्थ करती है ।

( २ ) 'नाना' इति । जैसे हृदय से परोपकार आदि गुणगणविशिष्ट कोई भृत्य = स्वामीभक्त कर्तव्यबुद्धि से निर्गुण अतएव अनुपकारी स्वामी की निष्फलाराधन अर्थात् फल की इच्छा न रखते हुए सेवा करता है । 'एवमियम्' इति । इसी प्रकार यह तपस्विनी गुणवती तथा परोपकारिणी प्रकृति भी निःस्वार्थरूप से अनुपकारी निर्गुण पुरुष के ऊपर व्यर्थ परिश्रमा होती हुई भी उपकार करती रहती है । अथवा उसके लिए ही प्रयत्न करती रहती है । प्रकृति का अपना कोई स्वार्थ नहीं है, यह सिद्ध = निश्चित है ॥ ६० ॥

( १ ) 'स्यादेतत्—नर्तकी' इति । पूर्वोक्त कथन ठीक है, परन्तु यहाँ प्रश्न यह उपस्थित होता है कि जैसे नर्तकी नाट्यशाला-स्थित पारिषद्य लोगों को नृत्य दिखला-

स्तद्द्रष्टृकौतूहलात् प्रवर्तते यथा, तथा प्रकृतिरपि पुरुषायाऽऽत्मानं दर्शयित्वा निवृत्ताऽपि पुनः प्रवर्त्स्यति' इत्यत आह—

**प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति ।**
**या दृष्टाऽस्मीति पुनर्न दर्शनमुपैति पुरुषस्य ॥ ६१ ॥**

( २ ) 'प्रकृतेः' इति। सुकुमारतरताऽतिपेशलता, पुरुषदर्शनासहिष्णुतेति

---

स्वीयं नृत्यं दर्शयितुं प्रवर्तते। तथा प्रकृतिरपि। पुरुषाय। आत्मानम्=सस्वरूपां स्वाम्। दर्शयित्वा निवृत्तापि। पुनः प्रवर्त्स्यति=नर्तकीवत् पुनः प्रवृत्तिं विधास्यति, अर्थात् विवेकख्यात्यनन्तरमपि पुनः सृष्टिविधाने प्रवर्तमाना भविष्यतीति पुरुषस्य पुनः पुनः संसारापत्तौ सत्यामनिर्मोक्षापत्तिः स्यात्। एवञ्च 'न स पुनरावर्तते' इत्यस्य श्रुतिवाक्यस्य सर्वथा मिथ्यात्वापत्त्या वैयर्थ्यमेव स्यात्, इत्यत आह—**प्रकृतेः सुकुमारतरमिति।**

अन्वयः—प्रकृतेः सुकुमारतरं न किञ्चित् अस्ति, इति मे मतिः भवति, या दृष्टा अस्मि इति पुनः पुरुषस्य दर्शनं न उपैति।

प्रकृतेः=प्रधानात्, प्रकृत्यपेक्षयेत्यर्थः। सुकुमारतरता=अतिपेशलता=परपुरुषदर्शनासहिष्णुता=अत्यन्तमेव कोमलम्=अतिलज्जायुक्तमित्यर्थः। न किञ्चिदस्ति=अन्यत् किमपि वस्तु नास्ति। इति=एवम्भूता। मे=ईश्वरकृष्णस्य। मतिः=विचारधारा। भवति=अस्ति। यतः, या=प्रकृतिः। दृष्टास्मि=परपुरुषेणाऽहं दृष्टास्मि। इति=एवं मनसि निश्चित्य। पुनः। पुरुषस्य, दर्शनं, सा प्रकृतिः, न उपैति=न करोति।

( २ ) तत्त्वकौमुद्याम्—असूर्यम्पश्येति। या सूर्यमपि न पश्यति साऽसूर्यम्पश्या=अत्यन्तमेव पतिव्रता, धृतराष्ट्रपत्नीवत्, सा पुरुषान्तरं कथं द्रक्ष्यसीत्यर्थः। अतिमन्दाक्ष-

---

कर एक बार निवृत्त हो जाने पर भी पुनः उन द्रष्टा=दर्शक लोगों के कौतूहल=साग्रह निवेदन से नृत्य दिखलाने के लिए प्रवृत्त हो जाती है, वैसे ही प्रकृति भी पुरुष के समक्ष भोगापवर्गानुकूल सृष्टि-रचनात्मक अपना स्वरूप प्रदर्शन कर सृष्टि-रचना से निवृत्त होते हुए भी क्या पुनः विवेकज्ञानानन्तर सृष्टि-रचना में प्रवृत्त होगी ? इसके उत्तरस्वरूप 'प्रकृतेः सुकुमारतरम्' इस कारिका को उपस्थित करते हैं।

**कारिकार्थ**—प्रकृति से अधिक सुकुमार अर्थात् लज्जाशील अन्य कोई भी नहीं है, ऐसी मुझ ईश्वरकृष्ण की मति=विचारधारा है। जो कि प्रकृति 'मैं परपुरुष से दृष्ट हूँ, अर्थात् परपुरुष मुझे देख रहा है' ऐसा जानकर पुनः उस पुरुष के दर्शन में अर्थात् देखने में नहीं आती है।

( २ ) 'प्रकृतेः' इति। सुकुमारता का अर्थ है—अतिपेशलता; अर्थात् परपुरुष के दर्शन की असहिष्णुता प्रकृति में है। इसे 'असूर्यम्पश्या' इस दृष्टान्त से स्पष्ट करते

यावत्। असूर्यम्पश्या हि कुलवधूरतिमन्दाक्षमन्थरा प्रमादाद्विगलितशिरोऽञ्चला चेदालोक्यते परपुरुषेण, तदाऽसौ तथा प्रयतते, अप्रमत्तां यथैनां पुरुषान्तराणि न पुनः पश्यन्ति, इति। एवं प्रकृतिरपि कुलवधूतोऽप्यधिका दृष्टा विवेकेन न पुनर्द्रक्ष्यत इत्यर्थः ॥ ६१ ॥

(१) स्यादेतत्—'पुरुषश्चेदगुणोऽपरिणामी, कथमस्य मोक्षः? मुचेर्बन्धन-

---

मन्थरा—अति, मन्दे, अक्षिणीति अतिमन्दाक्षम्=अत्यन्तमेव लज्जावती, तेन मन्थरा=मन्दगमनशालिनी, मन्दगामिनीत्यर्थः। कुलवधूः=सत्कुलीना वधूः। प्रमादात्=अनवधानात्। विगलितशिरोऽञ्चला—विगलितं=दूरीभूतं, शिरसः, अञ्चलं=वस्त्रं=शिरोवस्त्रं यस्याः सा। परपुरुषेण=पतिभिन्नेन पुरुषेण। आलोक्यते=निरीक्ष्यते यदि। तदा असौ=कुलवधूः। तथा प्रयतते=तथा प्रयत्नं करोति, अर्थात् सावधाना भवतीत्यर्थः। यथा। एनाम्=कुलवधूम्। पुनः। पुरुषान्तराणि। न पश्यन्ति=नहि पश्येयुः। दार्ष्टान्तिके योजयति—एवमिति। तथैव। प्रकृतिरपि सर्वपुरुषसाधारणी अपि। कुलवधूतः अपि, अधिका=अत्यन्तमेव शीलवती। विवेकेन=ज्ञानेन=ज्ञानद्वारा=प्रकृतिः जडा, चैतन्यशून्या शुद्धचेतनपुरुषतो भिन्नेत्यादिविवेकज्ञानद्वारेत्यर्थः। दृष्टा=पुरुषेण दृष्टा। न पुनः=न पुनः कदापि। द्रक्ष्यते=विवेकिपुरुषस्य दर्शनविषयतां न गमिष्यति ॥ ६१ ॥

(१) ननु बन्धपदार्थो हि कर्तृत्व-भोक्तृत्वरूपः परिणामः स कथं खलु अपरिणामिनः पुरुषस्य भवितुमर्हति? इत्याशङ्कते—स्यादेतदिति। चेत्। पुरुषः। अगुणः=

---

हैं। अर्थात् जो कुलवधू सूर्य को भी नहीं देख पाती है अर्थात् सूर्य को भी देखने में लज्जा करती है, ऐसी 'अतिमन्दाक्षमन्थरा' अर्थात् परपुरुष को देखने में अत्यन्त मन्द हैं अक्षि=नेत्र जिसके, वह अत्यन्त लज्जाशीलता के कारण 'मन्थरा' मन्दगामिनी एवं प्रमादवश विगलितशिरोऽञ्चला=सिर के ऊपर से हट गया है वस्त्र जिसका, ऐसी परपुरुषदर्शनासहिष्णु कुलवधू को यदि कोई परपुरुष देखता है तो यह कुलवधू ऐसा प्रयत्न करती है कि जिससे 'अप्रमत्ताम्' प्रमादरहित इसे पुरुषान्तर पुनः न देख सके।

'एवम्प्रकृतिरपि' इति। इसी प्रकार प्रकृति भी कुलवधू से भी अधिक अतिपेशल, धार्मिक देखी गई है। जो प्रकृति सकलपुरुष साधारण होती हुई भी 'विवेकेन' अर्थात् विवेकज्ञान से अर्थात् यह प्रकृति जड है, अशुद्ध है, चेतनपुरुष से सर्वथा भिन्न है, इत्याकारक विवेकज्ञानपूर्वक पुरुष यदि प्रकृति को देख लेता है, और प्रकृति को यह ज्ञान हो जाता है कि 'अहं पुरुषेण दृष्टा' मुझे पुरुष ने देख लिया, इसके पश्चात् प्रकृति विवेकज्ञानसम्पन्न पुरुष के समक्ष नहीं आती है और साथ ही वह यह प्रयत्न भी करती है कि पुरुष मुझे पुनः न देख सके ॥ ६१ ॥

(१) 'स्यादेतत्—पुरुषश्चेदगुणः' इति। उपर्युक्त कथन ठीक है, परन्तु प्रश्न यह है कि पुरुष यदि अगुण=निर्गुण है, अपरिणामी है तब इसका मोक्ष कैसे होगा?

विश्लेषार्थत्वात्, सवासनक्लेशकर्माशयानाञ्च बन्धनसमाख्यानां पुरुषेऽपरिणामिन्यसम्भवात् ।

( २ ) अत एवाऽस्य न संसारः प्रेत्यभावापरनामाऽस्ति, निष्क्रियत्वात् । 'तस्मात् पुरुषविमोक्षार्थम्' इति रिक्तं वचः, इतीमां शङ्कामुपसंहारव्याजेनाभ्युपगच्छन्नपाकरोति ।

**तस्मान्न बध्यतेऽद्धा न मुच्यते नाऽपि संसरति कश्चित् ।**
**संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥६२॥**

---

निर्गुणः=गुणातीतः । अपरिणामी=परिणामरहितः=निर्विकारः । तदा । कथम् । अस्य=पुरुषस्य । मोक्षः स्यात् । यतः । मुचेः=मुच्धातोः । बन्धनविश्लेषार्थत्वात्=बन्धनाद् यो विश्लेषः=तिरोभावः=मुक्तेरवाप्तिः, ( छुटकारा प्राप्त करना ) इत्यर्थकत्वात् । बन्धनसमाख्यानाम्=बन्धनशब्दजन्यबोधविषयताश्रयीभूतानाम् । सवासनक्लेशकर्माशयानाम्=तत्र, वासनाः=जन्मजन्मान्तरीणसंस्कारविशेषाः, क्लेशाः=अविद्याऽस्मितारागद्वेषाऽभिनिवेशाः पञ्च, कर्माणि=शुक्लकृष्ण-शुक्लकृष्णरूपाणि, तैः सहिता आशया धर्माऽधर्मरूपास्तेषामित्यर्थः । अपरिणामिनि=निर्विकारे । पुरुषे । असम्भवात्=सर्वथा भवितुमशक्यत्वात् । बन्धविश्लेषात्मिकाया मुक्तेः पुरुषेऽसम्भवादित्यर्थः ।

( २ ) अत एव=पुरुषस्य निर्विकारित्वादेव अस्य=पुरुषस्य । प्रेत्यभावाऽपरनामा—प्रेत्य=मृत्वा, भावः=जन्म, इत्यपराभिधानः, प्रेत्यभावापरनामधेय इत्यर्थः । संसारः—सम्यक् सरति=गच्छतीति व्युत्पत्त्या सिद्धि गतः संसारः, पुरुषस्य नास्ति, यतस्तस्य पुरुषस्य, निष्क्रियत्वात्=क्रियाशून्यत्वात्, अपरिणामिनः क्रियाया अभावादित्यर्थः । तस्मात्=पुरुषनिष्ठसंसारमुक्तिकत्वाभावरूपकारणात् । 'पुरुषस्य विमोक्षार्थम्' ५८ का० उक्तं वचः, सर्वथा रिक्तम्=अप्रामाणिकम् । इतीमां शङ्काम् । उपसंहारव्याजेन=उपसंहार के बहाने से । अभ्युपगच्छन्=पुरुषस्य बन्धनशून्यतां स्वीकुर्वन् । अपाकरोति=निराकरोति—तस्मान्न बध्यते इति ।

---

क्योंकि 'मुचि' धातु का अर्थ है—बन्धन-विश्लेष । और वासना सहित जो क्लेश, कर्म, आशय इन चार की बन्धनसमाख्या=बन्धनसंज्ञा है, जिनका कि अपरिणामी पुरुष में होना सर्वथा असम्भव है ।

( २ ) 'अत एवाऽस्य च' इति । इसीलिए इस पुरुष को प्रेत्यभाव—प्रेत्य=मरकर, भाव=जनन=उत्पत्ति अर्थात् यह प्रेत्यभाव है अपर नाम जिसका, ऐसा संसार भी नहीं होता है, क्योंकि निष्क्रिय होने से पुरुष अपरिणामी है, अतः उसमें क्रिया कदापि सम्भव नहीं है । संसार बन्धनरूप है । वह जब पुरुष के लिए असम्भव है, तब फिर पुरुष का मोक्ष कैसा ? इसलिए 'पुरुषस्य विमोक्षार्थम्' ( कारिका ५८ ) यह कथन सर्वथा रिक्त=गलत है । इस शङ्का को उपसंहार के व्याज से स्वीकार करते हुए 'तस्मान्न बध्यते' इस कारिका से उसका निराकरण करते हैं ।

( ३ ) 'तस्मात्' इति। अद्धा न कश्चित् पुरुषो बध्यते, न कश्चित् संसरति, न कश्चिन्मुच्यते। प्रकृतिरेव तु नानाश्रया सती बध्यते संसरति मुच्यते चेति बन्धमोक्षसंसाराः पुरुषेषूपचर्यन्ते। यथा जयराजयौ भृत्यगतावपि स्वामिन्युपचर्येते, तदाश्रयेण भृत्यानां तद्भागित्वात्, तत्फलस्य च शोकलाभादेः स्वामिनि सम्भवात्। भोगापवर्गयोश्च प्रकृतिगतयोरपि विवेकाग्रहात् पुरुषसम्बन्ध उपपादित इति सर्वं पुष्कलम् ॥ ६२ ॥

---

अन्वयः—तस्मात् अद्धा कश्चित् ( पुरुषः ) न संसरति, न बध्यते, प्रकृतिरेव नानाश्रया सती संसरति, बध्यते, मुच्यते ( च )।

( ३ ) तस्मात्=पुरुषस्य संसारमुक्तिकत्वरूपधर्माभावात्। अद्धा=निश्चयेन। कश्चित् पुरुषः=कोऽपि पुरुषः। न बध्यते=न बन्धनग्रस्तो भवति। न संसरति=न जननमरणरूपं संसारं प्राप्नोति। न मुच्यते=नापि च सांसारिकबन्धनतो मुक्तो भवति। एवं सति बन्धसंसारमोक्षाः कस्याश्रिताः कस्तावदेषामाश्रय इति वक्तव्यम्? तत्राह—**प्रकृतिरेवेति**। नानाश्रया=नानापुरुषाश्रया, अर्थात् इयमेव नानाश्रया प्रकृतिः कमपि पुरुषमाश्रित्य बध्यते, कमपि चाश्रित्य संसारं प्राप्नोति, कञ्चिदाश्रित्य मुच्यते चेति हृदयम्। ननु बन्धनसंसारादयो यदि सन्ति प्रकृतेरेव धर्मास्तर्हि 'पुरुषविमोक्षार्थम्' इति कथनं कथं सङ्गच्छते? तत्राह—**बन्धमोक्षेति**। उपचर्यन्ते=आरोप्यन्ते। अयमेव विषयो दृष्टान्तेनापि समर्थ्यते—**यथेति**। जयपराजयौ—जयः=शत्रुपराङ्मुखीकरणम्, पराजयः=शत्रुतस्तिरस्कारः। भृत्यगतावपि=योद्धृगतावपि। स्वामिनि=राज्ञि। उपचर्येते=स्वामिसेवकभावसम्बन्धमाश्रित्य आरोप्येते। तदाश्रयेण—तयोः=जयपराजययोराश्रयतया। भृत्यानाम्=योद्धृणाम्। तद्भागित्वात्=जयपराजयभागित्वात्। तत्फलस्य=जयपराजयफलस्य। शोकलाभादेः=इष्टवियोगजन्यदुःखरूपस्य पराजय-

---

कारिकार्थ—पुरुष के निर्गुण तथा निर्धर्मक होने से अद्धा=वास्तविक में कोई भी पुरुष न तो बन्धनग्रस्त ही होता है, न मुक्त होता है और न जन्म-मृत्युरूप संसार को ही प्राप्त होता है। तब फिर जन्म-मृत्युरूप संसार, बन्धन तथा मोक्ष किसके धर्म हैं? इसका उत्तर देते हैं—**'नानाश्रया प्रकृतिः'** अर्थात् भोग्य एवं भोगसाधन तथा भोगायतन रूप नाना प्रकारों की आश्रयभूता प्रकृति ही संसरण करती है, वही बन्धनग्रस्त होती है और वही मुक्त होती है।

( ३ ) 'तस्मात्' इति। अद्धा=वास्तविक में पुरुष कोई भी न तो बँधता है, न जन्म-मृत्युस्वरूप संसार को ही प्राप्त होता है और न मुक्त ही होता है। अपितु नानाश्रया प्रकृति ही बँधती है, संसरण करती है तथा मुक्त होती है। बन्धन, मोक्ष, एवं संसार का पुरुष में तो केवल उपचारमात्र है। जैसे युद्ध में जय और पराजय भृत्यगत=योद्धृगत होते हुए भी स्वामी=मालिक=राजा आदि में उपचरित होती हैं। जय-पराजय के साक्षात् आश्रय योद्धा लोग हैं, इस कारण जय-पराजय के भागी भी योद्धा लोग ही हैं। एकमात्र जय-पराजयजन्य सुख-दुःखरूप फल का एवं शोकलाभ

( १ ) नन्ववगतम्—'प्रकृतिगता बन्धसंसारापवर्गाः पुरुषेषु उपचर्यन्ते' इति। किं साधनाः पुनरेते प्रकृतेरित्यत आह—

**रूपैः सप्तभिरेव तु बध्नात्यात्मानमात्मना प्रकृतिः।**
**सैव च पुरुषार्थं प्रति विमोचयत्येकरूपेण ॥ ६३ ॥**

( २ ) 'रूपैः' इति। तत्त्वज्ञानवर्जं 'बध्नाति'—धर्मादिभिः 'सप्तभी रूपः'—भावैरिति। 'पुरुषार्थं प्रति' भोगापवर्गौ प्रति। 'आत्मनाऽऽत्मानम्'

---

फलस्य शोकस्य, इष्टवस्तुप्राप्तिरूपस्य जयफलस्य लाभस्येत्यर्थ.। स्वामिनि सम्भवात्=स्वामिनि सत्त्वात्। विवेकाग्रहात्=प्रकृतिपुरुषयोर्भेदग्रहाऽभावात्। पुरुषसम्बन्धः=अज्ञानजन्यः पुरुषेण सह सम्बन्धः। पुष्कलम्=उपपन्नम् ॥ ६२ ॥

( १ ) 'रूपैः सप्तभिरेव' इत्यादिकारिकां बन्धमोक्षयोर्जिज्ञासयाऽवतारयितुमाह—नन्ववगतमिति। वस्तुतो ज्ञातम्। बन्धसंसारमोक्षाः। प्रकृतिगताः=प्रकृतिनिष्ठाः, अर्थात् प्रकृतिधर्माः सन्ति। पुरुषेषु=पुरुषेषु केवलम्। उपचर्यन्ते=आरोप्यन्ते। एते=बन्धसंसारमोक्षास्त्रयो धर्माः। प्रकृतेः किं साधनाः=प्रकृतेः एतेषां त्रयाणां बन्धमोक्षादिधर्माणां किं साधनम् ( किं निमित्तकारणमस्ति ), यत् साधनमवलम्ब्य प्रकृतिर्बन्धमोक्षसंसारेति धर्मत्रयवती भवतीति जिज्ञासानिवृत्त्यर्थमाह—रूपैः सप्तभिरिति।

अन्वयः—प्रकृतिः पुरुषार्थं प्रति आत्मना एव सप्तभिः रूपैः आत्मानं बध्नाति, सैव च एकरूपेण आत्मानं विमोचयति।

( २ ) प्रकृतिः=प्रधानम्। सप्तरूपेभ्यो वर्ज्यं रूपमाह—तत्त्वज्ञानवर्जम्=तत्त्वज्ञानं वर्जयित्वा। बध्नाति। आत्मानम्=स्वामित्यर्थः। अयमाशयः—प्रकृतिः, तत्त्वज्ञानं वर्जयित्वा भावभूतैर्धर्माऽधर्मादिसप्तभी रूपैरात्मनैवाऽऽत्मानं बध्नाति। पुरुषार्थं प्रति=भोगापवर्गं प्रति, तत्र भोगं प्रति अर्थात् भोगार्थमात्मनाऽऽत्मानं प्रागुक्तसप्तभिर्भावभूत-

---

आदि का अनुभव करने वाला स्वामी राजा होता है। इसी प्रकार भोगापवर्ग प्रकृतिगत होते हुए भी विवेकाग्रहरूप कारणवश पुरुष के साथ भोगापवर्ग का सम्बन्ध उपपादित है। वास्तविक भोगापवर्ग का सम्बन्ध पुरुष से नहीं है ॥ ६२ ॥

( १ ) 'नन्ववगतम्' इति। यह निश्चित जान लिया गया कि बन्धन, संसार तथा अपवर्ग प्रकृतिगत हैं, पुरुष में तो इनका केवल उपचार होता है। परन्तु बन्ध, मोक्ष, एवं संसार का प्रकृति के धर्म होने का साधन क्या है? इसके उत्तरस्वरूप 'रूपैः सप्तभिरेव' यह कारिका को उपस्थापित करते हैं।

कारिकार्थ—प्रकृति धर्म, अधर्म, अज्ञान, वैराग्य, अवैराग्य, ऐश्वर्य, अनैश्वर्य इन सात रूपों=भावों से स्वयं ही अपने को बन्धन में डाल लेती है और वही प्रकृति एकरूप=ज्ञान=तत्त्वज्ञान=विवेकज्ञान से पुरुषार्थ=अपवर्ग के प्रति अपने को मुक्त कर लेती है।

( २ ) 'रूपैः' इति। अर्थात् तत्त्वज्ञान को छोड़कर धर्माधर्म आदि पूर्वोक्त सात भावभूत रूपों से अपने को बांध लेती है और 'पुरुषार्थम्प्रति' अर्थात् अपवर्ग के प्रति

एकरूपेण तत्त्वज्ञानेन विवेकख्यात्या विमोचयति, पुनर्भोगापवर्गौ न करोतीत्यर्थः ॥ ६३ ॥

( १ ) अवगतमीदृशं तत्त्वं, ततः किमित्यत आह—

**एवं तत्त्वाभ्यासान्नाऽस्मि न मे नाऽहमित्यपरिशेषम् ।**
**अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम् ॥ ६४ ॥**

---

रूपैर्बध्नाति । तत्रैव चाऽपवर्गं प्रति अर्थात् अपवर्गार्थं ( मोक्षार्थम् ) आत्मनैवाऽऽत्मानमेकरूपेण तत्त्वज्ञानात्मकेन=पञ्चविंशतितत्त्वज्ञानात्मकेनेत्यर्थः । विमोचयति=सांसारिकबन्धनतो दूरीकरोति । तदपि विवेकख्यात्या=सत्त्वपुरुषान्यताख्यात्या, अर्थात् तत्त्वज्ञानं विवेकख्यातिद्वारैव मुक्तिकारणं भवति न तु साक्षात् तत्कारणं तत् । अत एवोक्तं तत्त्वकौमुद्याम्—'तत्त्वज्ञानेन विवेकख्यात्या विमोचयति' इति । 'पुनर्भोगापवर्गौ न करोति'=तदानीं भोगापवर्गयोः करणसमाप्तेः ॥ ६३ ॥

( १ ) 'एवं तत्त्वाऽभ्यासादि'ति कारिकामवतारयति—अवगतमिति । अवगतम्=ज्ञातम् । ईदृशम्=पूर्वोक्तप्रकारकम् । तत्त्वम्=पञ्चविंशतितत्त्वम् । ततः=तदनन्तरम् । किम्=तत्त्वविषयकं ज्ञानं कथं भवतीति वक्तव्यम् ? यतस्तावज्ज्ञानं प्रति विषयविधया विषयस्य कारणत्वेन कारणस्य तत्त्वात्मकविषयस्य प्राग् विवेचनं नितान्तमावश्यकम्, तच्च जातम्, इदानीं तत्त्वविषयकज्ञानस्वरूपं कार्यं कथं भवतीति निरूप्यते—'एवं तत्त्वाभ्यासादि'ति ।

अन्वयः—एवं तत्त्वाभ्यासात् नास्मि, न मे नाऽहम् इति, अपरिशेषम् अविपर्ययात् विशुद्धं केवलं ज्ञानम् उत्पद्यते ।

---

एकरूप=तत्त्वज्ञान=विवेकख्याति से वही प्रकृति अपने को मुक्त कर लेती है । फिर उस प्रकृति को भोगापवर्ग नहीं होते हैं, अर्थात् वह भोगापवर्ग की ओर नहीं जाती है ॥ ६३ ॥

( १ ) 'अवगतमीदृशम्' इति । इस प्रकार के पच्चीस तत्त्वों को जान लिया, परन्तु उससे क्या लाभ ? इसे 'एवन्तत्त्वाभ्यासात्' इस कारिका से बतलाते हैं ।

कारिकार्थ—तत्त्व=पच्चीस पदार्थतत्त्वात्मक विषय से विषयि=ज्ञान उपलक्षित =कथित=कहा जाता है । अर्थात् पच्चीस पदार्थ तत्त्वों के ज्ञान के अभ्यास से=सर्वदाकालीन बारम्बार के अभ्यास से 'नाऽस्मि' अर्थात् मैं कर्ता नहीं हूँ । अर्थात् मैं अध्यवसाय, अभिमान, संकल्प एवं आलोचन आदि व्यापारकर्तृत्व धर्म वाला नहीं हूँ—यह ज्ञान होता है । और 'न मे' अर्थात् सुख-दुःख आदि भी मेरे धर्म नहीं हैं, क्योंकि मैं निर्धर्मक हूँ । एवं स्वामित्व धर्म भी मेरा नहीं है, अर्थात् मैं स्वामी नहीं हूँ, क्योंकि मैं पुष्करपलासवन्निर्लेप हूँ । इस प्रकार का परिशेषरहित अन्तिम विपर्यय से भिन्न विशुद्ध=प्रमात्मक मिथ्याज्ञानजन्य वासनाओं के उन्मूलन में क्षम, कैवल्य=मोक्ष का प्रयोजकीभूत, विशुद्ध=प्रमात्मक ज्ञान की उत्पत्ति=आविर्भाव हो जाता है ।

( २ ) 'एवम्' इति। तत्त्वेन विषयेण तत्त्वज्ञानमुपलक्षयति। उक्तप्रकार-तत्त्वविषयज्ञानाभ्यासादादरनैरन्तर्यदीर्घकालसेवितात् सत्त्वपुरुषान्यतासाक्षात्कारि ज्ञानमुत्पद्यते, यद्विषयश्चाऽभ्यासस्तद्विषयकमेव साक्षात्कारमुपजनयति, तत्त्वविषयश्चाऽभ्यास इति तत्त्वसाक्षात्कारं जनयति। अत उक्तम्—'विशुद्धम्' इति।

---

( २ ) एवम्=प्रागुपरिप्रदर्शितसमस्तव्यस्तोभयप्रकारेण पूर्वोक्तरीत्या इति तु सरलार्थः। तत्त्वाभ्यासात्=तत्त्वेन=पञ्चविंशतिपदार्थात्मकविषयेण। तत्त्वज्ञानम्=प्रकृत्यादिपञ्चविंशतितत्त्वविषयकं ज्ञानम्। उपलक्षयति=लक्षणया भवति। इत्थञ्च 'तत्त्वाऽभ्यासात्' इत्यस्य 'तत्त्वविषयकज्ञानाऽभ्यासाद्' इत्यर्थो बोध्यः, अर्थात् तत्त्वज्ञानस्याऽभ्यासादिति तु परमार्थः।

तत्त्वकौमुद्याम्—'तत्त्वाऽभ्यासात्' इत्यस्यार्थमाह—उक्तप्रकारेति। उक्तप्रकारः=समस्तव्यस्तरूपात्मकः प्रकारः, येषां प्रकृत्यादिपञ्चविंशतिपदार्थतत्त्वानाम्। तत्त्वविषयज्ञानाऽभ्यासात्—तत्त्वानि=पञ्चविंशतिपदार्थात्मकतत्त्वानि, तानि विषयाणि यस्य तत् एवम्भूतं यज्ज्ञानं तस्य अभ्यासात्=सार्वकालिकप्रयत्नात्। एतादृशज्ञानाऽभ्यासार्थं सेवाऽऽदरो, नैरन्तर्यं, कालदैर्घ्यञ्चेति त्रितयं समुदितं हेतुत्वेनाऽपेक्षितं वर्तते। अन्यतमापाये फलस्याप्यपायः, अपायश्चात्राऽत्यन्ताभावः। आदरनैरन्तर्यदीर्घकालसेवितादिति। इत्यञ्चाऽऽदरेण, नैरन्तर्येण, दीर्घकालेन, च सेवितात्तादृशज्ञानाभ्यासादित्यर्थः। सत्त्वपुरुषान्यतासाक्षात्कारिज्ञानम्—सत्त्वम्=प्रकृतेः परिणामभूतं बुद्धितत्त्वम्, पुरुषश्चेतनः, तयोरन्यता=भेदस्तं साक्षात्करोति=विषयीकरोति यज्ज्ञानम् 'आत्मा प्रकृत्यादिभ्यो भिन्नम्' इत्याकारकम्, तज्ज्ञानम्=विवेकज्ञानम्। उत्पद्यते। यद्विषयश्चाऽभ्यासस्तद्विषयकमेव साक्षात्कारमिति। यस्मिन् विषयेऽभ्यासः क्रियते सोऽभ्यासस्तस्मिन्नेव विषये साक्षात्कारम्=ज्ञानम्। उपजनयति=जनयति। तत्त्वविषयश्चाऽभ्यास

---

( २ ) 'एवम्' इति। तत्त्वेन=पच्चीस सांख्याभिमत तत्त्वात्मक विषय द्वारा तत्त्वज्ञान उपलक्षित=कथित हो रहा है, अर्थात् कहा जा रहा है।

प्रश्न—'तत्त्व' का अर्थ है 'वास्तविक' जो हम पहिले बतला चुके हैं, और उसका अर्थ है प्रकृति एवं पुरुष का पार्थक्य, जो सर्वतोभावेन निश्चित ही है; फिर अभ्यास तो पिष्टपेषण ही हुआ।

उत्तर—इसीलिए 'उपलक्षयति' यह कहा। लक्षणा से 'तत्त्व' शब्द 'तत्त्वज्ञान' रूप अर्थ को कहता है, जो कि तत्त्वज्ञान अभ्याससाध्य है।

'उक्तप्रकारतत्त्वविषयज्ञानाभ्यासात्' इति। अर्थात् उपर्युक्त तत्त्वज्ञान के समादरपूर्वक निरन्तर दीर्घकालपर्यन्त सेवित अभ्यास से सत्त्व=बुद्धि=प्रकृति तथा पुरुष इन दोनों के भेद का साक्षात्कारी ज्ञान उत्पन्न=आविर्भूत होता है। कारण कि जिस विषय का अभ्यास होता है, उस अभ्यास से उसी विषय का साक्षात्कार होता है, अतः तत्त्व के विषय में किया गया अभ्यास तत्त्वसाक्षात्कारी ज्ञान को उत्पन्न करता

( ३ ) कुतो विशुद्धमित्यत आह—'अविपर्ययात्' इति। संशयविपर्ययौ हि ज्ञानस्याऽविशुद्धी, तद्रहितं विशुद्धम्, तदिदमुक्तम्—अविपर्ययात् इति।

( ४ ) नियतमनियततया गृह्णन् संशयोऽपि विपर्ययः, तेन 'अविपर्ययात्' इति सशयविपर्ययाभावो दर्शितः। तत्त्वविषयत्वाच्च संशयविपर्ययाभावः।

---

इति=तत्त्वविषयश्च=प्रकृत्यादिपञ्चविंशतितत्त्वानि विषयाः सन्ति यस्य एवम्भूतो योऽभ्यास इत्यर्थः। तत्त्वसाक्षात्कारम्—तत्त्वानां=प्रकृत्यादिपञ्चविंशतितत्त्वानाम्, साक्षात्कारम्=अविपरीतं यथार्थज्ञानम्। जनयति=उत्पादयति। अतः=तादृशपदार्थतत्त्वविषयकाऽभ्यासावशादेव। उक्तम्=ज्ञाने विशेषणं कथितं ( दत्तं ) विशुद्धम् इति। संशयभ्रमादिशून्यम्।

( ३ ) कुतो विशुद्धम्—कुतः=कस्माद्धेतोः, विशुद्धम्। इत्यत आह—'अविपर्ययात् इति। विपर्ययशब्देनात्र संशयविपर्ययौ गृह्येते, तदेवोक्तं—**संशयविपर्ययौ** इति। ज्ञानस्याऽविशुद्धीति। संशयरूपं ज्ञानमविशुद्धम्, विपर्ययस्वरूपमपि अविशुद्धमेव, विकल्पात्मकमपि अविशुद्धम्। तद्रहितम्=अतः संशयविपर्ययविकल्पभिन्नमेव ज्ञानम्। विशुद्धम्=विशुद्धज्ञानम्, कथ्यते।

( ४ ) 'अविपर्ययात्' इत्युक्तत्वात् संशयज्ञानस्याऽनिराकृतत्वेन संशयात्मकं ज्ञानं कथं विशुद्धमित्यत आह—'**नियतमनियततया**' इति। नियतम्=नियमेन तत्त्ववत्। तत्र नियतत्वं वास्तविकं वस्तुनः स्वरूपम्, न च नियमेन=अव्यभिचारेण तत्त्वावच्छिन्ने वस्तुनि संशयो जायते, किन्तु नियतस्याऽनियतत्वेन ज्ञानमेव संशयः। स च संशयो विपर्ययस्यैव विशेषोऽस्तीति। ननु कुतोऽत्र संशयविपर्ययौ न? इत्याकाङ्क्षायामाह—**तत्त्वविषयत्वाच्चेति**। यस्य वस्तुनो यादृशमस्ति स्वरूपं तस्य वस्तुनस्तेनैव स्वरूपेण परमार्थतो ज्ञाने जाते कुतः संशयविपर्ययौ स्याताम् इति तु निष्कर्षः।

---

है। इसीलिए उस ज्ञान का विशेषण 'विशुद्धम्' दिया। अर्थात् उपर्युक्त प्रकार वाले अभ्यास से साध्य तत्त्वज्ञान सर्वथा विशुद्ध है।

( ३ ) '**कुतो विशुद्धम्**' इति। अर्थात् वह 'तत्त्वज्ञान' विशुद्ध कैसे है? इसका उत्तर देते हैं—'अविपर्ययात्' अर्थात् संशय और विपर्यय ये दोनों ज्ञान को अथवा ज्ञान के स्वरूप को अविशुद्ध=दूषित करने वाले हैं अतः यह उनसे रहित होने के कारण 'विशुद्ध' है। इसीलिए कहा—'**अविपर्ययाद्**' इति।

( ४ ) '**नियतननियततया**' इति। यहाँ शङ्का यह होती है कि 'अविपर्ययात्' यह कहने से तो विपर्ययज्ञान का निषेध हुआ, फिर भी संशयग्रस्त तो वह ज्ञान रह ही गया, विशुद्ध कैसे हुआ? क्योंकि संशय, विपर्यय तथा विकल्प, इन तीन से रहित ही ज्ञान विशुद्ध ज्ञान कहलाता है।

इस शङ्का का समाधान यही किया कि नियत=निश्चित वस्तु का अनियत=अनिश्चित रूप से ग्रहण करना ही तो संशय है; अतः वह संशय भी विपर्यय ही है। अतः 'अविपर्ययात्' इस पद-प्रदान से प्रकृति, पुरुष के भेदसाक्षात्कारी ज्ञान

( ५ ) स्यादेतत्—'उत्पद्यतामीदृशाभ्यासात् तत्त्वज्ञानम्, तथाऽप्यनादिना मिथ्याज्ञानसंस्कारेण मिथ्याज्ञानं जनयितव्यम् । तथा च तन्निबन्धनस्य संसारस्याऽनुच्छेदप्रसङ्ग इत्यत उक्तम्—'केवलम्' इति । विपर्ययेणाऽसम्भिन्नम् ?

( ६ ) यद्यप्यनादिर्विपर्ययवासना, तथाऽपि तत्त्वज्ञानवासनया तत्त्वविषयकसाक्षात्कारमादधत्याऽऽदिमत्याऽपि शक्या समुच्छेत्तुम् । तत्त्वपक्षपातो हि धियां स्वभाव, यदाहुर्बाह्या अपि—

---

( ५ ) ननु तत्त्वज्ञानमिवाऽनादिकालीनसंस्कारवशादज्ञानमपि जन्येतेत्याशङ्कां समाधत्ते—स्यादेतदिति । ईदृशाऽभ्यासात्=प्रागदर्शितात् सेवादर-नैरन्तर्यसत्कारसेवितादभ्यासात् । तत्त्वज्ञानम्=प्रमाज्ञानम् । उत्पद्यताम् । तथापि । अनादिना=प्रवाहरूपेणाऽविच्छिन्नेन । मिथ्याज्ञानसंस्कारेण=अनादिकालीनमिथ्याज्ञानजन्य अतत्त्वविषयकसंस्कारेण । मिथ्याज्ञानम्=अज्ञानमपि । तथा च=इत्थञ्च । तन्निबन्धनस्य =नियमेन मिथ्याज्ञानजन्यस्य । संसारस्य । अनुच्छेदप्रसङ्गः=अनिवृत्तिरूपप्रसङ्गः । अर्थात् संसारस्याऽविच्छिन्नाऽनुवृत्तिः प्रवृत्तिः स्यात् । इत्याशङ्कां निराकर्तुमाह—केवलमिति । विवेकज्ञानपदाभिधेयं वस्तुमात्रम् । विपर्ययेण=मिथ्याज्ञानेन । असम्भिन्नम्=अमिश्रितम् । अर्थात् संशयविपर्ययविकल्परूपमिथ्याज्ञानेभ्यः सर्वथा निरवच्छिन्नम् ।

( ६ ) मिथ्याज्ञानाभावमुपपादयति—यद्यप्यनादिरिति । यद्यपि विपयवासना=मिथ्याज्ञानजन्यसंस्कारस्वरूपवासनाना प्रवाहः । अनादिः । अर्थात् संसारस्याऽनादित्वेन विपयवासनानामपि अनादित्वं सिद्धयति । तथापि । तत्त्वज्ञानवासनया=तत्त्वज्ञानाऽभ्यासजन्यप्रकृतिपुरुषप्रतियोगिकभेदविषयकवासनयेत्यर्थः । तत्त्वविषयकसाक्षात्कारमादधत्याऽऽदिमत्यापि=प्रकृत्यादिपञ्चविंशतिपदार्थतत्त्वविषयक साक्षात्कारम्, आदधत्या=उत्पादयन्त्या=पुनः पुनः आवर्तयन्त्या, अभ्यासजन्यत्वेन दृढीभूतया, आदिम-

---

में संशय तथा विपर्यय इन दोनों का अभाव दिखला दिया । क्योंकि कारिका में पठित 'उत्पद्यते ज्ञानम्' यह ज्ञानतत्त्व=यथार्थ वस्तु विषयक है । अतः संशय एवं विपर्यय इन दोनों का अभाव उस ज्ञान में स्पष्ट है ।

( ५ ) 'स्यादेतत्—उत्पद्यताम्' इति । यह सब ठीक है, परन्तु इस प्रकार के आदरपूर्वक निरन्तर दीर्घकालपर्यन्त सेवित अभ्यास से भले ही तत्त्वज्ञान उत्पन्न हो जाय, तथापि अनादिकालीन मिथ्याज्ञानजन्य संस्कार से तो मिथ्याज्ञान ही उत्पन्न होगा, तब फिर उस मिथ्याज्ञाननिबन्धन=मिथ्याज्ञानजन्य, जन्म-मरण परम्परा स्वरूप संसार का उच्छेद तो नहीं हो सकेगा और उसके अनुच्छेद का प्रसङ्ग=आपत्ति तो फिर भी लगी रह जायेगी । इसके समाधान के लिए कहते हैं—'केवलम्' अर्थात् वह पूर्वोक्त अभ्यास-साध्य ज्ञान संशय, विपर्यय, विकल्प, इन मिथ्याज्ञानों से सर्वथा अमिश्रित=अनवच्छिन्न है ।

( ६ ) 'यद्यप्यनादिः' इति । यद्यपि विपर्ययवासना अर्थात् मिथ्याज्ञानजन्य संस्काररूप वासनाओं का प्रवाह अनादि=अविच्छिन्न है । तथापि तत्त्वविषयक

'निरुपद्रवभूतार्थस्वभावस्य विपर्ययैः।
न वाधो यत्नवत्त्वेऽपि वुद्धेस्तत्पक्षपाततः' ॥ इति।
( प्रमाणवार्तिक ३।२२२ )

---

त्यापि=सम्प्रति सञ्जाततत्त्वज्ञानजन्यया अपि, श्रवणमनननिदिध्यासनजन्यया प्रवलया तयेत्यर्थः। शक्या समुच्छेत्तुम्=अनादिरपि विपर्ययवासना सर्वथा समुच्छेत्तुं शक्या। यतः स्वल्पकालीनोऽपि प्रवलतमः पदार्थतत्त्वज्ञानजन्यसंस्कारप्रवाहः खलु अनादिकालीनमपि संशयविपर्ययादिज्ञानजन्यं संस्कारप्रवाहं विच्छेत्तुं प्रभवतीति भावः। ननु अनादिभूतायाः प्राचीनकालीनाया विपर्ययवासनाया अचिरोत्पन्नया अत्यन्तमेव कोमलया पदार्थतत्त्वज्ञानवासनया कथं शक्यसमुच्छेदता तस्या भवितुमर्हतीति वक्तव्यम्? इत्यत आह—तत्त्वपक्षपातो हीति। हि=यतः। तत्त्वपक्षपातः=पदार्थतत्त्वयाथात्म्यानुरागः एव। धियां=ज्ञानानाम्। स्वभावः। अत्र केचन वौद्धा इमं विषयमित्थं समर्थयन्ति—ज्ञानं वारमेकमपि वस्तुयाथात्म्यं गृह्णन् न ततः कदापि क्वापि कुतोऽपि विमुखीभवति। कदाचित् कथञ्चिद् भ्रमात्मकज्ञानस्य जायमानत्वेऽपि तत्त्वं प्रकाशितमात्रं प्रत्येवानुधावतीति तत्स्वभावः। यथा—'रज्जुं रजततयाऽहमवेदिपम्' इत्यादिविपर्ययस्थले रज्जुखण्डं लम्वायमानकालपर्यन्तं रजतत्वेन विजानतो जनस्य कदाचिद् अग्न्यादिना रज्जुत्वेन प्रमात्मकनिश्चये सति न पुनस्तत्र रज्जुखण्डस्य रजतत्वेन ज्ञानं जायते, वहुलम्वायमानकालीनोऽपि रजतसंस्कारः अचिरकालोद्भूतेन रज्जुसंस्कारेण विलीयते तथाऽचिरोद्भूतयाऽपि तत्त्वज्ञानजन्यसंस्काररूपवासनया मिथ्याज्ञानवासनाया विलयः शक्यते कर्तुम्। अत्रैव वौद्धकारिकायाः शब्दात्मिकायाः प्रामाण्यमप्याह—यथाहुर्वाह्या अपीति। निरुपद्रवेति। वाह्याः=वेदवाह्यमतानुयायिनो वौद्धाः। निरुपद्रवभूतार्थस्वभावस्य=निरुपद्रवः=संशयविपर्ययादिमिथ्याज्ञानशून्यः, अर्थात् निर्दोषः। भूतार्थस्वभावः=यः स्वभावत एव सत्यस्वरूपोऽर्थः, यथा—आत्मा अभावरूपः। तस्य विपर्ययैः=मिथ्याज्ञानैः, यथा आत्माऽस्ति इत्यादि अस्तित्वप्रकारकैर्ज्ञानैः। यत्नवत्त्वेऽपि=चिरकालपर्यन्तम् अभ्यासकरणेन दृढतरसंस्कारमहत्त्वेनापि आत्मनोऽभावरूपं तत्त्वार्थं वाधितुं कृतप्रयत्नत्वेऽपि। न वाधः=आत्माऽभावरूपस्य तत्त्वार्थस्य न वाधो भवितुमर्हति। कथन्न भवतीत्याह—वुद्धेस्तत्पक्षपाततः इति। वुद्धेः। तत्पक्षपाततः=भूतार्थपक्षपातित्वात्।

---

साक्षात्कार को उत्पन्न करने वाली सादि जो तत्त्वज्ञानजन्य वासना से अर्थात् तत्त्वज्ञानाभ्यासजन्य जो प्रकृति-पुरुष का भेद, उस भेदविषयक प्रवल संस्कार से उस अनादि विपर्ययवासना का समुच्छेद सर्वथा सुशक्य है। क्योंकि तत्त्व-पक्षपात अर्थात् तत्त्व की ओर झुकाव होना ही वुद्धि का स्वभाव है।

'यदाहुर्वाह्या अपि' इति। जैसा कि वाह्य=वेद-वाह्य वौद्धों ने कहा भी है कि—निरुपद्रव=संशय-विपर्ययादि उपद्रवशून्य, अतएव भूत=यथाभूत=सत्य अर्थ=वस्तु के स्वभाव=स्वरूप का विपर्ययैः=मिथ्या ज्ञानों से प्रयत्न करने पर भी वाध नहीं हो सकता है, क्योंकि वुद्धि सत्यार्थ-पक्षपाती होती है।

( ७ ) ज्ञानस्वरूपमुक्तम्—'नास्मि, न मे, नाऽहम्' इति। 'नास्मि' इत्यात्मनि क्रियामात्रं निषेधति। यथाऽऽहुः—'कृभ्वस्तयः क्रियासामान्यवचनाः' इति ( महाभाष्य ३।३।१८ )। तथा चाऽध्यवसायाभिमानसङ्कल्पालोचनानि चान्तराणि वाह्याश्च सर्वे व्यापारा आत्मनि प्रतिषिद्धानि बोद्धव्यानि।

( ८ ) यतश्चात्मनि व्यापारावेशो नास्त्यतो 'नाहम्'। अहमिति कर्तृ-

---

अयमाशयः—सत्यवस्तुनः पक्षपातित्वमेव बुद्धेः स्वभावः। सा कदापि मिथ्याभूतवस्तुपक्षं नावलम्बते। इत्थञ्च मानवमानसे नानाविधसांसारिकविषयाणां सत्त्वेऽपि बुद्धिस्तदुन्मुखी नैव जायते, यतस्तेषां विषयाणां मिथ्यात्वात्, अतो मिथ्यासंस्काराणां सा सर्वथाऽभिभवमेव करोतीति। यद्यपि उक्तकारिकाद्वारा बौद्धमतघटकीभूतः नैरात्म्यवादो नाऽत्र अपेक्ष्यते, नापि समाद्रियते, तथापि मिथ्याज्ञानेन तात्त्विकोऽर्थो न वाध्यते इत्यत्रैव तात्पर्यम्। प्रकृते तत्त्वज्ञानजन्यसंस्कारा मिथ्याज्ञानजन्यान् संस्कारान् पराभवन्तीति भावः।

( ७ ) तत्त्वज्ञानस्य स्वरूपमाह—**नास्मि, न मे, नाऽहम् इति**। अत्र 'अस्मि' इति धातुप्रयोगेण 'सत्ता=क्रिया' चेत्युभयं प्रदर्शितं भवति। किन्तु 'नञ्'समभिव्याहारेण, अर्थात् 'नास्मि' इत्यनेन चेतने आत्मनि क्रियामात्रं निषिद्धं भवति। तदेवोक्तं कौमुद्यां—'नास्मि इत्यात्मनि क्रियामात्रं निषेधति' अर्थात् 'नास्मि' इत्यनेन, आत्मनि=चेतने, क्रियामात्रम्, निषेधति=निषिद्धं भवति। अत्र प्राचीनाचार्यचरणानामुक्तेः प्रामाण्यमाह—'कृभ्वस्तयः क्रियासामान्यवचनाः'=कृ-भू-अस्-धातूनां क्रियासामान्यवाचित्वं प्रतीयते। **तथा चाऽध्यवसायाभिमानेति**। इत्थञ्च महत्तत्त्वस्य ( बुद्धेः ) क्रिया=अध्यवसायः, अहङ्कारस्य क्रिया=अभिमानः, मनसः क्रिया=सङ्कल्पः, एवं ज्ञानेन्द्रियाणामालोचनानि, कर्मेन्द्रियाणां वचनाऽऽहरणादीनि सन्ति। आन्तराणि=आभ्यन्तरकरणजन्यव्यापाराः, वाह्याश्च=वाह्यकरणजन्यव्यापाराश्च। आत्मनि=चेतने। प्रतिषिद्धानि बोद्धव्यानि=प्रतिषिद्धानि भवन्ति इति बोद्धव्यम्।

( ८ ) उक्तं कौमुद्यां 'यतश्चात्मनि व्यापारावेशो नास्ति' इत्यतो—'नाहम्' अत्र 'अहम्' इति कर्तृपदम्, तेन कर्तृत्वं बोध्यते, तत्र मिश्रोक्तं प्रमाणमाह—'अहं जानामि, अहं जुहोमि, अहं ददे' इति। तत्र प्रथमे ज्ञानरूपायाः क्रियायाः कर्ता, द्वितीये हवन-

---

( ७ ) 'ज्ञानस्वरूपमुक्तम्' इति। अब तत्त्वज्ञान के स्वरूप को बतलाते हैं—'नास्मि' अर्थात् मैं निष्क्रिय=क्रियाशून्य हूँ, अतः 'नास्मि' इससे आत्मा में क्रियामात्र का निषेध किया गया है। जैसे भाष्यकार का कथन है कि कृ, भू, अस्, ये तीनों क्रियाएँ सामान्यवाची हैं।

'तथा चाध्यवसायेति'। अत्र प्रश्न यह है कि वे कौन-सी क्रियाएँ हैं जिनका आत्मा=पुरुष में निषेध किया गया है। इसका उत्तर देते हैं कि अध्यवसाय, अभिमान, संकल्प, आलोचन, ये आभ्यन्तर एवं वाह्य समस्त क्रियात्मक व्यापार आत्मा में निषिद्ध हैं।

( ८ ) 'यतश्चात्मनि' इति। जिस कारण से आत्मा में क्रियात्मक व्यापार का

पदम्, अहं जानामि, अहं जुहोमि, अहं ददे, इति सर्वत्र कर्त्तुः परामर्शात्। निष्क्रियत्वे च सर्वत्र कर्तृत्वाभावः। ततः सुष्ठूक्तम्—'नाहम्' इति। अत एव 'न मे'। कर्ता हि स्वामितां लभते, तस्मात् कुतः स्वाभाविकी स्वामितेत्यर्थः।

---

क्रियायाः, तृतीये दानक्रियायाः कर्तृरूपोऽर्थः प्रतीयते। इत्थञ्चेत्यादिस्थलेषु सर्वत्र 'अहम्' इति पदेन कर्तुः परामर्शो भवति। तदुक्तम्—**'सर्वत्र कर्तुः परामर्शात्'** इति। 'नास्मि' इत्यनेन च निष्क्रियत्वे बोध्यमाने आत्मनि कर्तृत्वाभावो बोध्यः। तदेवोक्तम्—**'ततः सुष्ठूक्तं—नाहम्'** इति। तथा च यत्र यत्र निष्क्रियत्वं तत्र तत्र कर्तृत्वाभाव इति व्याप्तिबलात् क्रियाशून्ये आत्मनि कर्तृत्वाभावो विज्ञेयः। 'अत एव न मे' इति। अत एव=आत्मनि कर्तृत्वाऽभावादेव। न मे=मे=मम=आत्मनः, न=न किमपि गृहादिकमस्ति, अर्थात् मयि कर्तृत्वाभावाद् गृहादिनिरूपितं स्वामित्वमपि नास्ति। तथा चोक्तं मिश्रेण—**'कर्ता हि स्वामितां लभते'** इति। क्रिया, कर्तृत्वं, स्वामित्वञ्च प्रकृतावेव सन्तिष्ठन्ते नात्मनि इति तु निष्कर्षः।

---

आवेश=सम्बन्ध नहीं है, इसीलिए उसमें कर्तृत्व भी नहीं है; वही कहा है—**'नाऽहम्'** इति। 'अहम्' यह कर्तृपद है, इसी का निषेध आत्मा में है।

**'अहं जानामि'** इति। ये सब 'अहम्' पद की कर्तृता के बोधक प्रमाण हैं, क्योंकि 'अहं जानामि' इससे ज्ञानक्रियाकर्तृत्व का; 'अहं जुहोमि' इससे होमक्रियाकर्तृत्व का तथा 'अहं ददे' इससे दान-कर्तृत्व का इन सभी स्थलों में बोध होता है। जिसमें सर्वत्र 'कर्तृत्व'रूप अर्थ का बोध 'अहं' पद से होता है और आत्मा=पुरुष, में निष्क्रियत्व सिद्ध हो जाने पर सर्वत्र का कर्तृत्वाभाव सुतरां सिद्ध हो जाता है।

**'ततः सुष्ठूक्तम्'** इति। ततः=आत्मा में कर्तृत्व का अभाव होने के कारण ठीक कहा है—'नाहम्' अर्थात् मैं कर्ता नहीं हूँ, इससे आत्मा में कर्तृत्वाभाव स्पष्ट है। अतएव=कर्तृत्वाभावरूप कारणवशादेव अर्थात् आत्मा में कर्तृत्वाभाव के कारण ही कारिका में कथित 'न मे' यह कथन भी ठीक हो जाता है, क्योंकि आत्मा के कर्तृत्वाभाव के कारण ही आत्मा में स्वामित्वाऽभाव भी सिद्ध हो जाता है। कारण कि 'मे' से सर्वत्र स्वामित्वरूप अर्थ ही आता है, जैसे 'मेरा घर' यहाँ पर गृहनिरूपित स्वामित्व 'मे' से आ रहा है। इसी प्रकार 'मेरी भूमि', 'मेरी पत्नी' इत्यादि स्थलों में सर्वत्र 'मे' का स्वामित्व अर्थ स्पष्ट है। परन्तु प्रकृत में तत्त्वाभ्यासी में कर्तृत्वाभाव होने से स्वामित्वाभाव स्पष्ट है।

**'कर्ता हि'** इति। इसी उपर्युक्त विषय को ही स्पष्ट करते हैं कि जो जिसका कर्ता होता है, वही उसका स्वामी होता है, जैसे प्रकृति में कर्तृत्व है तो स्वामित्व भी है।

**'तस्मात् कुतः स्वाभाविकी'** इति। इसलिए पुरुष में कर्तृत्व नहीं तो स्वामित्व भी नहीं, फिर स्वाभाविकी स्वामिता पुरुष में कहाँ से आयेगी?

( ९ ) अथवा 'नाऽस्मि' इति, 'पुरुषोऽस्मि, न प्रसवधर्मा' अप्रसवधर्मत्वाच्चाकर्तृत्वमाह—'नाहम्' इति। अकर्तृत्वाच्च न स्वामितेत्याह—'न मे' इति।

( १० ) ननु 'एतावत्सु ज्ञातेष्वपि कश्चित् कदाचिदज्ञातो विषयोऽस्ति, तदज्ञानं जन्तून् बन्धयिष्यति'। इत्यत आह—'अपरिशेषम्' इति। नास्ति किञ्चिदस्मिन् परिशिष्टं ज्ञातव्यं, यदज्ञानं जन्तून् बन्धयिष्यतीत्यर्थः ॥ ६४ ॥

---

( ९ ) 'नास्मि न मे नाहम्' इत्यस्य व्याख्यान्तमप्याह—नास्मि = ना = पुरुषः, अस्मि, इत्येवम्प्रकारेण पदच्छेदं कृत्वा 'नास्मि' इत्यस्य 'पुरुषोऽस्मि' इत्यर्थः कर्तव्यः। 'न प्रसवधर्मा' इति। नास्ति पुरुषस्य प्रसवरूपो धर्मः, स च प्रकृतेरेवेत्यर्थः। अग्रे सर्वं पूर्ववत्।

( १० ) शङ्कते—अज्ञानेन बन्धो भवति, तर्हि सांख्याभिमतपञ्चविंशतिपदार्थातिरिक्तपदार्थानामपि सत्त्वेन तेषाञ्चाऽज्ञातत्वेनातस्तेषामज्ञानेनापि प्राणिनां बन्धो भवितुमर्हतीत्याशयेन समाधत्ते—ननु एतावत्सु ज्ञातेष्वपीत्यादिना। एतावत्सु='नास्मि, न मे, नाहम्' इत्येवंरूपवत्सु। ज्ञातेष्वपि = ज्ञानविषयीभूतेष्वपि पदार्थेषु। कदाचित् = कालान्तरीयः, देशान्तरीयो वा। कश्चित् = कोऽपि। अज्ञातो विषयः। अस्ति = भवितुमर्हति। तदज्ञानम् = तद्विषयकमज्ञानम्। जन्तून् = प्राणिनः। बन्धयिष्यति = दुःखसाक्षात्काररूपं बन्धनं विधास्यते। इत्यत आह—'अपरिशेषम्' इति। अस्मिन् 'नास्मि, न मे, नाहम्' इत्याकारके तत्त्वज्ञाने जायमाने नहि किमपि वस्तु ज्ञातव्यत्वे नाऽवशिष्यते यद्वस्तुविषयकज्ञानप्राणिनो बध्नीयात्। उक्तञ्च—

'यावत्कर्माणि दीयन्ते यावत्संसारवासना।
यावदिन्द्रियचापल्यं तावत् तत्त्वकथा कुतः॥
यावद्देहाभिमानश्च ममता यावदेव हि।
यावत्प्रयत्नवेगोऽस्ति यावत्सङ्कल्पकल्पना॥
यावन्नो मनसः स्थैर्यं न यावच्छास्त्रचिन्तनम्।
यावन्न गुरुकारुण्यं तावत्तत्त्वकथा कुतः' ॥ ६४ ॥

---

( ९ ) 'अथवा' इति। अथवा 'नास्मि' इनका अर्थान्तर करते है—ना = पुरुषः, अस्मि, अर्थात् 'पुरुषोऽस्मि'—मैं पुरुष हूँ, न कि प्रसवधर्मा हूँ। प्रसवरूप धर्म वाली प्रकृति है अतः वही कर्त्री है, पुरुष वैसा नहीं है अतः कर्ता भी नहीं है; वही कहा है—'नाऽहम्' इति। अर्थात् मैं = पुरुष कर्तृत्व के अभाव वाला हूँ। आत्मा = पुरुष के अकर्ता होने से उसमें स्वामित्व भी नहीं हैं। इसी बात को कहते हैं—'न मे' अर्थात् स्वामित्वाभाव वाला पुरुष है।

( १० ) प्रश्न—'ननु एतावत्सु' इति। अर्थात् इन पच्चीस पदार्थों के ज्ञात होने पर भी यदि कोई देशान्तरीय-कालान्तरीय पदार्थ कदाचित् अज्ञात रह गया तो उस पदार्थ का वह अज्ञान ही समस्त प्राणियों को बन्धन में डाल देगा ?

( १ ) किं पुनरीदृशेन तत्त्वसाक्षात्कारेण सिद्ध्यतीत्यत आह—

**तेन निवृत्तप्रसवामर्थवशात् सप्तरूपविनिवृत्ताम् ।**
**प्रकृतिं पश्यति पुरुषः प्रेक्षकवदवस्थितः स्वच्छः ॥ ६५ ॥**

( २ ) 'तेन' इति । भोगविवेकसाक्षात्कारौ हि प्रकृतेः प्रसोतव्यौ । तौ च प्रसूताविति नास्याः प्रसोतव्यमवशिष्यत इति निवृत्तप्रसवा प्रकृतिः । विवेकज्ञानरूपो योऽर्थस्तस्य वशः—सामर्थ्यम्, तस्मात् ।

---

( १ ) तेन निवृत्तप्रसवामित्यादिकारिकामवतारयितुमाह—किं पुनरिति । ईदृशेन='नास्मि, न मे, नाऽहम्' इत्याकारकेन । तत्त्वसाक्षात्कारेण । किं पुनः सिद्ध्यति ? अर्थात् तत्त्वसाक्षात्कारे जाते पुरुषः किं विधत्ते इति वक्तव्यम् ? इति जिज्ञासायामाह—तेनेति ।

अन्वयः—तेन स्वच्छः प्रेक्षकवदवस्थितः पुरुषः अर्थवशात् सप्तरूपविनिवृत्तां निवृत्तप्रसवां प्रकृतिं पश्यति ।

( २ ) तेन=तत्त्वज्ञानेन अपरिशेषतत्त्वज्ञानेनेत्यर्थः । कारिकास्थ-'निवृत्तप्रसवामि'त्यस्यार्थमाह वाचस्पतिमिश्रः कौमुद्यां—भोगविवेकसाक्षात्कारो इति । प्रकृतेः । प्रसोतव्यौ=प्रादुर्भाव्यौ । भोगविवेकसाक्षात्कारौ—भोगः=सुखदुःखान्यतरसाक्षात्काररूपः, विवेकसाक्षात्कारः=विवेकख्यातिश्चेति द्वावेव स्तः । तौ च=भोगविवेकसाक्षात्कारौ च । प्रसूतौ=द्वावेव जातौ=द्वावेव समुत्पन्नावित्यर्थः । इति=इत्यतः । अस्याः=प्रकृतेः । न=नहि । प्रसोतव्यम्=किमपि समुत्पादयितव्यम् । अवशिष्यते=अवशिष्टं वर्तते । इति=इत्यतः । प्रकृतिः । निवृत्तप्रसवा—निवृत्तः=निवृत्तिं गतः, अर्थात् समाप्तः कृतो भोगापवर्गरूपः प्रसवो यया सेत्यर्थः । प्रकृतिः । प्रधानम् ।

---

इस प्रश्न के उत्तरस्वरूप—'अपरिशेषम्' यह विशेषण दिया । अर्थात् 'नास्मि' 'न मे' 'नाऽहम्' इत्याकारक तत्त्वज्ञान हो जाने पर इस विश्व में कोई भी परिशिष्ट पदार्थ अथवा विषय ज्ञातव्य नहीं रह जाता है, जिसका अज्ञान जन्तु=प्राणियों को बन्धन में डालेगा ॥ ६४ ॥

( १ ) 'किं पुनरीदृशेन' इति । इस प्रकार के पदार्थतत्त्व-साक्षात्कार से फिर क्या सिद्ध होता है ? इसके उत्तरस्वरूप 'तेन निवृत्तप्रसवाम्' इत्यादि कारिका को स्थापित करते हैं ।

कारिकार्थ—तेन=इस तत्त्वज्ञान से स्वस्थ=अपने स्थित तथा एक उदासीन की तरह प्रेक्षक=दर्शक की तरह अवस्थित हुआ पुरुष धर्माधर्मादि सात भावभूत रूपों से विनिवृत्त एवं निवृत्त प्रसववाली अर्थात् फिर नवीन कार्य के उत्पादन से शून्य हुई प्रकृति को केवल देखता रहता है ।

( २ ) भोग और विवेकसाक्षात्कार ये दो ही प्रकृति से प्रसोतव्य=पैदा होने योग्य विषय हैं । वे दोनों प्रसूत हो चुके हैं । अब प्रकृति के लिए प्रसोतव्य अवशिष्ट नहीं रह गया है । इसलिए प्रकृति को उपर्युक्त कारिका में निवृत्तप्रसवा कहा गया है ।

( ३ ) अतत्त्वज्ञानपूर्वकाणि खलु धर्माधर्माज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्याणि। वैराग्यमपि केवलतौष्टिकानामतत्त्वज्ञानपूर्वकमेव। तत्र तत्त्वज्ञानविरोधित्वेनाऽतत्त्वज्ञानमुच्छिनत्ति। कारणनिवृत्त्या च सप्तरूपाणि निवर्तन्ते इति सप्तरूपविनिवृत्ता प्रकृतिः।

---

कारिकास्थस्य 'अर्थवशात्' इत्यस्यार्थमाह—विवेकज्ञानरूप इति। विवेकज्ञानरूपः=भेदसाक्षात्कारात्मकविवेकख्यातिस्वरूपो योऽर्थः=प्रयोजनं, तस्य वशः= सामर्थ्यं, तस्मादित्यर्थः।

( ३ ) कारिकास्थस्य 'सप्तविनिवृत्ताम्' इत्यस्य तात्पर्यं ब्रूते—अतत्त्वज्ञानेत्यादिना। अतत्त्वज्ञानपूर्वकाणि=अतत्त्वज्ञानम्=अज्ञानम्, तत्पूर्वकाणि=तत्कारणकानि। खलु=निश्चयेन। धर्माधर्माऽज्ञानवैराग्याऽवैराग्यैश्वर्याऽनैश्वर्याणि सप्तरूपाणि, सन्ति, अर्थात् एतानि सप्तरूपाणि सर्वथा अज्ञानकारणकानि भवन्ति। अत्रेदं विचार्यते यद् वैराग्यस्य तत्त्वज्ञानावस्थायामपि विद्यमानत्वेन तस्य कथमतत्त्वज्ञानपूर्वकत्वमित्युच्यतामित्यत आह—वैराग्यमपीति। केवलतौष्टिकानाम्=प्रकृतिमहत्कालभाग्यादयः सन्ति विवेकख्यातिप्रदा इति मत्वा ये तुष्यन्ति तेषां केवलतौष्टिकानाम्। वैराग्यमपि। अतत्त्वज्ञानपूर्वकमेव। ये च सन्ति अतौष्टिका मुमुक्षवस्तेषां नये वैराग्यं तत्त्वज्ञानतो जायते इति तद्वैराग्यं तत्त्वज्ञानजन्यमेव। तत्र=अतत्त्वज्ञाने। तत्त्वज्ञानम्। विरोधित्वेन=अतत्त्वज्ञानविरोधित्वेन। अतत्त्वज्ञानम्। उच्छिनत्ति समूलं विनाशयति= समूलमुन्मूलयतीत्यर्थः, दग्धबीजभावं विधत्ते इति भावः। कारणनिवृत्त्या=कारणस्य= अज्ञानापरपर्यायभूतस्याऽतत्त्वज्ञानस्य, निवृत्त्या=नाशेन। सप्तरूपाणि=धर्माधर्माऽज्ञानवैराग्याऽवैराग्यैश्वर्याऽनैश्वर्याणि। निवर्तन्ते=नश्यन्ति। इति=इत्यतः। प्रकृतिः। सप्तरूपविनिवृत्ता। भवतीति शेषः। कारिकायामप्युक्तम्—सप्तरूपविनिवृत्तामिति।

---

'विवेकज्ञानरूपो योऽर्थ' इति। कारिकास्थ 'अर्थवशात्' इसके अर्थ को स्पष्ट करते हैं—विवेकज्ञानरूप जो अर्थ=प्रयोजन, उसका जो वश=सामर्थ्य, उस सामर्थ्य से।

( ३ ) 'अतत्त्वज्ञानपूर्वकाणि' इति। धर्म, अधर्म, अज्ञान, वैराग्य, अवैराग्य, ऐश्वर्य, अनैश्वर्य—ये सातों रूप अतत्त्वज्ञान=अज्ञानपूर्वक ही होते हैं। वैराग्य भी अतत्त्वज्ञान=अज्ञानजन्य ही है, वह भी केवल तौष्टिकों का, अर्थात् जो लोग प्रकृति, महत्तत्त्व, काल एवं भाग्य आदि ही विवेकख्यातिप्रद हैं, ऐसी भावना से ही पूर्ण सन्तुष्ट हो जाते हैं; उन केवल तौष्टिकों का वैराग्य भी अज्ञानजन्य ही है। और जो अतौष्टिक=मुमुक्षु लोग है, उनका 'गुणवैतृष्ण्य' नामक वैराग्य अवश्य तत्त्वज्ञान जन्य है और तत्त्वज्ञान अतत्त्वज्ञान का विरोधी होने के कारण अतत्त्वज्ञान का संस्कार सहित उच्छेद कर देता है।

'कारणनिवृत्त्या' इति। अतत्त्वज्ञानरूप कारण की निवृत्ति से कार्यभूत धर्माधर्म आदि सात रूप सुतरां निवृत्त हो जाते हैं। इसीलिए सात रूपों से सर्वथा विनिवृत्त प्रकृति को माना है।।

( ४ ) 'अवस्थितः' इति निष्क्रियः, 'स्वच्छः' इति रजस्तमोवृत्तिकलुषया बुद्धयाऽसम्भिन्नः। सात्त्विक्या तु बुद्धया तदाऽप्यस्य मनाक् सम्भेदोऽस्त्येव, अन्यथैवम्भूतप्रकृतिदर्शनानुपपत्तेरिति ॥ ६५ ॥

( १ ) "स्यादेतत्—'निवृत्तप्रसवामिति न मृष्यामहे, 'संयोगकृतो हि सर्गः' इत्युक्तम्, योग्यता च संयोगः, भोक्तृत्वयोग्यता च पुरुषस्य चैतन्यम्, भोग्यत्व-

---

( ४ ) अवस्थितः=स्वरूपेण स्थितः=निष्क्रियः। अर्थात् 'पश्यति'क्रियातिरिक्तसमस्तक्रियाशून्यः। 'स्वच्छ' इति पदस्यार्थं ब्रूते—**रजस्तमोवृत्तिकलुषयेति**। रजोगुणस्य याः सन्ति दुःखाद्यात्मिका वृत्तयः, एवं तमोगुणस्य याः सन्ति मोहाद्यात्मिका वृत्तयस्ताभिः कलुषया। बुद्धया=प्रकृतेः परिणामभूतया बुद्धया। असम्भिन्नः=सम्पर्कशून्यः, अत एव भोगजनकप्रतिबिम्बरहितः। सात्त्विक्या=विवेकख्यातिस्वरूपसात्त्विकप्रकाशावच्छिन्नया। बुद्धया। तदापि=विवेकावस्थायामपि। अस्य=पुरुषस्य। मनाक्=स्वल्पः। सम्भेदः=सम्बन्धः। अन्यथा—मनागपि सम्बन्धाऽभावे। एवम्भूतप्रकृतिदर्शनानुपपत्तेः=एवम्भूतायाः प्रकृतेः=प्रागुक्तसप्तरूपविनिवृत्तप्रसवादिरूपप्रकृतेः, दर्शनानुपपत्तेः=दर्शनेति। वृत्तिज्ञानेत्यर्थः। वृत्तिज्ञानस्यापि बुद्धिधर्मत्वेन पुरुषे आरोपानुपपत्तिरिति तु परमार्थः ॥ ६५ ॥

( १ ) 'दृष्टा मया' इत्यादिकारिकामवतारयति—**स्यादेतदिति**। पश्यतु प्रकृतिं पुरुषः, किन्तु 'निवृत्तप्रसवाम्' इति न, मृष्यामहे=सहामहे। संयोगकृतः=प्रकृतिपुरुषयोः संयोगकृतः। सर्गः=सृष्टिः। इत्युक्तम्='पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः' इत्युक्तम् एकविंशतिकारिकायाम्। ननु अत्यन्तभिन्नस्वभावयोः प्रकृतिपुरुषयोः कीदृशः संयोगः? इत्यत आह—**योग्यता चेति**। अर्थात् प्रकृतिपुरुषयोरुभयनिष्ठा

---

( ४ ) **'अवस्थितः'** इति। 'अवस्थित' का अर्थ है निष्क्रिय। निष्क्रिय का प्रकृत में यह अर्थ है कि वह आत्मा=पुरुष 'पश्यति' को ही सार्थक करता है, केवल प्रकृति को देखता मात्र है; और समस्त क्रियाओं से शून्य है।

**'स्वच्छः'** इति। पुरुष स्वच्छ है अर्थात् रजोगुण की दुःखस्वरूपा वृत्ति से तथा तमोगुण की मोहरूपा वृत्ति से अर्थात् तमः-प्रधान वृत्ति से कलुषित हुई बुद्धि से सर्वथा अमिश्रित है।

**'सात्त्विक्या'** इति। इतना अवश्य है कि सात्त्विकी जो बुद्धि है, अर्थात् सात्त्विक प्रकाश से प्रकाशमान बुद्धि के साथ इस पुरुष का सम्बन्ध विवेकावस्था में भी कुछ अवश्य ही बना रहता है, अन्यथा सप्त रूपों से विनिवृत्त प्रकृति को पुरुष देखेगा कैसे? दर्शनानुपपत्ति हो जायेगी ॥ ६५ ॥

( १ ) **'स्यादेतत्'** इति। पूर्वोक्त कथन और सब तो ठीक है, परन्तु प्रकृति को जो 'निवृत्तप्रसवाम्' यह कहा गया, यह हमें कदापि सह्य नहीं है। कारण कि सर्ग प्रकृति-पुरुष के संयोगकृत है, यह ( कारिका २१ में ) कहा जा चुका है। और वह संयोग योग्यतारूप ही। अर्थात् प्रकृति और पुरुष में रहने वाली जो क्रमशः योग्यत्व-

योग्यता च प्रकृतेर्जडत्वं विषयत्वञ्च। न चैतयोरस्ति निवृत्तिः। न च करणीयाभावान्निवृत्तिः, तज्जातीयस्याऽन्यस्य करणीयत्वात्, पुनः पुनः शब्दाद्युपभोगवत्" इत्यत आह—

योग्यता एव संयोगः, संयोगो यथा द्वयोः सन्तिष्ठमानत्वेन द्विष्ठस्तथैव योग्यताया अपि द्विष्ठत्वं बोध्यम्। एका भोक्तृत्वयोग्यता, भोक्तृपुरुषनिष्ठा, सा च पुरुषे चैतन्यरूपा। अपरा च भोग्यत्वयोग्यता भोग्यप्रकृतिनिष्ठा, सा च प्रकृतौ जडत्वरूपा विषयत्वरूपा च। न चैतयोरस्ति = एतयोः = भोक्तृत्वभोग्यत्वयोग्यतयोः जडत्व-चैतन्यरूपयोः, न चास्ति निवृत्तिः। यतः पुरुषस्य चैतन्यस्वरूपतायाः प्रकृतेश्च जडत्वस्वभावतायाः सर्वथाऽविनाशित्वात्। धर्मधर्मिणोर्नित्यत्वेन नाशायोगात्। अतस्तयोः संयोगस्यापि नित्यत्वेन सृष्टेः प्रवाहः सर्वदैव स्यादिति प्रकृतेर्निवृत्तप्रसवात्वं सर्वथाऽनुपपन्नमेव स्यात्।

**न च करणीयाभावादिति।** समुत्पादनीयाभावादित्यर्थः। निवृत्तिः = प्रसवनिवृत्तिः। तेन प्रकृतिः निवृत्तप्रसवा कथ्यते, अतः करणीयान्तरं दर्शयति—**तज्जातीयस्यान्यस्य करणीयत्वादिति।** तज्जातीयस्य = तयोः समुत्पन्नभोगापवर्गयोर्जातीयस्य, अन्यस्य = भोगान्तरस्य अपवर्गान्तरस्य च, करणीयत्वात् = समुत्पादनीयत्वात्। तेन प्रकृतेर्निवृत्तप्रसवत्वमनुपपन्नम्। एतदेव दृष्टान्तेन प्रदर्श्यते—**पुनः पुनः शब्दाद्युपभोगवदिति।** पुनः पुनः = वारंवारम्, शब्दादिविषयाणामुपभोगः पौनःपुन्येनानुभूयते यतः अनन्ताः सन्ति भोगापवर्गाः, तेषां शब्दादीनामुपभोगनिवृत्तिरपि पौनःपुन्येन जायते। एवमेव पुनः अन्यस्य भोगापवर्गयोः प्रवाहस्य जायमानत्वेन नावरुद्धो भवति प्रवाहस्तेन

---

योग्यता तथा भोक्तृत्व-योग्यता तादृश-योग्यता रूप ही वह संयोग है। उसमें भी पुरुष में भोक्तृत्व-योग्यता है, जो चैतन्यरूप है और प्रकृति में भोग्यत्व-योग्यता है, जो जडत्व और विषयत्व रूप है।

**'न चैतयोरस्ति'** इति। संयोगस्वरूप इन दोनों योग्यताओं की निवृत्ति नहीं हो सकती है, क्योंकि योग्यता यावद् द्रव्यभावी है।

यदि यह कहा जाय कि भोगापवर्गरूप कार्य समाप्त हो जाने के कारण ही प्रकृति को 'निवृत्तप्रसवा' मान लिया जाय? तो यह कथन भी ठीक नहीं है। इसी कथन को वाचस्पतिमिश्र आगे स्पष्ट करते है।

**'न च करणीयाभावात्'** इति। अर्थात् और कोई करणीय अवशिष्ट न रह जाने के कारण ही प्रकृति की सर्ग से निवृत्ति हो जाना स्वाभाविक है, यह भी नहीं कह सकते। क्योंकि—**'तज्जातीयस्यान्यस्य'** इति। संसार अपार है, प्राणी अनन्त हैं और भोगापवर्ग भी अपरिसंख्येय हैं। एकपक्षीय भोगापवर्गों के समाप्त हो जाने पर भी पक्षान्तरीय जो उनके सजातीय भोगान्तर एवम् अपवर्गान्तर हैं, वे भी करणीय रूप में अभी शेष हैं। अतः 'निवृत्तप्रसवाम्' यह कथन सर्वथा असत्य है।

**'पुनः पुनः शब्दाद्युपभोगवत्'** इति। इसी को दृष्टान्त द्वारा समझाते हैं कि पुरुष शब्दादि विषयों का उपभोग करने के पश्चात् भी फिर शब्दादि विषयान्तरों का उपभोग

**दृष्टा मयेत्युपेक्षक एको दृष्टाऽहमित्युपरमत्यन्या ।**
**सति संयोगेऽपि तयोः प्रयोजनं नास्ति सर्गस्य ।। ६६ ।।**

( २ ) 'दृष्टा' इति । करोतु नाम पौनःपुन्येन शब्दाद्युपभोगं प्रकृतिर्यया विवेकख्यातिर्न कृता, कृतविवेकख्यातिस्तु शब्दाद्युपभोगं न जनयति । अविवेक-

---

प्रकृतेर्निवृत्तप्रसवत्वं सर्वथाऽनुपपन्नमेवेति भावः । एतामेव शङ्कां निराकर्तुमाह—'**दृष्टा मया**' इत्यादिकारिकाम् ।

अन्वयः—एकः मया दृष्टा इति उपेक्षकः, अन्या अहम् दृष्टा इति उपरमति, तयोः संयोगे सति सर्गस्य प्रयोजनं नास्ति ।

एकः=पुरुषः, मया=पुरुषेण, दृष्टा=प्रकृतिर्दृष्टा, इति=इत्येवम्, (निश्चित्य) उपेक्षकः=उपेक्षां करोति, अन्या=प्रकृतिश्च, अहम्=प्रकृतिः, दृष्टा=पुरुषेण दृष्टा, इति=इति निश्चित्य, उपरमति=विरमति=प्रवृत्तिशून्या भवतीत्यर्थः । इत्थञ्च तयोः=प्रकृतिपुरुषयोः, संयोगे सति=अनादितः वहोः कालात् समागतस्य संयोगस्य सत्त्वेऽपि । सर्गस्य=पुनः सृष्टेः, प्रयोजनम् । नास्ति=स संयोगः पुनर्भोगापवर्गप्रद-सृष्टिप्रयोजनको न भवतीत्यर्थः । तेन प्रकृतेर्निवृत्तप्रसवत्वं सर्वथोपपन्नमेवेति निष्कर्षः ।

( २ ) तत्त्वकौमुद्याम्—**करोतु नाम पौनःपुन्येनेति** । यया=बुद्ध्यात्मकप्रकृत्या । विवेकख्यातिः=पुरुषमात्मानं प्रति विवेकख्यातिः । न । कृता=समुत्पादिता । ( तं पुरुषं प्रति ) प्रकृतिः=प्रधानम् । पौनःपुन्येन=वारं वारम् । शब्दाद्युपभोगं करोतु=कदाचिदुपभोगं कदाचित्तन्निवृत्तिं पुनः कदाचिदुपभोगं कदाचित् पुनर्निवृत्तिं, ततः इत्येवंरूपेणाऽऽवागमनरूपं सर्गं चक्रं प्रवर्तयतु । कृतविवेकख्यातिस्तु—तु=किन्तु, कृत-

---

करता हुआ जैसे देखने में आता है, वैसे ही प्रकृत में भी समझना चाहिए । अतः प्रकृति को निवृत्तप्रसवा कदापि नहीं कह सकते हैं । इस पूर्वपक्ष के निराकरणार्थ इस **'दृष्टा मयेत्युपेक्षकः'** इत्यादि कारिका को उपस्थित करते हैं ।

कारिकार्थ—विवेकशील पुरुष सोचता है कि प्रकृति को मैंने अच्छी प्रकार देख लिया, इसके पश्चात् वह पूर्णरूप से उसकी उपेक्षा कर बैठता है । और इधर पुरुष से अन्या प्रकृति यह सोचती है कि पुरुष ने मुझे देख लिया अर्थात् पुरुष से स्वरूप, स्वभाव तथा सच्चरित्र में वहुभुक्त हो चुकी हूँ, ऐसा विचार कर अत्यन्त लज्जाशील कुलवधू के समान वह प्रकृति सर्वदा के लिए उपरम को प्राप्त हो जाती है और फिर पुरुष के समक्ष नहीं आती । अतः संयोग के रहने पर भी करणीय के अभाव होने से फिर सर्ग=सृष्टि का प्रयोजन नहीं रह जाता है । इसी दृष्टिकोण से उसे निवृत्त-प्रसवा कहा है ।

( २ ) 'दृष्टा' इति । **करोतु नाम पौनःपुन्येन** इति । अर्थात् प्रकृति ने जिस पुरुष के लिए विवेकख्याति प्राप्त या प्रदान नहीं की है, प्रकृति उस पुरुष को शब्दादि विषयोपभोग के प्रति पौनःपुन्येन=वारम्वार प्रवृत्त करती रहे । परन्तु कृत-

ख्यातिनिबन्धनो हि तदुपभोगो निबन्धनाभावे न भवितुमर्हति, अङ्कुर इव बीजाभावे।

( ३ ) प्राकृतान् हि सुखदुःखमोहात्मनः शब्दादींस्तदविवेकात् 'ममैते' इत्यभिमन्यमान आत्मा भुञ्जीत। एवं विवेकख्यातिमपि प्राकृतीमविवेकादेवाऽऽत्मा 'मदर्थेयम्' इति मन्यते।

---

विवेकख्यातिः=यं पुरुषं प्रति विवेकख्यातिः, कृता=समुत्पादिता, प्रकृत्या। सा प्रकृतिः। शब्दाद्युपभोगम्=तं पुरुषं प्रति शब्दाद्युपभोगस्वरूपं सर्गम्। न जनयति=नोत्पादयति। इत्थञ्च अन्वयं कारणसत्त्वे कार्यसत्त्वं प्रदर्श्य, व्यतिरेकं कारणाभावे कार्याभावं प्रदर्शयति—अविवेकेति। अविवेकख्यातिनिबन्धन एव खलु शब्दाद्युपभोगात्मकः संसारः। निबन्धनाभावे च=निमित्ताभावे न तद् भवितुमर्हति=नहि संसारो भवितुं प्रभवति। यथा बीजात्मककारणाभावे अङ्कुरात्मकं कार्यं नहि जायते।

( ३ ) यावदज्ञानं तावद् भोगस्यास्तित्वमिति दर्शयति—प्राकृतानिति। प्रकृतिकृतान् सुखदुःखमोहात्मानः=सुखदुःखमोहस्वरूपान्। शब्दादीन्=शब्दादिविषयान्। तदविवेकात्—तस्याः=प्रकृतेः, अविवेकात्=आत्मभिन्नत्वेन विवेकग्रहाभावात्, प्रकृतिसम्बन्ध्यविवेकग्रहरूपकारणवशादित्यर्थः। ममैते—एते=शब्दादयो विषयाः, मम=ममैव सन्ति, अहमेव एतेषां स्वामीत्यर्थः। इत्यभिमन्यमानः=इत्यभिमानं कुर्वन्। आत्मा=पुरुषः। भुञ्जीत=अज्ञानेन भोगं करोति। एवम्=एवमेव। आत्मा=पुरुषः। प्राकृतीम्=प्रकृतिजन्यामपि। विवेकख्यातिम्=सत्त्वपुरुषान्यताज्ञानरूपाम्। अविवेकादेव=अज्ञानादेव। मदर्थेयम्=इयं विवेकख्यातिः, मदर्था=मत्प्रयोजनरूपअपवर्गार्था। इति मन्यते=इत्यभिमानं कुरुते। इत्थञ्चाऽविवेकावस्थायां पुरुषः यथा प्रकृतिकृतान् शब्दादिविषयान् मदीयत्वेन मन्यते, तथैव प्रकृतिजन्यां विवेकख्यातिमपि स पुरुषः अस्मदुपकारकत्वेन मन्यते इति भावः।

---

विवेकख्याति=जिस पुरुष को प्रकृति विवेकख्याति=विवेकज्ञान प्राप्त करा चुकी है, उस पुरुष को शब्दादि विषयोपभोग का जनन नही करती है, क्योंकि वह विषयोपभोग अविवेकख्याति=अविवेकज्ञान निबन्धन है और अविवेक के अभाव में उपभोग नही हो सकता है। जैसे बीज के अभाव मे अंकुर नही हो सकता है।

( ३ ) 'प्राकृतान् हि' इति। प्रकृति से उत्पन्न होने वाले सुख, दुःख, मोहात्मक शब्दादि विषयों को प्रकृति सम्बन्धी अविवेकज्ञानवश अर्थात् प्रकृति और पुरुष के विवेकग्रहाभावरूप अज्ञान के कारण 'ये सब विषय मेरे है' अर्थात् इन शब्दादि विषयों का सर्वाधिकार-सम्पन्न स्वामी मैं हूँ, इस प्रकार का अभिमान करता हुआ आत्मा=पुरुष उन विषयों का उपभोग करता है।

'एवं विवेकख्यातिमपि' इति। इसी प्रकार प्रकृति की धर्मभूत विवेकख्याति को भी पुरुष अविवेक=अज्ञान के कारण 'मेरे अपवर्गरूप प्रयोजन के लिए ही यह विवेकख्याति है'—ऐसा मानता है।

( ४ ) उत्पन्नविवेकख्यातिस्तु तदसंसर्गाच्छब्दादीन्नोपभोक्तुमर्हति, नापि विवेकख्यातिं प्राकृतिं ततो विविक्त आत्मा स्वार्थमभिमन्तुमर्हति।

( ५ ) पुरुषार्थौ च भोगविवेकौ प्रकृत्यारम्भप्रयोजकावित्यपुरुषार्थौ सन्तौ न प्रकृतिं प्रयोजयतः। तदिदमुक्तम्—'प्रयोजनं नास्ति सर्गस्य' इति। अत्र प्रयुज्यते सर्गे प्रकृतिरनेनेति प्रयोजनम्, तदपुरुषार्थत्वे नास्तीत्यर्थः ॥ ६६ ॥

---

( ४ ) उत्पन्नविवेकख्यातिस्तु=उत्पन्ना विवेकख्यातिर्यस्य पुरुषस्य, एवम्भूतो यः पुरुष इत्यर्थः। तदसंसर्गात्—तस्य=अज्ञानस्य, असंसर्गात्=सम्बन्धाभावात्। शब्दादीन्=विषयान्। नोपभोक्तुम्=न भोक्तुम्। अर्हति=प्रभवति। नापि विवेकख्यातिमिति। नापि च। प्राकृतिम्=प्रकृतिजन्याम्। विवेकख्यातिम्। ततः=प्रकृतितः। विविक्तः=भिन्नः। आत्मा। स्वार्थम्=स्वकीयाम्। अभिमन्तुं=स्वोपकारकत्वेनाङ्गीकर्तुम्। अर्हति।

( ५ ) पुरुषार्थौ=पुरुषप्रयोजनस्वरूपौ। भोगविवेकौ=भोगविवेकज्ञानरूपौ। प्रकृत्यारम्भप्रयोजकौ—प्रकृत्यारम्भे=प्रकृतिकृते, आरम्भे=सर्गे, प्रयोजकौ=कारणीभूतौ। 'भवतः' इति शेषः। इति=इत्यतः। यदा भोगविवेकौ, अपुरुषार्थौ। सन्तौ=भवतः। तदा। न प्रकृतिम्=न प्रकृतिकृतसर्गम्। प्रयोजयतः=प्रयोजकौ भवतः। अत्रार्थे ईश्वरकृष्णस्य सम्मतिमाह—'प्रयोजनं नास्ति सर्गस्य'। प्रयोजनशब्दस्य प्रयोजकत्वमर्थमाह—अत्र प्रयुज्यते इति। 'अत्र' इति पदस्य, अग्रेतनेन 'सर्गे' इति पदेनान्वयः। अर्थात् अत्र सर्गे, प्रयुज्यते=प्रेर्यते, प्रकृतिः, अनेनेति प्रयोजनम्, इयं च

---

( ४ ) 'उत्पन्नविवेकख्यातिस्तु' इति। और जिस पुरुष को विवेकज्ञान उत्पन्न हो गया है, वह पुरुष अविवेक के असंसर्ग=संसर्गाभाव के कारण अर्थात् अविवेक से शून्य हो जाने के कारण शब्दादि विषयों का उपभोग करने में सर्वथा अनर्ह हो जाता है। और प्रकृति से विविक्त=भिन्न=पृथक् हुआ विवेकावस्थापन्न आत्मा=पुरुष प्राकृती=प्रकृतिजन्य विवेकख्याति को ही अपने अपवर्गरूप अर्थ का उपकारक मानता है।

( ५ ) 'पुरुषार्थौ च' इति। और भोग तथा विवेकज्ञानरूप ये दोनों पुरुषार्थ प्रकृतिकृत जो आरम्भ=सर्ग, उसके प्रयोजक बनते हैं, अथवा ये दोनों पुरुषार्थ प्रकृति की प्रवृत्ति के प्रयोजक होते हैं, यह भी कह सकते हैं। तथा भोग और विवेकज्ञान इन दोनों पुरुषार्थों में वर्तमान अवस्था में अपुरुषार्थत्व आ जाने पर ये दोनों प्रकृति को सृष्टि के लिए प्रेरणा प्रदान नहीं करते हैं। वही कहा है—'प्रयोजनं नास्ति सर्गस्य' अर्थात् इन दोनों में अवस्थाविशेष में अपुरुषार्थत्व आ जाने पर सर्ग=सृष्टि रचना का कोई प्रयोजन ही नहीं रह जाता है।

'अत्र प्रयुज्यते' इति। अत्र=सृष्टि रचना में प्रकृति को प्रयुज्यते=प्रेरणा प्राप्त होती है जिस अनागतावस्थ भोगापवर्गरूप पुरुषार्थ से, वही प्रयोजक है और वह प्रयोजकत्व वर्तमानावस्था प्राप्त भोग और विवेक में अपुरुषार्थत्व आ जाने पर नहीं रह जाता है ॥ ६६ ॥

( १ ) स्यादेतत्—'उत्पन्नतत्त्वसाक्षात्कारान्मुक्तश्चेत्तदनन्तरमेव मुक्तस्य तस्य देहपातः स्यादिति कथमदेहः प्रकृतिम्पश्येत् ? अथ तत्त्वज्ञानेऽपि न मुच्यते, कर्मणामप्रक्षीणत्वात् ? तेषां कुतः प्रक्षयः ? 'भोगात्' इति चेत्, हन्त भोः, न तत्त्वज्ञानं मोक्षसाधनम्—इति 'व्यक्ताव्यक्तज्ञविज्ञानजन्मना तत्त्वज्ञानेनापवर्गः' इति रिक्तं वचः ।

---

करणव्युत्पत्तिः । अर्थाद् यादृशपदार्थद्वारा प्रकृतिः सर्गविधाने प्रवृत्ता भवति तदेव प्रयोजनम्=प्रयोजकम् । तत्=प्रयोजकत्वम् । अपुरुषार्थत्वे=अपुरुषार्थावस्थायाम् । नास्ति ॥ ६६ ॥

( १ ) 'सम्यग् ज्ञानाधिगमादि'त्यस्याऽवतरणमाह—स्यादेतदिति । उत्पन्नतत्त्वसाक्षात्कारादिति । उत्पन्नो यस्तत्त्वसाक्षात्कारस्तस्मात्, 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति यजुर्वेदीयश्रुत्याऽऽत्मतत्त्वज्ञानानन्तरमेव मुक्तत्वाभिधानाद् यदि मुक्तस्तर्हि, मुक्तस्य=मोक्षं प्राप्तस्य । तस्य=विवेकिनः । देहपातः स्यात्=देहस्य=स्थूलसूक्ष्मोभयविधशरीरस्य, पातः=वियोगः, स्यात् । इति=इत्यतः पुनः । अदेहः=शरीरवियुक्तः=शरीररहितः सन् चेतनः पुरुषः । कथम् । प्रकृतिम् । पश्येत्=द्रक्ष्यति । एवञ्च 'प्रकृतिं पश्यति पुरुषः प्रेक्षकवदवस्थितः स्वच्छः' इतीश्वरकृष्णकथनमसङ्गतं स्यात् । कर्मणामप्रक्षीणत्वात्=अप्रक्षीणत्वात्=प्रतिबन्धकत्वात् । 'तत्त्वज्ञानेऽपि न मुच्यते पुरुष' इति चेदुच्यते तर्हि, तेषाम्=कर्मणाम्=प्रारब्धकर्मणामित्यर्थः । कुतः=कस्माद्धेतोः । प्रक्षयः=विनाशः, इत्यपि वक्तव्यम् ? 'भोगात्' इति चेत्, हन्त भोः ? न तत्त्वज्ञानं मोक्षसाधनम् इति 'व्यक्ताव्यक्तज्ञविज्ञानजन्मना तत्त्वज्ञानेनापवर्गः'[1] इति, वचः=कथनम् । रिक्तम्=व्यर्थम् ।

---

( १ ) 'स्यादेतत्—उत्पन्नतत्त्वसाक्षात्कारात्' इति । उपर्युक्त कथन ठीक है, परन्तु प्रश्न यह है कि तत्त्वज्ञान के उत्पन्न हो जाने से ही यदि पुरुष मुक्त हो जाता है तब तो मुक्त हो जाने के अनन्तर ही उस मुक्त पुरुष का देहपात=शरीर-विनाश हो जाये, तब फिर कैसे अदेह=शरीररहित पुरुष प्रकृति को देख सकेगा ? और यदि यह कहा जाय कि तत्त्वज्ञान होने पर भी पुरुष मुक्त नहीं हो पाता है, क्योंकि कर्मों के क्षीण न होने से ।

'तेषां कुतः' इति । अर्थात् उन कर्मों का क्षय फिर कैसे होगा ? उत्तर देते हैं—भोग से अर्थात् उन कर्मों का क्षय भोग से होगा । तब तो बड़े खेद की बात है कि तत्त्वज्ञान मोक्ष का साधन नहीं होगा । ऐसा मानने पर 'व्यक्ताव्यक्तज्ञविज्ञानात्' अर्थात् व्यक्त, अव्यक्त और ज्ञ=चेतन पुरुष के भेदज्ञानरूप तत्त्वज्ञान से मोक्ष होता है; यह सांख्य-कथन सर्वथा रिक्त=व्यर्थ=मिथ्या हो जायेगा ।

---

१. अस्यार्थः—व्यक्तः=संसारः, अव्यक्तं=प्रकृतिः, ज्ञः=पुरुषः, तेषां यद् विज्ञानं तादृशविज्ञानजन्येन तत्त्वज्ञानेन अपवर्ग इत्यर्थः ।

( २ ) 'भोगेन चापरिसङ्ख्येयः कर्माशयप्रचयोऽनियतविपाककालः क्षेतव्यः, ततश्चापवर्गप्राप्तिः, इत्यपि मनोरथमात्रम्' इत्यत आह—

**सम्यग्ज्ञानाधिगमाद् धर्मादीनामकारणप्राप्तौ ।**
**तिष्ठति संस्कारवशाच्चक्रभ्रमिवद् धृतशरीरः ।। ६७ ।।**

( ३ ) 'सम्यक्' इति । तत्त्वसाक्षात्कारोदयादेवानादिरप्यनियतविपाककालोऽपि कर्माशयप्रचयो दग्धबीजभावतया न जात्यायुर्भोगलक्षणाय फलाय कल्पते ।

---

( २ ) **भोगेन चेति ।** कर्माशयप्रचयः—कर्मणां=प्रारब्धकर्मणाम्, आशयः=धर्माधर्मौ, प्रचयः=सर्गसर्गान्तरीयोपार्जिताधिक्यम् । अपरिसंख्येयः=परार्धपर्यन्तसंख्यातोऽप्यधिकः, अत एव गणनातीतः । अत एव, अनियतविपाकसमयः—तेषां कर्मणां विपाकसमयः=क्षयकालः, अनियतः=अनिश्चितः । स च कर्मणां विपाकसमयः भोगेन, क्षेतव्यः=नाशनीयः । ततश्च=तदनन्तरञ्च । अपवर्गप्राप्तिर्भविष्यतीति, मनोरथमात्रम्=मनोराज्यमात्रम् । इत्यत आह ईश्वरकृष्णः—**सम्यग् ज्ञानेति ।**

तत्त्वसाक्षात्काराऽव्यवहितोत्तरक्षणे एव विवेकिनः पुरुषस्य मुक्तत्वात् इत्याशङ्क्य सदेहस्य जीवन्मुक्तिं दृष्टान्तादिबलेनोपपादयति—**सम्यग् ज्ञानेति ।**

**अन्वयः**—सम्यग्ज्ञानाधिगमाद् धर्मादीनाम् अकारणप्राप्तौ संस्कारवशात् चक्रभ्रमिवद् धृतशरीरः ( सन् ) तिष्ठति ।

( ३ ) **तत्त्वसाक्षात्कारोदयादेवेति ।** तत्त्वसाक्षात्कारः=सत्त्वपुरुषान्यताज्ञानरूपा विवेकख्यातिः, उदयादेव=तादृगसाक्षात्कारोदयादेव । अनादिरपि । अनियतविपाक-

---

( २ ) **'भोगेन च' इति ।** दूसरी बात यह भी है कि अपरिसंख्येय=असंख्य एवं जिनका विपाककाल=फल-प्राप्ति समय अनियत=अनिश्चित है, ऐसा जो कर्माशयप्रचय=प्रारब्धकर्मजन्य आशयरूप धर्माधर्म का जो सर्गसर्गान्तरीय एवं जन्मजन्मान्तरीयोपार्जित समुदायकूट भोग से क्षेतव्य=नाश्य है, अर्थात् भोग से उसका नाश होकर फिर अपवर्ग=मोक्ष की प्राप्ति होगी, यह सब कथन भी मनोरथमात्र ही होगा । इसके उत्तरस्वरूप 'सम्यग् ज्ञानाधिगमात्' इत्यादि कारिका उपस्थित करते हैं ।

**कारिकार्थ**—सम्यग् ज्ञान=तत्त्वज्ञान=विवेकज्ञान के अधिगम=प्राप्ति से अविद्या के बीजभाव के दग्ध हो जाने से सञ्चित धर्माधर्माऽज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्य भी दग्ध हो जायेंगे । इससे धर्मादि की भोगोत्पत्तिजनकत्वरूप कारणता के समाप्त हो जाने पर संस्कारवश अर्थात् प्रारब्धकर्मजन्य संस्कारों के बल से पुरुष उसी प्रकार शरीर धारण किये रहता है, जैसे दण्ड से भ्रमणशील कुलालचक्र फिर से चालन न करने पर भी पूर्वोत्पन्न वेगाख्य संस्कारवश घूमता ही रहता है ।

( ३ ) **'सम्यग्' इति ।** तत्त्वसाक्षात्कार=विवेकज्ञान के उदय हो जाने से ही अनादि एवम् अनिश्चित विपाककाल वाले कर्माशयप्रचय का बीजभाव दग्ध हो जाने

( ४ ) क्लेशसलिलावसिक्तायां हि बुद्धिभूमौ कर्मबीजान्यङ्कुरं प्रसुवते। तत्त्वज्ञाननिदाघनिपीतसकलक्लेशसलिलायामूषरायां कुतः कर्मबीजानामङ्कुरप्रसवः ? तदिदमुक्तम्—'धर्मादीनामकारणप्राप्तौ' इति। अकारणत्वप्राप्तावित्यर्थः।

---

कालोऽपि—अनियतः=अनिश्चितः, विपाकानां=जात्यायुर्भोगानां, कालो=भविष्यत्कालो, यस्य सः, एवम्भूतो यः, कर्माशयप्रचयः—कर्मणां=सञ्चितकर्मणां, धर्माधर्मस्वरूपाणामाशयानाम्, प्रचयः=समुदायकोटयः, तादृशकर्माशयप्रचयस्य, दग्धबीजभावतया—दग्धः=सर्वथा विनष्टः, बीजभावः=कारणत्वं=फलोत्पादनशक्तिर्वा, यस्य तयेत्यर्थः। न जात्यायुर्भोगलक्षणाय—न, जातिः=मनुष्यत्व-पशुत्व-वृक्षत्वादिरूपा जातिः, आयुः=शतवर्षादिसमयात्मिका, तेषां भोगः=सुखदुःखादिविषयकसाक्षात्काररूपः, स एव लक्षणं=स्वरूपं, यस्य एवम्भूतलक्षणलक्षिताय, फलाय=प्रयोजनाय। न कल्पते=सञ्चितादिकर्मणां तत्त्वसाक्षात्कारेण विनष्टत्वात् न तेषां फलजनकत्वं कल्पते।

( ४ ) एतदेव दृष्टान्तेन सुस्पष्टीक्रियते—क्लेशेति। क्लेशाः 'अविद्यास्मितारागद्वेषाभिनिवेशाः' इति सूत्रोक्ताः पञ्च सन्ति, त एव पञ्च क्लेशाः सलिलानि=जलानि, तैः, अवसिक्तायां=फलोत्पादने सामर्थ्यसमन्वितायाम्, सिञ्चितायामित्यर्थः। बुद्धिभूमौ=बुद्धिरूपायां भूमौ। कर्मबीजानि—कर्माणि=शुक्ल-कृष्ण-शुक्लकृष्णाख्यानि त्रिविधानि, तत् स्वरूपाणि बीजानि=धर्माधर्मादयः सन्त। अङ्कुरं=सृष्टिरूपं=भोगादिरूपं वाऽङ्कुरम्। प्रसुवते=समुत्पादयन्ति। ननु तानि कर्मबीजान्येवोषरायां भूमौ नहि जनयन्ति अङ्कुरानित्याह—तत्त्वज्ञाननिदाघेति। तत्त्वज्ञानमेव निदाघः=ग्रीष्मकालः, तेन निपीतानि=साकल्येन पीतानि, सकलानि=समस्तानि, क्लेशात्मकानि=सलिलानि=जलानि यस्यास्तस्याम्। ऊषरायाम्=फलजननाऽसमर्थायाम् ऊषरभूमौ, बुद्धिभूमौ च। अयमाशयः—जलसेचनरूपकारणाभावे यथा क्षेत्रे पतितं बीजमङ्कुरादिरूपं फलं न जनयति, तथैव तत्त्वज्ञानेनापि धर्मकर्मादिविनाशे तादृशविनाशप्रयुक्ताऽऽगामिजन्मादेर्विनाशः। तथा च एवं स्थिते, कुतः=कस्मात् कारणात्। कर्मबीजानामङ्कुरप्रसवः=कर्मबीजानाम्=कर्मात्मकबीजानां धर्माधर्मादीनाम्। अङ्कुरप्रसवः-

---

के कारण वह कर्माशयप्रचय जाति, आयु, भोग स्वरूप फलोत्पादन में सर्वथा असमर्थ हो जाते हैं। इसी बात को दृष्टान्त द्वारा पुष्ट करते है।

( ४ ) 'क्लेशसलिलावसिक्तायाम्' इति। अविद्या, अस्मिता, राग, द्वेष, अभिनिवेश, इन पांच क्लेशरूपी जल से सिञ्चित बुद्धिरूप भूमि-क्षेत्र में कर्मरूपी बीज सृष्टिरूप अंकुर को उत्पन्न करते है। किन्तु तत्त्वज्ञानरूपी निदाघ से अथवा तत्त्वज्ञानजन्य विवेकज्ञानरूपी निदाघ=गर्मी से निपीत=शोषित=सुखाया गया जो सकल अविद्या, अस्मिता आदि पञ्चविध क्लेशरूप सलिल, उस जलरूपी ऊषर भूमि में कर्मरूपी बीज कैसे सृष्टिरूप अंकुर को उत्पन्न कर सकेंगे ? यही कहा है—

( ५ ) उत्पन्नतत्त्वज्ञानोऽपि च संस्कारवशात् तिष्ठति, यथोपरतेऽपि कुलालव्यापारे चक्रं वेगाख्यसंस्कारवशाद् भ्रमत् तिष्ठति । कालपरिपाकवशात् तूपरते संस्कारे निष्क्रियं भवति ।

---

अङ्कुरस्य = सर्गस्य, प्रसवः = उत्पत्तिः । न हि भवितुमर्हति । तदेवोक्तं कारिकायाम्— 'सम्यग् ज्ञानाधिगमाद् धर्मादीनामकारणप्राप्तौ' इति । तथा च तत्त्वज्ञानमहिम्ना 'ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन' ? इत्यादि भगवत्कथनेन धर्मादिसंसारनिमित्तानां समुत्पादनशक्तौ सर्वथा विनाशितायां तेषां निमित्तानां जगदकारणत्वप्राप्तौ सत्यां वर्तमानकालीनशरीरारम्भकाणां प्रारब्धकर्मणां भोगेन विनष्टत्वात् किञ्चित्कालपर्यन्तं सन्तिष्ठमानचक्रभ्रमणन्यायेन किञ्चित्कालं शरीरेण सहैव पुरुषः सन्तिष्ठते, अत एव 'प्रकृतिं पश्यति पुरुषः' ( ६५ का० ) इत्याद्युक्तिरपि साधु सङ्गच्छते । अतः प्रकृतिदर्शनक्षणपर्यन्तं शरीरसत्त्वं नितान्तमावश्यकम्, अन्यथा निष्क्रियेण निर्विकारेण पुरुषेण शरीरं विना कथं प्रकृतेर्दर्शनं कर्तुं शक्यते इति तु निष्कर्षः ।

( ५ ) इत्थञ्चोत्पन्नतत्त्वज्ञानोऽपि पुरुषः, **संस्कारवशादिति** । अविद्यारूपसंस्कारवशादित्यर्थः । तिष्ठति = शरीरस्तिष्ठतीत्यर्थः । अत्रानुरूपदृष्टान्तमाह—**यथोपरतेऽपीति** । उपरतेऽपि = निवृत्तेऽपि । कुलालव्यापारे—कुलालस्य=कुम्हारपदवाच्यस्य, व्यापारे= चक्रभ्रमणात्मके व्यापारे । चक्रम् = दण्डजन्याया भ्रमेराश्रयीभूतं द्रव्यम् । वेगाख्यसंस्कारवशात् = वेगाख्यसंस्काररूपकारणवशात् । भ्रमत् = भ्रमिरूपव्यापारवत् । यथा तिष्ठति । कालपरिपाकवशात्—कालपरिपाकः=समयप्राप्तिः, तद्वशात्तु । उपरते=नष्टे । संस्कारे = वेगाख्यसंस्कारे । निष्क्रियं भवति = भ्रमिरूपव्यापारशून्यं भवति । चक्रम् इति शेषः ।

---

**'धर्मादीनामकारणप्राप्तौ'** इति । अर्थात् विवेकज्ञान-सम्पन्न पुरुष के धर्मादि अपने सुख-दुःखादि कार्यों के कारण नहीं रह जाते हैं, क्योंकि विवेकज्ञान धर्मादि की कार्योत्पादन शक्ति को सर्वथा नष्ट कर देता है ।

( ५ ) **'उत्पन्नतत्त्वज्ञानोऽपि च'** इति । अर्थात् तत्त्वज्ञान के उत्पन्न हो जाने पर विवेकज्ञान-सम्पन्न पुरुष का शरीर उसके प्रारब्ध कर्मों के संस्कारों के बल से कुछ काल तक स्थित रहता है । जैसे दण्ड द्वारा समुत्पादित कुलालचक्र में भ्रमिरूप जो व्यापार है, उसके उपरत = समाप्त हो जाने पर भी वेगाख्यसंस्कारवश वह चक्र कुछ काल तक घूमता रहता है ।

**'कालपरिपाकवशात्'** इति । अर्थात् कालपरिपाकात्मक समय विशेष प्राप्त करके ही वह चाक का वेगाख्य संस्कार उपरत = समाप्त हो जाता है और उपरत होने पर वह चक्र = चाक निष्क्रिय = भ्रमिशून्य हो जाता है ।

प्रश्न—'तिष्ठति संस्कारवशात् चक्रभ्रमिवद् धृतशरीरः' यह कारिका में कहा जा चुका है । अब प्रष्टव्य यह है कि जैसे चक्र-स्थिति में वेगाख्यसंस्कार कारण है, वैसे ही शरीरधारणात्मक-स्थिति में कौन संस्कार है ?

( ६ ) शरीरस्थितौ च प्रारब्धकर्मपरिपाकौ धर्माधर्मौ संस्कारौ, तौ च भोगेन क्षेतव्यौ। तथा चाऽनुश्रूयते—'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये' इति ( छां० ६।१४।२ )। प्रक्षीयमाणाविद्यासंस्कारावशेषश्च संस्कारस्तद्वशात्—तत्सामर्थ्याद् धृतशरीरस्तिष्ठति ॥ ६७ ॥

( १ ) स्यादेतत्—'यदि संस्कारशेषादपि धृतशरीरस्तथाऽपि कदाऽस्य मोक्षो भविष्यति ?' इत्यत आह—

---

( ६ ) ननु 'तिष्ठति संस्कारवशाच्चक्रभ्रमिवद् धृतशरीर.' इत्युक्तं तत्र शरीरधारणे कः संस्कार उपयोगी भवितुमर्हतीत्यत्राह—**शरीरस्थितौ चेति**। शरीरस्य=स्थूलसूक्ष्मोभयविधशरीरस्य, स्थितौ सत्यामेव। सूक्ष्मशरीरे स्थितौ=वर्तमानौ। प्रारब्धकर्मपरिपाकौ—प्रारब्धकर्मणां परिपाकः=समुपभोगः, भवति, याभ्याम्, एवम्भूतौ यौ धर्माधर्मौ=अदृष्टपदाभिधेयौ। संस्कारौ=बीजरूपत्वात्, शरीरस्थितिपूरकत्वाच्च धर्माधर्मौ संस्कारौ, तौ च=धर्माधर्मात्मकौ संस्कारौ। भोगेन=सुखदु.खान्यतरसाक्षात्काररूपेण। क्षेतव्यौ=विनाशितव्यौ। तथा च श्रुतिः—'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये' इति ( छां० ६।१४।२ )। तस्य=विवेकशालिनः पुरुषस्य, तावदेव=तावत्कालमेव, चिरम्=कालविलम्बः, यावत्=यावत्कालम्, न विमोक्ष्ये=शरीराद् विमुक्तो न जायते, अथ=तदनन्तरम् अर्थात् शरीरतो विमुक्तौ सत्याम्, सम्पत्स्ये=मोक्षम्प्राप्नोति। **प्रक्षीयमाणाऽविद्यासंस्कारावशेषश्चेति**। प्रक्षीयमाणाः=विवेकज्ञानेन प्रक्षयं प्राप्नुवाना ये अविद्यायाः संस्काराः=धर्माऽधर्मरूपाः, धर्माऽधर्मयोरपि संस्काररूपतया स्वीकृतत्वात्, तत्र नाशं गताः सञ्चिताः, ये च अवशेषतया सन्ति सन्तिष्ठमानाः न च विनश्यन्ति ते प्रारब्धसंस्काराः कथ्यन्ते, तेषां संस्काराणामेव सामर्थ्याद् धृतशरीरः सन्तिष्ठते इति तु परमार्थः ॥ ६७ ॥

( १ ) 'प्राप्ते शरीरभेदे' इत्यादिकारिकाया अवतरणमाह—**स्यादेतदिति**। स्पष्ट-

---

( ६ ) **उत्तर**—'**शरीरस्थितौ च**' इति। शरीरधारणात्मक स्थिति में प्रारब्धकर्मजन्य जो एतच्छरीरावच्छेदेन होने वाला फलोपभोगरूप परिपाक, वह सम्पन्न होता है जिनसे, ऐसे धर्माधर्म ही संस्कार माने गये है और वे धर्माधर्मरूपी संस्कार भोग के द्वारा ही नाश्य है। इस विषय में श्रुति का प्रामाण्य भी उपस्थापित करते हैं—'**तस्य तावदेव**' इति। अर्थात् विवेकी पुरुष को मोक्ष प्राप्त करने में अर्थात् मुक्त होने में तभी तक देर है, जब तक वह शरीरपात नहीं करता है। फिर शरीरपात के पश्चात् सम्पत्स्ये='सत्'=ब्रह्म को प्राप्त कर लेता है, अर्थात् मोक्ष को प्राप्त हो जाता है।

'**प्रक्षीयमाणाऽविद्याविशेषश्च**' इति। अर्थात् विवेकज्ञान के द्वारा प्रक्षीयमाण=नष्ट हुई जो अविद्या, वह अविद्याविशेष ही संस्कार है; जिस संस्काररूपी बल से=संस्कार-सामर्थ्य से पुरुष शरीर धारण किये रहता है। इसी की संज्ञा जीवन्मुक्त है, और यही जीवन्मुक्तावस्था है ॥ ६७ ॥

( १ ) '**स्यादेतत् यदि संस्कारशेषादपि**' इति। अर्थात् पूर्व कथन सब ठीक है,

**प्राप्ते शरीरभेदे चरितार्थत्वात् प्रधानविनिवृत्तौ ।**
**ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति ॥ ६८ ॥**

( २ ) 'प्राप्ते' इति । अनारब्धविपाकानां तावत् कर्माशयानां तत्त्वज्ञानाग्निना वीजभावो दग्धः। प्रारब्धविपाकानां तूपभोगेन क्षये सति, 'प्राप्ते शरीरभेदे' इति विनाशे । 'चरितार्थत्वात्' इति । कृतप्रयोजनत्वात् प्रधानस्य

---

मेतत् अवतरणं सर्वम् । ऐकान्तिकाऽऽत्यन्तिकदुःखनिवृत्तिरूपो मोक्षः कदा भविष्यतीत्याकाङ्क्षायामाह—'प्राप्ते शरीरभेदे' इति ।

अन्वयः—शरीरभेदे प्राप्ते ( सति ) चरितार्थत्वात् प्रधानविनिवृत्तौ ( सत्याम् ) ऐकान्तिकम् आत्यन्तिकम् उभयं कैवल्यम् ( पुरुषः ) आप्नोति ।

शरीरभेदे=स्थूलसूक्ष्मोभयविधशरीरस्य, भेदे=वियोगे । अर्थात् प्रारब्धकर्मणां भोगेन परिसमाप्तौ सत्यां पूर्वोक्त उभयविधशरीरस्य वियोगे इत्यर्थः । प्राप्ते=सति । चरितार्थत्वात्—चरितौ=सम्पादितौ, अर्थौ=भोगापवर्गौ यया सा तत्त्वात् । प्रधानविनिवृत्तौ=प्रकृतिवियोगे सति । ( पुरुषः ) । ऐकान्तिकम्=आवश्यकम् । आत्यन्तिकम्=अविनाशि । उभयम्=जीवन्मुक्ति-परममुक्तिद्वयम् । कैवल्यम्=मोक्षम् । आप्नोति=प्राप्नोति ॥ ६८ ॥

( २ ) तत्त्वकौमुद्यां—अनारब्धविपाकानामिति । अनारब्धो विपाकः=सञ्चितक्रियमाणकर्मजन्यफलभोगो येषां सञ्चितक्रियमाणकर्मणामित्यर्थः । कर्माशयानाम्=धर्माधर्माणाम् । तत्त्वज्ञानाग्निना=तत्त्वज्ञानात्मकेनाऽग्निना । वीजभावः=फलजननसामर्थ्यम् । दग्धम्=विनाशं गतः । प्रारब्धविपाकानां तु=प्रारब्धः=जनयितुमारब्धः, विपाको=सुखदुःखाऽन्यतरविषयकसाक्षात्काररूपं फलं येषां तेषां धर्माऽधर्मादीनान्तु । उपभोगेन=सुखदुःखसाक्षात्कारेण । क्षये=आरब्धफलानां कर्माशयानां नाशे सति ।

---

परन्तु यहाँ प्रश्न यह उठता है कि यदि संस्कारशेष=अवशिष्ट प्रारब्धधर्मादि संस्कार बल से, पुरुष शरीर धारण किये रहता है, तब इस पुरुष का मोक्ष कब होगा ? इसके उत्तर में 'प्राप्ते शरीरभेदे' इत्यादि कारिका उपस्थित करते हैं ।

कारिकार्थ – शरीरभेदे=सूक्ष्मस्थूलोभयविध शरीर के विनाश हो जाने पर अर्थात् मर जाने के बाद चरितार्थत्वात्=भोगापवर्गरूप अर्थ के सम्पन्न हो जाने से प्रधान=प्रकृति विवेकज्ञानशील पुरुष के प्रति हमेशा के लिए निवृत्त हो जाती है और फिर उसके निवृत्त हो जाने पर विवेकज्ञान-सम्पन्न पुरुष ऐकान्तिक=अवश्यम्भावी तथा आत्यन्तिक=सर्वथा अविनाशी उभय=दोनों कैवल्य=दुःखविगमरूप मोक्ष को प्राप्त कर लेता है ।

( २ ) 'प्राप्ते' इति । जिन सञ्चित कर्मों का फलभोग अभी तक आरब्ध नहीं हुआ है, तादृश कर्मजन्य जो धर्माधर्मरूप आशय हैं, उनका वीजभाव=फलोत्पादनकर्तृत्वरूपा शक्ति तत्त्वज्ञानरूप अग्नि के द्वारा दग्ध=नष्ट हो गया । और जिनका

तम्पुरुषम्प्रति विनिवृत्तौ। 'ऐकान्तिकम्' अवश्यम्भावि 'आत्यन्तिकम्' अविनाशि इत्युभयं 'कैवल्यम्' दुःखत्रयविगमं प्राप्नोति पुरुषः ॥ ६८ ॥

( १ ) प्रमाणेनोपपादितेऽप्यत्यन्तश्रद्धोत्पादनाय परमर्षिपूर्वकत्वमाह—

---

तदनन्तरं शरीरभेदे प्राप्ते=शरीरविनाशे=शरीरवियोगे। प्राप्ते=जाते। चरितार्थत्वात्=भोगापवर्गरूपप्रयोजनस्य समाप्तत्वात्। प्रधानस्य=प्रकृतेः। तं=शरीरनाशावच्छिन्नम्। पुरुषम्प्रति=सांख्यपुरुषम्प्रति। विनिवृत्तौ=आत्यन्तिकवियोगे जायमाने। ऐकान्तिकम्=अवश्यम्भावि। आत्यन्तिकम्=अविनाशि न स्वर्गादिवत् विनाशि। इति=एतद्। उभयम्=उभयविधम्। अर्थात् ऐकान्तिकत्व-आत्यन्तिकत्वेत्युभयधर्मावच्छिन्नम्। कैवल्यम्=दुःखत्रयविगमं मोक्षम्। पुरुषः प्राप्नोति।

अत्राऽयं विशेषतः समुल्लेखः—

'न निरोधो न चोत्पत्तिर्न च बद्धो नैव साधकः कश्चिद्।
न मुमुक्षुर्न च मुक्तः स्वयमिति परमार्थता भवेदेषा ॥ १ ॥
न प्रतिबिम्बो नाऽवच्छेदो नाऽऽभास एव वा जीवः।
व्याप्तत्वादेकत्वात् सच्चित्सुखरूपभावतश्चापि ॥ २ ॥
बिम्बादुपगम्यावच्छेदमवच्छेदतस्तथाऽऽभासम्।
विनिवृत्य ततोऽप्यन्त्ये न त्वं नाऽहं न चेदमित्येव ॥ ३ ॥
नारम्भो नो वा परिणामो न विवर्त एव जगदेतत्।
निरवयवत्वादविकृतभावादप्युत विकल्पराहित्यात् ॥ ४ ॥
आरम्भात् परिणामं परिणामादपि विवर्तमुपगम्य।
विनिवृत्य ततोऽप्यन्त्ये न त्वं नाहं न चेदमित्येव ॥ ५ ॥
स्वप्नमयो जीवोऽयं स्वयं यथा जायतेऽप्यथो म्रियते।
जीवास्तथा भवन्ति न भवन्त्यमी केवलं स्वतः सर्वे ॥ ६ ॥
अपि युज्यतेऽत्र मायाद्वारा न तु तत्त्वतः सतो जन्म।
जातं हि तस्य जायते इह तत्त्वत एव जायते यस्य ॥ ७ ॥
असतो मायाद्वारा न युज्यते तत्त्वतः क्वचिज्जन्म।
तत्त्वेन मायया वा वन्ध्यापुत्रो जायते क्वापि' ॥ ८ ॥ ६८ ॥

( १ ) इदानीं प्रमाणेनोपपादितेऽप्यन्तश्रद्धाया अस्मिन् सांख्यशास्त्रे समुत्पादनायाऽस्य परमर्षिपूर्वकत्वमाह—'पुरुषार्थज्ञानमिदम्' इति।

---

फलभोग अर्थात् भोगात्मक फल प्रारब्ध=प्रारम्भ हो गया है, उपभोग के द्वारा उन कर्मों के क्षीण हो जाने पर शरीरभेद=शरीर का भी फिर विनाश हो जाता है। इसके बाद चरितार्थ=कृतप्रयोजन वाली होने से प्रकृति=प्रधान उन विवेकज्ञानशील पुरुष के प्रति सर्वदा के लिए निवृत्त हो जाती है अर्थात् सम्पर्कविहीन हो जाती है। इसके पश्चात् वह विवेकज्ञान-सम्पन्न पुरुष ऐकान्तिक तथा आत्यन्तिक दोनों कैवल्य=दुःखत्रय विगमरूप मोक्ष को प्राप्त कर लेता है ॥ ६८ ॥

( १ ) 'प्रमाणेनोपपादितेऽपी'ति। प्रत्यक्ष, अनुमान, आगम, इन प्रमाणों के द्वारा

**पुरुषार्थज्ञानमिदं गुह्यं परमर्षिणा समाख्यातम् ।**
**स्थित्युत्पत्तिप्रलयाश्चिन्त्यन्ते यत्र भूतानाम् ।। ६९ ।।**

( २ ) 'पुरुष' इति । 'गुह्यम्' गुहानिवासि, स्थूलधियां दुर्बोधमिति यावत् । 'परमर्षिणा'—कपिलेन । तामेव श्रद्धामागमिकत्वेन द्रढयति —'स्थित्युत्पत्तिप्रलयाश्चिन्त्यन्ते यत्र भूतानाम्' इति । 'यत्र' = ज्ञाने = यदर्थम्, यथा—'चर्मणि द्वीपिनं हन्ति' इति ( महाभाष्यम् २।३।३६ ) । 'भूतानाम्'—प्राणिनां 'स्थित्युत्पत्तिप्रलयाः' आगमैः 'चिन्त्यन्ते' ।। ६९ ।।

---

अन्वयः—इदं गुह्यं पुरुषार्थज्ञानं परमर्षिणा समाख्यातम्, यत्र भूतानां स्थित्युत्पत्तिप्रलयाः चिन्त्यन्ते ।

इदम् = सांख्यशास्त्रकथितम् । गुह्यम् = गोपनीयम्, दुर्ज्ञेयमित्यर्थः । पुरुषार्थज्ञानम्=पुरुषस्य भोगापवर्गरूपमर्थज्ञानम् । परमर्षिणा=महर्षिणा कपिलेन । समाख्यातम्= कथितम् । यत्र = यस्मिन् सांख्यशास्त्रे । भूतानाम्=पृथिव्यादिपञ्चमहाभूतपर्यन्तानाम् । स्थित्युत्पत्तिप्रलयाः । चिन्त्यन्ते = विचार्यन्ते ।

( २ ) तत्त्वकौमुद्याम्—गुह्यम्=बुद्धिरूपगुहानिवासि । तामेव श्रद्धाम्='पुरुषार्थज्ञानमिदम्' इत्यनेन दर्शितां श्रद्धाम् । आगमिकत्वेन=तादृशज्ञानस्य सर्वत्र शास्त्रेषु समादरणीयत्वेन । चिन्त्यन्ते = विचार्यन्ते । यत्र = यस्मिन् ज्ञाने । यदर्थम् = यज्ज्ञाननिमित्तमित्यर्थः । अत्र महाभाष्यप्रामाण्यमाह —

---

सांख्यशास्त्र के अर्थों का उपपादन कर देने पर भी इस शास्त्र के प्रति तत्त्वजिज्ञासु लोगों के अत्यन्त श्रद्धोत्पादन के लिए सांख्यशास्त्र को परम ऋषि = महर्षि=महामुनि कपिल ने जन्म दिया । इसे **'पुरुषार्थज्ञानमिदम्'** इत्यादि कारिका में बतलाते हैं ।

कारिकार्थ—भोगापवर्गरूप पुरुषार्थ ज्ञान को जो कि यह ज्ञान अत्यन्त ही गुह्य = गोपनीय = दुर्ज्ञेय है, इसका कथन महर्षि कपिल ने किया है । जिस सांख्यशास्त्र के अन्दर इसी पुरुषार्थ ज्ञान के निमित्त महत्तत्त्व से लेकर पृथिवी आदि पञ्चमहाभूतपर्यन्त पदार्थों की तथा अन्य प्राणियों की स्थिति, उत्पत्ति, एवं प्रलय का विचार किया गया है ।

( २ ) गुह्य का अर्थ है बुद्धिरूपी गुहा में रहने वाला; यह शास्त्र स्थूलबुद्धि वालों के लिए दुर्बोध है । महर्षि कपिल ने इस सांख्यशास्त्र को इसलिए जन्म दिया, क्योंकि यह शास्त्र सर्वथा श्रद्धेय है । इसी कारण से उस श्रद्धा को आगमिक = वेदमूलक होने के कारण सुदृढ़ करते हैं—**'स्थित्युत्पत्तिप्रलयाश्चिन्त्यन्ते यत्र भूतानाम्'** इत्यादि ग्रन्थ से । अर्थात् जिस सांख्यशास्त्रजन्य पुरुषार्थज्ञान में भूतों=प्राणियों की स्थिति, उत्पत्ति तथा प्रलय का विचार किया गया है, वह शास्त्र सर्वथा श्रद्धेय है । यत्र=पुरुषार्थज्ञाने, यदर्थम्=यज्ज्ञाननिमित्तम् = जिस ज्ञान की प्राप्ति के निमित्त । इस अर्थ का प्रमापक प्रमाण महाभाष्य है । जैसे—

( १ ) स्यादेतत्—'यत् परमर्षिणा साक्षात्कथितं तच्छ्रद्दधीमहि, यत्पुनरीश्वरकृष्णेन कथितं, तत्र कुतः श्रद्धा ?' इत्यत आह—

**एतत् पवित्रमग्र्यं मुनिरासुरयेऽनुकम्पया प्रददौ ।**
**आसुरिरपि पञ्चशिखाय तेन च बहुधा कृतं तन्त्रम् ॥७०॥**

---

'चर्मणि द्विपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ।
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः' ॥

अस्यार्थः हिन्द्यां द्रष्टव्यः । आगमैः=वेदसम्बद्धशास्त्रैः । चिन्त्यते=विचार्यन्ते ॥६९॥

( १ ) 'एतत्पवित्रमग्र्यम्' इत्यादिकारिकाया अवतरणमाह–स्यादेतदिति । यत्=ज्ञानम् । परमर्षिणा=कपिलेन । तत्=ज्ञानम् । श्रद्दधीमहि । यत्=ज्ञानम् । ईश्वरकृष्णेन । कथितम् । तत्र=ज्ञाने । कुतः=कस्मात्कारणात् । श्रद्धा । स्यादित्याशङ्कायामाह—एतत्पवित्रमिति ।

अन्वयः—मुनिः अनुकम्पया अग्र्य पवित्रम् एतत् आसुरये प्रददौ, आसुरिरपि पञ्चशिखाय तेन च बहुधा कृतं तन्त्रम् ।

मुनिः=कपिलः । अनुकम्पया=कृपया । अग्र्यम्=सर्वोत्कृष्टम् । पवित्रम् । एतत्=सांख्यशास्त्रीयं ज्ञानम् । आसुरये=आसुरिनामकाय स्वशिष्याय । प्रददौ । आसुरिरपि । पञ्चशिखाय=पञ्चशिखनामकाय स्वशिष्याय । तेन च=पञ्चशिखाचार्येण च । तन्त्रम्=सांख्यशास्त्रीयं ज्ञानम् । बहुधा=बहुरूपेण, अर्थात् बहुभिर्ग्रन्थैः, अथवा बहुषु शिष्येषु । कृतम्=विस्तारितम् ।

---

'चर्मणि द्वीपिनं हन्ति, दन्तयोर्हन्ति कुञ्जरम् ।
केशेषु चमरी हन्ति सीम्नि पुष्कलको हतः' ॥

अर्थात् चर्म के निमित्त द्वीपी=शेर को मारता है और दन्त=दाँतों के निमित्त कुञ्जर=हाथी को मारता है । केशों के निमित्त चमरी गौ को मारता है एवं राज्य की सीमा के निमित्त 'पुष्कल' नामवाले राजा को मारता है । भूतों=प्राणियों की उत्पत्ति, स्थिति एवं प्रलय का विचार आगमों=श्रुति स्मृति-इतिहास-पुराणों के आधार पर ही किया जाता है ॥ ६९ ॥

( १ ) 'स्यादेतत्—यत् परमर्षिणा' इति । श्रद्धापूर्वक होने के कारण यह शास्त्र भी श्रद्धेय है यह सब ठीक है—परमर्षि कपिल ने जिस तत्त्वज्ञान को साक्षात् हमारे लिए यह कहकर व्यक्त किया, उस ज्ञान पर हम श्रद्धा करते हैं । परन्तु जो ज्ञान ईश्वरकृष्ण ने कहकर हमारे समक्ष रखा, उस पर हम कैसे श्रद्धा कर सकते हैं ? इसके समाधानार्थ 'एतत् पवित्रमग्र्यम्' इत्यादि कारिका उपस्थित करते हैं ।

कारिकार्थ—महामुनि कपिल ने बड़ी अनुकम्पा के साथ परम पवित्र एवं श्रेष्ठ इस सांख्यशास्त्र जन्य तत्त्वज्ञान को 'आसुरि' मुनि को दिया और आसुरि मुनि ने फिर 'पञ्चशिख' नाम के मुनि को दिया । फिर 'पञ्चशिख' ने इस सांख्यशास्त्ररूप ज्ञान का ग्रन्थों के आधार पर तथा शिष्यों के आधार पर व्यापक प्रचार किया ।

( २ ) 'एतत्' इति । 'एतत् पवित्रम्' — पावनम्—दुःखत्रयहेतोः पाम्पनः पुनातीति । 'अग्र्यम्'—सर्वेभ्यः पवित्रेभ्यो मुख्यम् । 'मुनिः'—कपिलः, आसुरयेऽनुकम्पया प्रददौ, आसुरिरपि पञ्चशिखाय, तेन वहुधा कृतं तन्त्रम् ॥७०॥

**शिष्यपरम्पराऽऽगतमीश्वरकृष्णेन चैतदार्याभिः ।**
**सङ्क्षिप्तमार्यमतिना सम्यग्विज्ञाय सिद्धान्तम् ॥ ७१ ॥**

'शिष्य' इति । आराद् याता तत्त्वेभ्य इत्यार्या, आर्या मतिर्यस्य सोऽयम्—'आर्यमतिः' इति ॥ ७१ ॥

---

( २ ) तत्त्वकौमुद्याम्—एतत्=सांख्यशास्त्रम् । पवित्रम् = पावनम् । पावनत्वमेव कुतः ? इत्यत आह—दुःखत्रयेति । पाम्पनः=पापात्, आध्यात्मिक-आधिभौतिक-आधिदैविक-दुःत्रयकारणीभूताऽविद्यारूपपापकर्मत इत्यर्थः । पुनातीति = अविद्यारूपं पापं विधूय परम्परया मोक्षदं पुण्यं ददातीति । अग्र्यम्=सकलपवित्रकर्मभ्योऽपि पवित्रतमम् । मुनिः = कपिलः । आसुरये = स्वशिष्याय । इतोऽतिरिक्तं सर्वं 'व्याख्या'-टीकायां द्रष्टव्यम् ॥ ७० ॥

तदा पुनरीश्वरकृष्णः कथं सांख्यशास्त्रजन्यं ज्ञानं प्राप्तवान् ? तत्राह—शिष्यपरम्परयेति ।

अन्वयः—शिष्यपरम्परया आगतम् एतत् आर्यमतिना ईश्वरकृष्णेन सिद्धान्तं सम्यग् विज्ञाय आर्याभिः सङ्क्षिप्तम् ।

शिष्यपरम्परया । आगतम् = प्राप्तम् । एतत् = सांख्यशास्त्रसिद्धान्तम् । आर्यमतिना = विशुद्धमतिना । ईश्वरकृष्णेन । सिद्धान्तम् = सांख्यशास्त्रसिद्धान्तम् । सम्यक् = यथार्थरूपेण । विज्ञाय = ज्ञात्वा । आर्याभिः = आर्याछन्दोवद्धकारिकाभिः । सङ्क्षिप्तम् = सङ्क्षेपेण लिखितम् ।

---

( २ ) 'एतत् पवित्रम्' का अर्थ वाचस्पतिमिश्र ने 'पावनम्' किया है । और 'पावनम्' का भी अर्थ किया कि आध्यात्मिक, आधिभौतिक तथा आधिदैविक इन तीन प्रकार के हेतुभूत अविद्यारूप पाप को सर्वदा के लिए नष्ट करके साधक व्यक्ति के लिए विवेकख्यातिरूप मोक्षप्रद पुण्य प्रदान करने वाले समस्त पवित्र विज्ञानों में 'अग्र्य' = श्रेष्ठ=मुख्य विज्ञान को कपिल मुनि ने अनुकम्पा के साथ 'आसुरि' मुनि को दिया और आसुरि ने फिर 'पञ्चशिख' मुनि को दिया, फिर उन्होंने इसका अनेकों प्रकार से विस्तार किया ॥ ७० ॥

कारिकार्थ—'शिष्यपरम्परया' इति । पञ्चशिखाचार्य के द्वारा विरचित नाना ग्रन्थों के द्वारा अनेक प्रकार से विवेचित यह कपिल मुनि का सांख्यविज्ञान शिष्यों की परम्परा से ईश्वरकृष्ण को प्राप्त हुआ । फिर आर्यमति ईश्वरकृष्ण ने इस सांख्य-सिद्धान्त को अच्छी प्रकार जानकर संक्षेप में आर्याछन्द के द्वारा संग्रह कर सांख्यशास्त्र-प्रेमियों के समक्ष रख दिया ।

( १ ) एतच्च शास्त्रम्, सकलशास्त्रार्थसूचकत्वात्, न तु प्रकरणमित्याह–

**सप्तत्यां किल येऽर्थास्तेऽर्थाः कृत्स्नस्य षष्टितन्त्रस्य ।**
**आख्यायिकाविरहिताः परवादविवर्जिताश्चापि ॥ ७२ ॥**

( २ ) 'सप्तत्याम्' इति । तथा च राजवार्तिकम्—

---

तत्त्वकौमुद्याम्—'आर्यमतिना' इत्यस्यार्थमाह—'आरात्' इति । आरात्=समीपं, सूक्ष्मतत्त्वसमीपं, गता आर्या, सूक्ष्मतत्त्वदर्शिनीत्यर्थः, एवम्भूता मतिः=बुद्धिर्यस्य तेन । अथवा आर्या=पञ्चविंशतितत्त्वविषयिणी मतिर्यस्य तेन । तत्त्वज्ञानशालिना । अन्यत् सर्वं व्याख्याटीकायां द्रष्टव्यम् ॥ ७१ ॥

( १ ) इदानीमस्य सांख्यनिबन्धस्य शास्त्रत्वं दर्शयति—एतच्चेति । सकलसांख्यशास्त्रीयार्थप्रतिपादकत्वात् शास्त्रमिदं न तु प्रकरणम् इत्याह—सप्तत्यामिति ।

अन्वयः—सप्तत्याम् आख्यायिकाविरहिताः परवादविवर्जिताः च अपि ये अर्थाः ( सन्ति ) ते कृत्स्नस्य षष्टितन्त्रस्य किल ( सन्ति ) ।

सप्तत्याम्=सप्ततिकारिकावति अस्मिन् ग्रन्थे । आख्यायिकाविरहिताः=कथा( कहानी )शून्याः । परवादविवर्जिताः—परेषां=दर्शनान्तराणां, ये वादाः=खण्डनानि, तैर्विवर्जिताः=रहिता इत्यर्थः । च, अपि ये, अर्थाः=पञ्चविंशतिपदार्थस्वरूपा विषयाः । ( सन्ति ) । ते=पदार्थस्वरूपा विषयाः । कृत्स्नस्य=सम्पूर्णस्य । षष्टितन्त्रस्य=षष्टितन्त्रनामकग्रन्थस्य । किल=निश्चयेन । ( सन्ति ) ।

( २ ) अत्र राजवार्तिकस्य प्रामाण्यमाह—प्रधानेति ।

'प्रधानास्तित्वमेकत्वमर्थवत्त्वमथाऽन्यता ।
पारार्थ्यं च तथाऽनैक्यं वियोगो योग एव च ॥'

---

'शिष्य इति' इति । 'आर्यमति' शब्द का अर्थ बतलाते हैं कि जो मति पञ्चविंशति तत्त्वों के पास पहुँच चुकी है वह आर्या=मति है । और उन तत्त्वों के पास जाने पर तत्त्वों के ज्ञानवाली मति है जिसकी, वह आर्यमति कहलाता है । ईश्वरकृष्ण भी ऐसे हैं, अतः ये भी आर्यमति हैं ॥ ७१ ॥

( १ ) 'एतच्च' इति । सकल सांख्यशास्त्र के अर्थ का सूचक होने के कारण ही यह सांख्य भी शास्त्र है, न कि प्रकरण है अर्थात् कतिपय विषयों का प्रतिपादक है । कुछ विषयों का जो प्रतिपादक होता है, उसे प्रकरण कहते हैं । इसी आशय को 'सप्तत्यां किल येऽर्थास्ते' इत्यादि कारिका से स्पष्ट करते हैं ।

कारिकार्थ—आर्याछन्द से सम्बद्ध इन सत्तर कारिकाओं के अन्दर कथा-कहानी से शून्य तथा दर्शनान्तर सम्बन्धि मत-मतान्तरों के खण्डन से शून्य जिन पच्चीस पदार्थों का निरूपण ईश्वरकृष्ण ने किया है, वे सब पदार्थ 'षष्टितन्त्र' नामक ग्रन्थ के हैं, यह निश्चित है ।

( २ ) 'तथा च राजवार्तिकम्' इति । १. प्रधानास्तित्व—मूलप्रकृति तथा पुरुष;

'प्रधानास्तित्वमेकत्वमर्थवत्त्वमथाऽन्यता ।
पारार्थ्यं च तथाऽनैक्यं वियोगो योग एव च ॥
शेषवृत्तिरकर्तृत्वं मौलिकार्थाः स्मृता दश ।

'राजवार्तिक'नामके सांख्यग्रन्थे यन्निरूपितं यदुक्तञ्च सङ्क्षेपतस्तदाह—प्रधानेति। तत्र वार्तिकश्लोकेषु षष्टिपदार्थाः सन्ति परिगणिताः। तत्र च षष्टिपदार्थेषु दश पदार्था मौलिकाः सन्ति। तत्रापि मूलरूपेण अर्थात् मुख्यरूपेण जडचेतनभेदतः पदार्थद्वयमेव तत्त्वतो वर्णितं वर्तते। एतत्पदार्थद्वयमेवाऽवलम्ब्य मौलिकपदार्थानां दशसंख्या जाता। तथाहि—

१. प्रधानास्तित्वम्—अत्र प्रधानं पुरुषस्याप्युपलक्षणं, तेन पुरुषास्तित्वमपि बोध्यम्। २. एकत्वम्—प्रधानस्यैकत्वम्। ३. अर्थवत्त्वम्—अर्थात् प्रधानस्य भोगापवर्गरूपप्रयोजनवत्ता। ४. अन्यता—अर्थात् प्रकृतिपुरुषयोः पारस्परिको भेदः। ५. पारार्थ्यम्—पुरुषनिष्ठा या प्रकृतिनिष्ठोपकार्यतानिरूपितोपकारकता, अथवा प्रकृतिनिष्ठा या पुरुषनिष्ठोपकार्यतानिरूपितोपकारकता। ६. अनैक्यम्—अर्थात् पुरुषस्याऽनेकत्वम्। ७. वियोगः—अर्थात् अपवर्गावस्थायां प्रकृतिपुरुषयोः विवेकः=मोक्षः। ८. योगः—अपवर्गतः पूर्वं प्रकृतिपुरुषयोः संश्लिष्टता=भोगस्याऽत्यन्तयोगः। ९. शेष-

---

२. एकत्व=प्रकृति का एकत्व, ३. अर्थवत्त्व, ४. अन्यता=प्रकृति-पुरुष का भेद, ५. पारार्थ्य=पर=पुरुष का प्रयोजन, ६. अनैक्य=पुरुष का बहुत्व, ७. वियोग, ८. योग=संयोग, ९. शेषवृत्ति तथा १०. अकर्तृत्व=पुरुष का कर्तृत्वाभाव। ये मौलिक=मूलभूत=प्रकृति-पुरुष से सम्बन्धित १० पदार्थ हैं।

पाँच विपर्यय, नौ तुष्टियाँ, अट्ठाइस इन्द्रियों का असामर्थ्य=अशक्तियाँ तथा आठ सिद्धियों को इनके साथ मिलाकर अवान्तर पदार्थों के पचास भेद हो जाते हैं।

इस प्रकार १० मौलिक पदार्थ और ५० अवान्तर पदार्थ कुल मिलाकर षष्टि=साठ=६० भेद हो जाते हैं।

'राजवार्तिक' ग्रन्थ में सांख्यशास्त्र-प्रतिपाद्य विषयों का निम्नलिखित रूप में स्पष्ट विवेचन मिलता है—

१. प्रधानास्तित्व=मूलप्रकृति तथा पुरुष का अस्तित्व=पुरुष।

२. एकत्व=प्रधान की एकता=प्रकृति की एकता।

३. अर्थवत्व=प्रकृति की भोगापवर्गरूप प्रयोजनवत्ता।

४. अन्यता=प्रकृति पुरुष की भिन्नता।

५. पारार्थ्य=जड=भोग्य परार्थ है अर्थात् पुरुष के लिए है।

६. अनैक्य=पुरुष की अनेकता, पुरुष का बहुत्व।

७. वियोग=मोक्षावस्था में प्रकृति और पुरुष का पार्थक्य।

८. योग=संयोग प्रकृति-पुरुष का, अपवर्ग से पूर्व प्रकृति और पुरुष=दोनों के भोग का अत्यन्त योग।

विपर्ययः पञ्चविधस्तथोक्ता नव तुष्टयः ॥
करणानामसामर्थ्यमष्टाविंशतिधा स्मृतम् ।
इति षष्टिः पदार्थानामष्टाभिः सह सिद्धिभिः' ॥ इति ।

( ३ ) सेयं षष्टिपदार्थी कथितेति सकलशास्त्रार्थकथनान्नेदं प्रकरणमपि तु शास्त्रमेवेदमिति सिद्धम् ।

---

वृत्तिः—स्थूलसूक्ष्मोभयशरीरस्य स्थितिः, अथवा तयोः शरीरयोः प्रधानेन सहाऽङ्गाङ्गिभावः । १०. अकर्तृत्वम्—अर्थात् पुरुषे कर्तृत्वाऽभावः । 'मौलिकार्थाः स्मृता दश'=इत्यत्र मौलिका दश पदार्था दर्शिताः । 'विपर्यय' इत्यादिना अवान्तरभेदमादाय पञ्चाशद् ( ५० ) भेदा इतोऽतिरिक्ता भवन्ति । तथाहि—तमो-मोह-महामोह-तामिस्र-अन्धतामिस्रसंज्ञकाः पञ्च विपर्ययविशेषाः । तथैव नव ( ९ ) तुष्टयः, अम्भस्-सलिल-ओघ-वृष्टि-पार-सुपार-पारापार-अनुत्तमाम्भ-उत्तमाम्भनाम्न्यो भवन्ति । एकादशेन्द्रिय-वधाः, ये च पूर्वमुक्ता बाधिर्यादयः ( २८ ) सप्तदशबुद्धिवधैः सह एकादशेन्द्रियवधा एवाऽशक्तिः कथिता । ( ८ ) सिद्धयः, 'ऊहः, शब्दोऽध्ययनम्' इत्याद्यात्मकाः । इत्थं मिलित्वा पञ्चाशद् भेदाः भवन्ति । दशसंख्याकाश्च मौलिकाः पदार्थाः, एवंरीत्या षष्टि ( ६० ) भेदा जायन्ते ।

( ३ ) तदेवोक्तं—'सेयं षष्टिपदार्थी कथितेति' । सकलशास्त्रार्थकथनात्=षष्टि-पदार्था ये सांख्यशास्त्रे पूर्वं कथितास्तेषां कथनादित्यर्थः । नेदं प्रकरणम्=इदं सांख्य-शास्त्रं न प्रकरणम् । शास्त्रमेवेदम्=इदं=सांख्यशास्त्रं शास्त्रमेव । सिद्धम्=निश्चितम् ।

---

९. शेषवृत्तिः=स्थूल-सूक्ष्म-शरीरद्वयस्थिति, अथवा स्थूल=महाभूत तथा सूक्ष्म=सत्त्वादिकों का जो मूल प्रकृति के प्रति अङ्गभाव से वर्तन=रहना, अर्थात् इन स्थूल-सूक्ष्मों में जो प्रधान के साथ अङ्गाङ्गिभाव सम्बन्ध, वही शेषवृत्ति है ।

१०. अकर्तृत्व=पुरुष के पुष्करपलाशवन्निर्लेप होने के कारण पुरुष में कर्तृत्व का अभाव ।

ये १० पदार्थ हैं । कहा है—'मौलिकार्थाः स्मृता दश' अर्थात् ये १० पदार्थ तो मौलिक हैं ।

एवं ५० अवान्तर पदार्थ हैं । जैसे ५ प्रकार का विपर्यय=अविद्या, ९ प्रकार की तुष्टियाँ, २८ प्रकार के करणों=इन्द्रियों की अशक्तियाँ और ८ सिद्धियाँ । इन सभी का पूर्व में विवेचन हो चुका है ।

( ३ ) 'सेयं षष्टिपदार्थी' इति । इस प्रकार इस 'सांख्यतत्त्वकौमुदी' ग्रन्थ ने मौलिक-अमौलिक भेद से सांख्यशास्त्र-प्रतिपाद्य साठ पदार्थ कहे हैं । इस कारण यह ग्रन्थ सांख्यशास्त्र के सकल पदार्थों का कथन करने के कारण शास्त्र ही है, न कि प्रकरण, जैसे कि 'सत्प्रतिपक्षग्रन्थ' प्रकरण-ग्रन्थ है । 'अवयवग्रन्थ' भी प्रकरण-ग्रन्थ है । 'सव्यभिचारग्रन्थ' भी प्रकरण-ग्रन्थ ही है । क्योंकि ये ग्रन्थ कतिपय विषयों का ही ज्ञान कराने वाले हैं न कि नव्यन्यायशास्त्र के समस्त विषयों का; इस कारण ये प्रकरण

( ४ ) एकत्वमर्थवत्त्वं पारार्थ्यञ्च प्रधानमधिकृत्योक्तम् । अन्यत्वमकर्तृत्वं बहुत्वञ्चेति पुरुषमधिकृत्य। अस्तित्वं वियोगो योगश्चेत्युभयमधिकृत्य। वृत्तिः स्थितिरिति स्थूलसूक्ष्ममधिकृत्य ।। ७२ ।।

( ५ ) मनांसि कुमुदानीव बोधयन्ती सतां सदा ।
श्रीवाचस्पतिमिश्राणां कृतिः स्तात् तत्त्वकौमुदी ।।

इति षट्दर्शनटीकाकृच्छ्रीमद्वाचस्पतिमिश्रविरचिता
साङ्ख्यतत्त्वकौमुदी समाप्ता ।
।। समाप्तोऽयं ग्रन्थः ।।

---

( ४ ) तत्र एकत्वम्, अर्थवत्त्वम्, पारार्थ्यञ्चेति प्रधानमुद्दिश्य कथितम् । अन्यत्वम्, अकर्तृत्वम् बहुत्वं चेति धर्मत्रयं पुरुषमुद्दिश्य कथितम्, अस्तित्वं, वियोगः, योगश्चेत्युभयं=प्रकृति=पुरुषद्वयम्, अधिकृत्य=उद्दिश्य । कथितम् । 'शेषवृत्ति'-रित्यस्यार्थमाह—'स्थितिरि'ति । अर्थात् प्रकृतेरवस्थितिः स्थूलाऽवस्था (व्यक्तावस्था), सूक्ष्मावस्था ( अव्यक्तावस्था ) चेत्यवस्थाद्वयमुद्दिश्य कथितम् । अर्थात् प्रकृतिर्व्यक्ता-वस्थारूपा, अव्यक्तावस्थारूपा, चेत्यत्रैव तात्पर्यम् ।। ७२ ।।

( ५ ) **मनांसीति** । कुमुदानीव मनांसि, बोधयन्ती=विकाशयन्ती, श्रीवाचस्पति-मिश्राणां, कृतिः=तत्त्वकौमुदीरूपा कृतिः । कौमुदीव । सताम्=सज्जनानाम्, विदुषा-मित्यर्थः । हर्षप्रकर्षवर्धनाय । स्तात्=भवतु । शङ्करोतु शङ्करः ।

---

ग्रन्थ हैं। परन्तु यह सांख्यतत्त्वकौमुदी ग्रन्थ सांख्यशास्त्र के सकल विषयों=पदार्थों का प्रतिपादक होने से शास्त्र है, न कि प्रकरण; यह सिद्ध है।

( ४ ) **'एकत्वमर्थवत्त्वम्'** इति । एकत्व, अर्थवत्त्व और पारार्थ्य, ये तीनों प्रधान=प्रकृति से सम्बन्धित हैं । अन्यत्व, अकर्तृत्व तथा अनेकत्व, ये तीन पुरुष से सम्बन्धित हैं । एवम् अस्तित्व, वियोग, योग, ये तीन प्रकृति-पुरुष, इन दोनों से सम्बन्ध रखने वाले हैं । और स्थित्यर्थकशेषवृत्ति स्थूल, सूक्ष्म, शरीर से सम्बन्ध रखने वाली है ।। ७२ ।।

( ५ ) **'मनांसि'** इति । शास्त्र के अन्त में भी मंगल नितान्त आवश्यक होता है । अतः आशीर्वादात्मक मंगल करते हैं कि श्रीवाचस्पतिमिश्र विरचित यह 'तत्त्वकौमुदी' नामक रचना=टीका=व्याख्या, सज्जनों=विद्वानों=सन्त-महात्माओं के मन में सर्वदा ज्ञान का विकास करती रहे । जैसे चन्द्र की चन्द्रिका=कौमुदी कुमुदपुष्पों को विकसित करती रहती है । इति शम् ।

'मया ज्वालाप्रसादेन न्यायाचार्येण धीमता ।
यद् गुरुचरणादाप्तं तद्गुरुचरणे समर्पितम्' ।।

# कारिकानुक्रमणिका

